## परिशिष्टसूचिपत्रकम्

| अशुद्धम् | शुद्धम् | पत्र | पृष्ठ | पंक्ति |
|---|---|---|---|---|
| ऽव्ययविरपि | ऽव्ययव्यऽपि | ४२३ | १ | १ |
| ज्ञानमानं | ज्ञायमानं | ४२४ | २ | १० |

अथ श्रीमहावीरस्तवकल्पलतिकाख्यविवृत्तिसमलङ्कृते--न्यायखण्डखाद्यापरनाम

महावीरस्तवप्रकरणे—

## ॥ तृतीयो विभागः ॥

यदीयास्संयुक्ताः प्रवरनवखण्डा अपि कलौ, नयन्ते द्रष्टॄन् नॄन् वरशममुदाश्चर्यपदवाम् ।
सदृष्टिज्ञानाख्याऽप्रतिहतशिखाभ्यां त्रिभुवन--प्रकाशिभ्यां नित्यासमसमुदयाभ्यां च नितराम् ॥१॥

पराभूतानित्योदयरवितमिस्रापतिमहो, यदीयश्चिद्दीपो हृदयभवनस्थोऽपि सुतराम् ।
अहो चित्रं कीदृक् प्रकटयति सर्वार्थनिकरम्, स गोघेशः पार्श्वो जयति नवखण्डेति भगवान् ॥२॥

यदाकारं ज्ञानं तेन तत्सिद्धिरिति घटाद्याकारेण विज्ञानेन सिद्धस्य बाह्यस्य घटादेरहमाकारेण चालयविज्ञानेन च सिद्धस्या-भ्यन्तरस्यात्मनस्सद्रूपत्वात्क्षणिकत्वमित्यभ्युपगच्छतस्सौत्रान्तिकस्य बौद्धविशेषस्य मतं निरस्य यच्चेतसि प्रतीयते तच्चिद्रूपमेव प्रतीयते

च घटाद्यात्मादिपदार्थश्चेतसीति सोपि चिद्रूपात्मक एवेत्यभ्युपगच्छतः क्षणिकविज्ञानवादिनो योगाचारस्य बौद्धविशेषस्य मतं निराचिकीर्षुः पञ्चत्रिंशत्तमश्लोकावतरणिकामाह—

शृङ्गग्राहिकयाऽऽत्मन्यप्युक्तमुपसंहारं सविशेषमतिदिश्य बाह्याभावात् नैरात्म्यमिति विज्ञानवादिमतं दूषयिष्यन्नाह—

आत्मा तु तादृगपि मुख्यतयाऽस्ति नित्य—स्तद्भावतोऽव्ययतया गगनादिवत्ते ॥
चिन्मात्रमेव तु निरन्वयनाशि तत्त्वं, कः श्रद्दधातु यदि चेतयते सचेताः ॥ ३५ ॥

आत्मा तु तादृगपि भेदाभेदाद्यनन्तशक्तिशबलस्वभावोऽपि, तद्भावत आत्मत्वेनाव्ययतया, ते तव मते, मुख्यतया नित्योऽस्ति, तद्भावाव्ययं नित्यमिति लक्षणात् पुरः स्फूर्त्तिकतया प्राधान्येन नित्यताशालीत्यर्थः, अत एव गगनादिवदिति दृष्टान्तः, आदीपमाव्योमेत्यादिना सर्वत्र नित्यानित्यत्वादिसप्तभङ्गीसमारूढत्वोक्तावपि गगनघटादौ प्राधान्येनैकैकव्यवहारनियमनात्,

शृङ्गग्राहिकयेति, शृङ्गग्राहिकान्यायेनेत्यर्थः। शृङ्गग्राहिकान्यायश्च यथा गोशृङ्गेन तथा यत्किञ्चिद्व्यक्तिविशेषस्य स्वाऽसाधारणरूपेण ग्रहणम्। नैरात्म्यदृष्टिनिरासप्रतिज्ञां कृत्वा तद्व्यतिरिक्तनिरासकरणे प्रतिज्ञाहानिस्स्यादिति तन्निवृत्तये पूर्वेण सह सङ्गतिप्रदर्शनायाह—बाह्याभावात् नैरात्म्यमिति, आत्मा तु तादृगपीत्यादि श्लोकस्तु ग्रन्थकृतैव विवृत इति नेह प्रतन्यते,

तत्तद्वस्तुनो नित्यानित्यत्वादिधर्मविचारे तत्तद्वस्तुगतासाधारणधर्मेण यस्यैव सम्भवस्तस्यैव प्रथममुपस्थितिरिति वस्तुस्थितेराश्रयणे वीतरागजन्मादर्शनन्यायादिनाऽऽत्मत्वेनाऽऽत्मनो नित्यतयैव सिद्धेस्तद्रूपेण तत्र प्रथमतो नित्यत्वस्यैव स्फूर्त्तिरिति नित्यत्वमेव प्रधानतयाऽऽत्मनो धर्मः, एवं घटादेर्मृदादिरूपेण नित्यत्वेपि घटत्वेन घट उत्पद्यते विनश्यतीत्यादिप्रत्यक्षादिप्रमाणेन घटत्वेन घटस्योत्पत्तिमत्तयैवोपलब्धेः प्रथमतोऽनित्यत्वस्यैव स्फूर्त्तिरित्यनित्यत्वमेव प्रधानधर्म इत्यभिप्रेत्याह-पुरः स्फूर्त्तिकतयेति, अत एवेति, नित्यत्वं गगनस्येव घटस्यापि अनित्यत्वञ्च घटस्येव गगनस्यापि धर्मस्तथापि घटे घटत्वेन मुख्यधर्मेण नित्यत्वस्यासत्त्वादनुपस्थितिरनित्यत्वस्य च सत्त्वादुपस्थितिः, गगने च गगनत्वेन मुख्यधर्मेणानित्यत्वस्यासत्त्वादनुपस्थितिः नित्यत्वस्य च सत्त्वादुपस्थितिरित्युपस्थितानुपस्थितयोर्मध्ये उपस्थितस्यैव ग्रहणमिति न्यायेन घटेऽनित्यत्वमेव गगने च नित्यत्वमेव मुख्यधर्म इत्यत इत्यर्थः, एतदेव विशदयति-आदीपेत्यादिना, आदीपमाव्योम समस्वभावं, स्याद्वादमुद्रानतिभेदि वस्तु ॥ तन्नित्यमेवैकमनित्यमन्य-दिति त्वदाज्ञाद्विषतां प्रलापाः ॥ १ ॥ इतिसंपूर्णः श्लोकः । एकैकव्यवहारेति, गगनत्वेन गगनं नित्यमेव घटत्वेन घटोऽनित्य एवेति व्यवहारेत्यर्थः;

इत्थमेव भजनायामपि भजनोपपत्तेः, विधिनियमभङ्गवृत्तिव्यतिरिक्तस्य च स्वसमयत्वानुपपत्तेर्नयचक्रवालादौ प्रदर्शितत्वात्, एवं च गगनमनित्यं घटो नित्य इत्यादेः केवलप्रयोगस्याप्रामाण्यम्, नित्यत्वानित्यत्वादिविशिष्टवाचकपदसमभिव्याहृतधर्मिवाचकपदस्य स्वप्रवृत्तिनिमित्तावच्छेदेन तदभेदबोधन एव साकाङ्क्षत्वात्, यथास्थितस्यादर्थबाधात्, सप्तभङ्ग्यां तु तात्पर्यगर्भाकाङ्क्षामादाय नानुपपत्तिरिति स्मर्त्तव्यम् । तदेवमात्मनो मुख्यतया नित्यत्वात् न क्षणभङ्गवादेन नैरात्म्यसिद्धिः, न च बाह्यार्थभङ्गादेव विज्ञान-

वादिनयेन तत्सिद्धिः, यतश्चिन्मात्रमेव निरन्वयनाशि तत्त्वं कः सचेताः श्रद्दधातु यदि चेतयते सम्य-गुपयोगवान् भवति ॥ ३९ ॥

भजनायामपि भजनोपपत्तेरिति, न चापसिद्धान्तव्याकोपः, यतः "भयणा वि हु भइयव्वा, जइ भयणा भयइ स-व्वदव्वाइं ॥ एवं भयणानियमो, वि होइ समयाविरोहेणं" ॥१॥ इत्यादिना बहुशः सम्मतौ तातपादैः श्रीसिद्धसेनदिवाकरैस्स्याद्वादेऽपि स्याद्वादोपपत्तिः कृतैव । विधिनियमेति, एवम्भूतमेवेत्यर्थः, भङ्गवृत्तीति, एवम्भूतं नेत्यर्थः । व्यतिरिक्तस्येति, अत्र प्ररूपकवचस इति शेषः । केवलेति, यन्निमित्तापेक्षया गगनेऽनित्यत्वं घटे च नित्यत्वं तद्‌बोधकपदविनिर्मुक्तेत्यर्थः । अप्रामाण्ये हेतुमाह–नित्यत्वानित्यत्वादीति, स्वप्रवृत्तिनिमित्तावच्छेदेनेति, गगनपदं गगनत्वावच्छिन्ने घटपदञ्च घटत्वावच्छिन्ने शक्तमिति शक्तिग्रहो भवतीति गगनपदस्य प्रवृत्तिनिमित्तं शक्यतावच्छेदकं गगनत्वं घटपदस्य च घटत्वं तदवच्छेदेनेत्यर्थः । प्रथमान्तानित्यपदसमभिव्याहृतप्रथमान्तगगनपदत्वरूपाकाङ्क्षाज्ञानं गगनत्वावच्छिन्नाभेदसंसर्गावच्छिन्नानित्यनिष्ठप्रकारतानिरूपितगगनत्वावच्छिन्नविशेष्यताकशब्दबोधे कारणं प्रथमान्तनित्यपदसमभिव्याहृतप्रथमान्तघटपदत्वरूपाकाङ्क्षाज्ञानं च घटत्वावच्छिन्नाभेदसम्बन्धावच्छिन्ननित्यनिष्ठप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोधे कारणं भवतु तावता कथमुक्तबोधाप्रामाण्यमित्याशङ्कायामाह–यथास्थितस्यार्थस्य बाधादिति, यथास्थितः पदद्वयसमभिव्याहारलब्धो यो गगनत्वावच्छेदेन गगनेऽनित्याऽभेदरूपोऽर्थः घटत्वावच्छेदेन घटे नित्याभेदरूपोऽर्थश्च तौ प्रमाणतो बाधितावेवेति बाधितार्थविषयकत्वादुक्तप्रयोगजन्यशाब्दबोधयोरप्रामाण्यमेवेत्यर्थः । यथास्थितस्यादर्थबाधादिति पाठे तु यथा वस्तुनि अनुभवानुसारेण स्थितोऽबाधितत्वेन व्यवस्थितो यस्स्यादर्थो-

ऽनेकान्तबोधकस्य स्यात्पदस्यानेकान्तरूपोऽर्थस्तस्य बाधात् एकान्तरूपार्थावबोधने बाधप्रसङ्गादित्यर्थो बोध्यः । नित्यत्वेत्यादिनिय-
मस्तु सप्तभङ्गीवहिर्भूतवाक्यस्थल एव, अन्यथा घटस्स्यान्नित्य इत्यादिभङ्गघटिता सप्तभङ्गी चतुरस्रा न स्यात्, तत्राद्यभङ्गे मृद्द्रव्येण घटे
नित्याभेदबोधनात्, सप्तभङ्गीस्थले तु प्रतिपाद्यपुरुषीयाकाङ्क्षामाश्रित्य तत्तन्नयतात्पर्यविषयीभूतनिमित्ततत्तद्द्रव्याद्यवच्छेदेन
घटादौ नित्यादेरभेदान्वय इत्याह—सप्तभङ्ग्यां त्विति ॥ ३९ ॥

तथाहि—इष्टस्त्वया नु परमार्थसतोरभेदोऽ-भिन्नैकजात्यमुत वेद्यविधेर्मृषात्वम् ॥

इत्थं विचारपदवीं भवदुक्तिबाह्यो, नीतो न हेतुबलमाश्रयितुं समर्थः ॥ ३६ ॥

बाह्य एव नास्ति कुत आत्मेति वदँस्तावदित्थं प्रष्टव्यः, नु इति वितर्के, किं त्वया ग्राह्यग्राहकयोर-
भेदो विवक्षितः, उताभिन्नैकजात्यम्, अभिन्नजातीयत्वमित्यर्थः, उताहो वेद्यविधेर्मृषात्वं, ग्राह्यांशस्यालीक-
त्वमित्यर्थः, विप्रतिपत्तिस्त्वत्र ज्ञानत्वं प्रमेयत्वस्य सत्त्वस्य वा व्यापकं न वेत्याकारा, अलीकस्य ग्राह्यत्वे-
ऽपि न प्रमेयत्वम्, तद्ग्राहिकाया असत्ख्यातेः स्वप्रकाशनये स्वांशे प्रमात्वेऽपि तदंशेऽतत्त्वात्, तज्ज्ञानभि-
न्नविषयत्वस्यैव प्रमेयत्वस्य लाभादिति सम्प्रदायः ॥

बाह्य एव नास्तीति, शरीरं सभोक्तृकं भोग्यत्वात् ओदनवत् इन्द्रियं कर्तृप्रेरितं सत् कार्यकारि करणत्वात् वास्यादि-
वदित्याद्यनुमानसिद्ध आत्मा तदैव स्यात् यदि शरीरेन्द्रियाद्योदनवास्यादिबाह्यपदार्थः प्रमाणमुद्रामुद्रितस्स्यात्, अन्यथा हेतुरेवाश्र-

यासिद्धो दृष्टान्तासिद्धश्च स्यादिति पराभिप्रायः । त्वया विज्ञानवादिना, परमार्थसतोरिति मूलस्थपदस्य विशिष्यार्थमाह— ग्राह्यग्राहकयोरिति, ज्ञानत्वं प्रमेयत्वस्य सत्त्वस्य वा व्यापकं नवेति विप्रतिपत्तौ विधिकोटियोगाचारस्य, निषेधकोटि- नैयायिकस्य, ग्राह्यत्वस्य प्रस्तुतत्वेन तद्व्यापकत्वतदभावकोटिकैव विप्रतिपत्तिः कथं नोक्तेत्यत आह— अलीकस्येति, तथा चा- सत्ख्यातिपक्षे ग्राह्यत्वस्य शशशृंगादौ सत्त्वेन तत्र ज्ञानत्वाभावेन ग्राह्यत्वव्यापकत्वस्य ज्ञानत्वेऽभावेपि न क्षतिः । ननु नीलाका- रज्ञानमिवालीकाकारमपि ज्ञानमुत्पद्यत एवेति कथं न नीलस्येवालीकस्य प्रमेयत्वमित्यत आह— तद्ग्राहिकाया इति, तदंशे अलीकांशे, असत्त्वात्, अप्रमात्वात्, तज्ज्ञानेति, अलीकग्राहिज्ञानेत्यर्थः,

एतज्ज्ञानविषयो नीलादिरेतज्ज्ञानभिन्नो नवेति तु नव्याः । वस्तु ज्ञानभिन्नं न वा, सामानाधिक- रण्येन विधिकोटिरवच्छेदकावच्छेदेन निषेधकोटिरित्यपरे । इत्थं विचारपदवीं प्रश्नमार्गं नीतो, भवदुक्तिव्या- घ्रः क्षणिकज्ञानाद्वैतवादी, न हेतुबलमाश्रयितुं समर्थः । तथाहि-प्रथमे साध्ये यः कश्चिद्धेतुरुपादीयते, सहो- पलम्भनियमो वा ग्राह्यत्वं वा, प्रकाशमानत्वं वा, स व्यस्तमाभासः, हेतोः पक्षधर्मतया ज्ञानस्यानुमितिहे- तुत्वात्,

एतज्ज्ञानेत्यादि—विप्रतिपत्तौ वस्तु ज्ञानेत्यादिविप्रतिपत्तौ च विधिकोटिर्नैयायिकस्येतरकोटियोगा- चारस्य । सामानाधिकरण्येनेति, तेन वस्तुत्ववति ज्ञाने ज्ञानभिन्नत्वस्याऽभावेनावच्छेदकावच्छेदेनानुमितिं प्रति प्रतिबन्ध- कीभूतस्य सामानाधिकरण्येन बाधस्य सत्त्वेऽपि न क्षतिः, प्रकृते बाह्यवादिगते सामानाधिकरण्येन विधिकोटिका-

यदि निषेधकोटिस्सामानाधिकरण्येन विज्ञानवादिमतेनाभ्युपगता
नुमितेरसद्भावेन तां प्रति तस्याऽप्रतिबन्धकत्वादिति भावः । यदि निषेधकोटिस्सामानाधिकरण्येन विज्ञानवादिमतेनाभ्युपगता चरितार्थेति वस्तुमात्रे
स्यात् तदा वस्तुत्वसामानाधिकरण्येनैव ज्ञानाऽभेदानुमितिस्स्यात् सा च यत्किञ्चिद्वस्तुनि ज्ञानाभेदसिद्धौ चरितार्थेति वस्तुमात्रे
ज्ञानाऽभेदसाधनमभिलषितं न स्यादिति तन्मतेऽर्थान्तरम्, बाह्यवादिमते वस्तुत्ववति ज्ञानात्मके वस्तुनि ज्ञानाभेदसिद्धौ सिद्धसाध-
नमत आह– अवच्छेदकावच्छेदेन निषेधकोटिरिति । उत्तरार्द्धं विवृणोति– इत्थमिति, भवता नीलतत्संविदोरभेदसा-
धने त्रयो हेतव उपादीयन्ते तद्यथा यदि नीलतत्संविदोरभेदो न स्यात्तर्हि नियमेन सहोपलम्भो न स्यादिति व्यभिचारशङ्कानिव-
र्तकतर्कबलवलिष्ठोऽभेदसाधकः सहोपलम्भनियमो हेतुराद्यः. यदि नीलसंविदो नीलं भिन्नमपि ग्राह्यं स्यात्तदन्यत्सर्वमपि ग्राह्यं
स्यादिति विपक्षबाधकतर्कसहकृतो' नीलादिग्राह्यस्य स्वग्राहकाभेदसाधको ग्राह्यत्वहेतुर्द्वितीयः, ग्राहकस्य स्वग्राह्याभेदसाधकः
प्रकाशमानत्वादिति तृतीयो हेतुरिति, न च स एकोऽपि हेतुस्साध्यसाधनप्रत्यलः आभासरूपत्वादित्याशयेनाह–तथाहीति,
तद्भिन्नाभिन्नस्य तदभिन्नत्वनियमेन परामर्शाभिन्नसाध्यपक्षाभिन्नत्वादनुमितेः परामर्शाभिन्नत्वेन कार्यकारणभावः पक्षसाध्यहे
तुभावश्च न स्यात् पक्षादीनामप्यैक्यादित्याह हेतोः पक्षधर्मतयेति ।

अनुमितेरपि पक्षसाध्यविषयत्वात् परामर्शहेतुपक्षसाध्यानुमितीनामभेदे हेतुहेतुमद्भावस्य दूरापास्त-
त्वात् । अपि च भिन्नस्य ग्राह्यत्वे सर्वज्ञानानां सर्वविषयत्वापत्तिरित्याद्यतिप्रसङ्गो यदि न गृहीतो, न
तर्हि व्याप्तिसिद्धिः, विपक्षे बाधकाभावात् । गृहीतश्चेत्, न कथमन्येनान्यग्रहणम्, अस्यैवार्थस्यानेकपदार्थ-
घटितस्यैकेन ग्रहणादिति ।

पञ्चम्यन्तद्वयोपादानस्य कृत्यमाह—परामर्शेति, घटादिज्ञानादभिन्नो ग्राह्यत्वादित्यत्र ग्राह्यत्वमस्त्वभेदो मास्त्विति व्यभिचारशङ्कानिवर्त्तको भिन्नमपि यदि ग्राह्यं स्यात्तदा सर्ववस्तूनि सर्वज्ञानग्राह्याणि स्युर्भिन्नत्वाविशेषादित्यतिप्रसङ्गविषयकस्तर्को यद्यस्ति तदा तस्यैवानेकपदार्थघटितातिप्रसङ्गविषयकत्वेन ग्राह्याद्भिन्नस्य भिन्नस्य ग्राह्यत्वाभावाभ्युपगमेऽनुपपत्तिः, तथा च तर्काभासतया न तस्य विपक्षबाधकत्वम्, अथोक्तातिप्रसङ्गविषयकस्तर्को नास्ति तदा सुतरामेव विपक्षे बाधकतर्काभावान्न ग्राह्यत्वज्ञानाभेदयोर्व्याप्तिसिद्धिरित्याह— अपि च भिन्नस्येति, भिन्नस्य ग्राह्यत्वे इत्यनन्तरं भिन्नत्वाऽविशेषादिति पूरणीयम्,

सहोपलम्भनियमो नियमेनैकवित्तिवेद्यत्वं वा, तद्विषयकज्ञानाविषयत्वं वा, तेषां ज्ञानस्य स्वप्रकाशत्वात् ज्ञानज्ञेययोरभेदाच्च ज्ञानज्ञेयग्राहकाभ्यां ज्ञेयज्ञानयोरपि ग्रहणात् नासिद्धिः, ज्ञेयस्य ज्ञानाभिन्नत्वे साध्ये ग्राह्यत्वं, ज्ञानस्य ज्ञेयाभेदे च प्रकाशमानत्वं हेतुरित्यक्षरसङ्गतिः । नीलधवलादिपरस्परविरुद्धाकारनिकरावगाहि च चित्रज्ञानमनुभूयते, तत्र यदि ग्राह्यग्राहकयोरभेदः स्यात् कथमेकस्य विरुद्धानेकात्मत्वम्, एकत्वान्यथानुपपत्त्यानुभूयमानस्यापि नानाकारस्यापलापे च कथं तदुल्लेखः । न च स्वसंविदितत्वे केनाप्यनुल्लिखितेन स्थातुं शक्यम्, तथात्वेऽप्यभेदे नीलसाध्यार्थक्रिया धवलादपि जायेत, तथा नीलार्थी धवलेऽपि प्रवर्त्तेतेत्यर्थक्रियाप्रवृत्तिसङ्करप्रसङ्गः, भेदज्ञानरूपविवेचनानुपपत्तिप्रसङ्गश्च ।

तेषां विज्ञानवादिनाम्, मते इति शेषः ज्ञानज्ञेयेति ज्ञानग्राहकेण ज्ञेयस्य ज्ञेयग्राहकेण ज्ञानस्य ग्रहणादित्यर्थः । ग्राह्यग्राह-

क्षात्रभिन्नौ नियमेनैकज्ञानविषयत्वात्तद्विषयकज्ञानाविषयत्वाद्वेति प्रयोगः नासिद्धिरित्यन्तेन पर्यवसितः, ज्ञेयस्येत्यादिनैकैकस्य पक्षत्वं प्रत्येकघटिताभेदस्य साध्यत्वमिति ग्राह्यं ग्राहकाभिन्नं ग्राह्यत्वाज्ज्ञानं ज्ञेयाभिन्नं प्रकाशमानत्वादित्येवमनुमानप्रयोगः। ग्राह्यग्राहकयोरभेदखण्डनप्रकारमाह–नीलधवलेत्यादिना, कथमेकस्येति, नीलधवलाद्याकारं समूहालम्बनज्ञानमनुभूयते तत्र यदि ज्ञानाद्ग्राह्यस्याभेदस्स्यात्तर्हि तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमेन नीलाभिन्नज्ञानाभिन्नस्य धवलस्य निलाभिन्नत्वं धवलाभिन्नज्ञानाभिन्नस्य नीलस्य धवलाभिन्नत्वं च प्रसज्येतेत्येवं नीलधवलयोरभेदस्स्यादिति तद्वयान्नीलाकारत्वधवलाकारत्वयोर्विरोधस्यावश्यमभ्युपगन्तव्यत्वेन कथं विरुद्धानेकाकारमेकं ज्ञानं स्यादित्यर्थः। यदि नानाकारसमूहालम्बनज्ञानं स्यात्तदा तदेकमेव न स्यात् विरुद्धधर्माध्यस्तत्वादस्ति चैकमिति तदन्यथानुपपत्त्यानुभूयमानस्यापि नानाकारस्यापलापे तदुल्लेख्येव तन्न स्यात्, तथा च चित्रत्वस्वरूपमेव जह्यादित्याह–एकत्वान्यथेत्यादि, न च कस्याप्याकारस्य ज्ञानस्वरूपानतिरेकात्स्वसंवेदनपक्षेऽनुल्लिखितत्वं युक्तमित्याह–न चेति, चित्रज्ञानस्यानेकाकारत्वेप्येकत्वे पूर्वोक्तनियमेन नीलधवलयोरभेदापत्त्या नीलेन यत्क्रियते तद्धवलादपि यच्च धवलेन क्रियते तन्नीलादप्युत्पद्येत तथा नीलार्थी धवलं धवलार्थी नीलमप्युपाददीतेत्याह–तथात्वेऽपीति, नीलाकाराऽग्रहणेऽपि पीताकारग्रहणमिदं पीतमिति ज्ञाने पीताकाराऽग्रहणेऽपि नीलाकारग्रहणमिदं नीलमिति ज्ञाने समूहालम्बने च नीलाकारपीताकारयोस्सद्भानमिति वस्तुस्थितिः तत्र यदि ज्ञानस्य नीलपीताभ्यां सहाभेद एव स्यात्तदाऽऽकारयोरप्यभेदप्रसक्त्यैकाकारतयैव भानं स्यान्नोभयाकारत्वेनेत्याह–भेदज्ञामेति, अथवा यदि ग्राह्यस्य ग्राहकाभेदस्स्यात्तर्हि ग्राहकमेव स्यात्, ग्राहकस्य च ग्राह्याभेदो यदि स्यात्तर्हि ग्राह्यमेव स्यात्, न चास्तु तथेति वाच्यं, तथा सति नीलस्य प्रकाश इति भेदप्रतीत्यनुपपत्तिस्स्यात्, यतो

नह्यभियुक्ता नीलाभिन्ने पटे नीलस्य पट इति प्रयुञ्जते, भेद एव षष्ठीविभक्तिविधानात्, किन्तु नीलो घट इति, तथाऽत्रापि नीलं ज्ञानमिति प्रयुञ्जीरन्, न च राहोः शिर इतिवदुपपत्तिरिति वाच्यम्, तत्र भ्रमत्वकल्पनामूलस्याभेदोपलम्भस्य सत्त्वात्, अत्र च ज्ञानमन्तर्भासते नीलादिकं च बहिर्भासते, इत्येवं सुस्पष्टतया भेदोपलम्भस्यैव सत्त्वेन भ्रमत्वकल्पनाया अनवकाशात्, किंच नीलात्पीताच्च भिन्नं ज्ञानमिति भेदप्रतीतिः कथमुपपादिता स्यादित्याशयेनाह-भेदज्ञानेति, "बाह्यस्यैवं विरुद्धधर्माध्यासाद्व्यं तथात्वेऽप्यभेदेऽर्थक्रियाचेतनप्रवृत्तीनां सङ्करप्रसङ्गाद्विवेचनानुपपत्तिप्रसङ्गाच्च नतु विज्ञानस्येति" बौद्धाधिकारपाठानुसारेण स्थातुं शक्यमित्यनन्तरं बाह्यस्यैवं विरुद्धधर्माध्यासाद्व्यं तथात्वेऽप्यभेदे नीलसाध्यार्थक्रिया धवलादपि जायेत तथा नीलार्थी धवलेऽपि प्रवर्त्तेतेत्यर्थक्रियाप्रवृत्तिसङ्करप्रसङ्गः, भेदज्ञानरूपविवेचनानुपपत्तिप्रसङ्गश्च, न तु विज्ञानस्य, तस्य नार्थेत्याद्यत्र पाठो युज्यते ।

ननु विज्ञानस्य तस्य नार्थक्रियाधीनं सत्त्वम्, अपि तु प्रतिभासमात्राधीनं, नापि तत्रार्थक्रियार्थिनः काचन प्रवृत्तिः, स्वरसविज्ञानप्रवाहातिरिक्ताया अर्थक्रियायास्तदर्थिनश्चाभावात्, विवेचनाभावश्चात्र परमो निर्वाहः । भेदे हि कदाचिदेकाग्रहेऽपीतरग्रहः स्यात्, न चेह तदस्ति, नीलधवलाकारत्वेनैव स्वप्रकाशेन ग्रहणात् भिन्नत्वादेरेष च ज्ञानान्तरेणाग्रहणात्, तथा च विवेचनाभावादेवाभेदसिद्धिरिति भावः । तत्किमङ्ग परिणतशान्तेराश्रमपदमिव विज्ञानमासाद्य व्यालनकुलादेरिव नीलधवलादेः शाश्वतिकवैरत्यागो, निभृतवैराणां तत्फलत्यागो वा, नीलधवलादीनां ज्ञाने न विरोधः, सत्यपि वा तस्मिन् न ज्ञानभेदकत्वमिति विकल्पद्वयार्थः । न तावत् प्रथमः ।

विवेचनाभावः, अर्थज्ञानयोर्भेदग्रहाभावः । सारङ्गी सिंहशावं स्पृशति सुतधिया नन्दिनी व्याघ्रपोतं, मार्जारी हंसबालं प्रणयपरवशा केकिकान्ता भुजङ्गम् । वैराण्याजन्म जातान्यपि गलितमदा जन्तवोऽन्ये त्यजन्ति, श्रित्वा साम्यैकरूढं प्रशमितकलुषं योगिनं क्षीणमोहम् ॥ १ ॥ इति पारमर्षवचनाद्यथा समभावभावितात्मानुपप्लुतंचित्तपरिणतिमहायोगिसमलङ्कृताश्रमपदमासाद्य व्यालनकुलादेः शाश्वतिकवैरत्यागस्तत्फलत्यागो वा तथा किं विज्ञानमासाद्य नीलधवलादेरपि तथात्वमिति पृच्छति-तत्किमत्रेति, ।प्रकृते शाश्वतिकवैरत्यागस्तत्फलत्यागो वेति विकल्पद्वयस्य पर्यवसितार्थमाह—नीलधवलादीनामिति, तस्मिन् विरोधे ।

परस्परनिषेधविधिनान्तरीयकविधिनिषेधयोरविरोधे जगति विरोधोच्छेदप्रसङ्गात् । यद्यपि नीलादीनामेकतरनिषेधध्रौव्येऽपि नैकनिषेध इतरविधिध्रौव्यम् तृतीयप्रकारस्यापि सम्भवात्, तथापि परस्पराभावव्याप्यत्वे तात्पर्यम् । परस्पराभावव्याप्ययोरपि चाविरोधे गवाश्वादीनामपि भेदो न सिद्ध्येत्, तन्मूलविरुद्धधर्माध्यासनिरासादित्यर्थः । तत्सिद्धिरेव च भेदसिद्धिरतो न द्वितीयोऽपि । यस्तु बाह्ये विरोधपालनाय विशेषो दर्शितः स तेषामेवास्तु, यदि हि विरुद्धधर्माध्यासस्य भेदसाधकत्वं प्रति समाश्वासः, किमर्थक्रियाप्रतिनियमोपन्यासेन, न चेत्, तथापि किं तेन, सोऽपि ह्यर्थक्रिययोर्विरुद्धधर्माध्यासेन भेदे सति स्यादिति तस्यैवोपजीव्यत्वात्, अन्यथार्थक्रियानियमेऽर्थक्रियान्तरानुसरणे अनवस्थानादनवस्थितार्थक्रियासन्तानस्य चासर्वज्ञपुरुषावेद्यत्वात् ।

ननु नीलधवलादीनां विरोधसिद्धिस्तदैव स्यात् यदि नीलादेर्निषेधे नियमेन धवलादेः सत्त्वं स्यात्, न चैवं, नीलाद्यभाववति रक्तादिपटे धवलाद्यभावेऽपि रक्तादेरेवोपलम्भादिति परस्परंनिषेधविधीत्याद्युक्तिरसङ्गतेत्यत आह— थद्यपीति, । एकतरनिषेधध्रौव्येऽपीति, एकतरस्य नीलादेर्नियमेन निषेधेऽपीत्यर्थः। नैकनिषेध इति, न नीलादेर्निषेधे सतीत्यर्थः । इतरविधिध्रौव्यम्, इतरस्य धवलादेर्नियमेन सत्त्वम् । निषेधे हेतुमाह-तृतीयप्रकारस्यापीति, रक्तादेरपीत्यर्थः । यदि गोत्वं स्यात्तर्ह्यश्वत्वं न स्यात्, एवमश्वत्वं स्यात्तर्हि गोत्वं न स्यादिति गोत्वाश्वत्वयोरिव यदि नीलं स्यात्तर्हि धवलं न स्यात् एवं धवलं स्यात्तर्हि नीलं न स्यादिति नीलधवलयोरपि परस्पराभावव्याप्यत्वेन परस्परविरहनिष्ठापाद्यतानिरूपितापादकत्वलक्षणविरोधभाक्त्वमेवेत्यभिप्रायेणाह—परस्पराभावव्याप्यत्वे तात्पर्यमिति, तदनभ्युपगमेऽतिप्रसङ्गमाह—परस्पराभावेति, तन्मूलेति, भेदसिद्धिमूलेत्यर्थः । तत्सिद्धिरेवेति, विरुद्धधर्माध्याससिद्धिरेवेत्यर्थः । विशेषः, अर्थक्रियाप्रवृत्तिसङ्करप्रसङ्गरूपः । स विशेषः । तेषां ज्ञानात्मकानां नीलपीतादीनाम् । यदि विरुद्धधर्माध्यासस्य भेदसाधकत्वमभ्युपगम्यते तर्हि नीलत्वपीतत्वाभ्यामेव नीलपीतादीनां भेदोऽस्तु यदि नीलपीतादीनां भेदो न स्यात्तर्ह्यर्थक्रियाभेदो न स्यात्, अस्ति चार्थक्रियाभेदः, तस्मात्तेषां भेद इति किं कल्पनया? यदि नाभ्युपगम्यते तर्ह्यर्थक्रियाया अपि भेदः केन स्यात् ? । अथ किमत्र वक्तव्यम् ? तदीयार्थक्रियाप्रतिनियमादिति चेत्, तर्हि तत्राप्युक्तप्रश्नस्य तादवस्थ्येनार्थक्रियान्तरानुसरणमेव कृतं स्यादित्यनवस्थाप्रसङ्गः । न च सोऽप्यभ्युपगन्तुं युक्तः, उत्तरस्यासर्वज्ञपुरुषावेद्यत्वेनासत्त्वात्तत्पूर्वपूर्वस्याप्यामूलमसत्त्वं स्यादित्याशयेनाह—'यदि हि विरुद्धधर्माध्यासस्येति', ननु बाह्यभूता नीलपीतादयः परस्परं भिन्नाः प्रतिनियतार्थक्रियाकारित्वादित्यनुमानं यदि ते परस्परं

भिन्ना न स्युस्तर्हि प्रतिनियतार्थक्रियाकारिणो न स्युरित्येवं यथा व्यभिचारशङ्कानिवर्तकतर्कसद्भावबलेन प्रमाणतामास्कन्दति न तथा ज्ञाने नीलपीताद्याकारयोर्भेदसाधकानुमानं, विपक्षबाधकतर्काभावादित्याशङ्क्ते—

अथ बाह्यानां भेदे साध्येऽर्थक्रियानुपपत्तिरस्ति विपक्षे बाधिका, नतु ज्ञाने किमपीति चेत्, न, यथा बाह्ये भेदाभावेऽर्थक्रियाप्रतिनियमो न स्यादिति दण्डस्तथा ज्ञानेऽपि प्रतिभासनियमो न स्यादिति दण्डस्य दुर्निवारत्वात्। अथ प्रतिभासस्य निर्भास्यनियमोऽसाङ्कर्यं सहानुपलम्भाख्यं, तच्च स्वरूपतोऽसिद्धं, नीलपीतावगाहिनो ज्ञानस्य नीलपीताकारयोस्तेनैव प्रतिभासनात् इति चेत्, न, प्रकारतस्तस्य विवक्षितत्वात्, तस्य च सत्त्वात्, नहि सहानुपलम्भमात्रमभेदे बाधकमिति ब्रूमः, किन्तु नीलाकारस्य ज्ञानस्य पीताकारत्वेन पीताकारस्य नीलाकारत्वेनानुपलम्भस्तयोरभेदे बाधक इति, तयोरभेदे ह्येकैकाकारस्यापि ज्ञानस्योभयाकारतायामुभयाकारत्वेनोपलम्भप्रसङ्गात् ॥ न चोपलम्भानुपलम्भयो रूपभेदानिवेशे उपलभ्यमानत्वानुपलभ्यमानत्वव्यवस्था स्यात्, अनुपलभ्यमानत्वेनाभिमतस्योपलभ्यमानताया उपलभ्यमानत्वेनोपेतस्य चानुपलभ्यमानतायाः सुवचत्वात्, यथाहि गौर्गोत्वेनोपलभ्यते नाश्वत्वेनाश्वश्चाश्वत्वेन न तु गोत्वेनेति न तयोरभेदस्तथैकज्ञानगोचरावपि नीलपीताकारौ नीलपीताकारत्वाभ्यामुपलभ्येते न पीतनीलाकारत्वाभ्यामिति तयोरपि नाभेदः। न चैकं ज्ञानं भिन्नोभयाकारं भवितुमर्हति, तदाकाराकारिणोरभेदादिति फलितार्थः।

अथ बाह्यानामिति,। विज्ञानवादी पुनः शङ्क्ते—अथ प्रतिभासस्येति,। तेनैव, एकेनैव ज्ञानेन। आशयो-

दुघाटनेन समाधत्ते—न, प्रकारत इति, एतदेव विशदयति—नहीति, नीलपीताकारयोरभेदे हि नीलमिति ज्ञानस्य पीतमिति ज्ञानस्य चोभयाकारत्वापत्त्या नीलपीते इत्येवमुभयाकारत्वेनोपलम्भप्रसङ्ग इत्याह—तयोरभेद इति, रूपभेदेति, प्रकारभेदेत्यर्थः । नीलज्ञानपीतज्ञानयोरपि नीलाकारत्वपीताकारत्वाभ्यामेव भिन्नत्वं भवति तदुभयं च चित्रज्ञानेऽपि विद्यत इति तस्यापि भिन्नत्वं स्यादेवेत्याह—

एतेनैकमेव चित्रज्ञानं नीलपीताभ्यामाकाराभ्यामुपलभ्यत इति प्रत्युक्तम् । गवाश्वयोरिव नीलपीताकारयोरपि विज्ञानयोः प्रतिभासभेदादिना नियतभेदसिद्धेः, अन्यथा तयोरपि क्वचित् सङ्करप्रसङ्गादिति । एतेन विवेचनाभावोऽपि निरस्तः, आकारयोरसम्भेदेन वेदनस्यैव विवेचनत्वात् । अथैकाग्रहणेऽन्यस्य ग्रहणं विवेचनम्, न च चित्रज्ञानगतयोर्नीलपीताकारयोस्तत् सम्भवति, स्वसंवेदनसंवेद्यत्वात्, अचित्रज्ञानसङ्गतौ च नीलपीताकारौ भिन्नावेव, आकारिणां भेदे तदभिन्नानामाकाराणामभेदानुपपत्तेरिति चेत्, असौ विवेचनाभावस्तस्यां व्यक्तौ, तज्जातीये, सर्वत्र वा, आद्योऽप्येकस्य पुंसः, पुरुषान्तरस्यापि वा, न प्रथमे प्रथमः, क्षणिकतायां बाह्ययोरपि नीलपीतयोरेकपुरुषीयज्ञानग्राह्ययोस्तेन पुंसाऽविवेचनात्, न तत्र द्वितीयः; एकपुरुषवेद्यस्य नीलादेः पुरुषान्तरेण ग्रहणे निश्चयाभावात् सन्देहो वाच्यस्तस्य च ज्ञानाकारेऽपि तुल्यत्वात् ।

नियतभेदसिद्धेरिति, । विरुद्धधर्माध्यासेऽपि भिन्नत्वानभ्युपगमे यथा प्रत्येकाकारज्ञानेऽसङ्कीर्णयोरपि नीलपीताकारयोश्चित्रज्ञाने साङ्कर्यं तथा गवाश्वयोरपि तादात्म्येन कस्याञ्चिद्व्यक्तौ साङ्कर्यं स्यादुभयात्मिका काऽपि व्यक्तिः स्यादिति

विवेचनाभावश्चात्र परमो निर्वाह इति यदुक्तं तन्निरस्यति—एतेनेति, ।
यावदित्याह—अन्यथेति, तयोरपि, गवाश्वयोरपि, विवेचनाभावश्चात्र परमो निर्वाह इति यदुक्तं तन्निरस्यति तदभिन्नत्वमिति
एतेनेत्यतिदिष्टं हेतुमाह—आकारयोरसंभेदेनेति, यद्याकाराकारिणोरभेद एव स्यात्तदा तदभिन्नाभिन्नस्य तदभिन्नत्वमिति
नियमादाकारद्वयस्याप्येकरूपत्वापत्त्यैकाकारतयैव भानं स्यान्नोभयाकारतयेत्याकारयोर्नीलाकारत्वेन पीताकारत्वेन च पृथक्स्वरूपेण
वेदनलक्षणमेव विवेचनं तयोर्भेदं व्यवस्थापयतीति भावः । एकस्याग्रहणं तदपरस्य च ग्रहणमित्येवं ग्रहणाग्रहणलक्षणमेव विवेचनम्,
तत एव च भेदः, न चोक्तविवेचनं चित्रज्ञानगतयोर्नीलाकारपीताकारयोः संभवति, स्वसंवेदनेन चित्रज्ञानग्रहणे तदभिन्नयोस्त-
योरपि ग्रहणादिति न ते भिन्ने, नीलमिति पीतमिति च प्रत्येकाकारज्ञानगतयोस्तु नीलपीताकारयोस्तत्संभवत्येव, नीलग्राहिणा
ज्ञानेन पीताग्रहणात् पीतग्राहिणा च ज्ञानेन नीलाग्रहणादिति तयोर्भेद एव, ज्ञानभेदे तदभिन्नाकारभेदस्यावश्यंभावादित्याशङ्क्ते
विज्ञानवादी—अर्थेकाग्रहण इति, । स्थिरत्वपक्षे तु कालान्तरे तस्या एव नीलव्यक्तेः पीतव्यक्तेरग्रहणेऽपि ग्रहणसंभवेन विवेचन-
स्यैत्र सत्त्वेन नीलपीतयोर्भेदः संभवतीत्यत आह—क्षणिकतायामिति, सति सप्तमी । तेन पुंसाऽविवेचनादिति, तथा च
सौत्रान्तिकमताभ्युपगतयोर्बाह्ययोरपि नीलपीतयोरभेदः स्यादिति भावः । बाह्यपक्षे नीलपीतयोरेकेन पुंसा चित्रज्ञानेन ग्रहणेऽन्येन
तत्काल एव तयोरेकतरस्यैव ग्रहणं भवत्येवेत्यत्र नियामकाभावेन विवेचनस्य संदेहान्निश्चितविवेचनस्याभावस्तत्रास्ति न त्वभेद इति
व्यभिचारस्तद्वारणाय संदिग्धविवेचनमप्यादाय तत्र विवेचनाभावो नास्तीत्युच्यते तदा ज्ञानाकारयोरपि विवेचनसंदेहात् स नास्ती-
ति विवेचनाभावहेतुः स्वरूपासिद्ध इति नातोऽभेदसिद्धिरित्याह—न तत्र द्वितीय इति। नीलादेः चित्रज्ञानग्राह्यस्य बाह्यनीलपीतादेः,
एतेन तेनैव पुंसा कालान्तरे बाह्यस्य स्मरणादिलक्षणं विवेचनं प्रत्युक्तं वेदितव्यम्। अथान्येनान्यस्या-

वेदनात् तद्भिन्नेन पुरुषान्तरीयज्ञानेन तज्ज्ञानाकारविवेचनसम्भावनापि नास्तीति चेत्, अभेदेनैव तर्ह्यविवेचनं साध्यम्, तथा च किन्तेनोपन्यस्तेनापि अभेदसिद्धिपर्यवसायिना, भेदे ग्राह्यग्राहकभावानुपपत्त्यैवाविवेचनं साध्यम्, तथा च किमन्तर्गडुनाऽविवेचनेन, न चैवमेवास्तु, तस्या अपि असिद्धेरिति दीधितिकारः।

एतेनेति, ज्ञानाकारेऽपि तुल्यत्वेनेत्यर्थः। अयं भावः—स्वसंवेदनसंवेद्यत्वात् चित्रज्ञानीयनीलपीताकारयोस्तदानीं तेन पुंसाऽविवेचनेऽपि तेनैव कालान्तरे चित्रज्ञानीयैकाकारस्तदंशेऽनुद्बुद्धसंस्काराच्न स्मर्यते तदन्याकारस्तूद्बुद्धसंस्कारात् स्मर्यते, इत्येवमेकस्यास्मरणेऽप्यन्यस्य स्मरणलक्षणविवेचनस्य ज्ञानाकारेऽपि तुल्यत्वेन चित्रज्ञानाकारयोरपि भेदः स्यादेवेति। एतेनेत्यनेनातिदिष्टस्य ज्ञानाकारेऽपि तुल्यत्वादित्यस्यासिद्धिरेवेत्याशङ्कते—अथान्येनेति,। तद्भिन्नेन तज्ज्ञानाकारभिन्नेन। आकाराकारिणोरभेदसिद्धौ सत्यामेवैकज्ञानाभिन्नाकारस्य भिन्नेन ज्ञानेन ग्रहणसंभावनाया अभावादविवेचनसिद्धिः तथा चाभेदस्य पूर्वमेव सिद्धत्वादलमविवेचनोपन्यासेनेत्याशयेन समाधत्ते—अभेदेनैवेति,। तथा चेति, अभेदस्याविवेचनसिद्ध्यर्थं पूर्वमेव सिद्धेरावश्यकत्वे चेत्यर्थः।अभेदेनैवेत्यादेर्दीधितिकारीयं फलितार्थव्याख्यानमुपदर्शयति—भेदे ग्राह्यग्राहकभावानुपपत्त्यैवेति, तस्या अपि ग्राह्यग्राहकभावानुपपत्तेरपि,.

अविवेचनसाध्येन ग्राह्यग्राहकयोरभेदेनैवाविवेचनं साध्यम्, तथा चाभेदस्य प्रागेव सिद्धत्वात् किन्तत्सिद्ध्यर्थमविवेचनोपन्यासेनेति प्राञ्चो नारायणादयः। अपि च भिन्नयोर्न चेत् ग्राह्यग्राहकभावः, कथं तर्हि ग्राह्ययोरपि सहोपलब्धयोर्नीलेतरयोर्विवेचनम्, एकैकग्राहिणा ज्ञानान्तरेणेति चेत्, तदपि ततो भिन्न-

मभिन्नं वा, भिन्नं चेत्, न तर्हि ग्राह्यग्राहकभावः, अभिन्नं चेत्, पर्यवसितं तर्हि पञ्चानामभेदेन, तदभिन्नाभिन्नस्य तदभिन्नत्वात्, एवं च सहोपलम्भनियमे नियमांशो व्यर्थः, एकज्ञानविषयत्वस्यैव तन्मते तद्व्याप्यत्वात् इति ध्येयम्। पञ्चानामिति प्रत्येकविषयकस्य ग्राहकद्वयस्य ग्राह्यद्वयस्य चैकविषयकस्य च ग्राहकस्येत्यर्थः। प्रसङ्गोऽयं स्वमतावष्टम्भेन, गवाश्वगोचरसमूहालम्बनेऽपि परैश्चित्रतायाः स्वीकारादिति गुणानन्दः।

सहोपलब्धयोः चित्रज्ञानविषययोः। तदपि नीलपीतादिप्रत्येकग्राहिज्ञानमपि। ततः नीलपीतादिरूपात् स्वविषयात्। ययोर्युगपदुपलम्भे सत्यपि पृथगुपलम्भोऽस्ति तयोः सहोपलम्भो वर्तते न त्वभेद इति व्यभिचारवारणाय सहोपलम्भनियम इति हेतुर्नियमघटितः कृतः परन्त्वाकाराकारिणोरभेदवादे या व्यक्तिरेकत्र ज्ञाने भासते तस्या व्यक्तेस्तज्ज्ञानाभिन्नत्वात्तदन्यज्ञानाभिन्नत्वाभावेन तदन्यज्ञाने भानासंभवात् ययोः सहोपलम्भस्तयोः पृथगुपलम्भस्याभावादेव व्यभिचाराप्रसक्त्या नियमांशस्य व्यावर्त्याभावाद्व्यर्थत्वेन तद्रूपव्यर्थविशेषणघटितत्वाद्ग्राह्यग्राहकयोरभेदसाधकोऽयं हेतुर्व्याप्यत्वासिद्ध इत्याह—एवं च सहोपलम्भनियम इति। तद्व्याप्यत्वात् अभेदव्याप्यत्वात्। ग्राहकद्वयस्येति नीलज्ञानपीतज्ञानोभयस्येत्यर्थः। ग्राह्यद्वयस्य नीलस्य पीतस्य च। एकविषयकस्य च ग्राहकस्य नीलपीतोभयाकारचित्रज्ञानस्य, तस्य चैकविषयकत्वमाकारयोरभेदानुसन्धानादिति ध्येयम्। विज्ञानवादिमते चित्ररूपवत् समूहालम्बनज्ञानमपि चित्रात्मकं विलक्षणमेव, न तु नीलपीतोभयाकारं येनोक्तदोषस्स्यादित्यत आह—प्रसङ्गोऽयमिति, स्वमतावष्टम्भेनेति न्यायमतावलम्बेनेत्यर्थः। प्रकारान्तरेण विज्ञानवादिमतं खण्डयन्नाह—

अपि च विवेचनाभावज्ञानं विवेचनं गृह्णाति नवा, गृह्णाति चेत्, सिद्धं तर्हि भिन्नस्यापि ग्राह्यत्वम्,

विवेचनस्यानेकपदार्थघटितमूर्त्तिकत्वात्, न चेत्, नाभेदानुमापकम्, अभावमात्रस्यानैकान्तिकत्वात्। वस्तुगत्या विवेचनस्याभावो नानैकान्तिक इति चेत्, अस्त्वन्यत्, इदमेव ज्ञानं तं तमर्थं गृह्णाति नवेति विविच्यतां, ग्रहणे भिन्नस्यापि ग्राह्यत्वम्, अग्रहणे त्वनियम इति।

अपि चेति। सिद्धं तर्हि भिन्नस्यापि ग्राह्यत्वमिति विवेचनाभावज्ञानं न विवेचनतदभावोभयरूपं, तथा सति विवेचनतद्भावयोरेकज्ञानाभिन्नत्वेनाभेदापत्त्या प्रतियोग्यनुयोगिभावानुपपत्तिस्स्यात्, तथा च विवेचनं ज्ञानाद्भिन्नमेव ज्ञानेन गृह्यत इति स्वीकर्त्तव्यमिति सिद्धं नः समीहितमित्ययमप्यर्थो बोध्यः। विवेचनाभावात्मकतद्व्यक्तित्वेनैव हेतुत्वमाश्रित्याशङ्कते—वस्तुगत्येति। अस्त्वन्यदिति अविचारितरमणीयमस्त्वेतदित्यर्थः। दूषणान्तरमाह—इदमेवेति वस्तुगत्या विवेचनस्याभावो नानैकान्तिक इत्याकारमेवेत्यर्थः। ग्राह्यग्राहकयोरभेदसाधकेऽविवेचने यो विप्रतिपन्नस्तं प्रति तदपि परेण स्वग्राह्याद्भिन्नेन ज्ञानेन परस्य स्वज्ञानाद्भिन्नस्य ग्राह्यस्यावेदनात्मकलिङ्गादेवानुमेयं, तस्य च लिङ्गस्यानेकपदार्थघटितमूर्त्तिकत्वात्तज्ज्ञानं भिन्नस्य ग्राह्यत्वे सत्येवोपपद्यत इत्याशयेनाह—

एवं परेण परस्यावेदनादविवेचनं साध्यम्, तद्यदि न ज्ञातं, कुतः साध्यसिद्धिः, ज्ञातं चेत्, सिद्धम् परस्य परेण वेदनम्। द्वितीयपक्षे तु तज्जातीयस्य बाह्यवद्विज्ञानस्यापि विवेचनमेवेति। विरुद्धधर्म्माध्यासात् संविद्भेदः साध्यः, स एव तु नास्त्यनुभवबाधितत्वात् इति वदतस्तु कतमोऽभिप्रायः, किं नीलत्वादीनां विरोध एव नास्ति, किं वा विज्ञानस्य तद्रूपत्वम्, उताहो तदवगाहित्वं, नाद्यः, तेषां विरोधस्य साधितत्वात्, न द्वितीयः,

ज्ञानानात्मनोऽपि ग्राह्यत्वसिद्धेः, न तृतीयः, उष्ट्रलगुडकन्यायापातात्, यथोष्ट्रगृहीतेनैव लगुडेन स्वविरुद्धस्वशिरोभङ्गः, तथा नीलधवलादीनां परस्परानात्मसंवेदनेनैव स्वविरुद्ध एव विरुद्धधर्माध्यास आपतितस्ततश्च भेदोऽपीति।

एवमिति । तद्यदीत्यत्र तच्छब्देन परेण परस्यावेदनमित्यस्य परामर्शः । कुतः साध्यसिद्धिरिति प्राचां मते ज्ञातलिङ्गस्य नव्यमते लिङ्गज्ञानस्यानुमितिकरणत्वात् परेण परस्यावेदनस्य हेतोर्ज्ञानमेव न जातं तर्हि विवेचनस्य साध्यस्यानुमितिर्न स्यादिति भावः। असौ विवेचनाभावस्तस्यां व्यक्तौ तज्जातीये सर्वत्र वेति विकल्पान्तर्गतद्वितीयविकल्पं निरस्यति–द्वितीयपक्षे त्विति। घटतत्सजातीयघटान्तरयोः पृथक्तयोपलम्भाद्विवेचनवदेकज्ञानतत्सजातीयज्ञानान्तरयोरपि पृथक्तयोपलम्भाद्विवेचनमेवेत्यर्थः। विरुद्धधर्माध्यासात्संविद्भेदः साध्य इति नीलपीते इति समूहालम्बनज्ञानं ज्ञानान्तराद्भिन्नं ततो विरुद्धधर्माध्यासादित्यनुमानेन नैयायिकैस्संविद्भेदः साध्य इत्यर्थः। तत्रोक्तहेतुरेव स्वरूपासिद्ध इत्याह–स एव त्विति। इति वदतः एवं ब्रुवतो विज्ञानवादिन इत्यर्थः। तद्वत्त्वं नीलत्वादिमत्त्वं, नास्तीत्यनुषञ्जनीयम्, एवमग्रेऽपि। विरोधस्य साधितत्वादिति नीलत्वादीनां पीतत्वाद्यभावव्याप्यत्वेन विरोधस्य प्रागेव साधितत्वादित्यर्थः। बाह्यस्यैव नीलत्वादिधर्मवत्त्वेन ज्ञाने नीलत्वपीतत्वे न स्तः, तथा च भिन्नमेव नीलपीतादिकं ज्ञाने चकास्तीति भिन्नस्यापि ग्राह्यत्वसिद्ध्या नः समीहितसिद्धिरित्याशयेन द्वितीयपक्षं निराकरोति–न द्वितीय इति। नीलधवलाद्याकारव्यतिरिक्तं चित्राकारमभ्युपगच्छन् विज्ञानवादी शङ्कते—

अथ यथा भवतां नीलपीताद्यारब्धेऽवयविनि एकत्रानेकरूपसमवायायोगादतिरिक्तं चित्ररूपं, तथास्माकमप्येकत्र विज्ञानेऽनेकाकारासम्भवादतिरिक्त एव चित्राकारः किं न स्यात्, स्यादेव यदीदं चित्रमित्येवं ज्ञायेत,

यदा तु इदं नीलमिदं च पीतमेते नीलपीते मिथो भिन्ने इत्यादिकं स्फुरति तदा कथं तत्कल्पनावकाश इति व्यक्तीभविष्यति चेदमप्युपरिष्टात् ।

अथेति। नीलाद्याकारस्य ज्ञानाद्भेदे ग्राह्यत्वानुपपत्तिरेव बाधिका, अभेदे च विरुद्धधर्माध्यासो बाधकः, तदुभयविकलनीलाद्याकारप्रकाशस्वरूपे तु न किमपि बाधकमिति तद्रूपमेव चित्रज्ञानमस्त्वित्याशङ्कते

हिनस्तु तर्हि प्रकाशमानताऽनेकत्वं, भेदे ग्राह्यत्वायोगात्, प्रकाशमानतैकत्वेन प्रकाश इत्यन्ये, विरुद्धधर्माध्यासोऽप्येकत्वं, तथाप्येकानेकत्वविकलनीलाद्याकारप्रकाशस्वरूपे किमायातमिति चेत्, तदिदं भीतैः क्षेत्रविलयनं, यथा भूताविष्टैः क्षेत्रोपघातकतृणोन्मूलनाय प्रवृत्तैः शस्योन्मूलनमेव क्रियते तादृगेतत्, प्रकाशस्वरूपरक्षणायैकत्वानेकत्वनिराकरणप्रवृत्तौ प्रकाशस्वरूपस्यैव व्याहतेरित्यर्थः। तथाहि—नियताकारत्वमेव ह्येकत्वमनियताकारत्वं चानेकता, तन्निवृत्तौ च न नीलाकारं न नीलपीताद्याकारमित्यनाकारमेवावशिष्यते, तथा च नीलाद्याकारप्रकाशस्वरूप इति यदुक्तं तद्व्याहतमिति।

हिनस्त्विति, अनेकत्वमित्यस्यैवैकत्वमित्यस्यापि हिनस्त्वित्यनेनान्वयः। किमायातमिति न किमपि बाधकमित्यर्थः। तन्निवृत्तौ नियताकारत्वानियताकारत्वनिवृत्तौ। चित्रज्ञाने नीलाकारत्वपीताकारत्वे न वास्तविके येन भेदः स्यादित्याशयेनाशङ्कते—

स्यादेतत्—पारमार्थिको विरुद्धधर्माध्यासो भेदहेतुरयं तु काल्पनिक इति चेत्, एवं तर्हि सुतरामयत्नसिद्धं स्फटिकवद् बोधस्य निराकारशुद्धत्वम्, आकारनिकरस्त्वनात्मैव स्फुरतीत्युभयथापि कालात्ययापदिष्टाः, सह्रो-

पलम्भादयः, उभयथापीति प्रकाशमानस्य ज्ञानानात्मनो नीलाद्याकारस्य पारमार्थिकत्वे काल्पनिकत्वे चेत्यर्थः।

स्यादेतदिति, काल्पनिकपारमार्थिकयोरभेदासंभवात्काल्पनिकस्याकारस्य वास्तविकज्ञानस्वरूपत्वाभावान्निराकारमेव ज्ञानं स्यादिति समाधत्ते—एवं तर्हीति, यद्वाऽऽकारस्य काल्पनिकत्वे आकारिणश्च पारमार्थिकत्वे आकाराकारिभाव एव न स्यादिति निराकारमेव ज्ञानं स्यादिति समाधत्ते—एवं तर्हीति, उभयथाऽपीति आकारस्य पारमार्थिकत्वे एकस्य चित्रज्ञानस्यानेकाकाराभेदासंभवाद्भिन्नस्यैवाकारस्य विषयत्वं, काल्पनिकत्वे तु काल्पनिकाकारपारमार्थिकज्ञानयोरभेदासंभवाद्भिन्नस्यैवाकारस्य चित्रज्ञानविषयत्वमित्युभयथाऽपि सहोपलम्भादिहेतुकाभेदसाध्यकानुमाने बाध इत्याशयः। उभयथाऽपीत्येतत्पदं विवृणोति—उभयथाऽपीतीति, पीतस्य ज्ञानमित्याकारके पीताद्भिन्नं ज्ञानमित्याकारके च ज्ञाने ग्राह्यग्राहकभेदो यश्च नीलपीते मिथो भिन्ने इत्याकारके ग्राह्यनीलपीतादिभेदः प्रतिभासते स यदि सत्यस्तदाऽभेदसाधकसहोपलम्भग्राह्यत्वप्रकाशमानत्वहेतूनां बाधः, यद्यसत्यस्तदा सत्यासत्ययोरभेदायोगात्सत्येन ज्ञानेन सहाऽभेदाभाववानपि स ज्ञाने भासत इति तत्र विपक्षे सहोपलम्भनियमादेर्वृत्तित्वाद्व्यभिचारित्वमित्याह—

अपि चास्तां तावद्विरुद्धधर्माध्यासचिन्ता, योऽयं ग्राह्यग्राहकभेदो ग्राह्यनीलपीतादिभेदो वा चकास्ति स किं सत्यो वाऽसत्यो वा, सत्यत्वे स एव बाधो दोषो हेतूनाम्, असत्यत्वे नायमात्मा विज्ञानस्येत्यनात्मन्यपि सहोपलम्भनियमादयो गता इत्यनेकान्तः, भेदो न प्रथत एवेति चेत्, अस्तु तावत् सर्वजनीनप्रतीतिविरोधः स्ववाग्विरोधो वा, असिद्धास्तर्हि हेतवः,

अपि चेति, व्यभिचारपरिहारमाशङ्कते—भेदो नेति, स्ववाग्विरोध इति भेदो न प्रथत इत्याकारके ज्ञाने नञ्पदवाच्याभाव

प्रतियोगितया भेदो न स्फुरेत्तर्हि तदुल्लेख एव न स्यादिति तदन्यथानुपपत्त्या भेदप्रथनेऽपि भेदो न प्रथत इत्युक्तौ मे माता वन्ध्येतिवत्स्ववाग्विरोध एवेत्यर्थः। एकोपलम्भेऽवश्यमपरोपलम्भरूपसहोपलम्भनियमस्य हेतोर्ज्ञानमेव भेदाप्रथने न संभवतीत्याह—

न हि भेदाप्रथने सहार्थतां तद्व्याप्यतां वा पश्यामः, विनापि भेदं तद्विषयकप्रतीतिविषयत्वरूपः सहोपलम्भः सम्भवतीति तद्व्याप्यतामित्युक्तम्, तद्व्याप्यता तन्नैयत्यं तदविषयकप्रतीत्यविषयत्वादिरूपं न विना भेदं सम्भवतीति सङ्गतिः, तद्व्याप्यतां तेषां हेतूनां साध्यव्याप्यतां, व्याप्तेर्भेदगर्भत्वात् इति वार्थः, तेन न तद्विषयकप्रतीतिविषयत्वस्य हेतूकरणेऽपि निर्वाहः, न हि भेदाप्रथने तस्यैव तेन साहित्यं बोद्धुं शक्यते, तथा सहोपलम्भस्याभेदव्याप्यतापि भेदास्फुरणे न बोद्धुं शक्यते। उपलक्षणं चैतद् ग्राह्यत्वप्रकाशमानत्वयोरपि, ग्राह्यग्राहकभावस्य भेदाप्रथने न सिद्धिः, नह्यप्रतियोगिकं ग्राह्यत्वं, तथा प्रकाशमानत्वं प्रकाशकर्तृत्वं प्रकाशाभेदे न सिद्ध्यतीति नारायणाचार्यः।

न हि भेदाप्रथन इति। सहार्थतामिति सहप्रयोगो हि भेद एव भवति यथा पित्रा सहागतः पुत्र इति भावः। पक्षान्तराश्रयणस्य व्यावृत्तिमुपदर्शयति—विनाऽपि भेदमिति। तन्नैयत्यमिति सहोपलम्भनियमान्तार्थस्य तदविषयकप्रतीत्यविषयत्वादिरूपस्य तद्विषयकप्रतीतिभिन्नप्रतीतिविषयभिन्नत्वार्थकस्य भेदघटितत्वेन भेदाप्रथने न संभव इत्यर्थः। ननु तदविषयकप्रतीत्यविषयत्वं न हेतुः क्रियते, येन भेदभासनं तत्रावश्यमङ्गीकरणीयं स्यात्, किन्तु तद्विषयकप्रतीतिविषयत्वमेव, तत्र च न भेदभासनमुपयुक्तं, येनोक्तानुमाने बाधः स्यादिति चेत्, तथापि यथा न हि स्वेन सह स आगत इति प्रतीतिर्भवति किन्त्वन्येन सहेति

भेदविषयिकैव साहित्यप्रतीतिस्तथा व्याप्तेर्भेदघटितत्वेनाभेदव्याप्यतादृशहेतुमन्तौ ग्राह्यग्राहकाविति परामर्शोऽपि भेदविषयक एवेति भेदाभासने सोऽपि न स्यादित्याशयेनाह–तेन नेति। सहोपलम्भनियमस्य हेतोर्भेदाचकासनेऽसंभवं प्रदर्श्योक्तहेतूपलक्षितयोर्ग्राह्यत्वप्रकाशमानत्वयोर्हेत्वोरपि भेदाभासनेऽसंभवमाह–ग्राह्यग्राहकभावस्येति। प्रकाशाभेद इति ग्राह्यस्येति शेषः। न हि पक्षसाध्यहेतुदृष्टान्तानां परस्परभिन्नतया ज्ञानाभावे अयं पक्षः अयं साध्य इत्यादिप्रविभक्तव्यवहारो युक्तः, न वा संशयविपर्ययान्दोलितचित्तोऽयमहं तु न तथेति स प्रतिबोध्यः अहं तु प्रतिबोधक इति प्रतिबोध्यप्रतिबोधकभावेन भेदग्रहस्याभावे विज्ञानवादिनो भवतस्तत्प्रतिबोधानुकूला प्रवृत्तिरपि युक्ता, वादे ह्येकस्य जयोऽन्यस्य च पराजयः, जयपराजयभावश्च भेदगर्भ इति भेदाऽप्रथने तज्ज्ञानमपि न स्यादिति कस्य जयः कस्य च पराजयः स्यादिति जयादिप्रयोजनाभावादपि कथात्मकवादे प्रवृत्तिर्न युक्तेत्याशयेनाह–

भेदमात्रास्फुरणे पक्षादिप्रविभागोऽपि कथं, कं च बोधयितुं प्रवृत्तोऽसि, किमर्थं च, अन्वयव्यतिरेकाप्रवृत्तौ किं च हेतोर्बलं, कुतश्च विप्रतिपत्तिः, कीदृशी चेति, सोऽयं विचारमारभते भेदं तु सांवृतमपि न पश्यतीति व्यक्तमुन्मत्तोऽप्यनेन जितः। अस्तु तर्हि सांवृत एव भेदः, विकल्पारूढस्य तस्य व्यवहाराङ्गत्वान्नानुभवारूढ इति चेत्, सोऽपि सत्योऽसत्यो वेति विकल्पान् नातिवर्त्तते, अभासने केवलस्य वा भासने विचारानारम्भात्, प्रतियोग्यादिमिलितस्य च सतोऽसतो वा भेदस्य नैकसंविज्ञानतादात्म्यमिति कथं ग्राह्यत्वमिति ॥

भेदमात्राऽस्फुरण इति, अन्वयव्यतिरेकाप्रवृत्ताविति अन्वयव्यतिरेकाप्रतीतावित्यपि पाठः, अन्वयः पक्षसत्त्वं सपक्षसत्त्वं च, व्यतिरेको विपक्षासत्त्वमित्येवंरूपत्रयज्ञानाभावे इत्यर्थः। अन्वयोऽन्वयव्याप्तिः व्यतिरेको व्यतिरेकव्याप्तिस्ताभ्यां च पक्षधर्मत्वस्याप्युप-

लक्षणमिति बोध्यम्। अयं वादिपक्षोऽयं तु प्रतिवादिपक्ष इति ज्ञानस्य प्रयोजनीभूतस्य भेदाप्रथनेऽसंभवात्तत्प्रयोजना विप्रतिपत्तिरपि दुर्घटा, एवं विधिनिषेधयोर्भेदज्ञानाभावात्तत्कोटिकविप्रतिपत्तिरपि न स्यादिति सोऽयं बौद्धस्तत्त्वविनिश्चयाय कथात्मकवादमातनुते, सांवृतस्यापि भेदस्य ज्ञानं नाङ्गीकरोतीति व्यक्तमुन्मत्तादप्युन्मत्त इत्याशयेनाह—कुतश्च विप्रतिपत्तिरित्यादि। नानुभवारूढ इति योऽनुभवारूढः स एव तात्त्विकः, अयं न तथेति काल्पनिक इति भावः। सत्योऽसत्यो वेति, सत्योऽसत्यो भासते न वेति पाठान्तरम्। विकल्पान्नातिवर्तेत इति सत्यत्वे स एव बाधो दोषो हेतूनाम्, असत्यत्वे नायमात्मा विज्ञानस्येत्यनात्मन्यपि सहोपलम्भनियमादयो गता इत्यनेकान्त इति यत्प्रागुक्तं तत्संलग्नमेवेति भावः। वादिप्रतिवादिनोः पक्षसाध्यादीनां च भेदाभासनेऽभावबोधो हि विशिष्टवैशिष्ट्यमर्यादां नातिशेते इति नियमानभ्युपगमपुरस्सरं निष्प्रतियोगिकस्य भेदस्य वा भासने तेषां भेदासिद्ध्या वादानारम्भ इत्याह—अभासने केवलस्येति। भेदज्ञाने प्रतियोगिनस्तन्निष्ठप्रतियोगित्वस्य च ज्ञानमावश्यकमिति पक्षसाध्यप्रतियोगित्वभेदानां विभिन्नरूपाणां नैकज्ञानतादात्म्यमिति तादात्म्याभावेऽपि ग्राह्यत्वादिहेतूनां सत्त्वेनानैकान्तिकत्वमित्याह—प्रतियोग्यादिमिलितस्येति, यद्वा प्रतियोग्यादिविशिष्टभेदस्यानेकपदार्थघटितमूर्त्तिकत्वेनानेकरूपतया नैकज्ञानतादात्म्यमिति भेदे ग्राह्यत्वानभ्युपगमे कथं ग्राह्यत्वमित्याह—प्रतियोग्यादिमिलितस्येति,

असन्नेव चास्फुरन्नध्यवसीयत इति विवरणार्हमेतत्, अस्फुरन् विकल्पेऽप्यभासमानः अध्यवसीयते विकल्पेन स्वजन्यव्यवहारविषयीक्रियते, स्वकारणबलायातश्चायं विकल्पस्य स्वभावभेदो यत्कश्चिदेव विकल्पः कश्चिदेवमसन्तमविषयमपि व्यवहारयतीति तदर्थ इति चेत्, व्यवहारोऽपि यद्यज्ञानरूपः कथमसँस्तेन जन्यतां,

ज्ञानरूपश्चेत्, कथं नियामकं विना तद्विषयः। स्वकारणसामग्रीसामर्थ्यात् इति चेत्, सोऽयं व्यवहृतिरूपज्ञा-नालीकभेदयोर्नियामकान्तराभावेऽपि कारणसामर्थ्यमाश्रित्य विषयविषयिभावमिच्छति न त्वनुभवानुभाव्ययोरिति क्षीरं विहाय सौवीरे रतिररोचकग्रस्तस्य।

असन्नेवं चास्फुरन्नध्यवसीयते इतीयमाशङ्का। विवरणार्हमेतत् इति समाधानम्। बौद्धाधिकारे तु असन्नेवास्फुरन्नेवाध्यवसीयतं इति चेत्, अध्यवसीयत इति विवरणाऽर्हमेतत्, तद्विषयव्यवहारजननमध्यवसायार्थ इति चेत् व्यवहारोपीत्याग्रेव पाठः। बौद्ध उक्तमेव विवृण्वन् शङ्कते—अस्फुरन्नित्यादि। ननु विषयतासंसर्गेण व्यवहारं प्रति विषयतासंसर्गेण विकल्पस्य कारणत्वेन स्वाविषये कथं विकल्पो व्यवहारमुत्पादयेत्? अन्यथा कोऽप्येक एव विकल्पः सर्वत्र प्रवर्त्तयेदिति नैयायिको यद्यन्तराशङ्केत तदा बौद्धस्तदुत्तरमाह—स्वकारणेति। कथमसन्निति विज्ञानवादिनो मते ज्ञानातिरिक्तस्यासत्त्वेनाभ्युपगमादिति भावः। भेदो हि सांवृतोऽभ्युपगतः, ज्ञानरूपव्यवहारश्च पारमार्थिकः, सांवृतपारमार्थिकयोश्च तयोर्नाभेद इति विषयत्वे भवदभ्युपगतस्याभेदस्य नियामकस्यात्राभावेन कथं सांवृतभेदविषयको ज्ञानरूपव्यवहार इति समाधत्ते—कथं नियामकं विनेति। ननु स्वकारणसामग्रीबलेनैव स्वस्माद्भिन्नोऽपि भेदो व्यवहृतिरूपज्ञानविषय इत्याशङ्कते—स्वकारणसामग्रीति। नियामकान्तराभावेऽपि तादात्म्याभावेऽपि। अनुभाव्येति पारमार्थिकस्वलक्षणेत्यर्थः।

एतेनास्फुरन्निर्विकल्पकाविषयः, तत्रैवानात्मभानस्य निषिद्धत्वात्, अध्यवसीयते साक्षाद्विकल्पविषयीक्रियते, तथा च निर्विकल्पकतद्विषययोरेव ग्राह्यग्राहकाभ्यामभेदः साधनीयः, सहोपलम्भादौ चोपलम्भः

साक्षात्कारो विवक्षणीयः, अतो नांशतो बाधो, नाप्यनैकान्तिकत्वमित्यर्थोऽप्यपास्तः। विकल्पव्यवहारवन्नि-विकल्पेऽपि स्वकारणसामर्थ्यादनात्मविषयत्वसम्भवादिति बोध्यम्।

अनात्मभानस्य स्वभिन्नभानस्य। अतः निर्विकल्पतद्विषययोः पक्षतया हेतावुपलम्भस्य च साक्षात्काररूपतया प्रवेशात्। अंशतो बाध इति सविकल्पतद्विषयावपि पक्षान्तर्गतौ, न च तावभेदसाध्यवन्ताविति पक्षतावच्छेदकसामानाधिकरण्येन बाध इत्यर्थः, नेत्यनेनान्वयः, सविकल्पतद्विषययोर्निर्विकल्पतद्विषयरूपपक्षान्तर्गतत्वाभावादिति भावः। नाप्यनैकान्तिकत्वमिति सविकल्पतद्विषययोः सहोपलम्भसत्त्वेऽपि नाभेद इत्यनैकान्तिकत्वमपि नेत्यर्थः। उक्तविपक्षे साक्षात्काररूपसहोपलम्भाभावादिति भावः। एतेनेत्यतिदिष्टं हेतुमाह—विकल्पव्यवहारवदिति। विज्ञानवादी शङ्कते—

स्यादेतत्—विकल्पेनोल्लिख्यतो भेदो यदि ततो भिद्येत तदा दृश्येताप्यन्येनान्यस्य ग्रहणं, न त्वेतदस्ति, किन्तु विकल्पाकार एव, न चाकार आकारिणो भिद्यते, तथा च ज्ञानाकारयोरेव नीलपीतयोर्ज्ञानाकारो भेदो विकल्पेनोल्लिख्यत इति न बाह्यवेदनसङ्कथापीति चेत्, नन्वद्वयदर्शि चेद् विज्ञानं, कथं भेदप्रथा, नीलपीताद्याकारद्वयादर्शिनो ज्ञानस्य प्रतियोग्यनुयोग्यनुल्लेखित्वेन भेदव्यवहारानङ्गत्वात्। अथ नैरन्तर्येण युगपदेव वोत्पन्नानि त्रीणि ज्ञानानि भेदं व्यवहारयन्तीति मतं, तदसत्, एकस्य विज्ञानस्यानेकादर्शित्वे त्रीणि ज्ञानानि भेदं व्यवहारयन्तीत्यस्यैवार्थस्यासिद्धेः, अनेकदर्शित्वे चैकस्यानेकतादात्म्यविरोधादन्येनान्यग्रहणसिद्धेः। चित्राकारत्वात् नानुपपत्तिरिति चेत्, चित्रमपि विकल्पराक्षसेन गिलितमेव तव पश्यतः। तथाहि—चित्राकारत्वं

नीलाद्यनेकाकारत्वं वा, नीलपीताद्यतिरिक्ताकारशालित्वं वा, नाद्यो, विज्ञानस्यापि यावदाकारं नानात्वे एकत्र चित्राकारसंवेदनानुपपत्तेः, न द्वितीयो, नीलाद्यतिरिक्तैकाकारशालित्वेऽपि नीलपीताद्यनुल्लेखे तद्भेदोल्लेखानुपपत्तेः। भवतां नीलपीतादिविलक्षणचित्ररूपवदस्माकं नीलाद्याकारविलक्षणो विज्ञानस्य चित्र आकारः, तस्य नैकत्वेऽप्यनीलाकाराद्यनेकव्यावृत्तिनिबन्धनस्तत्रानेकत्वोल्लेख इति चेत्,

स्यादेतदिति, ततः विकल्पतः। अद्वयदर्शि उभयानवगाहि। त्रीणि ज्ञानानि नीलज्ञानपीतज्ञानभेदज्ञानरूपाणि। तद्भेदोल्लेखानुपपत्तेरिति यदाकारं ज्ञानं तत्तदुल्लेख्येव भवतीति नीलपीतादिप्रतियोग्यनुयोग्यनुल्लेखे नीलाद्भिन्नं पीतं पीताद्वा भिन्नं नीलं नीलपीते मिथो भिन्ने इत्येवं वा ज्ञानं न स्यादित्यर्थः। अनेकत्वोल्लेखः नीलपीताद्याकारभेदोल्लेखः।

ता अपि व्यावृत्तयो विज्ञानाद्भिन्ना न वा, भिन्नाश्चेत्, कथं विज्ञानेन तद्ग्रहः, अगृहीतानां च तासां न भेदाध्यवसायनिमित्तत्वम्, अभिन्नाश्चेत्, कथमेकज्ञानाभिन्नानां तासामनेकत्वम्, एकत्वे च कथं तत्कृतो भेदाध्यवसाय इति। स्यादेतत् माभूदनीलाद्यनेकव्यावृत्तिनिबन्धनोऽनेकत्वाध्यवसायः, स्वकारणसामर्थ्यायातस्तु स्यात्, तच्चानेकत्वं काल्पनिकमिति न वास्तवीं विकल्पैकतां विरुणद्धीति चेत्, तदनेकत्वं ज्ञानादभिन्नं भिन्नं वा, आद्येऽनेकस्वरूपमेकमिति कोऽन्यो वदेदस्वस्थात्, द्वितीयपक्षस्त्विष्यत एवास्माभिः, किन्तु त्वयेष्यतां ज्ञानेन स्वभिन्नानेकत्वप्रकाशः। विकल्पस्य भ्रमत्वात् तत्रासत्प्रकाशो न विरुध्यते, असत्प्रकाशनस्वभावत्वात् भ्रान्तेः, विरुध्यते तु निर्विकल्पके, तस्य सन्मात्रप्रकाशनशीलत्वात् इति चेत्, न, विकल्पेनान्यस्यासत इव निर्विक-

ल्पकेनाप्यन्यस्य सतः प्रकाशनस्याविरुद्धत्वात्, अन्येनान्यस्य सत इवासतोऽपि प्रकाशेऽतिप्रसङ्गस्य च तुल्यत्वात्, न हि घटादिविकल्पाः कूर्मरोमादिकमपि विषयीकुर्वन्तीति. कारणसामर्थ्येन नियमनं तु निर्विकल्पकस्यापि न वार्येत इति। अथ ग्राह्यत्वं ग्रहविशेष्यत्वं भेदे विरुध्यते तेन, न निर्विकल्पकस्यात्मभिन्नविशेष्यकत्वं, न तु ग्रहविशेषणत्वमपि, भ्रान्तौ चान्यद्विशेषणमेवेति तत्रानात्मविशेषणत्वं नानुपपन्नमिति चेत्, न, अन्यस्यान्यविशेष्यत्वे सर्वस्य सर्वविशेष्यत्वं स्यादित्यतिप्रसङ्गवदन्यस्यान्यविशेषणत्वे सर्वस्य सर्वत्र विशेषणत्वापातात्, अनायत्या विशेषणत्वस्यापि त्वयाऽभेदेनैव स्वीकर्त्तव्यत्वात्, कारणायातस्वभावेन प्रतिनियमोक्तेरप्युभयत्र सम्भवात्, तस्माद् भेदे विशेषणत्ववद्विशेष्यत्वमपि स्वीकार्यम्; परिहार्यं वा विशेष्यत्ववत् विशेषणत्वमपीत्युभयथापि तवैव पक्षहानेः, अत एवातत्तत्तया परिस्फुरदपि नातदेवेति निरस्तम्, अतत्त्वतत्तयोस्तुल्यकक्षत्वात्, भेदेऽपि यथा स्थाणुः पुरुषत्वेन भासमानो न पुरुषस्तथा विकल्पोऽपि भिन्नत्वेन भासमानो न भिन्न इति ग्रहविशेष्यत्वसम्भवाच्च।

असत्प्रकाश इति ज्ञानाद्भिन्नस्वरूपाणामनीलाकारव्यावृत्त्यपीताकारव्यावृत्त्यादीनामलीकत्वेन तन्निबन्धनमनेकत्वमप्यलीकरूपमिति तत्प्रकाशः असत्प्रकाश इत्यर्थः। अन्येनान्यस्य प्रकाशने नीलनिर्विकल्पेन पीतस्यापि प्रकाशनं स्यादित्यतिप्रसङ्गः सत्प्रकाशपक्षे यथा तथा घटादिविकल्पोऽपि कूर्मरोमादिकं विषयीकुर्यादित्यतिप्रसङ्गोऽसत्प्रकाशपक्षेऽपि स्यादेवेति विषयगते सत्त्वासत्त्वे न प्रयोजके इत्याशयेनाह—अन्येनान्यस्येति। न चोक्तातिप्रसङ्ग इष्टएवेत्यभ्युपगन्तुं युक्तमित्याह—न हि घटादिविकल्पा इति।

सर्वेषां स्वस्माद्भिन्नत्वाविशेषेऽपि सविकल्पज्ञानस्य नियतविषयकत्वं स्वकारणसामर्थ्यादेव भवतीति चेत्, तर्हि स्वस्माद्भिन्नावगाहके निर्विकल्पज्ञानेऽपि तत एव तथात्वमस्त्वित्याह—कारणसामर्थ्येनेति। ग्रहविशेषणत्वमपीति विरुध्यत इत्यनेनान्वयः। सर्वस्य सर्वत्रेति, घटादिज्ञाने कूर्मरोम्णोऽपि विशेषणत्वं स्यादिति भावः। अत एवातत्त्वत्तयेति, अत्र "स्यादेतत् यथाऽतत्त्वतया परिस्फुरदपि न वस्तुगत्या तदेव, तथा तदप्यतत्तया परिस्फुरदपि नातदेव, ततः स्वरूपस्यातत्तया प्रथनेऽपि न काचिद्ग्राह्यलक्षणक्षतिरितिचेत्, यद्यतत्ताऽपि विस्फुरन्ती स्वरूपमेवास्य स्यात्, स्यादप्यस्योपन्यासस्य प्रस्तुतोपयोगः, अस्वरूपस्य कथं प्रकाश इति यद्यपि तथा वक्ष्यामः तथाप्यतत्ता कथं तस्य स्वरूपमितीतोऽपि दीयतां दृष्टिः" इति बौद्धाधिकारे पाठः॥ भिन्नस्य ग्राह्यत्वे को दोष इति विज्ञानवादिनं नैयायिकः पृच्छति—

कश्चास्वरूपस्फुरणे दोषः। नह्ययं विषयविषयिभावः कार्यकारणभावनिबन्धनः, ग्रहणेन्द्रिययोरपि प्रसङ्गात्, नापि व्यापारनिबन्धनो, ज्ञानेनातीतानागतयोरर्थयोस्ताभ्यां वा ज्ञाने व्यापाराधानायोगात्,

कश्चेति। विज्ञानवादी उत्तरयति—न हीति। भिन्नस्य ग्राह्यग्राहकभावे न तावत्कार्यकारणभावो नियामकः, तथा सति प्रत्यक्षस्य ग्राह्यमिन्द्रियं स्यात्तयोरपि कार्यकारणभावादिति भावः। अत्र न स्याच्च कार्यकारणभावाभावेनानुमित्यादिग्राह्यत्वं साध्यादीनामित्यपि द्रष्टव्यम्। नापि ज्ञाने नीलाद्यर्थेन ज्ञानेन नीलाद्यर्थे वा व्यापारो जन्यत इति तन्निबन्धनो नीलाद्यर्थतज्ज्ञानयोर्विषयविषयिभाव इत्यपि सम्भवति, श्यामताविशेषलिङ्गेनानुमितधूमलिङ्गेन भूतवह्न्यनुमानं यत्र यत्र च कृत्तिकोदयलिङ्गेन भविष्यच्छकटोदयानुमानं तत्रातीतानागतविषयकशाब्दबोधस्मरणादिस्थले चातीतानागतार्थयोरसत्त्वेन तत्र ज्ञानेन ताभ्यां ज्ञाने वा व्यापाराधाना-

योगादित्युत्तरयति विज्ञानवादी–ज्ञानेनेति । नन्वेवं तर्हस्तु प्रत्यक्षज्ञाने वर्त्तमानार्थेन व्यापाराधानमित्याशङ्कायामाह—

वर्त्तमानार्थकस्थलेऽपि ज्ञाने व्यापारस्य योग्यस्यानुपलम्भबाधात्, अयोग्ये च मानाभावात्, अर्थे ज्ञाततेत्यभ्युपगमेऽपि तस्या अव्यापकत्वेनातन्त्रत्वात्, व्यापाराधानेऽपि नियामकाभावात्, भावे वा व्यापारगवेषणवैयर्थ्यात्, तत एव तत्सम्भवात्, नापि जातिनिबन्धनः, पटत्वादेर्नियामकत्वे पटस्य सर्वज्ञानविषयतापत्तेः, ज्ञानत्वस्य नियामकत्वे सर्वज्ञानानां पटविषयतापत्तेः, तत्तत्पटादिव्यक्तिविषयतानियामकं च ज्ञानवैजात्यमनुपलम्भबाधितम्, समूहालम्बनादौ सङ्करप्रसङ्गश्च ।

वर्त्तमानेति । प्रत्यक्षज्ञानेऽर्थजन्यो यदि व्यापारः स्यात्तर्ह्युपलभ्येत, न चोपलभ्यते, तस्मान्नास्ति, न चायोग्य एवास्तु स इति वाच्यम्, तत्र मानाभावात् । न चैवं तर्हि ज्ञानसामान्येनार्थे ज्ञातताख्यव्यापार उत्पद्यतां तन्निबन्धन एव च विषयविषयिभाव इति भाट्टानामभ्युपगमोऽपि ज्यायान्, आश्रयभूतयोरतीतानागतयोरर्थयोरसत्त्वेन तत्र ज्ञानेन ज्ञातताख्यव्यापारानुत्पादेऽपि विषयविषयिभावसद्भावेन ज्ञातताख्यो व्यापारोऽपि न ग्राह्यत्वप्रयोजक इत्याह--अर्थ इति । ज्ञातताख्यव्यापारोऽर्थविशेष एवोत्पद्यते नान्यत्रेत्यत्र नियामको न संभवति, संभवे वा किं व्यापाराधानेन, तन्नियामकेनैव विषयविषयिभावसंभवादित्याह--व्यापाराधानेऽपीति । नापि जातिनिबन्धन इति विषयविषयिभाव इत्यनुवर्त्तते, सामान्यतो जातिर्नातिप्रसङ्गनिवारिकेति जातिर्ग्राह्यगता नियामिका उत ग्राहकगतेति विकल्पद्वयं, न च तदुभयमपि संभवति, यतो ग्राह्यवृत्तितत्तज्जातेर्विषयविषयिभावनियामकत्वे तत्तज्जातिमतः सर्वज्ञानविषयत्वापत्तिः, ग्राहकगतज्ञानत्वजातेः पटविषयकत्वस्य घटविषयकत्वस्य वा नियामकत्वे सर्वज्ञानानां पट-

विषयकत्वापत्तिर्घटविषयकत्वापत्तिर्वा, न च ज्ञानगतमेव किमपि वैजात्यमस्ति, येन नियतविषयकमेव ज्ञानं भवतीति वाच्यम्, आश्रययोग्यत्वे तद्गतजात्याऽपि योग्यत्वेनैव भाव्यं, येनैवेन्द्रियेण यद्वस्तु गृह्यते तेनैव तद्गता जातिस्तदभावश्च गृह्यत इति नियमात्, तथा चोपलम्भः स्यात्, न चोपलभ्यत इत्यनुपलम्भेन तदभावात्, न चोक्तनियमे मानाभावेनायोग्यमेव वैजात्यमस्त्विति वाच्यम्, पटविषयकज्ञानवैजात्याभाववति घटविषयकज्ञाने घटविषयकज्ञानवैजात्यस्य तदभाववति पटज्ञाने पटज्ञानवैजात्यस्य तयोः सामानाधिकरण्यस्य च घटपटादिविषयकसमूहालम्बनज्ञाने सत्त्वेन साङ्कर्यस्य जातिबाधकस्य सत्त्वेन तस्याप्यभावादित्याशयेनाह— पटत्वादेर्नियामकत्व इत्यादि। भिन्नानां ग्राह्यत्वानुपपत्तिमुक्त्वा स्वस्यापि स्वसंवेदनपक्षे योगाचारो ग्राह्यत्वानुपपत्तिमुपदर्शयितुं पराशङ्कामाह—

अथ जात्यैव सर्वं विज्ञानं स्वविषयकमिति चेत्, किमिदं स्वं नाम, यद्येकविज्ञानव्यक्तिः, तदा सर्वेषां विज्ञानानां तद्विषयत्वापत्तिः, अथ विज्ञानमात्रं, सर्वेषां सर्वविज्ञानविज्ञतापत्तिरिति स्वस्य संवेदनमित्येवार्थो नोपपद्यत इति न तत् कस्यचित्, किन्तु वेदनमात्रम्। तदुक्तम्। 'विज्ञानं जडरूपेभ्यो, व्यावृत्तमुपजायते॥ इयमेवात्मसंवित्ति–रस्य याऽजडरूपता॥१॥' इति, मैवम्, तथापि स्वात्मनि अजडवत्परत्राप्यजडं स्यात्, परस्मिन्नन्धवत् स्वस्मिन्नप्यन्धं प्रसज्येत।

अथेति। जात्यैव ज्ञानत्वेनैव, तद्विषयत्वापत्तिरिति एकज्ञानव्यक्तिविषयकत्वं स्यादित्यर्थः, ज्ञानमात्रे स्वविषयकत्वमपि न स्यादित्यपि बोध्यम्। न तत् कस्यचिदिति तद् विज्ञानं न कस्यचित्संवेदनमित्यर्थः, न ज्ञानं किमपि विषयकमिति

भावः। विज्ञानं न भिन्नस्य न वाऽभिन्नस्य ग्राहकं, किं तु जडभिन्नत्वेन रूपेणास्योत्पत्तिरेव स्वसंवेदनमित्यत्र प्राचां सम्मतिमाह—तदुक्तमिति। तदेवाह—विज्ञानं जडरूपेभ्य इत्यादि। एवं विज्ञानवादिमतमुपदर्श्य तन्निराकरोति नैयायिकः—मैवमिति। ग्राह्यग्राहकभावाभावेऽप्यजडरूपतयोत्पादाद्यथा स्वसंवेदनं तथा परस्यापि संवेदनं किं न स्यात्, स्वापेक्षयेव परापेक्षयाऽप्यजडरूपत्वाविशेषात्, परापेक्षयाऽजडरूपत्वाभावे स्वापेक्षयाऽप्यजडरूपत्वाभावापत्त्या स्वसंवेदनमपि न स्यादित्याह—तथापि स्वात्मनीति, अथ स्वपराविषयकमपि विज्ञानं सद्रूपं सत्त्वेन च व्यवह्रियत इति चेत्, तर्हि बाह्यमपि घटपटादिकं स्वपराविषयकमेव परमार्थसद्भूतं बाह्यत्वेन व्यवह्रियमाणं चास्तु इत्याह—

अथ स्वपरासाक्षिकमपि विज्ञानं परमार्थसत्त्वेन व्यवह्रियते, तर्हि बाह्यमपि स्वपरासाक्षिकमेव परमार्थसदस्तु, व्यवह्रियतां च तत्त्वेनेति कुतो बाह्यार्थभङ्गः। बाधकात् प्रमाणादिति चेत्, बाधकं यदि स्वविषयमपि बाधते, तदा विज्ञानमपि बाधेत, अविशेषात्, इति कुतो विज्ञानवादः, स्वाविषयमेव चेत्, कथं न परेण परसंवेदनम्। अभेदोऽस्तु मा वा, भेदं तु प्रकाशमानत्वेन व्याषेधाम इति चेत्, न, वस्तुनि भेदनिवृत्तेरेवाभेदरूपत्वात्। अस्तु तर्हि भेदाभेदविधुरमेव चित्रं, चेतोभेदे (चित्रंचेतः, भेदे) प्रकाशनाऽयोगात्, अभेदे चित्रत्वानुपपत्तेरिति चेत्, न, मिथोविरुद्धद्वयविधिवद्विरुद्धद्वयनिषेधस्याप्येकत्र विरुद्धत्वात्, न च सोऽप्यस्तीति वाच्यम्, स्याद्वादावतारे तवापि दिगम्बरत्वप्रसङ्गात्, अत्र नारायणेन तूष्णीम्भूय स्थितम्,

अथ स्वपरेति। बाधकप्रमाणान्नास्वरूपस्फुरणमित्याशङ्कते—बाधकादिति। यद्वा ननु यद्यपि विज्ञानवद्बाह्यमपि स्वपरासा-

धिकं नथापि तस्य बाधितत्वादेव भङ्ग इत्याशङ्कते—बाधकादिति। समाधत्ते—बाधकमिति, स्वविषयमपीति। अपिना स्वाविषयस्योपग्रहः। तदा विज्ञानमपीति. स्वसंवेदनपक्षे बाधकज्ञानस्वरूपमपि. बाधकज्ञानस्य विषय इति तदपि तेन बाधितं स्यात्, तथा च बाधकविज्ञानस्यापि बाधितत्वाद्भङ्ग एवेति भावः। ननु बाधकज्ञानं स्वात्मविषयं न बाधते येन बाधकज्ञानस्वरूपमपि बाधितं स्यात्, किन्तु तद्भिन्नविषयमेवेति चेन्, तर्ह्यनायासेनैव भिन्नस्यापि संवेदनं संजातमेव, यतो बाधकज्ञानं प्रतियोगिविधया बाध्यविषयमेव, अन्यथा बाध्यबाधकभाव एव न स्यात्, बाध्यस्य च भिन्नत्वेनैवाभ्युपगमात्, तथा च भिन्नेऽपि ग्राह्यत्वहेतोर्वृत्ते र्व्यभिचारः स्फुटः इत्याशयेनाह—स्वाविषयमेवेति, चेतोभेदे ज्ञानाद्विषयस्य भेदे, अथवा चेत इति प्रथमान्तं पूर्वान्वयि, भेद इत्यारभ्यैव हेतुः। अभेद इति ग्राह्यग्राहकयोरिति शेषः। चित्रत्वानुपपत्तेरिति, अभेदे नीलपीताद्यनेकाकारत्वानुपपत्त्या चित्रत्वानुपपत्तेरित्यर्थः। विरुद्धविधिवदिति, विरुद्धद्वयविधिवदित्यपि पाठः। सोऽपि विरुद्धद्वयविधिरपि. निमित्तभेदापेक्षयेति शेषः। तूष्णींभूय स्थितमिति, स्याद्वादावतारे इत्यादेर्व्याख्या न कृता, अनेन तस्य तदपरिज्ञानं सूचितम्। शिरोमणिमुपहसन् तत्कृतव्याख्यामुपदर्शयति—

शिरोमणिस्तु निपुणंमन्यः प्राह—स्यादिति तिङन्तप्रतिरूपको निपातोऽनेकान्तवाची, दिगम्बरा वस्तूनां सत्त्वासत्त्वानिर्वचनीयत्वानि अनिर्धारितानि प्रतिजानते, तथा हि सप्तभङ्गीनामकं नयमाचक्षते, स्यादस्ति, स्यान्नास्ति, स्यादवक्तव्यः, स्यादस्ति नास्ति च, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति नास्ति चावक्तव्यश्चेति, वस्तु सत्त्वाश्रय इत्यनिर्द्धारितम्, तथाऽसत्त्वाश्रय इत्यनिर्वचनीयत्वाश्रय इति सत्त्वासत्त्वा-

श्रय इति सत्त्वानिर्वक्तव्यत्वाश्रय इति असत्त्वानिर्वक्तव्यत्वाश्रय इति सत्त्वासत्त्वानिर्वक्तव्यत्वाश्रय इति। एवं सप्तधाप्यनिर्धारितमित्यर्थः, एवं तवाप्यनिर्धारणवादित्वे तन्मत एव प्रवेशः स्यात्, तन्मतं च सत्त्वस्यानुभविकस्य प्रमाणान्तराबाध्यत्वेन निर्धारणात्, असत्त्वानिर्वक्तव्यत्वयोस्तत्र तत्र दूषितत्वात्, द्वयोस्त्रयाणां वा विरोधेनैकत्रासम्भवात्, विरोध्युभयगोचरज्ञानस्य संशयत्वेनाप्रमाणत्वाच्च, समुच्चयपक्षस्य निरस्तत्वात् दुष्टमिति भावः। एतज्जैनमताभ्युत्पत्तिविजृम्भितमिति मान्यान्प्रणम्येत्यादि तदीयं प्रार्थनमस्मदपेक्षया तं प्रत्येवावर्त्तते, अभ्युत्पत्तिं च तदीयामनुपदमेव स्पष्टीकरिष्यामः।

शिरोमणिस्त्विति, अनिर्धारितानीति, यद्यपीदमित्थमेवेति निश्चयस्तद्विरोधिधर्मान्तररूपत्वाभाव एव भवतीति नार्हन्मते तथानिश्चयः संभवति, विरोधिधर्मान्तराभ्युपगमात्। तथा च सत्त्वमेवेति असत्त्वमेवेति वा अनिर्वचनीयमेवेति वा सदसदुभयरूपमेव वेत्यादि नार्हता निश्चिन्वन्तीत्यनिर्धारितत्वं सत्त्वादीनामित्येवं नार्हन्मतं, स्वद्रव्याद्यपेक्षया वस्तुनि सत्त्वमेव, नासत्त्वं, परद्रव्याद्यपेक्षया चासत्त्वमेव, न सत्त्वं, एककालावच्छिन्नोभयनिमित्तापेक्षयाऽनिर्वचनीयमेव, न त्वेकैकरूपमित्येवमुत्तरभङ्गेऽपि तत्तन्निमित्तापेक्षया तत्तद्रूपमेव वाच्यमिति, यन्निमित्तापेक्षया सत्त्वादि तन्निमित्तापेक्षया तद्विरोध्यसत्त्वादिरूपाऽभावेन तत्तन्निमित्तापेक्षयेदमित्थमेवेति निश्चयसद्भावेन सत्त्वादीनां निर्धारितरूपत्वेनैवाभ्युपगमात्, तथापि तदर्हन्मततयाऽभ्युपगम्य शिरोमणिना सत्त्वादीनामनिर्धारितत्वं प्ररूपितमिति तस्य सुस्पष्टं ध्यान्ध्यमेवेति भावः।

मान्यान् प्रणम्येत्यादि अत्र—"मान्यान् प्रणम्य विहिताञ्जलिरेप भूयो-भूयो विधाय विनयं विनिवेदयामि। दृष्यं वचो

मम परं निपुणं विभाव्य, भावावबोधविहितो न दुनोति दोषः ॥१॥ इति संपूर्णश्लोकः । प्रकृतमनुसरन् विज्ञानवादिपूर्वपक्षमुपन्यस्यति

अस्तु तर्हि चतुश्शिखरीशून्यमेव चित्रमाश्चर्यरूपत्वात्, चत्वारि शिखराणि कोटयो भेदाभेदौ तद्व्यतिरेकौ च, अभेदस्तादात्म्यं, तेन न भेदस्याभेदविरहरूपत्वात् त्रिशिखरीपर्यवसानापत्तिरिति गुणानन्दः। एकानेकत्वविरहेऽपि सत्त्वमित्याश्चर्यार्थो हि चित्रशब्द इति चेत्, अथ चतुःशिखरीशेखरमेव किं न स्यात्, आश्चर्यरूपतायुक्तेस्तुल्यत्वात्, चित्रं ज्ञानमिति प्रयोगे चित्रपदस्याश्चर्यार्थताव्याख्यानानुरोधादेव चेत् विरुद्धधर्मसंसर्गवत्त्वमुपेयते, तद्वरं प्रथमोपस्थितत्वात् लाघवात् चतुःशिखरीशालित्वमेवाभ्युपेयमिति भावः। यदि च तत्तत्पक्षानुपपत्त्याऽवश्यं तत्तदभावैर्भवितव्यमिति विभाव्यते, तदा परस्परनिषेधविधिनान्तरीयकविधिनिषेधयोरेकनिषेधेऽपरविधिरप्यावश्यक इत्यपि विभावयितुं कः परिश्रमः। अपि चोक्तकोटिचतुष्टयाभाववत्तया चित्रज्ञानं गृह्यते, न वा, न चेत्, न चित्रत्वसिद्धिः, स्ववचनविरोधश्च, गृह्यते चेत्, कोटिचतुष्टयभानमावश्यकम् ॥

अस्तु, तर्हीति अभेदस्य तादात्म्यमित्यर्थकरणे फलमाह—तेनेति, अभेदस्य तादात्म्यरूपत्वेन तद्विरहो न भेदरूप इत्यभेदविरहरूपचतुर्थकोटेर्न भेदरूपप्रथमकोट्यन्तर्गतत्वमिति न त्रिशिखरीपर्यवसानापत्तिरित्यर्थः। यदेकमनेकं वा तत्सद्रूपं लोके व्यवह्रियते, अत्र तु तदुभयविरहरूपमपि सद्रूपमित्यलौकिकस्वभावास्पदत्वादाश्चर्यरूपमित्याह—एकानेकत्वविरहेऽपीति। प्रथमोपस्थितत्वादिति अभावज्ञाने प्रतियोगिज्ञानस्य हेतुत्वाच्चतुःशिखरीशून्यत्वज्ञानात्पूर्वं चतुःशिखरीरूपप्रतियोगिन उपस्थितेरावश्य-

कत्वादित्यर्थः। अनेन चोपस्थितिकृतं लाघवमुपदर्शितम्। स्वरूपकृतलाघवमभिप्रेत्याह—लाघवादिति, कः परिश्रम इति, तथा च चतुःशिखरीशालीति सिद्धमिति भावः। कोटिचतुष्टयभानमिति प्रतियोगिविषयेतिशेषः। कोटिचतुष्टयभानानभ्युपगमे दण्डमाह—

अभावमात्रग्रहे चित्रत्वासिद्धेः। न च कोटिचतुष्टयात्मकमेकं विज्ञानं भवितुमर्हतीति अनाग्रत्याऽन्येनान्यस्य ग्रहणमभ्युपगन्तव्यम्, तथा च प्रमाणबाधितं चित्रस्य मिथोविरुद्धधर्मवदनेकस्याद्वैतमुपेक्ष्य द्वैतमेवाद्रियताम्, अभेदमुपेक्ष्य भेद एव स्वीक्रियतामित्यर्थः। तथा सति हि नीलपीताद्यनेकोल्लेखित्वम् एकत्वं च ज्ञानस्यानुभूयमानमनुरुद्धं भवतीति ॥

अभावमात्रग्रह इति, प्रतियोगिविनिर्मुक्ताभावग्रह इत्यर्थः। ननु भवतु कोटिचतुष्टयभानं को दोष इत्याशङ्कायामाह—न चेति। एकस्य विज्ञानस्य कोटिचतुष्टयानात्मकत्वेऽपि तदवगाहित्वेनैव चित्रत्वादन्येनान्यस्य ग्रहणमभ्युपगन्तव्यमित्यर्थः। अन्येनान्यस्य ग्रहणाभ्युपगमे यत्स्यात्तदाह—तथा चेति, ग्राह्यग्राहकयोर्भेदे सति किं स्यादित्यत आह—तथा सतीति, चित्रज्ञानावभासिनां नीलादीनां ज्ञानाद्भेदे ग्राह्यग्राहकभाव एव न स्यात्, ज्ञानाभेदे चैकस्यानेकाकारात्मकत्वाभावेन ज्ञानस्य चित्रत्वानुपपत्त्या चाभेदसाधको ग्राह्यत्वहेतुर्माऽस्तु, प्रकाशमानत्वं तु नीलादीनामशक्यापह्नवं, तावन्मात्रं चास्माकमभिमतमिति तेनैव हेतुना तेषां ज्ञानाभेदः साध्य इत्याशयेनाशङ्कते—

अथ नीलादीनां बाह्यत्वे ज्ञानात्मकत्वे च ग्राह्यत्वासम्भवात् अस्तु ग्राह्यलक्षणक्षतिः, प्रकाशमानत्वादेव तेषां ज्ञानाभेदः साधनीय इति चेत्, तदेतद्विक्रीतगवीरक्षणम्, किमिदं हि प्रकाशमानत्वं यत् सर्वथा

ग्राह्यलक्षणक्षतावपि न क्षीयते, न प्रकाशसम्बन्धो, नियमानुपपत्तेरित्युक्तम्, न प्रकाशतादात्म्यं, चित्रत्वानुपपत्तेरित्युक्तम्। तस्मात् नीलादीनां प्रकाशमानत्वं परिपालयता ग्राह्यलक्षणे यत्नः कर्तव्यः, परिहर्त्तव्यं वा प्रकाशमानत्वम्, अन्यथा तपनीयमपनीय वाससि ग्रन्थिकर्त्तारमुपहससि, स्वयं च कनकमुपादाय गगनाञ्चले ग्रन्थिं करोषीति। तपनीयमपनीय वस्त्रग्रन्थिबन्धः प्रकाशमानतामपोह्य बाह्यस्वीकारः; तदनात्मकस्यापि बाह्यस्य सम्भवात्, तदुपादाय च गगनग्रन्थिबन्धः प्रकाशमानत्वमभ्यन्तरीकृत्य बाह्यस्वीकारः, चतुःशिखरीशून्ये तत्र तदाधारत्वानुपपत्तेरिति नारायणः। सेयं सर्वप्रकारमसिद्धिः, सर्वप्रकारं चानैकान्तिकत्वम्। अस्यार्थः—यदि क्वचित् भेदेऽपि ग्राह्यत्वम्, यदि वा न क्वापि भेदेऽपि ग्राह्यत्वम्, उभयथापि विपक्षे बाधकाभावात् न व्याप्तिसिद्धिः;

अथ नीलादीनामिति। तेषां नीलादीनाम्। नीलपीतादीनां प्रकाशतादात्म्यं यदि स्यात्तर्हि तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमात्तेषामप्यैक्यं स्यात्, तथा च चित्रत्वानुपपत्तिस्स्यादित्याशयेनाह—चित्रत्वानुपपत्तेरिति, उक्तमिति अभेदे चित्रत्वानुपपत्तेरिति ग्रन्थेनोक्तमित्यर्थः। प्रकाशमानतामपोह्य प्रकाशतादात्म्यमनभ्युपगम्य। बाह्यस्वीकारः नैयायिकादीनामिति द्रष्टव्यम्। तदनात्मकस्यापि प्रकाशानात्मकस्यापि। तदुपादाय तपनीयं गृहीत्वा। तत्र प्रकाशे। तदाधारत्वेति बाह्याधारत्वेत्यर्थः। उपसंहारमाह—सेयमिति, उभयथाऽपि भेदे ग्राह्यत्वेऽग्राह्यत्वे वेत्युभयपक्षेऽपि। बाधकाभावादिति अभेदो माऽस्तु ग्राह्यत्वमस्त्वित्याकारकव्यभिचारशङ्कानिवर्त्तकतर्काभावादित्यर्थः। व्याप्त्यसिद्धौ हेत्वन्तरमाह—

व्याप्तेर्नानापदार्थघटिततयैकज्ञानात्मकत्वानुपपत्तेश्च। एवं भेदे ग्राह्यत्वे ग्राह्यत्वादेर्विपक्षवृत्तित्वं, भेदे चाग्रा-

ह्यत्वे स्वप्रकाशत्वनिषेधात् चित्रप्रत्ययानुपपत्त्या चाभेदे ग्राह्यत्वायोगात् सपक्षव्यावृत्तत्वमित्येके। अन्ये तु प्रकारमसिद्ध्यादेरेवाहुः। तथा हि—नीलादेर्ज्ञानाकारस्य निराकारज्ञानवादिनां बाह्यस्य च विज्ञाननयवादिनामसिद्धत्वात् उभयसाधारणनीलत्वाद्यभावात्, ज्ञानात्मकस्य पक्षत्वे सिद्धसाधनात्, बाह्यस्य तत्त्वे बाधात्, उभयसाधारणतदुपगमेऽप्यंशतः सिद्धसाधनानुपपत्तये पक्षतावच्छेदकावच्छेदेन सिद्धेरुद्देश्यत्वेंऽशतो बाधादाश्रयविशेषणसन्देहाभावात् आश्रयासिद्धिः, स्वप्रकाशत्वनिषेधात् सहोपलम्भनियमस्य स्वरूपासिद्धिः,

व्याप्तेरिति। भेदे ग्राह्यत्वमित्येकः प्रकारः, भेदे न ग्राह्यत्वमिति द्वितीयः प्रकारः, इत्येवं सर्वप्रकारमाश्रित्य सर्वप्रकारमसिद्धिरिति ग्रन्थो व्याख्यातः, अधुनोक्तलक्षणसर्वप्रकारमाश्रित्य सर्वप्रकारं चानैकान्तिकत्वमिति व्याख्याति—एवमिति, असिद्धेरनैकान्तिकत्वस्य चैव सर्वप्रकारत्वमत्र विवक्षितमित्येवं व्याख्यानान्तरमाह अन्येत्त्विति, ज्ञानाकारस्य नीलादेः पक्षत्वे तस्य नैयायिकमतेनासिद्धेराश्रयासिद्धिः, बाह्यस्य नीलादेः पक्षत्वे तत्र विज्ञानवादिमतेन ज्ञानाभेदाभावेन बाधात् संदिग्धसाध्यवत्त्वरूपपक्षत्वाभावादाश्रयासिद्धिः, बाह्यज्ञानोभयसाधारणनीलत्वेन पक्षत्वे तदभावादेवाश्रयासिद्धिः, भावे वा तत्सामानाधिकरण्येन साध्यत्वे विज्ञानवादिमतेनांशतासिद्धसाधनापत्त्या संदेहरूपविशेषणाभावेन तद्विशिष्टपक्षत्वस्याभावेनाश्रयासिद्धिः, तदवच्छेदेन साध्यत्वे न्यायमतेनांशतो बाधात् संदिग्धसाध्यवत्त्वलक्षणपक्षत्वस्य क्षतेराश्रयासिद्धिरित्याह—तथाहि नीलादेरिति, सिद्धसाधनात् बाधादित्यादेराश्रयासिद्धिरित्यनेनान्वयः। स्वरूपासिद्धिरिति न त्वत्र हेत्वभाववत्पक्षकत्वलक्षणा स्वरूपासिद्धिः, किं तु स्वरूपतोऽसिद्धिरूपा स्वरूपासिद्धिरित्यर्थः। विपक्षे बाधकतर्काभावेन व्यभिचारसंशयात् ज्ञानाभेदे साध्ये ज्ञानावृत्तिधर्मशून्यत्वस्य नीलाभेदे

साध्ये नीलावृत्तिधर्मशून्यत्वस्योपाधित्वाचोक्तहेतूनां व्याप्यत्वासिद्धिरित्याह—

विपक्षे बाधकाभावात् तदवृत्तिधर्मशून्यत्वस्योपाधित्वाच्च सर्वेषां व्याप्यत्वासिद्धिः। एवं सर्वेषां पक्षत्वेऽनुसंहार्यत्वं, विशिष्य पक्षत्वे तज्ज्ञानाभेदे साध्ये ग्राह्यत्वस्यसाधारण्यम्, तज्ज्ञानग्राह्यत्वस्य च स्वप्रकाशत्वनिषेधात् असाधारण्यमपि, विचित्रज्ञानवेद्येऽलीके भेद इति। केचित्तु प्रकारो विचारस्येत्याहुः, सेयं सर्वप्रकारमसिद्धिरित्यनेन न हि भेदाप्रथन इत्यादेरुपसंहारः। सर्वप्रकारं चानैकान्तिकत्वमित्यनेनानात्मन्यपि सहोपलम्भादयो गता इत्यस्य, उपलक्षणात् कालात्ययापदेशदोषस्याप्युक्तत्वात् तदुपसंहारोऽप्यत्र द्रष्टव्य इति न न्यूनत्वमिति नारायणः। एतेनाभिन्नजातीयत्वं साध्यमिति द्वितीयपक्षोऽपि प्रत्युक्तः, नहि सजातीयत्वेन ग्राह्यलक्षणमुत्सार्यते, अतिप्रसङ्गस्य तादवस्थ्यात्, साजात्यस्य नियामकत्वे सर्वज्ञानानां सर्वज्ञानग्राह्यत्वापातात्।

विपक्ष इति। नीलपीतादीनां सर्वेषां पक्षत्वे ज्ञानाभेदे साध्ये ग्राह्यत्वस्य हेतोरनुपसंहार्यत्वं पक्षातिरिक्ताभावेनान्वयव्यतिरेकदृष्टान्ताभावात्, नीलादेरेकैकस्य पक्षत्वे तज्ज्ञानाभेदे साध्ये ग्राह्यत्वस्य हेतुत्वे साधारण्यं, तज्ज्ञानाभेदाभाववति ज्ञानान्तरग्राह्येऽपि ग्राह्यत्वसामान्यस्य सत्त्वात्, तज्ज्ञानग्राह्यत्वस्य हेतुत्वे चासाधारण्यमपि, तज्ज्ञानाभेदवत्तया निश्चिते तज्ज्ञानस्वरूपेऽपि स्वप्रकाशत्वनिषेधात् तज्ज्ञानग्राह्यत्वस्य व्यावृत्तेरित्याह—एवं सर्वेषां पक्षत्व इति। असाधारण्यमपीति अपिना साधारण्यं परिगृह्यते, तदुपपादनायाह—विचित्रेति। चित्रज्ञाने यो ह्याकाराणां भेदः प्रतिभासते स भवन्मते मिथ्येति तत्र तज्ज्ञानग्राह्यत्वमस्ति, तज्ज्ञानाभेदश्च नास्तीति साधारणानैकान्तिकत्वमिति भावः। नीलज्ञानयोः साजात्ये न ग्राह्यत्वं प्रयोजकं येन ग्राह्यत्वेन साजात्यं

सिद्ध्येदिति सजातीयत्वग्राह्यत्वयोर्व्याप्यभावः, नीलस्य ज्ञानवैजात्येऽपि ग्राह्यत्वे तदविशेषात् पीतादिकमपि नीलज्ञानग्राह्यं स्यादित्यतिप्रसङ्गो नैयायिकानां मते यथा तथा विज्ञानवादिनां मते सजातीयत्वेपि ग्राह्यत्वे सर्वज्ञानानां नीलज्ञानपीतज्ञानादिसजातीयत्वेन नीलज्ञानपीतज्ञानादिग्राह्यत्वं स्यादित्यतिप्रसङ्गस्तदवस्थ एवेत्याशयेनातिदिष्टमाह—न हि सजातीयत्वेनेति। अतिप्रसङ्गमेव प्रदर्शयति—साजात्यस्य नियामकत्व इति। यत्र यत्र प्रकाश्यत्वं तत्र तत्र प्रकाशकत्वमिति व्याप्तिरिति यदि जडे प्रकाश्यत्वं स्यात्तर्हि प्रकाशकत्वमपि स्यात्, न च तदस्तीति तद्व्याप्यं प्रकाश्यत्वपि तत्र न संभवत्येव। नन्वेवं तर्हि ज्ञानजातीयत्वमेव ग्राह्यत्वप्रयोजकं स्यात्, तथा च नीलपीतादीनां ज्ञानात्मकानां ज्ञानजातीयत्वाविशेषान्नीलज्ञानं पीतमपि ज्ञानात्मकं गृह्णीयादिति चेत्; मैवं, ज्ञानजातीयत्वाविशेषेऽपि नीलज्ञानं नीलात्मकमेव ज्ञानजातीयं गृह्णाति, नान्यदित्येव नियमात्, अन्यथा भवन्मतेऽपि तथात्वं स्यात्, नीलपीतादीनां भिन्नत्वाविशेषादिति नोक्तातिप्रसङ्ग इत्याशयेनाह—

अथ प्रकाशकत्वं प्रकाश्यत्वव्यापकमिति जडे प्रकाश्यत्वसंभावनैव न, ज्ञानजातीयमपि किञ्चिदेव किञ्चिद् गृह्णाति न सर्वं सर्वमिति नोक्तातिप्रसङ्ग इति चेत्, अत्र यद्यभेदो नियामको, न तर्ह्यन्येन ज्ञानेनान्यग्रहणम्, अथ कारणसामर्थ्यं, तदा बाह्यस्यापि तत एव ज्ञानं स्याद्बाधकाभावात्, तथा च ज्ञानत्वे साध्ये ग्राह्यत्वस्य हेतोः सन्दिग्धविपक्षवृत्तिकत्वम्। स्यादेतत्, भेदस्य साजात्यस्य वा ग्राह्यत्वनियामकत्वेऽतिप्रसङ्गात्, अभेदस्य तथात्वे च चित्रप्रत्ययानुपपत्तेर्न तदस्तु, अभिन्नोपादानकत्वं तु तथा भवेत्, न च बाह्यविज्ञानयोरेकोपादानकत्वं नाम, सजातीयकारणस्यैवोपादानत्वात्,

अथ प्रकाशकत्वमिति। ज्ञानजातीयमपि किञ्चिदेव किञ्चिद्गृह्णाति न सर्वं सर्वमिति नियतविषयकमेव ज्ञानं जायत इत्यत्र ग्राह्य-ग्राहकयोर्यद्यभेदो नियामकस्तर्हि भिन्नस्यापि ज्ञानजातीयस्यैवान्यज्ञानग्राह्यत्वमित्यस्य सिद्धिर्नस्यात्। अथ कारणसामर्थ्यं, तदा स्व-सामग्रीबलादेव भिन्नत्वाविशेषेऽपि किञ्चिदेव ज्ञानं किञ्चिदेव बाह्यं गृह्णातीत्यपि स्यात्, बाधकाभावात्, तथा च ज्ञानजातीयत्वे साध्ये ग्राह्यत्वस्य हेतोर्नीलादिबाह्ये विपक्षे संदिग्धवृत्तिकत्वात्संदिग्धानैकान्तिकत्वमित्याशयेनाह–अत्र यद्यभेद इति। कारणसाम-र्थ्यमिति लिङ्गविपरिणामेन नियामकमित्यस्यानुषङ्गः,तथात्वे ग्राह्यत्वनियामकत्वे, तथा भवेदिति ग्राह्यत्वनियामकं स्यादित्यर्थः। एकोपादानकत्वं नामेति तथा च बाह्ये नियामकस्याभिन्नोपादानकत्वस्याभावेन तन्नियम्यस्य ग्राह्यत्वस्यापि तत्राभाव एवेति न तस्य सत्त्वमिति भावः। कथं नैकोपादानकत्वमित्यत आह–सजातीयकारणस्यैवेति.

नच स्वस्यैव सहोत्पन्नविज्ञानान्तरस्याप्यविशिष्टं, तेन सहोत्पन्ना नीलपीतादिप्रत्ययाः स्वात्मानं परं च गृह्णन्तो भवन्ति विचित्रप्रत्यया इति चेत्, एवमपि स्वकारणसामर्थ्यात् विज्ञानं नियतज्ञानग्राहकमित्यायातं, तथा च तत एव नियतग्राह्यग्राहकमपि भवेदिति सन्दिग्धानैकान्तिकानतिवृत्तेः, उपादानं यदि क्षणिकं स्यात् स्यादपि तत्सामर्थ्यं नियामकं, न त्वेतदस्ति, स्थैर्यस्य प्रतिसन्धानादिति सामग्रीसामर्थ्यमेव नियामकं वाच्यं, तत्र चोक्तदोषः संलग्नक एव॥

नच एकोपादानकत्वस्य। स्वस्यैव सहोत्पन्नविज्ञानान्तरस्याप्यभिन्नोपादानकत्वाभ्युपगमफलमाह–तेनेति। चित्रज्ञानशब्द-वाच्यं न नीलपीतादिसमूहालम्बनज्ञानं पूर्वोक्तयुक्तेस्तदनुपपत्तेः, किं तु एकस्मिन्नेव क्षणे एकस्मादेवोपादानात् पृथगुत्पन्ना नील-

पीतादिप्रत्ययाः स्वपरग्राहिणश्चित्रशब्दवाच्या इति भावः। तत एव स्वकारणसामर्थ्यादेव। नन्वभिन्नोपादानकत्वस्य ग्राह्यत्वनियामकत्वे सति कथं स्वकारणसामर्थ्यस्य तत्त्वमायातमित्याशङ्कायां तस्य तत्त्वपर्यवसानार्थमाह–उपादानं यदीति। न च प्रतिसन्धीयमानस्थैर्यस्य नियामकत्वं संभवति, यतः स्थिरस्यात्मनो ज्ञानमात्रं प्रत्युपादानत्वेनाविशेषात्सर्वेषां ज्ञानानां सर्वज्ञानग्राह्यत्वं स्यादिति स्वकारणसामर्थ्यं नियामकं वाच्यमित्याह–सामग्रीसामर्थ्यमेव नियामकं वाच्यमिति। उक्तदोष इति एवं च सति स्वसामग्रीसामर्थ्यादेव बाह्यस्य ग्राहकं ज्ञानं भवत्वित्यर्थः। बौद्धश्शङ्कते—

अथायमाशयः तज्ज्ञानग्राह्यत्वे तत्सामग्रीजन्यत्वं नियामकमिति बाह्यस्य ग्राह्यत्वनिरासः, तस्य ज्ञानसामग्र्यऽजन्यत्वात् इति, मैवं, चित्रप्रत्ययानुत्पत्तेः, सामग्र्यऽभेदे कार्यभेदायोगात्, कुतश्चेदमेवावधारितम्, तत्सामग्र्यजन्य(त्व)स्य तद्ग्राह्यत्वेऽतिप्रसङ्गादिति चेत्, कस्य तावदेतावानर्थो विज्ञानसामग्र्या जनितो, येनायं विषयीकृत इति विभाव्यताम्, एतेन पुञ्जात् पुञ्जोत्पत्तिपक्षे सामग्र्यभेदेऽपि कार्यभेददर्शनात् तत्सामग्रीजन्यत्वं तद्ग्राह्यत्वनियामकमित्यादिकं व्याख्यातम्॥

अथेत्यादिना, नैयायिकस्समाधत्ते–मैवमिति, तत्र हेतुमाह–चित्रप्रत्ययानुत्पत्तेरिति। एकाकारप्रयोजकसामग्र्या एकाकारस्यैवोत्पत्तिः स्यादिति ज्ञाने चित्राकारता न स्यादित्यर्थः। तत्र हेतुमाह–सामग्र्यभेद इति। चित्रज्ञानं नैकमभ्युपगतं किन्तु सहोत्पन्ननीलप्रत्ययपीतादिप्रत्ययलक्षणत्वेन नानारूपमिति तदात्मककार्यभेदस्यैवैकसामग्रीजन्यत्वेऽनुपपत्तेरित्यर्थः। इदमेव तत्सामग्रीजन्यत्वं तज्ज्ञानग्राह्यत्वे नियामकमित्येव। विज्ञानवादी प्राह–तत्सामग्र्यजन्यस्येति। तत्सामग्र्यजन्यत्वस्येति पाठस्तु

तद्ग्राह्यत्वनियामकत्वादिपरतया कथञ्चिदुपपाद्यः। एतावानर्थः तत्सामग्र्यजन्यस्य तद्ग्राह्यत्वेऽतिप्रसङ्गादितिरूपः। येन ज्ञानेन, विभाव्यतामिति तथा च न केनाप्येकेनज्ञानेन तत्सामग्र्यऽजन्यस्य तद्ग्राह्यत्वेऽतिप्रसङ्गादितिरूपोऽर्थो विषयीकृतः, तस्यानेकरूपस्यैकज्ञानसामग्र्याऽजन्यत्वादित्यसिद्धं तत्र तज्ज्ञानग्राह्यत्वे तज्ज्ञानसामग्रीजन्यत्वं नियामकमितिसाधयितुमलमितिभावः। एकस्यैवोपादानस्य सहकारिवैचित्र्यात् सामग्रीवैलक्षण्येन कार्यवैचित्र्यं, यथा घटस्य स्थिरस्य रूपप्रागभावादिसामग्रीसंवलितस्य रूपजनकत्वं रसगन्धादिप्रागभावादिसहकारिसहितस्य रसगन्धादिजनकत्वं, न तु पुञ्जात् पुञ्जोत्पत्तिरिति न तद्दृष्टान्तेनैकसामग्रीप्रयोज्यत्वेऽपि चित्राकारत्वं युक्तं, क्षणिकत्वपक्षे यद्यपि पुञ्जात् पुञ्जोत्पत्तिः संभवति तथापि प्रकृते एकसामग्रीजन्यत्वं मास्तु ग्राह्यत्वमस्त्विति व्यभिचारशङ्कानिवर्तकतर्काभावादप्रयोजकत्वम् यद्वा तर्कस्य सद्भावेपि तत्तत्पदार्थघटितत्वेनानेकरूपस्य तस्यैकज्ञानसामग्रीजन्यत्वासम्भवेन ज्ञानं न सम्भवतीत्यन्यत्सर्वमभिप्रेत्यैवेनेत्यतिदिष्टमाह—

उपादानस्थिरत्वानुभवेन तथा वक्तुमशक्यत्वात्, क्षणिकत्वे विपक्षबाधकाग्रहात्, अत एव वैनाशिकानां तदुपादानोपादेयत्वं नियामकमिति प्रत्युक्तम्। अस्तु तर्हि ग्राह्यांशस्यालीकत्वमिति तृतीयः पक्षः, भिन्नत्वेऽभिन्नत्वे च ग्राह्यलक्षणानुपपत्तेः, तदभावे सामग्रीसामर्थ्यस्याप्याश्रयितुमशक्यत्वात्, विचारसिद्धे हि वस्तुनि कारणचिन्तावसरो न त्वविवेचित इति चेत्,

उपादानेति। अत एव तदुपादानोपादेयत्वं मास्तु तद्ग्राह्यत्वमस्त्वित्यत्र व्यभिचारशङ्कानिवर्तकतर्काग्रहादेव। वैनाशिकानां बौद्धानाम्। नियामकम् तद्ग्राह्यत्वनियामकम्। तदभावे ग्राह्यलक्षणाभावे। नैयायिकस्समाधत्ते—

तत्किं ग्राह्यलक्षणानिरुक्तया प्रकाशमानत्वममीषां निवर्त्तते, सत्त्वं वा, न प्रथमः, नहि लक्षणस्य विशिष्या-निर्णयमात्रेण स्पष्टदृष्टमपि लक्ष्यमपह्नोतुं शक्यते, विशिष्यानिर्णयस्य दुरूहत्वेनापि सम्भवात् तेन सर्वानुभवसिद्धापलापायोगात्, तेषामप्रतिभासे तेषु तन्निषेधस्याप्यनुपपत्तेः, तेषां बाह्यानां तेषु बाह्येषु, तन्निषेधो ग्राह्यलक्षणं नास्तीति प्रत्ययः, तेन नास्त्येव बाह्ये ग्राह्यलक्षणं, निपुणं परिभावनेऽपि प्रज्ञाशालिभिरनाकलनात्, न च लक्षणाभावे लक्ष्यस्य ग्राह्यत्वस्य सम्भव इत्यप्यसम्भवदुक्तिकमेवेति, न द्वितीयः, तदा हि लक्षणानुपपत्तिः सत्त्वं निवर्त्तयेत् यथासत्त्वे लक्षणमुपपद्येत, उभयथाप्यनुपपत्तौ तु कोऽनुरागोऽसत्त्वे। तदेव लक्षणमिति चेत्, सत्त्वमेव किं न स्यात्. अतिप्रसङ्गादिति चेत्, न, असत्त्वेऽप्येकासद्भाने सर्वासद्भानप्रसङ्ग इत्यस्य तुल्यत्वात्। वेदनाधीनव्यवहारगोचरत्वमिति चेत्, अस्ति तावदिदं ग्राह्यलक्षणं, तस्यैवेति तु कुतः, केनचिद्वेदनेन क्वचिदेव व्यवहारो जन्यत इत्येवं नियमः कथमित्यर्थः,

तत्किमित्यादिना, अमीषां बाह्यानाम्। न धर्म्यप्रतिभासे तत्र कस्यापि निषेधः कर्तुं शक्यत इत्याशयेनाह—तेषामप्रतिभास इति। तत्र तेषामित्यादिपदानां क्रमेणार्थानाह—तेषामिति। उक्तखण्डनमन्यत्राप्यतिदिशति—तेनेति तेषामप्रतिभासे तेषु तन्निषेधस्याप्यनुपपत्तेरित्यनेनेत्यर्थः। अस्य चासंभवदुक्तिकमेवेत्यनेनान्वयः, उभयथाऽप्यनुपपत्तौ ग्राह्यस्य सत्त्वेऽप्यसत्त्वेऽपि च लक्षणानुपपत्तौ। असत्त्वमेव ग्राह्यत्वस्य लक्षणमित्याशङ्कते—तदेवेति। सत्त्वमेव ग्राह्यत्वस्य लक्षणं किं न स्यादिति समाधत्ते—सत्त्वमेवेति, लक्षणमित्यनुवर्त्तते, इदं वेदनाधीनव्यवहारगोचरत्वम्। क्वचिदेव कस्मिँश्चिदर्थे। सामग्रीतः प्रतिनियतगोचरतया

वेदनोत्पन्नेनैव प्रतिनियत एवासति व्यवहारो जन्यत इति नियमात्तस्यैव वेदनाधीनव्यवहारगोचरत्वमित्याशयेनाशङ्कते—

सामग्रीतस्तथावेदनोत्पत्तेरिति चेत्, तदेतत् सम्भाव्यते सति न त्वसतीति विशेषः। तथा हि व्यवहारो न वेदनान्तरम्, अनवस्थानात्, किन्तु प्रवृत्त्यादिकं, तच्च सति ज्ञानेनाभिलाष्यस्तत इच्छा ततः प्रवृत्तिस्ततः प्राप्तिरिति क्रमेण स्यात्, न त्वसति, तस्य प्राप्तुमशक्यत्वात्, शक्यत्वे वाऽनलीकत्वात्, व्यवहारोऽप्ययमलीक इति चेत्, तर्हि सुतरां लक्षणाभावस्तद्द्वारस्याप्यभावादसतोऽजन्यत्वात्, यदि वाऽसतोऽपि प्रवृत्त्यादेर्जन्यत्वमुपेयते, तदा सत एव तद्गोचरत्वमस्त्विति न ततोऽसत्त्वसिद्धिरिति।

सामग्रीत इति, ज्ञानेनाभिलाष्यस्तत इच्छा ततः प्रवृत्तिरिति अत्र ज्ञानेनाभिलाषस्तेन यत्नस्तेन प्रवृत्तिस्तया तत्प्राप्तिरिति पाठः सम्यक्, बौद्धाधिकारे तथादर्शनात्। असतः प्राप्तुं शक्यत्वे वाऽनलीकत्वप्रसङ्गः स्यात्, न हि कदाचित्कचिन्नरशृङ्गादिकं प्राप्यत इत्याह—शक्यत्वे वेति। व्यवहाररूपस्य ग्राह्यलक्षणघटकस्यालीकत्वेन वेदनजन्यत्वाभावेन तद्घटितस्य ग्राह्यलक्षणस्यासंभव इत्याह—तर्हि सुतरामिति. प्रसङ्गसङ्गत्या विश्वस्य विचारासहत्वमित्यभ्युपगच्छतां योगाचारमाध्यमिकमतावलम्बिनां मतमपाकर्तुं प्रथमं तावत्तन्मतेनाशङ्कते—

अथ ग्राह्यस्य सत्त्वेऽसत्त्वे च ग्राह्यलक्षणानुपपत्तेरस्तु सत्त्वासत्त्वाभ्यां विचारासहत्वमेव विश्वस्येति चेत्, तत्किमिदानीं तत्त्वोपप्लव एव काष्ठा, शून्यतायां वा, उपप्लवो दोषवत्त्वम्, अनध्यवसाय इत्यन्ये। काष्ठा विश्रामः, नीलादिप्रपञ्चस्य केनापि रूपेणानिरूप्यत्वमेव साध्यतेऽनिरूप्यत्वादेव प्रपञ्चस्य शून्यता वेति द्वयार्थ इति तारा-

यणः। अलीकतापक्षेऽसदेव बाह्यं गृह्यते, शून्यतापक्षे ज्ञानमपि नास्तीति विशेषः, विज्ञानवादप्रसङ्गादन्तरा वादान्तरावतारोऽयम्, न प्रथमः, इयतीं भूमिमारूढस्यापि विचारस्य निश्चलतायां प्रमाणाभावात्॥ स्वयं दोषवता विचारेणान्यस्य दुष्टत्वसाधनाशक्तेः, स्वयमनिरूप्य प्रमाणेनान्याप्रामाण्यनिरूपणायोगाच्च, भावे वा कथं तत्त्वोपप्लवः, अस्यैव विचारस्यानुपप्लवात्। तत्त्वोपप्लवसाधकविचारव्यतिरिक्तस्यैव सर्वस्योपप्लवः साध्यत इति चेत्, न, तत्समानन्यायस्यान्यस्याप्यात्मास्तित्वादिसाधकस्यानुपप्लवत्वापत्तेः, निष्फलत्वाच्चास्य विचारस्य भवतामपि तदारम्भायोगात्,

अथेति। अलीकतापक्ष इति ग्राह्यस्यालीकतापक्षे सता ज्ञानेनासदेव बाह्यं गृह्यत इति नीलादिकं ग्राह्यमसत् ग्राहकं च ज्ञानं सदित्यर्थः। वादान्तरेति माध्यमिकमतेत्यर्थः। अन्यस्येति ग्राह्यस्येत्यर्थः। प्रमाणेनासिद्धेन विचारेणान्यस्य ज्ञानस्याप्रामाण्यसाधनं न युक्तमित्याह—स्वयमनिरूप्येति। भावे वेति एतावता प्रबन्धेन कृतस्य विचारस्य निश्चलतायां प्रमाणभावे वेत्यर्थः। तत्त्वसाधकविचारोऽनुपप्लुतः विचारत्वात् भवत्सम्मततत्त्वोपप्लवविचारवत्, अन्यथा तत्त्वसाधकविचारवत्तत्त्वोपप्लवविचारस्यापि विचारत्वहेतुनोपप्लुतत्वं स्यात्, विनिगमकाभावादित्याशयेनाह—तत्समानेति। प्रेक्षावतां प्रवृत्तिः फलवत्तया व्याप्तेति तत्त्वोपप्लवसाधकस्य विचारस्य निष्फलत्वात्तद्विषयकप्रवृत्तिर्भवतामप्यनारम्भणीया स्यादित्याह—निष्फलत्वाच्चास्येति। तत्त्वे सति यद्यस्य कारणं तदर्थिनस्तत्र प्रवृत्तिरिति नियमः, न हि तमुल्लङ्घ्य तत्त्वोपप्लवसाधकविचारस्य फलं संभवतीत्याह—

न हि नियममुल्लङ्घ्यास्यातिप्रवृत्तिः फलं, गगनास्वादनेनातृप्तेः, ज्वालाकलापालिङ्गनेन तापानपनोदनात्,

नाप्यतिनिवृत्तिः, जडीभावमात्रेऽप्युपनिपातिदुःखानिवृत्तेः, न च दुःखमपि विचारासहमित्यहेयमेव, तथाविधस्य विचारेऽप्यनधिकारात्, हेयोपादेयज्ञानशून्यत्वात्, न च पारलौकिकस्य सुखस्य दुःखस्य चापारमार्थिकत्वे तदर्थं श्रमनियमादौ न प्रवृत्तिः, तद्भयाच्च न स्वच्छन्दपानभक्षणादेर्निवृत्तिरिति यथेष्टाचारोऽस्य फलं, विचारात् प्रागपि तस्य पामरादिवदयत्नसिद्धेः, नापि परलोकमात्रानिवृत्तिः, तस्यैहिकतुल्यत्वात्। दृश्यते तावदयं लोक इति चेत्, यदि ज्ञानवचनो दृशिस्तदा परोऽपि तथा ॥

नहि नियममिति, तत्र हेतुमाह—गगनेति। ननु गगनास्वादनमसंभवीति न ततस्तृप्तिफलमिति यदि ब्रूयात्तदाप्याह—त्वन्वेति। अतिनिवृत्त्या निरोधेऽपि कारणान्तरप्रयुक्तदुःखस्यावश्यंभावेन न दुःखाभावः फलमुक्तविचारस्येत्याह—नाप्यतिनिवृत्तिरिति। नन्वनुपनिपातिदुःखं भवतु, न च तावता काचित्क्षतिः, तस्य विचारासहत्वेनानिष्टत्वाभावेनात्याज्यत्वादित्याशङ्कां निराकरोति—न च दुःखमपीति, तथाविधस्य दुःखमहेयतया जानतः। तत्र हेतुमाह—हेयेति, तदर्थम् सुखार्थम्, तद्भयाच्च दुःखभयात्, अस्य तत्त्वोपप्लवसाधकविचारस्य, तस्य यथेष्टाचारस्य। नापि तत्त्वोपप्लवसाधकविचारस्य परलोकमात्रानिवृत्तिः फलं, यत ऐहिकस्येव परलोकस्यापि प्रमाणगम्यत्वेन तत्त्वभूतत्वमितीष्टसाधनताज्ञानेनैहिके यथा प्रवृत्तिस्तथा परलोकेऽपि सा स्यादेव, यथा वा परलोकान्निवृत्तिस्तथैहलोकादपि सा स्यादेवेत्याह—नापि परलोकेति। नन्विहलोकस्तावत् दृश्यत इति न ततो निवृत्तियुक्तेत्याशयेनाशङ्कते—दृश्यत इति। परोऽपि परलोकोऽपि। तथा दृश्यते ज्ञानविषय इति यावत्। नन्विहलोकस्य साक्षात्कारविषयत्वादेव प्रवृत्तिविषयत्वं, न तु परलोकस्य, तथात्वाभावादिति चेत्, तर्हीहलोकेऽप्यनुमानादिना प्रवृत्तिर्न स्यादित्याह—

साक्षात्कारवचनश्चेदिहैवानुमानादेरप्रवृत्तिप्रसङ्गः, तदपि प्रत्यक्षमेवेति चेत्, आमुष्मिकमपि प्रत्यक्षमेव, तुल्यलक्षणत्वात्, अरुचेरेव तत्र न प्रवृत्तिरिति चेत्, तथापि किं विचारेण, तमन्तरेणाऽपि तस्याः सुलभत्वात्, तामेवायं पुष्णातीति चेत्, इहापि पुष्णीयात्, विचारेणैहिकस्याप्युपप्लुतत्वात्,

साक्षात्कारेति। तत्र परलोके। तस्याः अरुचेः। तामेव अरुचिमेव। अयं तत्त्वोपप्लवसाधकविचारः। इहापि इहलोकेऽपि, पुष्णीयादिति तामित्ययमिति चानुवर्त्तते, उपसंहरँस्तत्त्वोपप्लववादिनमुपहसति—

सोऽयं पवनतनयवार्त्तामुपश्रुत्य तत्स्पर्द्धया बालवानरः कियदपि दूरमुत्प्लुत्य महार्णव एव पतितः प्राह अपार एवायमकूपारो मिथ्या रामायणमिति तत् किमनेन, सोऽयं तत्त्वोपप्लववादी विचारसागरं लङ्घयित्वा सत्त्वेनासत्त्वेन वा प्रपञ्चस्य तत्त्वनिरूपणं कृतवतां विदुषां वचांसि खण्डयित्वा स्वयमपि तत्त्वनिरूपणाय विचारे प्रवृत्तस्तत्करण एवाशक्तो विचारासहमेव विश्वं तत्त्वोपप्लवकाष्ठेति वदन् समुद्रलङ्घनादिविषयहनूमत्पराक्रमवचनं निशम्य स्वयमपि तत्कर्त्तुमुपक्रम्यासमर्थत्वात् महार्णव एव पतित्वाऽपार एवायं सागरो हनूमतस्तल्लङ्घनेन पारप्राप्त्यादिकथात्मकं रामायणमयथार्थमिति वदता बालवानरेण तुल्य इति नदीयमुद्भ्रान्तवचनमनादेयमिति भावः॥

सोऽयमिति। तत्किमनेन तस्मान्मिथ्या रामायणमिति तदीयोद्भ्रान्तवचनेन किम्? न किञ्चिदित्यर्थः। वक्तुर्निर्वचनासामर्थ्यप्रयोजकं तद्गतमेव दूषणं, न तु प्रमेयगतमिति न तत्त्वाभाव इत्याशयेनाह—

एवं ज्ञातुं निर्वक्तुं वा न शक्यते कीदृशं जगदिति वक्तुर्निर्वचनासामर्थ्योद्भावनमपि पामरदशावन्निष्फल-मेव । वक्तुर्निर्वचनासामर्थ्यं वाच्यस्यानिर्वाच्यत्वं सिद्ध्येदिति चेत्, भवेदेवं यदि सर्व एव वक्तारस्तथा भवेयुः, न त्वेतदस्ति, कस्यचिदेव परामर्शपाटवाभावेनानिर्वचनोपपत्तेः, नहि जात्यन्धो नीलं ज्ञातुं निर्वक्तुं वाऽशक्त इत्यज्ञेयानिर्वाच्यमेव तल्लोक इति, सत्त्वासत्त्वबाधादनिर्वाच्यतेति चेत्, न, व्याघातेनोभयबाधासम्भवात्, सत्त्वे बाधकस्य वस्तुनो निराकार्यत्वात्, बाधकस्य चाबाध्यत्वे तस्यैव तात्त्विकत्वात्, बाध्यत्वे च तेनेतरबाधायोगात् ॥

एवं ज्ञातुमिति, अज्ञेयाऽनिर्वाच्यमेव तल्लोक इति, चक्षुर्ग्राह्यनीलादिवस्तु अज्ञेयमेवानिर्वाच्यमेवेत्यर्थः । अभ्युपगम्यापि बाधकं प्रकारान्तरेण समाधत्ते बाधकस्य चेति, हेयोपादेययोस्तत्साधनयोश्च विरहे निषिद्धानुष्ठाने भयस्य विहितानुष्ठाने रागस्य चाभावात् स्वास्थ्यमेव परमा निर्वृतिस्तल्लक्षणं च मोक्ष इत्याशयेनाशङ्कते—

अस्तु तर्हि शून्यतैव परमं निर्वाणमिति माध्यमिकः, परमं निर्वाणं परमा निर्वृतिः, हेयोपादेयतत्साधनविरहे निषिद्धभयरागादिविरहात्, तस्येदं वेदान्तिनयेन निराकरणम्, सा हि यद्यसिद्धा, कथं न तदविशेषमपि विश्वमभिधीयेत, वाङ्मात्रस्य सर्वत्र सुलभत्वात्, असिद्धत्वाविशेषाद्विश्वमेव किं न स्यादित्यर्थः, परमतत्त्वेन, सिद्धः परोऽप्यभ्युपगन्ता, तथा च क सर्वशून्यतेति ग्राह्यलक्षणमप्यवर्जनीयम्, स च परो यदि संवृतिरेव, विश्वशून्यतयोर्न कश्चिदपि विशेषः, कथं शून्यत्वमप्यवशिष्यते । असंवृत्तिरूपश्चेत्, परत एव सिद्धावनवस्था, स्वयमसिद्धश्चेत्, कथं शून्यमपि साधयेत्,

अस्तु तर्हीति, परमततश्चेदिति परप्रमाणेन सिद्धा शून्यतेति चेदित्यर्थः, "परतश्चेत्सिद्धा, परोऽभ्युपगन्तव्य" इति पाठान्तरम्। न कश्चिदपि विशेष इति विश्वशून्यतयोस्संवृतिसिद्धत्वस्याविशेषेऽपि शून्यत्वमेवाभ्युपगमार्हमिति चेत्, तर्हि किमिति न विश्वमेव व्यवहारपथारूढमभ्युपगमार्हमिति परो यदि ब्रूयात्तदा तद्वक्त्रमपि न वक्रीभवेदिति भावः॥ संवृतिर्वस्तुतो न प्रमाणभूतेति न तत्सिद्धमपि विश्वमभ्युपगमार्हमिति चेत्, तर्हि शून्यत्वमपि तद्वन्नाभ्युपगमार्हं स्यादित्याशयेनाह—कथमिति, अवशिष्यते इति अवशिष्येतेति पाठान्तरम्, असंवृतिरूपश्चेदित्ति अत्र पर इति बौद्धाधिकारेऽधिकः पाठः। शून्यतासाधकोऽसंवृतिरूपोऽपि परः परत एव सिद्धस्तदाऽसंवृतिरूपपरसाधकोऽपि परः परत एव सिद्धस्स्यात्, एवमग्रेपीत्यनवस्थेत्याह परत एवेति, असंवृतिरूपः परः स्वतस्सिद्ध इत्यभ्युपगमे दोषमाह—

स्वतः सिद्धश्चेत्, किं परस्य तत्त्वेन गौरवकरेण, शून्यतत्त्वमेव तथास्तु, तथोपगमे चायातोऽसि मायावादिमार्गेण, तथा हि—स्वतः सिद्धतया तदनुभवरूपं, शून्यत्वस्वरूपत्वादेव च न तस्य कालावच्छेद इति नित्यम्, अत एव न देशावच्छेद इति व्यापकम्, अत एव तन्निर्द्धर्मकमिति विचारास्पृष्टं, तस्य धर्मधर्मिभावमुपादाय प्रवृत्तेः, अत एव विशेषाभाव इत्यद्वैतम्,

स्वतस्सिद्धश्चेदिति, तथाऽस्तु स्वतः सिद्धमस्तु। तत् शून्यतत्त्वम्। तस्य शून्यतत्त्वस्य। कालावच्छेद इति किञ्चित्कालावच्छेदेनावृत्तित्वे सति किञ्चित्कालावच्छेदेन वृत्तित्वम्, प्रागभावप्रतियोगित्वे सति ध्वंसप्रतियोगित्वमिति यावत्। अत एव शून्यत्वस्वरूपत्वादेवेत्यर्थः। देशावच्छेदः किञ्चिद्देशावच्छेदेन वृत्तित्वाभाववत्त्वे सति किञ्चिद्देशावच्छेदेन वृत्तित्वम्, एतच्च मध्य-

मपरिमाणत्वेऽत्रोपपद्यते, शून्यतत्त्वे च तन्नास्तीति भावः। तस्य विचारस्य। विशेषाभावः विरुद्धधर्माध्यासाभावाच्च नानारूपम्। शून्यतत्त्वं ब्रह्मरूपत्वात्पारमार्थिकं प्रपञ्चस्त्वऽपारमार्थिक इति तयोः प्रतियोग्यनुयोगिभावाभावाच्च प्रपञ्चप्रतियोगिकं शून्यत्वम्, अत एव नाभावरूपं किन्तु विधिरूपमित्याह—

प्रपञ्चस्यापारमार्थिकत्वान्न निष्प्रतियोगिकमिति विधिरूपम्, अविचारितप्रपञ्चापेक्षया तु शून्यमिति व्यवहारः। ननु अनुभवमात्रस्य प्रपञ्चेन कः सम्बन्धो येन स बाध्योऽपि प्रकाशते, न तावज्ज्ञानान्तरं, द्वैतप्रसङ्गात्, न ब्रह्मैव, यथार्थानुभवस्य ब्रह्मणो विषयत्वात् प्रपञ्चस्य पारमार्थिकत्वप्रसङ्गादिति चेत्, वस्तुतः प्रपञ्चः प्रकाशत इत्येव नास्तीति कुतस्तत्सम्बन्धगवेषणा। संवृत्या तु गगनगन्धर्वनगरयोराधाराधेयभाव इवानुभवप्रपञ्चयोर्विषयविषयिभावः, स च यथा नैयायिकैः समर्थयिष्यते तथैव वेद्यनिष्ठस्त्वसावस्मिन् दर्शन इति विशेषः।

प्रपञ्चस्येति, शून्यतत्त्वमविवक्षितविषयविशेषं यदनुभवस्य स्वरूपं तन्मात्ररूपमिति तस्य पारमार्थिकस्य घटपटादिना प्रपञ्चेनाविचारणीयेनापारमार्थिकेन सह विषयविषयिभावलक्षणस्तद्व्यतिरिक्तो वा सम्बन्धो नास्तीति कथं सम्बन्धमृते स प्रपञ्चः प्रकाशते, न च स्वयं स प्रकाशते इत्यपि वक्तुं शक्यं, तस्य त्रिकालाननुरूपतया बाध्यकोटिप्रविष्टत्वेनानुभवरूपत्वाभावादित्याशयेनाशङ्कते—तथापीति, तथापि प्रपञ्चशून्यस्यानुभवमात्रस्येति पाठान्तरम्। सः प्रपञ्चः, द्वैतप्रसङ्गादिति संबन्धरूपज्ञानान्तरस्य ब्रह्मव्यतिरिक्तस्याभ्युपगमाद् द्वैतं स्यादित्यर्थः। वस्तुतो घटपटाद्यभावेन तद्विषयकस्य ज्ञानस्यैवाभावान्न प्रपञ्चः प्रकाशत इति तत्सम्बन्धगवेषणनिरा[illegible] समाधत्ते—वस्तुतः प्रपञ्च इति, कल्पनादृष्ट्या तु प्रपञ्चस्य प्रकाश इव तत्सम्बन्धोऽप्यस्तीति सदृष्टान्तमुपवर्ण-

यति—संबन्धस्यास्त्विति, न्यायमते विषयविषयिभाव उभयनिष्ठः, वेदान्तिमते तस्य काल्पनिकत्वात्, ज्ञानस्य च पारमार्थिकत्वान्न स तन्निष्ठः, किं तु वेद्यनिष्ठः, तस्यैव वेद्यस्याप्याविद्यकत्वादित्याह—स च यथेति, ननु यथार्थानुभवज्ञानरूपब्रह्मनिष्ठः स संबन्धः कथं नेत्यत आह—

आविद्यकस्याविद्यकप्रपञ्चनिरूपितस्य च तस्य परमार्थसति ब्रह्मण्यसम्भवात्, घटपटाद्युपाधिभेदाच्चानुभूतिरेकापि भिन्नेव चकास्ति, गगनमिव स्वप्रघटकटाहकोटरकुटीकोटिभिः। एवं च प्रपञ्चवत्तस्याविद्यकप्रकाशान्तरस्वीकारेऽपि न क्षतिरित्यास्तां तावत् किमार्द्रकवणिजो वहित्रचिन्तया। अथ निरस्यन्तु शून्यतामौपनिषदाः, द्वैतवादिनस्तु कथमिति चेत्, तथैव, तथा हि—असिद्धैव चेच्छून्यतोपेयते किमपराद्धं व्यवहारसिद्धया पूर्णतायाः। अनुभवबलादिति चेत्, तदिदं विपरीतं, न खलु स्वप्नेऽपि शून्यता स्वारसिकस्यानुभवस्य गोचरोऽपि तु पूर्णतैव, अनुभवोपगमे च क्व नाम शून्यता। प्रपञ्चे बाधकादिति चेत्, प्रागेव दत्तोत्तरत्वात्।

आविद्यकस्येति, तस्य विषयविषयिभावस्य। यथैक एवाकाशो घटावच्छिन्नत्वेन पटावच्छिन्नत्वेन च भिन्न इत्युपाधिभेदेन भिन्नात्मेव व्यवहारपथमवतरति तथानुभूतिर्वस्तुत एकाऽपि तत्तन्मायोपनीतघटपटाद्युपाधिभेदाद्भिन्नेव व्यवहारपथमवतरतीत्याह—घटपटेति, यथा प्रपञ्चो मिथ्या तथा तद्विषयकं ज्ञानमपि मिथ्यैवेति तत्सत्त्वेऽपि न द्वैतापत्तिरित्याह—एवं च प्रपञ्चवदिति, अनुभवबलादिति, सिद्धैवोपेयत इति शेषः। तदिदमिति अनुभवात्मकबलमित्यर्थः। विपरीतमिति पूर्णतायामेवानुभवबलं न तु शून्यतायामित्यर्थः। प्रपञ्चे बाधकादिति अत्र शून्यतोपेयत इत्यस्यानुषङ्गः। स्वरूपतः शून्यतां विकल्प्य निरस्यति—

अपि च किमिदं शून्यत्वं नाम, अभाव इति चेत्, न अविरोधात्, सार्वदिकोऽभाव इति चेत्, तथाप्यविरोध एव, क्वचित् कस्यचित् तदुपगमात्। सार्वत्रिक इति चेत्, तथापि तथैव, एकेन सम्बन्धेन सतोऽपि सम्बन्धान्तरेणासत्त्वोपगमात्,

अपि चेति, अभावः घटपटादेरभावः। अविरोधादिति घटाभावादेर्नैयायिकेनाभ्युपगमादित्यर्थः। ननु न घटादेरभावः सर्वकालावच्छेदेन विद्यते, यश्चाभावः सर्वकालावच्छेदेन विद्यते तद्रूपैव शून्यताऽभ्युपगम्यत इति चेत्, मैवं, घटाद्यभावस्यापि समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्य प्रतियोगिकालावच्छेदेनापि पर्वते वृत्तित्वात्सर्वकालावच्छिन्नवृत्तिताकस्य तस्य शून्यतारूपत्वाभ्युपगमे दोषाभावादिति शङ्कोत्तराभ्यामाह—सार्वदिकोऽभाव इति, ननु घटादिः समवायेन कपालादौ वर्तत एवेति न तत्र तदभाव इत्युक्ताभावस्य सर्वदेशावच्छिन्नवृत्तिमद्रूपत्वाभावान्न शून्यतारूपता, यस्यैवाऽभावस्य तद्रूपता तस्यैव तद्रूपत्वाभ्युपगमादित्याशङ्कते सार्वत्रिक इति चेदिति। तथैवेति अविरोध एवेत्यर्थः। तत्र हेतुमाह एकेनेति, समवायेन कपालादौ सतोऽपि घटादेस्संयोगेन तत्राभावोपगमादित्यर्थः।

सर्वेण सम्बन्धेनेति चेत्, कस्याभाव इति वक्तव्यम्, सर्वेषामिति चेत्, सर्वकालदेशसम्बन्धप्रतियोगिनामुपगमेऽपि शून्यतेति महदाश्चर्यम्, तस्मादिदं नीलमिदं पीतमिमे नीलपीते मिथो भिन्ने इत्याद्यनुभवव्यवस्थयाऽनात्मापि स्फुरतीत्यवर्जनीयमेतत्। ग्राह्यग्राहकत्वसिद्धौ च तल्लक्षणं ग्राह्यव्यवहारविशेषनिमित्तमर्थज्ञानयोर्विषयविषयिभावरूपमपरस्यैव किञ्चित्, तत्र ग्राह्यस्य पारमार्थिकत्वे ज्ञानानित्यतायां तन्निष्ठमुभयनिष्ठं वा,

बाध्यविरोधे ज्ञानानित्यतायां ज्ञाननिष्ठमेव, ज्ञानं नित्यं, प्रपञ्चस्तु न तात्त्विक इति मते ग्राह्यनिष्ठमेवेति। केचित्तु घटादिव्यवहारप्रयोजकस्य तद्विषयत्वस्य नित्यज्ञाननिष्ठत्वे सर्वदा तद्व्यवहारापत्तिर्नित्यज्ञानस्वरूपानतिरिक्तस्य तस्य सामग्रीविशेषजन्यताया वक्तुमशक्यत्वात्,

सर्वेण सम्बन्धेनेति, सर्वेणावच्छेदेन सर्वेण रूपेणेत्यपि विशेषणीयं, तेन न न्यूनता दोषः। सर्वकालेति अत्रत्यं सर्वपदं कालदेशसम्बन्धप्रतियोगिपदेषु प्रत्येकमन्वेति। अभावज्ञाने प्रतियोग्यारोपः कारणम्, आरोपश्च यत्र कुत्रापि प्रमितस्यैव, नह्यप्रमितमारोप्यत इति वचनात्, तथा च प्रतियोगिनस्तद्घटकस्य चालीकत्वे आरोपासम्भवात् कारणाभावेन नाभावज्ञानमिति स्वमतमाश्रित्योक्तमवसेयम्। अनात्माऽपि स्फुरतीति, ज्ञानभिन्नमपि प्रकाशत इत्यर्थः। ग्राह्यत्वलक्षणं विषयविषयिभावरूपं न्यायमते ज्ञानस्येव बाह्यस्यापि पारमार्थिकत्वेन ग्राह्यग्राहकयोरन्यतरनिष्ठमुभयनिष्ठं वा, योगाचारमतेन बाह्यस्यालीकत्वेन ज्ञानस्य चाऽनित्यत्वेन सल्लक्षणज्ञाननिष्ठमेव, वेदान्तिमते ज्ञानस्य नित्यतया तात्त्विकत्वेनाऽतात्त्विकं विषयविषयिभावरूपं तत् न तन्निष्ठं, तात्त्विकाऽतात्त्विकयोराधाराधेयभावायोगात्, किन्तु तस्यैव प्रपञ्चस्याप्यतात्त्विकत्वेन ग्राह्यनिष्ठमेवेत्याशयेनाह तच्चेति। तद्व्यवहारापत्तिः घटादिव्यवहारापत्तिः, तत्र हेतुमाह नित्यज्ञानेति। घटविषयत्वस्य सामग्रीविशेषप्रयोज्यत्वे सामग्रीविशेषानन्तरमेव घटव्यवहारस्स्यात्, न चैवं, घटविषयत्वस्य नित्यज्ञानरूपत्वेन नित्यत्वादिति भावः। दूषणान्तरमप्याह—

एवं घटविषयत्वेनानुव्यवसायदशायां पटविषयत्वेनापि तदापत्तिरित्याहुः। तच्चिन्त्यम्। विषयनिष्ठत्वेऽपि यावद्विषयसत्त्वं व्यवहारापत्तिवारणायानुसरणीयाया युक्तेरेव तत्प्रसङ्गवारणादिति। तस्मादुक्तरीत्यैव पक्षभेद-

समर्थनं न्याय्यः, लक्ष्यस्तावदत्र विषयविषयिभावः, स च प्रकाशस्य सतस्तदीयतामात्ररूपः स्वभावविशेषः, स्वभावत्वादेव च नोपकारान्तरमपेक्षते, तन्मात्रीयत्वादेव च नान्यदीय इति ग्राह्यलक्षणसिद्धिः ॥ तदीयता तत्सम्बन्धित्वं, स्वभावः स्वरूपं, तथा च ज्ञानस्वरूपमेव ज्ञानस्यार्थेन सम्बन्धः, सम्बन्धसम्बन्धिनोश्चाभेदो न दोषाय, सर्वत्र स्वरूपसम्बन्धे तथैव कल्पनात्, सामान्यतश्च विषयता ज्ञानस्वरूपं, घटादिविषयता तु घटादिनानुगतास्तत्तज्ज्ञानव्यक्तय एव, ताभिरेवानुगतघटविषयत्वव्यवहारात्,

एवमिति, एकज्ञानरूपत्वेन घटविषयत्वपटविषयत्वयोरेकत्वेन घटविषयत्वेन घटज्ञानस्यानुव्यवसायकाले पटविषयत्वेनाप्यनुव्यवसायः स्यादित्यर्थः। युक्तेरेवेति इन्द्रियसन्निकर्षादिसहितस्यैव विषयविषयिभावस्य व्यवहारप्रयोजकत्वेनेन्द्रियसन्निकर्षादिविरहे न व्यवहारापत्तिरिति युक्तेरेवेत्यर्थः। घटतज्ज्ञानयोर्घटसम्बन्धितारूपो विषयविषयिभावो घटज्ञानरूपः, पटतज्ज्ञानयोः पटसम्बन्धितारूपस्तु पटज्ञानरूपो नातिरिक्तस्वभावः येन तदाश्रिता दोषास्स्युः, तत्तज्ज्ञानरूपत्वादेव च तत्तज्ज्ञानसामग्र्यऽतिरिक्तमुपकारान्तरं नापेक्षते, येनानवस्था स्यात्, घटज्ञानस्य घटमात्रविषयकत्वादेव च न पटादिविषयकत्वमिति ग्राह्यलक्षणसिद्धिरित्याशयेनाह स च प्रकाशस्येति। अवत्यं तदीयतापदं स्वभावपदं च विवृणोति–तदीयता तत्सम्बन्धित्वमिति, ग्राह्यसम्बन्धित्वमित्यर्थः।

तासामेव संयोगविशेषाणामिव घटादीनां सम्बन्धत्वात्, व्यवहारनिमित्तं च ज्ञाननिष्ठमर्थसम्बन्धित्वं नार्थज्ञानसम्बन्धित्वम्, अतीतानागतयोरिदानीं ज्ञातो घट इति व्यवहारानुरोधात्, दण्डपुरुषसंयोगा ज्ञानघटविषयता इत्यादिवच न विशिष्टव्यवहारादिः, ज्ञानविशेषस्यैव तत्र तन्त्रत्वात्, एकत्र संयोगनिष्ठसंसर्गता-

निरूपितप्रकारत्वस्य दण्डेऽभावात्, यथा न दण्डविशिष्टपुरुषव्यवहारस्तथाऽपरत्र ज्ञाननिष्ठसंसर्गतानिरूपितप्रकारत्वस्य घटेऽभावात् न घटविशिष्टज्ञानव्यवहार इत्यर्थः।

तासामेव संयोगविशेषाणामिवेति, संयोगत्वेन रूपेण सर्वेषां घटसंयोगानामिव विषयतात्वेन रूपेण सर्वासामेवघटज्ञानव्यक्तीनामित्यर्थः, नार्थज्ञानसम्बन्धित्वमिति अर्थे ज्ञानसम्बन्धित्वं नेत्यर्थः, तत्र हेतुमाह—अतीतानागतयोरिति, ज्ञानस्यैवार्थसम्बन्धित्वेन प्राधान्योपगमे तत्सत्त्वेऽतीतानागतार्थाऽभावेऽपीदानीं ज्ञातो घट इत्यादिव्यवहारोपपत्तिः, तन्निमित्तस्य विषयत्वसम्बन्धस्य ज्ञानरूपस्य तदानीमपि सत्त्वात्, अर्थस्यैव ज्ञानसम्बन्धित्वेन प्राधान्योपगमे त्वतीतानागतयोरर्थयोरिदानीं ज्ञातो घट इति ज्ञानकालेऽभावेनोक्तव्यवहारो न स्यादिति भावः।

घटमहं जानामीति ज्ञाने ज्ञानांशे ज्ञानरूपविषयतासम्बन्धेन घटस्य प्रकारत्वेन तेन घटविशिष्टज्ञानव्यवहारः; ज्ञानघटविषयतेति ज्ञाने तु घटस्य तथात्वाभावेन न तेन तथा व्यवहार इत्याह—अपरत्रेति, न विशिष्टव्यवहारादिरित्यत्रादिपदग्राह्यमुपदर्शयति—

व्यवहारादीत्यादिपदाद्विशिष्टज्ञानकार्यानुमित्यादिग्रह इति वदन्ति। अत्र नव्याः—यदि ज्ञानस्वरूपमेव विषयता, तदा घटपटाविति समूहालम्बनस्य पटत्वघटत्वावच्छिन्नघटपटीयस्वात्मकविषयताशालित्वाद् भ्रमत्वापत्तिः। अथ यथा समवायोऽनवच्छिन्न एव सत्तायाः, रूपसंयोगाद्यवच्छिन्नश्च रूपसंयोगादेः, रूपसंयोगादीत्युभयाभिधानं व्याप्यवृत्त्यव्याप्यवृत्तित्वसङ्ग्रहाय, तदवच्छिन्नत्वं तद्विशिष्टत्वं, जातौ समवायसत्त्वेऽपि रूपाद्यभावादेव विशिष्टासत्त्वात् न तद्विशिष्टव्यवहार इति भावः, तथा निर्विकल्पकं ज्ञानमनवच्छिन्नमेव विषयता,

सविकल्पकं तु तत्तत्प्रकारावच्छिन्नं विषयता, समूहालम्बने प्रमारूपे घटत्वाद्यवच्छिन्नं घटादेः, भ्रमे तु समूहालम्बनभिन्नसाधारणे घटत्वाद्यवच्छिन्नं पटादेरित्यदोषः।

व्यवहारादीत्यादीति, अतिरिक्तविषयतावादिनव्यनैयायिकमतमाह—अत्रेति. पटत्वेन घटावगाहकं पट इति ज्ञानं घटत्वेन पटावगाहकं घट इति ज्ञानं च यथा भ्रमस्तथा घटत्वेन घटस्य पटत्वेन पटस्य चावगाहकं घटपटाविति समूहालम्बनप्रमात्मकज्ञानमपि भ्रमस्स्यात्, घटत्वावच्छिन्नज्ञानात्मकघटविषयतायाः पटत्वावच्छिन्नज्ञानात्मकपटविषयताया एकज्ञानात्मकतयाऽभिन्नत्वेन घटविषयताया अपि पटत्वावच्छिन्नत्वेन पटविषयताया अपि च घटत्वावच्छिन्नत्वेनोक्तभ्रमवदुक्त समूहालम्बनज्ञानेऽपि पटत्वाच्छिन्नघटविषयताया घटत्वाच्छिन्नपटविषयताया अपि सत्त्वादित्याह—यदि ज्ञानस्वरूपमेवेति. ननु संसर्गकोटौ रूपादिवैशिष्ट्यनिवेशस्य किं फलमित्यत आह—जानाविति, विशिष्टासत्त्वात् रूपविशिष्टसमवायाभावात्। अनवच्छिन्नमेव विषयतेति, निर्विकल्पकज्ञाने प्रकारमुद्रया विशेष्यमुद्रयान कस्यचिद्भानाऽभावाद्भ्रमत्वप्रमात्वयोरभावेनापत्त्यनुपपत्त्यभावादिति भावः। अयं घट इति ज्ञाने घटविषयत्वं घटत्वप्रकारकज्ञानम्, अयंपट इति ज्ञाने पटविषयत्वं पटत्वप्रकारकज्ञानम्, समूहालम्बने तु प्रमारूपे घटत्वप्रकारकज्ञानं घटविषयत्वं पटविषयत्वं च पटत्वप्रकारकज्ञानमिति घटविषयत्वस्य पटत्वानवच्छिन्नत्वेन न भ्रमत्वम्, भ्रमस्थलेतु घटविषयत्वं पटत्वावच्छिन्नमिति भ्रमत्वमित्याशयेनाह—सविकल्पकं त्विति। ननु विषयतायां तत्तत्प्रकारावच्छिन्नत्वं यदि ज्ञानरूपमेवेति चेत्, तर्हि समूहालम्बनप्रमात्मकज्ञाने भ्रमत्वापत्तिस्तदवस्थेत्यत आह—

तदवच्छिन्नत्वं तत्प्रकारकत्वम्, तच्चातिरिक्तमेवेति गुणानन्द इति चेन्, तर्हि घटज्ञानं घटो ज्ञात इत्येव

स्यात्, न तु घटत्वेन घटज्ञानं घटो ज्ञात इति, घटत्वस्य सम्बन्धकोटौ प्रवेशात्, नहि भवति नीलत्वेन नीलो घटो नीलत्वेन घटनीलमिति, अथ सम्बन्धकोटिप्रविष्टत्वेऽपि यथानुभवं व्यवस्थया कुत्रचित्तृतीयार्थोल्लेखो दृश्यत एव, यथा घटत्वेन घटो नास्तीत्यादौ, अन्यथा कम्बुग्रीवादिमत्त्वेन घटो नास्तीत्यस्याप्रामाण्यानापत्ते-रित्यादेर्नञ्विवृतौ व्यक्तत्वात्, कुत्रचिच्च नेति न सामान्यतः सम्बन्धकोटिप्रविष्टत्वं तृतीयानुल्लेखे प्रयोजकं, सम्बद्धत्वाविशेषणत्वादिति चेत्, तदापि तदवच्छिन्नत्वं यदि धर्मान्तरं तदा भाषान्तरेणातिरिक्तविषयता-स्वीकारः॥ अथ तदुभयमेव, तदाऽतीतानागतविशेषणकेऽप्रतीकारः॥ अथ यथा रूपाद्यवच्छिन्नत्वस्य समवा-येऽनतिरिक्तत्वेऽपि निस्तारस्तथा ज्ञाने घटत्वाद्यवच्छिन्नत्वस्यापि, यत्र ज्ञाने यस्य सम्बन्धस्तत् तद्विषयत्वव्य-वहारमर्जयति, यत्तु तत्सम्बद्धतावच्छेदकं तत्र प्रकारत्वव्यवहारमित्यदोष इति चेत्, तथापि यदि विज्ञानं स्व-रूपेण घटादिभिः सम्बद्धमिति तेषु व्यवहारमाधत्ते, तदा स्वात्मनि स्वाभावे स्वकालादावप्यादध्यात्, तैरपि समन्तस्य स्वरूपेण सम्बद्धत्वात्॥

तदवच्छिन्नत्वं तत्प्रकारकत्वमिति। न तु घटत्वेनेति, घटत्वेनेत्यस्य घटज्ञानमित्यत्र घटो ज्ञात इत्यत्र चान्वयः। घट-त्वस्य सम्बन्धकोटौ प्रवेशादिति, सम्बन्धकोटिप्रविष्टस्य प्रकारतयाऽनुल्लेखनियमादिति भावः। तत्र दृष्टान्तमाह—नहि भव-तीति, नीलत्वस्य नीलघटतादात्म्यसंसर्गरूपत्वान्नोक्तप्रतीतौ तदुल्लेख इति भावः। अन्यथेति घटत्वेनेत्युल्लिख्यमानतृतीयार्थस्य सम्बन्धकोटौ न भानं किन्तु प्रकारविधयैवेत्यभ्युपगम इत्यर्थः। कम्बुग्रीवादिमत्त्वेनेति, प्राचाम्मते अतिप्रसङ्गाद्यनापादके लघु-

धर्मं सम्भवति गुरुधर्मं प्रतियोगितावच्छेदकत्वस्याऽस्वीकारेणाभावे घटस्य संसर्गविधया भासमाने प्रतियोगित्वे तृतीयार्थस्य कम्बुग्रीवादिमत्त्वावच्छिन्नत्वस्य विशेषणत्वे तस्य तत्राभावेनाऽप्रामाण्यं स्यादपि, तृतीयार्थस्य संसर्गकोटौ भानानङ्गीकारे च घटादावेव तदन्वयस्य वक्तव्यत्वेन तस्य तत्राऽबाधिततयाऽप्रामाण्यं न स्यात्, न च तदभाववति तत्प्रकारकत्वस्यैवाऽऽप्रामाण्यरूपत्वात्संसर्गविशेषणस्य प्रकारत्वाऽभावेन कथं संसर्गांशेऽप्रामाण्यमिति वाच्यम्, तदभाववति तद्विशेषणकत्वस्याप्रामाण्यरूपत्वाङ्गीकारेण तत्राऽपि तद्दूषणेरिति भावः। नव्यास्तमादघति—तदापीति, ननु घटत्वेन घटज्ञाने घटविषयतायां घटत्वावच्छिन्नत्वं नातिरिक्तं, येन नामान्तरेण विषयतास्वीकारस्स्यात्, किन्तुघटत्वज्ञानोभयमेवेति चेत्, तर्हि तद्घटवद्भूतलमित्यत्र भूतले तद्घटवतस्तद्घटावच्छिन्नज्ञानरूपो विषयत्वसम्बन्धः, तत्र ज्ञाने तद्घटावच्छिन्नत्वं तद्घटज्ञानोभयरूपम्, एवं च तद्घटस्यातीतत्वेन तद्रूपसम्बन्धाभावात्तद्विशिष्टव्यवहारो न स्यात्, एतमनागतविशेषणकेऽपि बोध्यमित्याह—अथ तदुभयमेवेति। घटज्ञानमेव घटविषयत्वमिति पक्षमाश्रित्य प्राचीनानुयायी शङ्कते—अथेति, नन्वसंबद्धतावच्छेदकं ज्ञाननिरूपिता या घटे संबद्धता तदवच्छेदकम्। घटादिभिस्तज्ज्ञानं स्वरूपेण सम्बद्धमिति घटादिज्ञानं घटादिविषयत्वमर्जयति तदा तादात्म्यप्रतियोगिनाकालिकादिस्वरूपसम्बन्धविशेषरूपत्वात् स्वरूपसम्बन्धेन ज्ञानं स्वरूपेण भासमानेन सकालेन न सम्बद्धमिति तेनापि विषयत्वव्यवहारकुर्यादित्युत्तरयति—तथापि यदीति। एवं ज्ञातोऽभावो ज्ञानाभाव इत्युभयप्रतीतौ विशेष्यीभूतेऽभावे स्वरूपेण ज्ञानस्य प्रकारत्वमिति, तयोरविशेषस्स्यात्, यद्यपि ज्ञातोऽभाव इत्यत्र विषयत्वं सम्बन्धो ज्ञानस्य, ज्ञानाभावइति प्रतीतौ तु प्रतियोगित्वं सम्बन्ध इति सम्बन्धभेदकृतो भेदस्तयोरस्त्येव, तथापि विषयत्वप्रतियोगित्वयोस्सम्बन्धयोर्ज्ञानरूपत्वेनैवाभ्युपगमात् ज्ञानस्य नैकरूपत्वान्नात्रायं विशेष इत्याशयेनाह—

एवं ज्ञातोऽभावः ज्ञानाभाव इति प्रत्यययोरविशेषप्रसङ्गोऽपि बोध्य इति गुणानन्दः। नन्वित एव बाधकात् तत्राभावादिरेव सम्बन्धो, न तज्ज्ञानमुभयं वा, अत्र तु ज्ञानमेव, विनिगमकं च द्वितीयादौ व्यवहारोपपादनमेवेति चेत्, तथापि यदि विषयता तत्त्वं वा नातिरिच्यते, तदा कथं तद्विषयकेच्छादिसामान्ये तद्विषयकज्ञानानां कारणत्वम्, अननुगतत्वात् ॥

एवमिति, तत्र ज्ञानाभाव इति प्रतीतौ। अत्र ज्ञातो घटो ज्ञातोऽभाव इति प्रतीतौ। विनिगमकमिति ज्ञानाऽभावस्थलेऽभावं जानातीति प्रतीतिर्न भवति, अभावज्ञानस्थले तादृशप्रतीतिर्भवतीति ज्ञानस्वरूपमेव सम्बन्धो द्वितीयाविभक्त्यर्थोऽभ्युपगमार्ह इत्यर्थः। यदि विषयता विषयतात्वं वा नातिरिक्तं स्यात् तदा कथं विषयतासम्बन्धेनेच्छां प्रति विषयतासम्बन्धेन ज्ञानस्य कारणत्वं स्यात्, यदा घटादीच्छा तदानीं घटादिविषयत्वं घटादीच्छारूपं यदा च घटादिज्ञानं तदा तु तत्तदात्मकमित्येवं विषयतायाः सम्बन्धभूताया इच्छाज्ञानभेदेन भिन्नरूपत्वात्, तदनुगमकस्य च विषयतात्वस्यानभ्युपगमादित्याह—तथापि यदीति, सम्बन्धसामान्येनेच्छां प्रति सम्बन्धसामान्येन ज्ञानस्य कारणत्वमिति चेत्, तर्हि घटज्ञानात्पटेच्छापि स्यात्, कालिकादिसम्बन्धस्य घटज्ञानस्य पटेन सह सद्भावादित्याह—

सम्बन्धत्वेन चानुगमेऽतद्विषयके तत्सम्बन्धान्तरशालिनि ज्ञानेऽतिप्रसङ्गः। न चाननुगततत्तद्विषयताव्यक्तीनामेव संसर्गतया प्रवेशेन निस्तारः, व्यवस्थानापत्तेः, एवं हि सत्यपि परामर्शे तत्सम्बन्धेन न हेतुत्वमित्युक्त्वैव प्रतिवादी निर्वृतः स्यात्, अत एव सम्बन्धतावच्छेदकस्य संयोगत्वादेरप्यभावभाने संसर्गमर्या-

तया भानम्, अत एव सर्वसम्बन्धेन भूतलादौ द्रव्याभावसत्त्वेऽपि न सम्बन्धसामान्येन तदभावो भूतला-दाविति सिद्धान्तः॥ सम्बन्धसामान्यावच्छिन्नप्रतियोगितया तत्र तदभावे मानाभावात्,

सम्बन्धत्वेन चानुगम इति, व्यवस्थाऽनापत्तेरिति यथा विशेषत एव तत्तद्दण्डत्वेन कारणत्वे कस्यचिद्दण्डस्याकार-णत्वं तथा तत्तद्विषयताव्यक्त्यात्मकसम्बन्धेन ज्ञानस्य कारणत्वे कस्यचिज्ज्ञानस्याऽकारणत्वं स्यादित्यर्थः। व्यवस्थाऽनापत्तिमेव प्रकारान्तरेणाह–एवं हि सत्यपीति, यदि च परामर्शस्यानुगतेन सम्बन्धेन कारणत्वं तदोभयसंप्रतिपन्नानुमितिस्थले यादृशेनानुगतेन सम्बन्धेन कारणत्वं तादृशसम्बन्धस्य प्रकृतेऽपि सत्त्वेन तादृशसम्बन्धेन न कारणत्वमिति वक्तुमशक्यं प्रतिवादिना, यदि च तत्तत्स-म्बन्धेन कारणत्वं तदा प्रकृतसम्बन्धविशेषेण कारणत्वस्यान्यत्रादृष्टचरत्वेन विवादस्थलेऽपि न तेन सम्बन्धेन कारणत्वमिति नोक्त-परामर्शात्प्रकृतानुमितिरिति तर्कं शक्यं प्रतिवादिना, तथा चैतावन्मात्रेणापि विजयोऽधिगतस्यादिति भावः। अनुगतस्य सम्बन्धस्यानु-गतप्रतीतिनियामकत्वादेव संयोगेन घटत्वेन घटो नास्तीतिप्रतीतावभावस्य भाने तत्प्रतियोगितावच्छेदकसंसर्गतावच्छेदकतया संयो-गत्वस्यापि भानं निर्वहतीत्याह–अत एवेति, विषयतायास्स्वरूपात्मकतां निरस्यातिरिक्ततामुपसंहरति—

तस्मादतिरिक्तैव विषयता, तद्विशेषास्तु प्रकारत्वादयः। आदिना संसर्गत्वविशेष्यत्वनिर्विकल्पकीयवि-षयतापरिग्रहः। निर्विकल्पकीयविषयता विशेष्यताविशेष एवेत्यपि केचित्। एतत्सर्वविषयतासाधारणं तु विषयतात्वं धर्मान्तरं सम्बन्धतावच्छेदकत्वेनोपेयम्। एतेन प्रतियोगित्वाधिकरणत्वादयोऽपि व्याख्याताः। समपदार्थप्रवादस्तु वैशेषिकप्रसिद्धिमनुरुध्यैव। प्रवाद इत्यनेन तत्राप्रामाणिकत्वादनादरसूचा दीधितिकृत

इति गुणानन्दः। अथैवं सम्बन्धानन्त्येऽनवस्था स्यात्, स्यादेव, यदि स्वरूपसम्बन्धेन क्वचिदपि न प्रतीकारः, अन्यथानुपपत्तेर्दुर्वारत्वात्। सा च ज्ञाननिष्ठा ज्ञानस्य नियतकार्यजनकतावच्छेदकतया स्वीकरणीया।

तस्मादतिरिक्तैवेति, निर्विकल्पकीयविषयतेति पृथगुपन्यासेन निर्विकल्पकीयविषयता न प्रकारत्वविशेष्यत्वसांसर्गिकविषयत्वरूपा किन्तु तद्भिन्नलक्षणैवेत्युपदर्शितम्। विशेष्यताविशेष एवेति, विशेषश्चात्र प्रकारत्वानिरूपितत्वम्, तेन सविकल्पकज्ञाननिरूपितविशेष्यतातो भिन्ना सा, संसर्गात्मिकाया विषयताया अतिरिक्तत्वे तत्सम्बन्धपरंपरायामनवस्था स्यात् सा च यदि क्वचित्स्वरूपेण न विश्रामस्तदा प्रामाणिक्येव यतः प्रथमं विषयतासम्बन्धस्यान्यथानुपपत्त्यैव स्वीकारोऽन्यथानुपपत्तिश्चाग्रेऽप्यविशिष्टेत्युत्तरयति—स्यादेव यदीति, सा विषयता। नन्वेवं घटादावर्थे विषयत्वव्यवहारो न स्यादित्यत आह—

तत्प्रतियोगितया चार्थे विषयताव्यवहारः। परे तु विषयत्वविषयित्वे भिन्ने एवार्थज्ञानयोः, प्रतियोगित्वानुयोगित्वे इव भावाभावयोरित्याहुः। न च प्रतियोगितासम्बन्धेन विषयित्वैव कारणतावच्छेदिका किं न स्यादिति वाच्यम्, कारणे साक्षात् प्रकारीभूतावच्छेदकस्य वृत्तिनियामकसम्बन्धेनैव तद्बोधोपगमात्। वस्तुतस्त्वेकविषयताप्रत्यासत्त्या कार्यकारणभावाद्विषयताया विषयवृत्तित्वमुपेयम्, विषयिताप्रतियोगित्वस्य तत्त्वे गौरवमित्यत्रैवैतन्मतनिर्भरः।

तत्प्रतियोगितयेति तन्निरूपकतयेत्यर्थः। घटादौ निरूपकतासम्बन्धेन विषयतायास्सत्त्वादिति भावः। अस्मिन्मते विषयित्वं नाभ्युपगम्यत इति बोध्यम्। परे त्विति, वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वपक्षे घटे पटज्ञानविषयत्वं नास्ती-

तस्य पूर्वकत्वं नोपपत्तिः, विषयताया निरूपकत्वसम्बन्धस्य वृत्त्यनियामकत्वेन प्रतियोगितानवच्छेदकत्वात्, अस्मिन् पक्षे तु विषयता-स्वरूपसम्बन्धः, स च वृत्तिनियामक एवेति भवत्येवोपपादनमिति तत्त्वम्। विषयनिष्ठस्य विषयित्वस्य प्रतियोगितासम्बन्धेन ज्ञाने सत्त्वं स्वीकृत्य तत्र ज्ञाननिष्ठकारणताया अवच्छेदकत्वं न संभवति ज्ञाननिष्ठकारणताया यावच्छेदकता तदवच्छेदकसम्बन्धत्वस्य वृत्ति-नियामकसम्बन्धस्य एव कल्पनात् प्रतियोगित्वसम्बन्धस्य च वृत्त्यनियामकत्वात्, अतो विषयितायास्स्वरूपेण ज्ञाननिष्ठत्वमेवेत्युत्तर-यति–कारणे साक्षादिति। कार्यकारणभावात् विषयतासम्बन्धेनेच्छां प्रति विषयतासम्बन्धेन ज्ञानस्य कारणत्वमित्येवं कार्यका-रणभावात्। तस्यैव कार्यकारणभावावच्छेदकसम्बन्धत्वे। यज्ज्ञानं यत्र व्यवहारमाजनयति तज्ज्ञानं तद्विषयकमित्येवास्ति न तु काचि-दतिरिक्ता नाम विषयतेति केषाञ्चिन्मतमपाकरोति—

ननु तद्गोचरव्यवहारजनकत्वमेव तद्विषयत्वमिति, तत्रास्तां व्यवहारस्य तद्गोचरत्वविचारः, किञ्चिदेव ज्ञानं कश्चिदेव व्यवहारमाधत्ते नान्यथेत्यत्र नियामकं वक्तव्यम्, जनकत्वं च न फलोपधानम्, सर्वत्र तदभा-वात, नापि योग्यता. अवच्छेदकानिर्वचनात्। इत्थं न स्वभावेति स्वीयभावार्थकं, प्रकाशस्येतीच्छादिनिरासा-र्थमिति वदन्ति। वस्तुत इच्छादयोऽपि सविषयका एव। तेषां जनकज्ञानोपाधिकं सविषयत्वमिति चेत्, जनक-ज्ञानविषयत्वं जनकज्ञानं वा न तद्विषयत्वम्, अतिप्रसङ्गात्।

यद्यपि, व्यवहारे हि तद्गोचरज्ञानोपाधिकमेव तद्गोचरत्वमिति ज्ञाने तद्गोचरत्वसिद्धौ तद्द्वारा व्यवहारे तत्सिद्धिस्तस्मिन् तत्सिद्धौ तत्र तत्सिद्धिरितीदं परस्पराश्रयत्वं सुस्फुटमेवेत्याशयेनाह–तत्रास्तामिति। विषयताया अतिरिक्तत्वे विषयतासम्बन्धेन

यत्र ज्ञानं तत्र विषयतया व्यवहार इति वक्तुं शक्यम्, अतिरिक्तविषयतायाः अभावे तु ज्ञाने-व्यवहारात्पूर्वं विषयकृतवैलक्षण्याभावेनानेन ज्ञानेनास्मिन्नेव व्यवहारो जनयितव्य इत्यत्र नियामकाभावेन तद्गोचरव्यवहारजनकत्वमपि दुर्घटमित्याशयेनाह—किञ्चिदेव ज्ञानमिति। अव्याप्तिदोषमप्याह—जनकत्वमिति, यद्विषयकं यज्ज्ञानमुपेक्षात्मकं जातं तस्मिन् व्यवहाराजनके तद्विषयत्वं न स्यादिति कार्याव्यवहितप्राक्क्षणवृत्तित्वरूपं कारणत्वं न विवक्षितुं शक्यमिति भावः॥ ननु यद्विषयकं यज्ज्ञानमुपेक्षात्मकं तदपि तद्विषयकव्यवहारजननयोग्यमस्त्येवेति योग्यत्वरूपजनकत्वपक्षाश्रयणे नाव्याप्तिरित्यपि निराकरोति—नापि योग्यतेति, निषेधे हेतुमाह—अवच्छेदकेति, तद्विषयकव्यवहारयोग्यत्वं हि तद्विषयकव्यवहारजनकतावच्छेदकरूपवत्त्वं, तच्चातिरिक्तविषयत्वानभ्युपगमे जनकतावच्छेदकस्य निर्वक्तुमशक्यत्वेन दुर्वचमिति भावः। स च प्रकाशस्य सतस्तदीयतामात्ररूपः स्वभावविशेष इत्यत्र विषयता ज्ञानात्मिकैवेति प्राचीनपक्षे स्वभावः स्वरूपमित्युक्तं, विषयता ज्ञानाद्भिन्नस्वभावरूपैवेत्यस्मिन्पक्षे स्वभावपदं कीदृशार्थकमित्याशङ्कायामाह—इत्थं चेति। स्वीयभावार्थकम् स्वगतधर्मार्थकम्। इच्छादौ स्वतस्सविषयकत्वनिवृत्तये प्रकाशस्येत्युक्तमित्याह—प्रकाशस्येति, इति वदन्तीति, अत्र नव्या इति पूर्वेणास्य सबन्धः। अत्र वदन्तीत्यनेन नव्यमतेऽस्वरसः सूचितः, तत्प्रकटयति—वस्तुत इति, शङ्कते तेषामिति इच्छादीनामित्यर्थः, समाधत्ते जनकेति, अतिप्रसङ्गमेव विवृणोति—

तत्त्वज्ञाने सामग्रीबलेनेच्छाद्यविषयस्याप्युदासीनपदार्थस्य विषयतया तस्यापि तद्विषयत्वप्रसङ्गादित्यतिप्रसङ्गादित्यस्यार्थः। नन्विच्छा यद्विषयकत्वेन व्यवह्रियते तत्कारणीभूतज्ञानविषयत्वं तदेव वेच्छाविषयत्वम्, अत एवोक्तमारोपे सतीत्यादि, न हि स्फटिके जपाकुसुमं लौहित्यमुपसङ्क्रामयतीति धर्मान्तरमप्युपसङ्क्राम-

यद्विति शक्यं वक्तुमिति चेत, न, तथापीश्वरेच्छादावगतेः।

तत्त्वज्ञाने सामग्रीबलेनेति, अत्र तत्त्वज्ञानमुपलक्षणम्, तेन यत्र समूहालम्बनज्ञानं विषयविशेष एवेष्टसाधनत्वप्रकारकं तत्रेच्छाया विषयविशेषविषयकत्ववद्रागोनपदार्थविषयकत्वमपि स्यादित्यतिप्रसङ्गोऽपि द्रष्टव्यः, उक्तदोषनिवारणाय शङ्कते—नन्वि-च्छेति। तत्कारणीभूतेति तद्विषयकत्वकारणीभूतेत्यर्थः, तदेव तत्कारणीभूतज्ञानमेव। आरोपे सतीत्यादीति, अत्रादिना "निमित्तानुसारं, ननु निमित्तपर्यालोचन" इति ग्राह्यम्। ईश्वरेच्छादावगतेरिति ईश्वरेच्छा हि सर्वविषयकत्वेन व्यवह्रियते न च तत्र सर्वविषयकत्वस्य कारणं तदीयज्ञानम्, तस्यां सर्वविषयकत्वस्य कारणाप्रयोज्यत्वादिति तस्यां सर्वविषयकत्वं न स्यादित्यर्थः। इदानीमपदार्थविषयकत्वनिवारणाय शङ्कते—

अथ यद्विषयकत्वेन ज्ञानस्येच्छोत्पादकत्वं तद्विषयकं ज्ञानमेवेच्छादीनां तद्विषयत्वमितीयमस्तु तत्र लीला-मतीयप्रकाशकारणता गतिरिति चेत्, नैवम्, तर्हि ईश्वरेच्छादेः सर्वविषयकत्वं न स्यात्, सर्वविषयकत्वेनेच्छा-द्युत्पादकत्वात्, यथा सुखादिविषयत्वेनास्मदादिज्ञानस्य सुखेच्छादिजनकत्वात् सुखादिविषयकं ज्ञानमेव नित्यानित्यसाधारणसुखेच्छादिविषयत्वम्, एवं द्व्यणुकाद्युपादानादिगोचरत्वेन तदिच्छाद्यजनकत्वादीश्वरेच्छादौ द्व्यणुकाद्युपादानत्वादिना विषयता न स्यादित्यर्थः।

अथ यद्विषयकत्वेनेति, उक्तमेव विवृणोति यथेति। तदिच्छाद्यजनकत्वादिति, द्व्यणुकोपादानादिगोचरेच्छाया अस्मदादीनामभावादीश्वरीयायाश्च तस्या नित्यत्वात् तज्जनकत्वं द्व्यणुकाद्युपादानादिगोचरत्वेनास्मदादिज्ञानस्य संभवतीति भावः।

नन्वीश्वरेच्छादौ द्व्यणुकाद्युपादानत्वादिना विषयत्वाभावापादनस्येष्टापादनरूपत्वात्प्रसङ्गाभासत्वमित्याशङ्क्य निषेधति—

न चैतदिष्टम्, यत्र येन रूपेणेच्छाकृती जन्ये न स्तस्तेन रूपेण तदुत्पादकतयैव भगवदिच्छाकृत्योरुपगमात्। अथ या इच्छाव्यक्तिर्यद्विषयत्वेन तज्ज्ञानजनिता तस्यास्तद्विषयत्वं तज्ज्ञानमेवेत्युक्तौ स्यादीश्वरेच्छाया निर्विषयत्वं, यत्सामान्यावलीढविषयकज्ञानत्वेनेच्छाजनकता तत्सामान्यावलीढविषयकं ज्ञानं सामान्यत इच्छाविषयतेत्युक्तौ न दोषः, ईश्वरेच्छाया निर्विकल्पकत्वस्येष्टत्वादिति चेत्, न, एवं सति सुखेच्छायां दुःखाभावादिविषयत्वापत्तेः।

नचैतदिष्टमिति, तेन रूपेणेति, तत्रेति शेषः, परमाणौ द्व्यणुकोपादानत्वादिनेत्यर्थः। अस्य च भगवदिच्छाकृत्योरित्यनेनान्वयः। तदुत्पादकतयैव द्व्यणुकोत्पादकतयैव। यद्धर्मावच्छिन्नविषयकज्ञानत्वेनेच्छाजनकत्वं तद्धर्मावच्छिन्नविषयकज्ञानं तद्धर्मावच्छिन्नविषयकेच्छाविषयत्वम्, एवं च घटत्वावच्छिन्नज्ञानत्वेन पटत्वावच्छिन्नज्ञानत्वेनेच्छाजनकतायाः क्लृप्तत्वेन तत्तद्धर्मावच्छिन्नविषयकं ज्ञानं तत्तद्धर्मावच्छिन्नविषयकेच्छाविषयत्वरूपमस्मदीयेच्छाविषये घटादौ सम्भवत्येव, अस्मदीयेच्छायास्सप्रकारकत्वात्, ईश्वरेच्छाया निष्प्रकारकत्वेनैवेष्टत्वात्तदसम्भवेपि प्रकारविशेष्यभावमनालम्ब्य स्वभावत एव निखिलवस्तुविषयत्वमिति द्व्यणुकोपादानत्वाद्यवच्छिन्नविषयकज्ञानत्वेनेच्छाजनकत्वाभावेपि द्व्यणुकोपादानपरमाणुस्वरूपविषयत्वं स्यादेवेत्याशयेनाह यत्सामान्येति॥ कुत्रचिद्भ्रमाद्यपगमेन सुखित्वप्रत्ययस्थले दुःखाभावस्यैव सुखत्वेन भ्रमात्मकं ज्ञानं सुखेच्छाजनकमिति सुखत्वावच्छिन्नदुःखाभावादिविषयताकज्ञानस्य सुखेच्छाविषयतारूपतयाऽन्यत्रापि तस्य तद्रूपत्वेन सुखत्वेन सुखविषयिण्यामपीच्छायां दुःखाभावविषयत्वापत्ति-

कल्पलतिकोपेतम्। विषय-विषयिभावस्वरूपनिरूपणम्

सिद्धान्तयति—न, एवं सतीति—

अथ यद्विषयकज्ञानस्य यद्विषयकसमानाधिकरणेच्छादिसमयाव्यवहितपूर्वसमये ताद्दशेच्छादिसमये वा नियमतः सत्त्वं तद्विषयकज्ञानमेव तथा, सुखञ्च महाप्रलयाव्यवहितपूर्वक्षण एवेश्वरेच्छाधिकरणसमयाव्यवहितः पूर्वसमयः। एतच्च भावाभावसाधारणं प्रागभावत्वमिति मते, नो चेत्, चरमभावसामग्रीक्षण एव तथा बोध्य इति चेन्, तर्हि पाकादीच्छाया इष्टसाधनत्वविषयतापि स्यात्, न स्याच्च कृतेः पाकादिविषयत्वं, तदव्यवहितपूर्वक्षणे पाकादिज्ञानान्तरे मानाभावात्, स्याच्चेच्छायाः कृत्युत्पादसमये निर्विषयत्वम्,

अथ यद्विषयकज्ञानस्येत्यादि, एवं नेश्वरेच्छायास्सर्वविषयकत्वं सम्भवति, यतस्सर्वविषयकमीश्वरज्ञानं सर्वविषयकस्वसमानाधिकरणेश्वरेच्छासमयप्रागभावाधिकरणसमयप्रागभावानधिकरणताद्दशसमयप्रागभावाधिकरणमहाप्रलयपूर्वक्षणे ताद्दशेच्छादिसमये वा नियमतो विद्यत इति तज्ज्ञानं तदिच्छाविषयत्वं भवति, न तु दुःखाभावज्ञानं सुखेच्छाविषयत्वं, सुखेच्छापूर्वसमये दुःखाभावज्ञानस्यावश्यंभावाभावात्, अस्मदादीच्छाया नेश्वरज्ञानं समानाधिकरणमतो न तदादाय सर्वविषयत्वापत्तिरितिभावः। यद्विषयकसमानाधिकरणेच्छादीति. आदिना कृतिपरिग्रहः, महाप्रलयस्य चरमध्वंसोत्पत्त्याधारसमयरूपस्य प्रागभावः चरमध्वंसप्रागभाव एव पर्यवस्यति. न च चरमध्वंसप्रतियोगिस्वरूपो भाव एव, तथा च भावे प्रागभावत्वं यद्यनुमतं स्यात्तदैतत्स्यादित्याह एतच्चेति, महाप्रलयाव्यवहितपूर्वक्षणस्येश्वरेच्छाधिकरणसमयाव्यवहितपूर्वसमयत्वकथनञ्चेत्यर्थः। अन्यथा तु महाप्रलयाव्यवहितपूर्वक्षणोत्पन्नो यो भावस्तदव्यवहितपूर्वक्षणस्यान्त्यसामग्रीक्षण एवेश्वरेच्छाधिकरणसमयाव्यवहितपूर्वसमयपदेन ग्राह्यः, ताद्दशभावप्रागभावस्याभाव-

विषय-विषयिभावस्वरूपनिरूपणम्

रूपस्य संभवेन तदटितस्याऽव्यवहितपूर्वत्वस्य तत्र संभवादित्याह नो चेदिति, पाकादीच्छाऽव्यवहितपूर्वसमये पाकादीच्छासमये च तत्कारणीभूतस्य पाको मदिष्टसाधनमितिज्ञानस्य सत्त्वेन तस्य पाकादीच्छाविषयतारूपतया पाकादीच्छायामिष्टसाधनत्वविषयत्वं स्यादित्युत्तरयति तर्हीति, पाको मदिष्टसाधनं कृतिसाध्यश्चेति ज्ञानानन्तरं चिकीर्षा तत उपादानात्मकतण्डुलादिप्रत्यक्षज्ञानं ततः पाकानुकूलकृतिः, तथा च पाककृतिसमयाव्यवहितपूर्वसमये पाककृतिसमये वा पाकज्ञानाभावेन कृतेः पाकाऽविषयत्वं स्यादित्याह न स्यादिति, न च पाककृतिसमयाव्यवहितपूर्वसमये पाकज्ञानमन्यदेवाभ्युपगन्तव्यमिति नोक्तदोष इति वाच्यम्, पूर्वस्मादेव पाको मे इष्टसाधनमिति ज्ञानाच्चिकीर्षाद्वारा पाककृत्युत्पत्तिसम्भवे सति तदतिरिक्तज्ञानान्तरे मानाभावादित्याह तदव्यवहितपूर्वक्षण इति, चिकीर्षानन्तरजातकृतिकाले पाकज्ञानाभावेन तदानीं पाकज्ञानरूपस्य चिकीर्षाविषयत्वस्याऽभावेन चिकीर्षायाः पाकाऽविषयत्वं च स्यादित्याह स्याच्चेच्छाया इति, एतच्च चिकीर्षाऽनन्तरमुपादानगोचराऽपरोक्षज्ञानमनभ्युपगम्योक्तम्, तस्याभ्युपगमे तु तदुत्पत्तिसमयएवोक्तदोषो बोध्यः, कृतौ पाकादिविषयत्वानुपपत्तेरिच्छायां स्थितिदशायां निर्विषयत्वापत्तेश्च परिहारप्रकारमाशङ्कते—

इच्छानन्तरं तादृशं ज्ञानं तदनन्तरं कृतिस्तदनन्तरं तादृशं ज्ञानान्तरमेव, किं वा युगपदयोग्यात्मगुणद्वयोत्पादमुपेत्येच्छाकृत्युपादसमये नियमतस्तादृशं ज्ञानान्तरं कल्पनीयमिति चेत्, तर्हि लाघवात् संस्कारे गत्यन्तराभावाच्च तेषां स्वतः सविषयकत्वमेव कल्पयितुं युक्तम्, बाधकाभावात्। एतेन किमस्माकमनुगतरूपविवेचनेन, किञ्चिज्ज्ञानं काचिद्वा तद्विषयता कस्यचिदिच्छादेर्विषयत्वमिति परास्तमिति कृतं पल्लवितेन।

इच्छानन्तरमिति, तादृशं पाकादिविषयम्, इच्छाकृत्योरन्तराले पाकादिविषयकज्ञानाभ्युपगमेनेच्छायाः स्थितिक्षणे कृते-

योग्यविभौ पाकादिविषयकत्वोत्पत्तिः, कृत्यनन्तरपाकादिविषयकज्ञानान्तराभ्युपगमेन च कृतेस्स्थितिक्षणे पाकादिविषयकत्वोपप-त्तिरिति ध्येयम्, योग्यविभुविशेषगुणानां युगपदुत्पादानभ्युपगमेऽप्य योग्यविभुविशेषगुणानां तदुपगमेन लाघवादाह—किं चेति, इच्छाकृत्योः पाकादिविषयकज्ञानस्य नाश्योत्पत्तिमाश्रित्येदमुपपादनम्, इच्छायास्स्वगतविषयकत्वकल्पने लाघवम्, एवं संस्कारे काला-न्तरगतिरिति न प्रतिकूलं संस्कारगतसविषयकं ज्ञानमिति तत्र अतः सविषयकत्वं विना गत्यन्तरं नास्तीति समाधत्ते—तद्वीति। तेषाम् इच्छादीनाम्, एतेनेति स्वत इच्छायास्सविषयकत्वकल्पने लाघवेन संस्कारे गत्यन्तराभावेन सविषयकत्वसिद्धाभ्युपगम-संगत्येन नेत्यर्थः।

अथ किमस्य फलमिति प्रश्नप्रसङ्गेऽपि बहिस्तद्गोचरव्यवहारप्रवृत्तिरन्तरपि तेन ज्ञाननिरूपणमित्युत्तरम्, कृतौ तदर्थोक्तिरनुयोगेऽपि सामग्रीशक्तिरेव, कार्यकारणवत्, अन्यथा तत्राप्युपकारान्तरापेक्षायामनवस्था, तदनपेक्षायां साधारण्यं वा केन वार्यते, तेन तदेव क्रियतेऽनेनाप्येतदेव विषयीक्रियत इति विवेचनीयम्, विषयीक्रियत इति कोऽर्थः, क्रियत इत्यपि कोऽर्थ इति विचारणीयमित्यर्थः॥ अत्र कार्योत्पादनमेव करणं, तदीय-सर्वोत्पत्तिरेव विषयीकरणमिति विवेचनम्, उपकारस्तु यथाऽत्र विज्ञानस्वरूपातिरिक्तो नास्ति तथा तत्रापि कार्यस्वरूपातिरिक्तो नास्तीति प्रतिसन्धेयमिति।

अथ किमस्येति। अस्य विषयविषयिभावस्य, घटज्ञानयोर्ग्राह्यग्राहकभावे किं फलमित्यत्राह—बहिरिति। यद्विषयकज्ञानं तेन तद्विषयकव्यवहारो जन्यत इति बहिः फलम्, अन्तरपि आत्मन्यपि, तेन विषयविषयिभावेन, ज्ञाननिरूपणम् ज्ञानविशेष-

प्रतिपत्तिः, विषयनिरूप्यं हि ज्ञानं निरूपकीभूतप्रतिनियतविषयसम्बन्धमन्तरा विषयसङ्घटितस्वरूपतयोपदर्शयितुं ज्ञातुञ्चाशक्यमिति भवति ज्ञानज्ञानं चान्तःफलं विषयविषयिभावस्येत्यर्थः, कथं ग्राह्यग्राहकयोः प्रतिनियतोऽयं स्वभाव इत्यनुयोगे यथाऽस्येदं कार्यमस्येदङ्कारणमित्यत्र तथा कार्यकारणभाव एव नियामकस्तथाऽत्रापि स्वसामग्र्या नियतविषयकतयैव ज्ञानं समुत्पद्यत इति स्वसामग्रीशक्तिरेव नियामिकेत्येवोत्तरमित्याशयेनाह कुतोयमिति, विवेचनीयमित्यस्यार्थमाह—विषयीक्रियत इतीति, तदीयतयेति ग्राह्यसम्बन्धितयेत्यर्थः। कार्यकारणभावाभ्युपगमे तद्दृष्टान्तेन विषयविषयिभावोप्यभ्युपगमनीयस्स्यादिति सोपि नाभ्युपगन्तव्य इति पराकूतमाशङ्क्य प्रतिक्षिपति—

अत एव कार्यकारणभावोऽप्युपेक्षितव्य इति महत् साहसं, तथा सति, स्यादेव, न स्यादेव वेत्यापद्येत, तथा च प्रकाशतमसोरन्यतरस्य कौटस्थ्यप्रसङ्गः, स्यादेवेत्येवकारेण प्रागसत्त्वस्य, न स्यादेवेत्येवकारेण च कादाचित्कस्य सत्त्वस्यासत्त्वस्य च व्यवच्छेदः। आद्येऽनादित्वमन्त्ये चालीकत्वं, तथा च प्रकाशस्य कारणानपेक्षित्वे यद्यनादित्वं तदानादेर्भावस्याविनाशित्वात् प्रकाशस्य कौटस्थ्यं स्यात्, यदि चालीकत्वं तदा तमसो ज्ञानाभावस्य कौटस्थ्यं स्यादिति क्व क्षणिकज्ञानवाद इत्यर्थः। सांवृतोऽस्तु कार्यकारणभाव इति चेत्, विषयविषयिभावोऽप्येवमेवास्तु, यदि विषयकार्ययोर्बलवती बाधा, तदा सांवृतः, नोचेदेवमिति द्वयी गतिः॥

अत एवेति, उपकारान्तरापेक्षाऽनपेक्षयोरनवस्थासाधारणप्रसङ्गादेवेत्यर्थः। अस्य च महत्साहसमित्यनेनान्वयः। यद्वा अत एव विषयविषयिभावनिरासयुक्तिबलादेव, अस्य च कार्यकारणभावोऽप्युपेक्षितव्य इत्यनेनान्वयः। तथा सतीति, कार्यकारण-

सामग्रीनिरपेक्षत्वेन यदि ज्ञानं कारणानपेक्षं स्यादाकाशादिवन्नित्यं सत्स्यात्, खपुष्पवद्वा नित्यमसत्स्यात्, नतु कादाचित्कं स्यात्, तदुक्तं "नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्। अपेक्षातो हि भावानां कादाचित्कत्वसंभवः,॥१॥"इतीति भावः। आद्ये सा-क्षेतिपक्षे। अन्त्ये न स्यादेवेति पक्षे, प्रकाशतमसोरन्यतरस्य कौटस्थ्यप्रसङ्ग इत्युक्तिं सङ्क्रमयति—तथाचेति। तदा सांप्रत इति, तथा च नित्यविज्ञानवादिनो वेदान्तिन एव जय इति भावः। नोचेदिति, बाधेत्यस्यानुवृत्तिः, तदेति शेषः। एवमिति पारमार्थिक इत्यर्थः। तथा च नैयायिकस्यैव जय इति भावः। उपसंहरन्नाह—

अतश्च तत्त्वं, न तावदुभयनिष्ठं लक्षणं, सतोऽसतो वा स्थिरस्यापि स्फुरणात्, सहोत्पन्नयोर्ज्ञानज्ञेययोर्विषयविषयित्वे इत्यस्य नियन्तुमशक्यत्वात्, न च नित्ये ज्ञाने विषयत्वोपगमे सदा व्यवहारापत्त्या पारमार्थिकलक्षणिकयाप्यनिष्टमेव तत्, ज्ञानस्य तु तन्निरूपकतामात्रमित्यपि युक्तम्।

तदत्र तत्त्वमिति, उभयनिष्ठमिति, सहोत्पन्नज्ञानज्ञेयनिष्ठमित्यर्थः, अत एव न पूर्वग्रन्थेन सह विरोधः, तत्र हि असमानकालीनोत्पत्तिकं पारमार्थिकं बाल्यमादायोभयनिष्ठत्वाभिधानात्, लक्षणं ग्राह्यलक्षणम्, निषेधे हेतुमाह सत इति। यत्र स्थिरस्य विषयस्याभावेऽपि तत्क्षणिकज्ञानोत्पत्तिस्तत्र तदानीमाश्रयस्य विषयस्याभावाद् ग्राह्यलक्षणस्योभयनिष्ठत्वं न सम्भवति, यत्र स्थिरस्य विषयस्य सत्त्वं तत्रापि ज्ञानेन सहोत्पत्त्यभावात् सहोत्पन्नविषयसाश्रयस्याऽभावादुभयनिष्ठत्वं न सम्भवतीति भावः, क्षणिकस्यापि तत्र स्फुरणं तत्रापि समानकालीनयोरर्थज्ञानयोर्न विषयविषयिभावसम्भवः सहोत्पन्नत्वाऽविशेषेऽर्थो विषयो ज्ञानं विषयीति नियन्तुमशक्यत्वादित्याह—सहोत्पन्नयोरिति,

सत्कार्यवादव्यावृत्तेः साङ्ख्यप्रक्रियाविध्वंसात्, न खलु पूर्वापूर्वतिरोभावाविर्भावावन्तरेण विचारस्याप्यवसरः, नाप्यलीकग्राह्यतया (तायां) क्षणिकज्ञाननिष्ठं, विषयस्य निर्विशेषतया ज्ञानस्य निराकारतया चाकारकृतस्य विशेषस्यासम्भवेननीलपीतादिज्ञानानां विशेषानुभवानुपपत्तेः। अन्यत्राप्यसिद्धेरारोपयितुमशक्यत्वात्, असन्त एव विशेषाश्चकासतीति चेत्, न, असन्त इत्यतत्काला अतद्देशा वा, अकिञ्चिद्रूपा इति वा, नियतव्यावृत्तिरूपा इति वा।

सत्कार्यवादव्यावृत्तेरिति, नित्यज्ञाने विषयत्वोपगमोक्तिस्साङ्ख्यमताश्रयणेनैव, साङ्ख्यमतं च सत्कार्यासंभवेनासंभवद्युक्तिकमित्यनित्यज्ञानस्यैव स्वीकरणीयतया विषयत्वस्य ज्ञाननिष्ठत्वाभ्युपगमे दोषाभावादिति भावः। सांख्यमतस्यैवासंभवे युक्तिमाह न खल्विति। सांख्यमते ध्वंसप्रागभावकाले तिरोभावस्स्वीक्रियते, उत्पादकाले आविर्भावस्स्वीक्रियते, आविर्भावश्च यदि पूर्वमपि सन्, तदा कारकव्यापारवैयर्थ्यम्, अथासन्, तदाऽसत उत्पाद आयात इति सत्कार्यवादव्यावृत्तिरिति भावः। अलीकविषयस्य तुच्छत्वेन निर्विशेषत्वाद् ज्ञाने आकाराधानायोगात् ज्ञानस्य च स्वतो निराकारतया स्वगताकारकृतविशेषस्याभावात् नीलज्ञानपीतज्ञानादीनां विषयकृतं यद्वैलक्षण्यमनुभूयते तन्न स्यादित्याह नाप्यलीकेति। आरोपो ह्यन्यत्रप्रमितस्यैव स्यात्, न ह्यप्रमितमारोप्यत इति वचनात्, न चाकारोऽन्यत्रापि प्रमितः, तस्यान्यगतत्वाभावादिति न तदारोप इत्याशयेनाह अन्यत्रेति—

प्रथमे कालान्तरदेशान्तरयोः सत्त्वप्रसङ्गो, विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वात्, अन्यथा विशेषणोपादानवैयर्थ्यात्। द्वितीये त्वविशेषता। तृतीयेऽनीलव्यावृत्तेर्नीलस्यालीकत्वे अनीलानां पारमार्थिकत्वं, व्यावृत्ति-



विषयविषयिभावस्वरूपनिरूपणम्

प्रतियोगिनामनीलानामलीकत्वे व्यावृत्तेर्नीलस्य पारमार्थिकत्वं, विधिनिषेधयोरेकतरापारमार्थिकत्वेऽन्यतरपा-
रमार्थिकत्वस्यावश्यंभावाद् इत्यतो न द्वयोरप्यलीकत्वेनाविशेषः । अथ यथा भवतां सत्त्वेनाविशिष्टानामपि नीलपी-
तादीनां मिथोविशेषः, तथास्माकमसत्त्वेनाविशिष्टानामपि स्यादिति चेत्, केन रूपेण, नीलपीतादिनेति चेत्,
तत् किं ततोऽधिकम्, अनलीकं तर्हि स्यात्, अनधिकं चेत्, कुतस्तेनापीति।

प्रकृते अनन्तरोक्ता विशेषप्रकारानीलत्वे. अकिञ्चिद्रूपत्वे विशेषाणामलीकत्वेन न विशेषरूपतेति कुतस्तत्कृतो ज्ञानानां विशेषस्यादित्याशयेनाह द्वितीय इति, द्वयोरपि अनीलत्वव्यावृत्त्योरपि, केन रूपेणेति असत्त्वेनाविशिष्टानां तेषां केन रूपेण विशेष इत्यर्थः । तत नीलपीतादिकं, ततोऽधिकम् अनीलव्यावृत्त्यपीतव्यावृत्त्यादितो भिन्नम्। अनलीकम्, पारमार्थिकम्, तर्ह्यनुगतं, तथा च विज्ञानवादस्तद्वाद इति भावः । तेनापीति मिथोविशेष इत्यनुवर्तते। स्वमते विशेषमुपपादयन्नाह—

अस्माकं तु नीलपीतादीनां परमार्थसता नीलपीतत्वादिनैव विशेष इति न दोषावकाशः। वासनाविशेषात् स्फुरन्तीति चेत्, स्फुरन्तु कः कारणे विप्रतिपद्यते, ते तु नीलादयो यद्यकिञ्चिद्रूपाः, कथं विशेषाः, तदितररूपेणाकिञ्चिद्रूपत्वे तेन रूपेण किञ्चिद्रूपा एवेति भ्रमः। विचारासहत्वमात्रमलीकत्वमिति चेत्, विचारासहत्वं नीलादीनां किञ्चिद्रूपाणां विरुणद्धि तथा, आद्ये अकिञ्चिद्रूपाणां नीलादीनां न विशेषतेति कुतस्तत्कृतो ज्ञानानां विशेषः। द्वितीये तु नीलादीनां किञ्चिद्रूपतासाधनाय प्रवृत्तस्य विचारस्य तथासामर्थ्याद् दुर्विचारत्वप्रसङ्गः, तेन नीलादीनां ज्ञानमात्रस्यानिर्वचनीयत्वात्, प्रविश वाऽनिर्वचनीयख्यातिकुक्षिं, तिष्ठ वा मतिकर्दममपहाय

न्यायानुसारेण नीलादीनां पारमार्थिकत्वे, तस्मात्—न ग्राह्यभेदमवधूय धियोऽस्ति वृत्ति—स्तद्बाधने बलिनि वेदनये जयश्रीः ॥ नो चेदनिन्द्यमिदमीदृशमेव विश्वं, तथ्यं तथागतमतस्य तु कोऽवकाशः ॥१॥ अयमर्थः—ग्राह्यस्य नीलादेः स्वात्मनो भेदमन्तरेण धियस्तस्मिन् न वृत्तिः सम्भवति, तस्य ग्राह्यस्य सत्त्वे यदि बाधको बलीयान् भवति, तदा वेदनये वेदानुसारिण्यनिर्वचनीयसिद्धान्तन्याये, जयश्रीर्भवति। अथ बाह्यपारमार्थिकत्वे यदि न बलवद्बाधकं, तदा नैयायिकन्यायानुसारेण तथ्यमेव विश्वं भवति, उभयथापि न ग्राह्याऽभेदावसर इत्यर्थः। ग्राह्याणां नीलधवलादीनां हि भेदात् प्रतिनियततद्विषयकाणां ज्ञानानां भेदसिद्धिः, ग्राह्यभेदबाधने च ज्ञातभेदसाधकस्य प्रतिनियतविषयस्याभावात्, क्षणिकानेकविज्ञानधाराकल्पने गौरवात्, एकत्वे च लाघवाद्बलवत्यौपनिषदमये जयश्रीः, एकमेवाद्वितीयं ब्रह्म, नित्यं विज्ञानमानन्दो ब्रह्म, सत्यं विज्ञानमनन्तं ब्रह्मेत्यादयो ह्युपनिषदो नित्यमद्वितीयं ज्ञानं प्रतिपादयन्तीति दीधितिकारीयं व्याख्यानम् ॥३६॥

अस्माकमिति, ननु नीलपीतादयो न्यायमतेऽप्यन्यरूपेणाकिञ्चिद्रूपा एवेति कथं विशेषका इत्यत आह—तदितररूपेणेति। स्वात्मनः धियस्सकाशात्, तस्मिन् नीलादौ ग्राह्ये, तात्पर्यार्थमाश्रित्य व्याख्यातुर्दीधितिकारस्य व्याख्यानमुपदर्शयति—ग्राह्याणामिति ॥३६॥ सप्तत्रिंशत्तमश्लोकमवतारयति

एतानि दूषणानि सङ्क्षिप्याह—

आद्ये ह्यसिद्धिसहितौ व्यभिचारबाधौ, स्यादप्रयोजकतया च हतिर्द्वितीये ॥

कल्पलतिकोपेतम्॥
विषयविषयिभावस्वरूपनिरूपणम्

शून्यत्वपर्यवसितिश्च भवेत्तृतीये, स्याद्वादमाश्रयति चेद्विजयेत वादी ॥३७॥

एतानीति। आद्ये ह्यसिद्धिसहितावित्यादिश्लोकस्यायं सङ्क्षेपार्थः। आद्ये हि ग्राह्यग्राहकयोरभेदे साध्ये हि, तत्र के दोषा इत्याशङ्कायामाह असिद्धिसहितौ व्यभिचारबाधाविति, ग्राह्यग्राहकयोरभिन्नजातीयत्वसाध्ये को दोष इत्याशङ्कायां तत्राऽप्रयोजकत्वदोषमाह, स्यादप्रयोजकतयेति, द्वितीये चाप्रयोजकतया हतिस्स्यादित्यन्वयः। ग्राह्यांशस्यालीकत्वे साध्येपि दोषमाह—शून्यत्वपर्यवसितिश्च भवेत्तृतीये इति, नन्वेवं तर्हि कस्याश्रयणे सति बौद्धो वादी प्रतिवादिनं नैयायिकं पराजयेतेत्याशङ्कयामाह स्याद्वादमाश्रयति चेत् विजयेत वादीति, वादी बौद्धः, चेत् यदि, स्याद्वादमाश्रयति स्याद्वादकर्मकाश्रयणक्रियानुकूलवर्तमानकालीनकृतिमान्, तदेति शेषः, विजयेत विजयफलवान् स्यात्, कं विजयेतेति कर्माकाङ्क्षायां प्रतिवादिनमितिशेषः, प्रतिवादिवृत्तिपराजयप्रयोज्यविजयफलवान् वादीत्यर्थः।

कथमाश्रयेतेति चेत्, यद्ययं हेतुप्रश्नः, तदा यदि भाग्यं भवेदित्युत्तरम्, अथ प्रयोजनप्रश्नः, तदा तद्यथाश्रुतमेव, तदर्थं च स्याद्वादाश्रयणमुपदिश्यते भवतः, सपक्षविरुद्धतदाश्रयणं ममायुक्तमिति चेत्, तर्हि शून्यतापर्यवसायिनस्तव जयाय वेदान्तिमताश्रयणं नैयायिकेन कथं कृतमिति किन्न विभावयसि। वेदप्रामाण्याभ्युपगन्तृत्वेन वेदान्ती नैयायिकसजातीय एवेति तस्य क्वचित् तन्मताश्रयणं न त्रपाकरमिति चेत्, स्याद्वादसिद्धान्तैकदेशर्जुसूत्रनयप्रामाण्याभ्युपगन्तृत्वेन त्वमपि किं न स्याद्वादिसजातीयो भवसि।

यथाश्रुतमेवेति विजयेत वादीत्यर्थः। तदर्थं प्रतिवादिपराजयार्थम्, समानः पक्षो यस्य स सपक्षः, समानत्वं चात्र बौद्ध-

भेदानां सौत्रान्तिकवैभाषिकयोगाचारमाध्यमिकानां चतुर्णामृजुसूत्रनयावलम्बित्वम्, तथा च तेषां मिथोमताश्रयणं युक्तम्, नतु स्वपक्षविरुद्धस्य स्याद्वादस्याश्रयणं युक्तमित्याह–सपक्षविरुद्धेति। तदाश्रयणं स्याद्वादाश्रयणम्। मम बौद्धस्य।

प्रकृतिविकृतिभूतयोर्नयदर्शनयोर्भेदेनर्जुसूत्रनयेऽपि तात्पर्यतो न मम प्रामाण्याभ्युपगम इति चेत्, तत्सन्देहेऽपि नैयायिकस्त्वद्विजयार्थं वेदान्तिदर्शनमिव त्वमपि तद्विजयार्थं स्याद्वादं श्रयितुं किमिति नालम्। तथापि वस्तुतः का नाम ममेष्टसिद्धिरिति चेत्, अंशतस्त्वन्मतस्थितिरिति गृहाण ॥३७॥

प्रकृतिविकृतिभूतयोरिति, सर्वनयात्मकं हि भगवद्दर्शनं, तत्तद्दर्शनं च तत्तन्नयप्रभवं, तदुक्तं सम्मतौ "जं काविलं दरिसणं एयं दव्वट्ठियस्स वत्तव्वं, सुद्धोअणतणअस्स उ परिसुद्धो पज्जववियप्पो ।१।" तथाच तत्तद्दर्शनमूलकारणत्वात्तत्तन्नयः प्रकृतिस्तत्प्रसादाविर्भूतत्वात् तत्तद्दर्शनं विकृतिरिति रुजुसूत्रनयस्य शौद्धोदनिदर्शनमूलकारणत्वात् प्रकृतित्वं, तत्प्रभवत्वाच्च शौद्धोदनिदर्शनस्य विकृतित्वमित्येवं प्रकृतिविकृतिभूतयोरित्यर्थः। तत्संदेहेऽपि स्याद्वादिसजातीयत्वसंदेहेपि। अंशतस्त्वन्मतस्थितिरिति अंशतःक्षणिकत्वसिद्ध्यन्तर्गततया क्षणिकत्वसिद्धेस्त्वन्मतसिद्धिरित्यर्थः ॥३७॥ तथाचैनमर्थं स्फुटीकर्त्तुं भगवतःस्तुतिः–

अष्टात्रिंशत्तमश्लोकमवतारयति–तथाचैनमर्थमित्ति, एनम्, स्याद्वादाश्रयणेनांशतो बौद्धमतसिद्धिलक्षणम्,

धीग्राह्ययोर्नहि भिदास्ति सहोपलम्भात्, प्रातिस्विकेन परिणामगुणेन भेदः ॥
इत्थं तथागतमतेऽपि हि सप्तभङ्गी, सङ्गीयते यदि तदा न भवद्विरोधः ॥३८॥

भेदाभेदशक्तीनामनन्तत्वाद्धीग्राह्ययोः परस्पराविषयकप्रतीत्यविषयत्वरूपो नियतसहोपलम्भविषय-

कल्पलतिकोपेतम्।

विषय-विषयिभावस्वरूपनिरूपणम्

त्वावच्छिन्नप्रतियोगिताकभेदाभावरूपो वाऽभेदः स्यादस्त्येव, प्रातिस्विकेन तु परिणामगुणेन साधनादिपारिणामिकभावेन घटत्वद्रव्यत्वमतिज्ञानत्वज्ञानत्वादिना भेद एव।

धीग्राह्ययोर्नहीति, अयंश्लोकस्सुस्पष्टो व्याख्यातो ग्रन्थकृतेति नेह प्रतन्यते, धीग्राह्ययोः परस्पराविषयकप्रतीत्यविषयत्वरूप इति, उक्ताभेदो घटादेर्ज्ञेयस्य घटादिविषयकज्ञानस्य चार्हन्मते एकस्या एव स्वसंवेदनप्रतीतेर्विषयत्वाज्ज्ञेयः, अन्यथा घटादेर्व्यवसायात्मकप्रतीतिविषयत्वाद् घटादिज्ञानस्य च घटाद्यनुव्यवसायात्मकप्रतीतिविषयत्वात् भिन्नभिन्नप्रतीतिविषयत्वेन स न स्यात्, यद्यपि न्यायमते घटज्ञानस्य घटाविषयकप्रतीत्यविषयत्वमस्ति घटज्ञानज्ञानस्य घटविषयकत्वनियमात्, तथापि घटस्य घटज्ञानाविषयकव्यवसायात्मकप्रतीतिविषयत्वेन घटज्ञानाविषयकप्रतीत्यविषयत्वं नास्तीति, न चात्र परस्परपदप्रवेशादननुगमः, वस्तुविशिष्टत्वस्यैव तत्त्वेन विवक्षितत्वात्, वैशिष्ट्यञ्च स्वाऽविषयकप्रतीत्यविषयत्वस्ववृत्तित्वोभयसम्बन्धेन, स्ववृत्तित्वञ्च स्वाविषयकप्रतीत्यविषयत्वसम्बन्धेनेति, ननूक्तरूपोऽभेदशब्दार्थ उपचारवृत्त्यैव, न तु मुख्यवृत्त्येत्याशङ्कायां मुख्यवृत्त्या तदर्थतामाह—नियतसहोपलम्भेति, नियतसहोपलम्भविषयत्वञ्च नियमेनैकवित्तिवेद्यत्वम् तदविषयकज्ञानाविषयत्वं वा बोध्यम्, ननु मूलस्थेन न हि भिदाऽस्ति सहोपलम्भादिति पदेन कथमुक्ताभेदो लभ्यते येन प्रथमभङ्गो लब्धस्स्यादिति चेत्, उच्यते, मूलस्थसहोपलम्भपदस्य लक्षणया सहोपलम्भविषयत्वमर्थः, पञ्चम्याश्च प्रतियोगित्वं, तत्र च प्रकृत्यर्थस्य स्वनिष्ठावच्छेदकतानिरूपितत्वसम्बन्धेनान्वयः, तस्य च व्युत्पत्तिवैचित्र्येण निरूपकत्वसम्बन्धेन भिदाशब्दार्थे भेदेऽन्वयः, भेदस्य च नञ्पदप्रतिपाद्येऽभावे स्वनिष्ठप्रतियोगिताकत्वसम्बन्धेनान्वय इति। द्वितीयभङ्गानयनाय द्वितीयचरणं व्याख्यानयन्नाह प्रातिस्विकेनेति, स्वस्वमात्रवर्त्तिनेत्यर्थः। साधनादिपारिणामिकभा-

वेनेति, घटत्वादिकं नित्यत्वे सत्यनेकसमवेतत्वलक्षणजातिरूपमतिरिक्तं नैयायिकमत इवार्हतमते नाभ्युपगतं, किन्तु घटाद्याकारसमानपरिणतिलक्षणं तिर्यक्सामान्यरूपमिति परिणामपरिणामिनोरभेदाद् घटादेरुत्पादे विनाशे च कथञ्चित्तदभिन्नतया तस्याप्युत्पादो विनाशश्चेति ग्राह्यस्य घटादेर्घटत्वादिस्सादिपारिणामिको भावः, घटादेरुत्पादे विनाशेपि च तत्र द्रव्यत्वं पुद्गलत्वं वा न कदाप्युत्पद्यते विनश्यते वा, ऊर्ध्वतासामान्यरूपतया तस्य सर्वदाऽवस्थितरूपत्वात्, न हि घटादिकं पूर्वोत्तरपर्यायपूर्वोत्तरकालावच्छेदेन कदाप्यद्रव्यरूपं भूतं भविष्यति वेति ग्राह्यस्य घटादेर्द्रव्यत्वादिरनादिपारिणामिको भावः, ग्राहकस्य ज्ञानस्य तु मतिज्ञानत्वश्रुतज्ञानत्वावधिज्ञानत्वमनःपर्यायज्ञानत्वात्मको भावः केवलज्ञानत्वात्मकोपि च भावस्सादिपारिणामिकः, आद्यस्य क्षायोपशमिकभावरूपतया मतिज्ञानावरणीयादिकर्मक्षयोपशमादिप्रयोज्योत्पादशालित्वात् केवलज्ञानोत्पादे च विनाशित्वात् तत्प्रयोज्यविनाशशालित्वात्, द्वितीयस्य च क्षायिकभावरूपतया जिनकालादिसामग्रीप्रयोज्यकर्मक्षयजातत्वात्, ज्ञानत्वाद्यात्मको भावश्चानादिपारिणामिकः, शश्वदवस्थितरूपत्वात्, यतो न हि ज्ञानमज्ञानं कदापि भवतीत्यभिप्रेत्याह—घटत्वद्रव्यत्वेति, अत्र ग्राह्यं घटादिकं ग्राहकाद्घटादिज्ञानाद्भिन्नं तद्विरुद्धघटत्वद्रव्यत्ववत्त्वात्, ग्राहकं घटादिज्ञानं च ग्राह्याद्घटादितो भिन्नं तद्विरुद्धमतिज्ञानत्वज्ञानत्ववत्त्वात्, यो यस्माद्विरुद्धधर्माश्रयः स तस्माद्भिन्नः यथा घटाद्भिन्नः पटः इति सामान्यव्याप्तिबलसहकृताभ्यामुक्तानुमानाभ्यां धीग्राह्ययोर्भेदसिद्धौ स्याद्भेद एवेति द्वितीयभङ्गोऽव्याहत एवेति भावः। तृतीयादिभङ्गानां प्रथमभङ्गद्वयमूलकत्वात् तत्सिद्धौ तन्नान्तरीयकतदुत्तरभङ्गानां सुतरां सिद्धिः, सुगतमतस्यापि (सर्वनयसमूहात्मक)सर्वदर्शनवादसमूहात्मकभगवद्दर्शनैकदेशरूपत्वात्तत्रापि सप्तभङ्गीप्रदर्शनं न दोषावहमित्याशयेनोत्तरार्द्धं विवृणोति-

एवं मूलभङ्गद्वयसिद्धौ भङ्गान्तरसौलभ्यात् तथागतमतेऽपि यदि सप्तभङ्गी सङ्गीयते, हे भगवँस्तदा भ-

कल्पलतिकोपेतम्। विषयविषयिभावस्वरूपनिरूपणम्

वतो विरोधो न स्यात्, सर्वमतव्यापकत्वात्त्वद्दर्शनस्य । अथ तथागतमतेऽपि हीति कुतः "धर्मे धर्मेऽन्य एवार्थो धर्मिणोऽनन्तधर्मण" इत्यादिनाऽऽर्हतमत एव प्रतिधर्मं शेषान्तभङ्गैः सहाङ्गाङ्गिभावेन सप्तभङ्गीप्रसिद्धेरिति चेत्, न, यत्र मूलभङ्गार्थो यन्नयविचाराधीनसिद्धिकस्तत्सप्तभङ्ग्यां तदीयत्वव्यवहारात्, "ऋजुसूत्राद्विशेषोऽस्य भावमात्राभिमानतः । सप्तभङ्ग्यर्पणाल्लिङ्गभेदादेवार्थभेदतः ॥" इत्युक्तक्रमेण शब्दनयस्यापि सप्तभङ्ग्यभ्युपगन्तृत्वाद्वा, वैभाषिकादिक्रमेण चतुर्विधस्यापि ताथागतमतस्यर्जुसूत्रादिनयचतुष्टयप्रकृतिकत्वस्य संमत्यादिसिद्धत्वात्, एकेन केनचित् अन्यतरभङ्गेन न्यूनतामात्रेणैव स्वसमयाद्विशेषस्य तस्य प्रकृतधर्मांशे महाभाष्यादौ प्रतिपादितत्वात् ॥ ३८ ॥

एवमिति, इत्थमित्यस्य विवरणम्, विरोधाभावे हेतुमाह—सर्वमतव्यापकत्वात्त्वद्दर्शनस्येति, अत्र भगवद्दर्शनं सर्वमतव्यापकं स्वेतरमतविषयताव्यापकविषयताकत्वादित्यनुमानं पर्यवस्यति, तत्र हेतौ यत्र स्वेतरमतविषयतावत्त्वं तत्र स्वविषयतावत्त्वमित्याकारा व्याप्तिः । ननु बौद्धमते यो घटस्सन् स नासन्, सत्त्वाऽसत्त्वयोस्तन्मते आपेक्षिकभावाभावात्, तदभावे च तदुत्थिताकाङ्क्षान्तराभावात्, विवक्षितघटादिधर्मिनिष्ठविशेष्यतानिरूपितविवक्षितस्वद्रव्यादिनिमित्तावच्छिन्नविवक्षितसत्त्वादिधर्मनिष्ठप्रकारतानिरूपकप्रतिपत्तिजनकाद्यभङ्गस्य तत्सापेक्षैर्विवक्षितपरद्रव्यादिनिमित्तावच्छिन्नविवक्षितासत्त्वादिधर्मान्तरनिष्ठप्रकारताकघटादिधर्मिनिष्ठविशेष्यताकप्रतिपत्तिजनकभङ्गैस्सहाङ्गाङ्गिभावाभावेन तन्निबन्धनैकवाक्यत्वसमालिङ्गितायाः सप्तभङ्ग्या अप्यभाव एवेति तन्मते तत्सङ्गिरणं न युक्तियुक्तमित्याशङ्कते—अथेति, इत्यादिनेति आदिपदात् "अङ्गित्वेऽन्यतमान्तस्य शेषान्तानां तदङ्गता ॥" इत्युत्तरार्द्धस्योप-

ग्रहः, धर्मे धर्मे इति प्रतिधर्ममित्यर्थः। अर्थ इति प्रयोजनादिरित्यर्थः,अनन्तधर्मवतो धर्मिणः प्रतिधर्मं सप्तभङ्गीकथनं भिन्नभिन्नधर्मविषयकप्रतिपत्त्यज्ञाननिवृत्त्यादिफलकमिति भावः। अन्यतमान्तस्येति सप्तविधधर्मान्यतमधर्मस्येत्यर्थः। अङ्गित्वे प्रधानत्वे, शेषान्तानाम्, तदङ्गप्रविष्टस्याच्छब्दसूचिततदितरधर्माणाम्। तदङ्गता तद्गुणभावः। प्रधानगुणभावश्च वक्तुर्विवक्षाधीन एव, एतेन ननु यदि विवक्षितेनैकेन केनचिद्भङ्गेन विवक्षितधर्मस्येव तदितरधर्माणामपि प्रतिपादने तेनैव शेषभङ्गजन्यतदितरधर्मप्रतिपत्तिफलसिद्धेश्शेषभङ्गनिरूपणं व्यर्थमेवेत्यारेकापि निरस्ता, विवक्षितभङ्गेन प्रधानतया तदितरधर्मप्रतिपत्त्यनुत्पादनादिति सङ्क्षेपार्थः। विस्तरार्थस्पृहयालुभिश्चाष्टसहस्री विलोकनीया। तदीयत्वव्यवहारादिति ग्राह्यग्राहकयोस्स्यादभेद एव, स्याद्भेद एव, स्यादभेदस्याद्भेदोभयः, स्यादवक्तव्य इत्यादिसप्तभङ्ग्यां स्यादभेद एवेत्याद्यभङ्गस्याभेदरूपो यः प्रधानार्थः स पूर्वोक्तनीत्या तथागतदृष्ट्या सिद्ध इत्यत उक्तसप्तभङ्ग्यां तदीयत्वव्यवहारात्तथागतमतेपि सप्तभङ्गीसङ्गिरणं नायुक्तमिति भावः। पक्षान्तरमाह-ऋजुसूत्राद्विशेषोऽस्येति, नयोपदेशीयैतत्पद्यस्यार्थस्तट्टीकात एवावसेयः। विस्तृतत्वान्नेह प्रतन्यते। ननु ऋजुसूत्राद्विशेषोऽस्येत्यादिपद्येन शब्दनयस्य सप्तभङ्ग्यभ्युपगन्तृत्वे प्रतिपादितेऽपि तथागतविशेषस्य योगाचारसंज्ञकस्य सप्तभङ्ग्यभ्युपगन्तृत्वं नायातम्, येन तस्यां तदीयत्वव्यवहारोपपादनं कृतं स्यात्, तस्य सांप्रतसमभिरूढैवम्भूतान्यतमस्वरूपशब्दनयप्रकृतिकत्वाभावादित्यत आह—वैभाषिकादिक्रमेणेति,सम्मत्यादीति अत्र "मूलनिम्मेण पज्जवनयस्य, उज्जुसुअवयणविच्छेओ॥ तस्य उ सद्दाइया साहपसाहा सुहुमभेआ ॥५॥" इति सम्मतिगाथाव्याख्यायां "अथवा सौत्रान्तिकवैभाषिकौ बाह्यार्थमाश्रितावृजुसूत्रशब्दौ यथाक्रमम्, वैभाषिकेण नित्यानित्यशब्दवाच्यस्य पुद्गलस्याभ्युपगमात्, शब्दनये तु प्रवेशस्तस्य। बाह्यार्थप्रतिक्षेपेण विज्ञानमात्रं समभिरूढो योगाचारः, एकानेकधर्मविकलतया



विषयविषयिभावस्वरूपनिरूपणम्

विज्ञानमात्रस्याप्यभाव इत्येवम्भूतो व्यवस्थितः एवम्भूतो माध्यमिक इति व्यवस्थितमेतत्, इतिवृत्तिरनुसन्धेया, यद्यप्यत्र योगाचारस्य समभिरूढनयाश्रितत्वमेवोक्तम्, तथापि शब्दनयस्य साम्प्रतस्य सप्तभङ्ग्यभ्युपगन्तृत्वे समभिरूढस्यापि तत्त्वमवसेयमिति नासङ्गतिः ॥ ३८ ॥ ननु स्याद्वादाश्रयणबलं बौद्धस्य नैयायिकपराजयार्थमिव नैयायिकस्यापि बौद्धपराजयार्थं साधारणमिति केन कस्य जयः पराजयश्च स्यादित्याशङ्कां निरस्यन्नेकोनचत्वारिंशत्तमश्लोकमवतारयति—

स्याद्वादस्य सर्वमतोपजीव्यत्वम्।

ननु स्याद्वादाश्रयणबलं परस्यापि साधारणमिति चेत्, न, विनीतापेक्षयाऽसाधारण्यव्यवस्थितेः, सर्वसाधारणमपि स्याद्वादमवलम्ब्य सर्वेणापि नयेनाभिनिविष्टनयान्तरखण्डनस्य शास्त्रार्थत्वात्, सर्वथा स्वविषयास्पर्शिनयालम्बनच्छलेन तु तन्न तथेत्यभिधित्सुराह—

स्याद्वाद एव तव सर्वमतोपजीव्यो, नान्योऽन्यशत्रुषु नयेषु नयान्तरस्य ॥
निष्ठा बलं कृतधिया क्वचनापि न स्व-व्याघातकं छलमुदीरयितुं च युक्तम् ॥३९॥

हे भगवन् सर्वमतोपजीव्यस्तव स्याद्वाद एव, स्वेतरमतविषयताव्यापकविषयताकत्वात्, अन्योऽन्यशत्रुषु अन्योऽन्यविप्रतिषिद्धार्थेषु, नयान्तरस्य निष्ठा तत्त्वादेव न बलं, स्वदूष्यदूषकस्यापि तस्य स्वदूषकत्वात्, तदाह—न च क्वचनापि कृतधिया स्वव्याघातकं छलमुदीरयितुं युक्तम्। एवं च न ग्राह्यभेदमवधूयेत्यादिना छलविधया वेदान्तिनयमवलम्ब्य यदुदयनेन शून्यताखण्डनं कृतं तत् स्वस्यानैयायिकतां व्यञ्जयतीत्युक्तं भवति॥३९॥

नन्वित्यादिना, विनीतापेक्षयेति, अर्हदुक्तसत्तत्त्वश्रवणमननादिप्रयुक्तमिथ्याभिनिवेशादिसमुन्मूलनसञ्जातसम्यग्श्रद्धा-

नपुरस्सरं त्रिकरणयोगेन सद्भावतस्सादरमर्हदाज्ञाशिरोधार्यतां योऽभ्युपगच्छति तदपेक्षयेत्यर्थः । स्याद्वादो हि स्वमतविषयताऽव्यापकविषयताक इति स्याद्वादविषयता न स्वमतविषयताविरुद्धेति येन केनापि नयेन स्याद्वादमवलम्ब्य यत्स्वेतराभिनिविष्टनयखण्डनं कृतं स्यात् तत् शास्त्रार्थरूपमेवेत्याशयवानाह—सर्वसाधारणमपीति। ननु नैयायिकेन स्वमतविषयताविरुद्धविषयताशालीतरनयाश्रयणच्छलेन बौद्धमतखण्डनं मुख्यं कर्त्तव्यं स्यात् बौद्धेन वोक्तनयाश्रयणच्छलेन नैयायिकमतखण्डनं मुख्यं कर्त्तव्यं स्यात्तदा किं तच्छास्त्रार्थात्मकं किंवा नेत्याशङ्कायामाह—सर्वथेति, न तथा न शास्त्रार्थः । स्याद्वाद एव तवेत्यादिश्लोकव्याख्यानं ग्रन्थकृतैव सुस्पष्टं कृतमिति तन्न क्रियत इति। सर्वमतोपजीव्यः सर्वमतनियन्ता, स्वेतरेति स्याद्वादरूपप्रयोजकेतरेत्यर्थः । तत्त्वादेव अन्योऽन्यविप्रतिपिद्धार्थत्वादेव, न ग्राह्यभेदमवधूयेत्यादिनेति आदिना "धियोऽस्ति वृत्तिस्तद्बाधने बलिनि वेदनये जयश्रीः। नोचेदनिन्द्यमिदमीदृशमेव तत्त्वम् ,तथ्यं तथागतमतस्य तु कोऽवकाशः इत्यस्य पद्यांशस्य परिग्रहः॥२९॥ चत्वारिंशत्तमश्लोकमवतारयति

अथ ग्राह्यभेदबाधके बलवति वेदान्तिन एव जयस्तदभावे च नैयायिकस्येति व्यवस्थितविकल्पान्नैयायिकस्य वेदान्तिमताश्रयणेन बौद्धमतदूषणं नायुक्तमिति चेत्, न, तथापि साधकबाधकप्रमाणाभावेन सन्दिग्धार्थनयाश्रयणेन नयस्येतरनयदूषकताया वक्तुमशक्यत्वादित्याह—

अथेति, साधकबाधकप्रमाणाभावेनेति स्वविषये प्रामाण्यनिश्चायकस्य स्वेतरनयविषये चाप्रामाण्यव्यवस्थापकस्य प्रमाणस्याभावेनेत्यर्थः । एतच्च नयस्य संदिग्धार्थत्वे हेतुः ।

कः कं समाश्रयतु कुत्र नयोऽन्यतर्कात्, प्रामाण्यसंशयदशामनुभूय भूयः ॥

कल्पलतिकोपेतम् । स्याद्वादस्य सर्वमतोपजीव्यत्वम् ।

नयस्य ताटस्थ्यमेव लक्षणम्

ताटस्थ्यमेव हि नयस्य निजं स्वरूपं, स्वार्थेष्वयोगविरहप्रतिपत्तिमात्रात् ॥४०॥

कः कं समाश्रयत्वित्यादिश्लोकस्य भूयोऽन्यतर्कात् प्रामाण्यसंशयदशामनुभूय अत्र स्थित इति शेषः, एवम्भूतः को नयः कम् आवृत्त्या अन्यतर्कात्प्रामाण्यसंशयदशामनुभूय स्थितं नयं कुत्र दूषणीये नये समाश्रयतु, अन्यनयतर्कप्रयोज्यप्रामाण्यसंशयकत्वात् अन्यनयविषयनिषेधेऽसमर्थो यदि नयस्तर्ह्यकिञ्चित्करत्वात् निस्स्वरूपस्स्यादित्यारेकायामाह–ताटस्थ्यमेवेति, हि यस्मात्, नयस्य ताटस्थ्यमेवौदासीन्यमेवेतरनयविषयाऽप्रतिक्षेपित्वमेव निजं स्वरूपं, तत्र हेतुमाह–स्वार्थेष्वित्यादि, इतरनयविषयगतासत्त्वविषयकप्रतिपत्त्यजनकत्वे सति स्वविषयो नासन्निति प्रतिपत्तिजनकत्वादिति सङ्क्षेपार्थः ।

को नयः कुत्र दूषणीये नये कं बलवन्तं नयं समाश्रयतु, कीदृशो भूयो वारं वारम्, अन्यतर्कान्नयान्तरविचारात् प्रामाण्यसंशयदशामनुभूय स्थितः, स्थितपदाध्याहारश्च समानकर्तृके क्त्वो विधानात् मत्प्रसूतिमनाराध्येत्यत्रेव द्रष्टव्यः । एवम् अन्यतर्कात्प्रामाण्यसंशयदशामनुभूय स्थितमित्यप्यावृत्त्या व्याख्येयम्, तथा च समाश्रयणकर्तृकर्मणोर्द्वयोरपि नययोर्नयान्तरविचारोपनीतप्रामाण्यसंशयग्रस्ततयाऽन्यनयार्थनिषेधेऽसमर्थत्वमिति भावः ।

कः कमित्यादिमूलश्लोकस्य विस्तरार्थं ग्रन्थकार एवाह–को नय इत्यादिना, स्थितपदमध्याहृत्य व्याख्यायां बीजमाह स्थितपदाध्याहारश्चेति, समानकर्तृकयोर्द्वयोः क्रिययोः पूर्वकालिकक्रियाया बोधकाद्धातोः "समानकर्तृकयोः पूर्वकाले" । ३ । ४ । २१ । इति पाणिनीयसूत्रेण क्त्वाप्रत्ययो विधीयते, तस्य च स्थाने "समासेऽनञ्पूर्वे क्त्वो ल्यप्" । ७ । १ । ३७ । इति पाणिनीयसूत्रेण

ल्यभवति, तेन चात्रानुभवक्रियाया यत्किञ्चित्क्रियासमानकर्तृकत्वस्य तत्पूर्वकालिकत्वस्य च सत्त्व एव तत्राप्रत्यय उपपद्यत इति स्थितपदाध्याहारः कर्त्तव्यः, तथाचानुभवक्रियायास्स्थितिक्रियासमानकर्तृकत्वात्तत्पूर्वकालिकत्वाच्च तद्बोधकभूधातोः क्त्वाप्रत्यय उपपद्यत इति भावः। तत्र दृष्टान्तमाह मत्प्रसूतिमनाराध्येत्यत्रेवेति "अवजानासि मां यस्मादतस्ते न भविष्यति। मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा" इति संपूर्णश्लोकः, अस्य च "यस्मान्मामवजानासि अतो मत्प्रसूतिमनाराध्य अत्र स्थितस्येत्यध्याहारः ते प्रजा न भविष्यतीति त्वां सा शशाप इत्यन्वयः, अनाराध्येत्यत्रानाराध्य किमितिप्रश्नस्य सावकाशत्वात् पूर्वक्रियोत्तरक्रियामपेक्षत इति स्थितस्येत्यध्याहारः,भुक्त्वा किमिति प्रश्ने गत इत्यध्याहार इव,अन्यतर्कात्प्रामाण्यसंशयदशामनुभूयेति किं समाश्रयणकर्तुरेव विशेषणं किं वा समाश्रयणकर्मणोपीत्याशङ्कायामाह—एवमिति, ननु सकृदुच्चरितश्शब्दस्सकृदेवार्थं गमयतीति न्यायात्कथमेकस्य विशेषणं यत्तदन्यस्य विशेषणं भवतीत्यत आह आवृत्त्येति, तथा चेति आवृत्त्या व्याख्यानेनेत्यर्थः। उत्तरार्द्धं विवृणोति—

नन्वेवमन्यव्यावृत्त्यप्रत्यायकत्वान्निःस्वरूपत्वं नयस्य प्राप्तं, तत्राह—नयस्य हि निजं स्वरूपं ताटस्थ्यमौदासीन्यमेव, कस्मात् स्वार्थेषु विचित्रेषु स्वविषयेषु, अयोगविरहस्यायोगव्यवच्छेदस्य, प्रतिपत्तिमात्रात्, तदिदमभिप्रेत्योक्तं भगवता सम्मतिकृता,'णिययवयणिज्जसच्चा सव्वणया परविआलणे मोहत्ति' एवं च नैयायिकादिनयाः स्वार्थायोगव्यवच्छेदप्रतिपादनमात्रेण तूष्णीन्तिष्ठन्तु, न तु नयान्तरखण्डनायापि प्रगल्भन्ताम्, तत्तर्कविचारप्रहारोपनिपाते केनाप्यन्तरा हस्तादानादित्युक्तं भवति ॥४०॥ अथ न्यायनयस्य वेदान्तनिरस्त-

कल्पलतिकोपेतम्। नयस्य नयान्तरं नबलम्।

समस्तविषयतया माभूत् स्वपक्षसिद्धिः, स्वपक्षं त्यक्त्वैव वेदान्तावलम्बनेन नैयायिको माध्यमिकं विजयता-मित्यत्राह—

नन्विति, एवम्, नयस्यान्यनयार्थनिषेधेऽसमर्थत्वे, अन्यव्यावृत्त्यप्रत्यायकत्वात् नयान्तरार्थनिषेधप्रतीत्यजनकत्वात्। अयोगव्यवच्छेदस्य अयोगोऽसत्त्वं तस्य व्यवच्छेदः निषेधः तस्य। प्रतिपत्तिमात्रादिति मात्रपदेन नयान्तरविषयासत्त्वप्रतीतिनिषेधः कृतः, तथाच नयस्य स्वविषयसत्त्वव्यवस्थापकत्वेपि परनयविषयाऽसत्त्वव्यवस्थापकत्वाभावान्नौदासीन्यक्षतिरिरितिभावः। णिययवयणिज्जेति, "णिययवयणिज्जसच्चा, सव्वनया परवियालणे मोहा। ते उण ण दिट्ठसमओ, विभयइ सच्चे व अलिए वा।१।" इति पूर्णेयं गाथा। अस्या गाथायाश्श्रीमदभयदेवसूरिभिरेवमर्थः कृतः। निजकवच्चनीये स्वांशे परिच्छेद्ये सत्यास्सम्यग्ज्ञानरूपास्सर्व एव नयास्सङ्ग्रहादयः, परविचालने परविषयोन्मूलने, मोहाः मुह्यन्तीति मोहाः, मिथ्याप्रत्ययाः, परविषयस्यापि सत्यत्वेनोन्मूलयितुमशक्यत्वात्, तदभावे स्वविषयस्याप्यव्यवस्थितेः, ततश्च परविषयस्याभावे स्वविषयस्याप्यसत्त्वात् तत्प्रत्ययस्य मिथ्यात्वमेव, तद्व्यतिरिक्तग्राहकप्रमाणस्य चाभावात्, तस्मात्तानेव नयान्, पुनश्शब्दस्यावधारणार्थत्वात्, नेति प्रतिषेधो विभजनक्रियायाः, दृष्टस्समयस्सिद्धान्तवाच्यमनेकान्तात्मकं वस्तुतत्त्वं येन पुंसा स तथा, स न विभजते सत्येतरतया, स्वेतरविषयमवधारयमाणोऽपि तथा तान् विभजते, अपि स्वितरनयविषयसत्यत्वापेक्षमेव स्वनयाभिप्रेतं विषयसत्यत्वमेवावधारयतीति यावत्, ग्राह्यसत्यासत्याभ्यां ग्राहकसत्यासत्ये इत्येवमभिधानं, तच्च दृष्टानेकान्ततत्त्वस्य विभजनं स्यादस्त्येव द्रव्यार्थत इत्येव रूपमिति, गुरुतत्त्वविनिश्चये उक्तगाथा "णिययवयणिज्जसच्चा, सव्वणया परिविआलणे मोहा। ते पुण अदिट्ठसमओ, विभयइ सच्चेव अलिए वा।१।" इत्येवंरूपा। तत्र

पूज्यपादश्रीयशोविजयवाचकपुङ्गवेनैवमर्थः कृतः णिययत्ति निजकवचनीये सत्या अर्थप्रतिपादकत्वात् सर्वे नया नैगमादयः, परस्य नयस्य विचारणे परेण नयेन विचालने–स्वार्थस्य परित्याजने वा 'मोघा' विफला असत्या इति यावत्, अन्यार्थाऽप्रतिपादकत्वादन्यनयप्रतिबन्धेन स्वार्थाऽप्रतिपादकत्वाद्वा, 'तान्' नयान् पुनः 'अदृष्टसमयः' अज्ञातसिद्धान्तपरमार्थः 'विभजते' एकान्तेन निश्चिनोति सत्यान् अलीकान् वा, स्यात्सत्यत्वासत्यत्वप्रतिपादने तु दृष्टसमयतैवेतिभावः ॥ ४० ॥ एकचत्वारिंशत्तमश्लोकावतरणमाह अथेति—

त्यक्तस्वपक्षविषयस्य तु का वितण्डा, पाण्डित्यडिण्डिमडमत्करणेऽन्यनिष्ठा ॥
नग्नस्य नग्नकरतोऽपरनग्नशीर्षे, प्रक्षेपणं हि रजसोऽनुहरेत्तदेतत् ॥४१॥

त्यक्तस्वपक्षविषयेस्येत्यादिश्लोकस्य स्वस्य पक्षः सिद्धान्तः स्वपक्षः, तस्य विषयो गोचरः स्वपक्षविषयः, त्यक्तस्स्वपक्षविषयो येन स तथा तस्य, प्रक्रमाद्नैयायिकस्येतिशेषः, अन्यनिष्ठा अन्यस्मिन् प्रक्रमात् वेदान्तिनये निष्ठा स्थितिर्यस्यास्सा, एवम्भूता वितण्डा स प्रतिपक्षस्थापनाहीनो वितण्डा' इति लक्षणलक्षिता कथा, पाण्डित्यडिण्डिमडमत्करणे पाण्डित्यमेव डिण्डिमो वाद्यविशेषः, तस्य डमत्करणे डमड्डमदितिध्वनिसञ्जनने पाण्डित्योद्घोषणे इति यावत्, केति काक्वा न कापीत्यर्थः, समर्थेति दृश्यम्, न केवलं पाण्डित्यडिण्डिमडमत्करणेऽसमर्था सा, किन्तूपहासकर्यपीत्यावेदयितुमाह नग्नस्येति, यत्र त्रयाणां नग्नानां धूलिक्रीडां कुर्वतामेको नग्न एकस्य नग्नस्य हस्ताद्धूलिमादायापरनग्नस्य मस्तकोपरि प्रक्षिपति तत्र नग्नकरतो नग्नहस्ताद्धूलिं गृहीत्वेतिशेषः, अपरनग्नशीर्षे तदन्यनग्नमस्तके नग्नस्य स्वयमपि नग्नस्य धूलिप्रक्षेपणकर्तुः रजसः प्रक्षेपणं धूलेर्वितरणम्, अनुहरेत्

कल्पलतिकोपेतम्। नयस्य नयान्तराश्रयणमयुक्तम्।

अनुसरेत्, तदेतत् वेदान्तिमतमुपादाय नैयायिकस्य माध्यमिकमतदूषणमिति सङ्क्षेपार्थः, उक्तश्लोकस्य निर्गलितमर्थमुपदर्शयन्नाह—

माध्यमिकवेदान्तिनौ तावद्वैतण्डिकावेव तयोः स्वपक्षाभावान्नैयायिकस्यापि स्वपक्षत्यागे तादृशत्वमेवेति तस्य माध्यमिकजये वेदान्तनयानुसरणमुपहासकरमित्यर्थः। न च क्षणिकानेकविज्ञानधाराकल्पने गौरवादेकत्वे च लाघवादौपनिषद एव नयो बलवानिति दीधितिकृदुक्तमपि युक्तम्, विज्ञाने तादात्म्यातिरिक्तानन्तक्षणसम्बन्धकल्पनापेक्षया अनन्तक्षणतादात्म्यकल्पन एव लाघवान्माध्यमिकमतस्यैवेत्थं बलवत्त्वसिद्धेः।

माध्यमिकवेदान्तिनाविति, तादृशत्वमेव वैतण्डिकत्वमेव, बौद्धमते विज्ञानस्यानित्यत्वेन प्रतिक्षणं विभिन्नरूपतया क्षणिकं विज्ञानसन्तानमनेकरूपं कल्पनीयं स्यात्, वेदान्तिमते विज्ञानस्य नित्यत्वेनैकरूपमेव तदिति बौद्धमतापेक्षया वेदान्तिमते सुस्पष्टमेव लाघवमिति दीधितिकारोक्तमपि नयुक्तमित्यत्र हेतुमाह विज्ञान इति, नित्यत्वं नानन्तक्षणतादात्म्यरूपं, तथा सत्येकत्वेनाभ्युपगतस्यापि विज्ञानस्यानन्तत्वापत्तिः, किन्त्वनन्तक्षणकालिकसम्बन्धरूपमित्यभिप्रायेण सम्बन्धस्य विशेषणमाह—तादात्म्यातिरिक्तेति। अनन्तक्षणतादात्म्यकल्पन एवेति, क्षणिकत्वं क्षणतादात्म्यरूपमभ्युपगतं बौद्धमते, तादात्म्यं च स्ववृत्त्यसाधारणधर्मरूपमिति क्षणतादाम्यं क्षणत्वरूपमेव पर्यवसन्नम्, क्षणत्वे च न कस्यापि विप्रतिपत्तिरिति पूर्वकल्पवदत्र कल्पेऽतिरिक्तकल्पनानवकाश इति लाघवमिति भावः।

एतेन ज्ञानाधीनाऽर्थव्यवस्थितिरिति ज्ञानाभ्युपगमे कस्याप्यविप्रतिपत्तेस्तत्रोत्पादविनाशकल्पने गौरवादुपाधिभेदाच्च व्यवहारभेदोपपत्तेर्बलवानौपनिषदो नय इति मधुसूदनोक्तमप्यपास्तम्, तत्रोत्पादविनाशप्र-

तियोगित्वकल्पनापेक्षया तत्प्रतियोगित्वकल्पनायामेव लाघवात्, शून्योपादानताप्रतिपादकस्य "असदेवेदमग्र आसीत्" इत्यादेर्वेदस्योपग्रहोऽपि माध्यमिकमते न दुर्वच इति यत्किञ्चिदेतत् ॥४१॥

ननु यद्येवं नयाः सर्वेऽन्यव्यावृत्तावसमर्थास्तदा भवद्भिरप्यत्रैव ग्रन्थे बौद्धनयनिर्मूलोन्मूलनाय न्यायनयः किमर्थमाश्रीयते, तत्राह—

देशेन देशदलनं भजनापथे तु, त्वच्छासने निजकरेण मलापनोदः ॥
व्याघातकृन्न भजनाभजना जनाना-मित्थं स्थितौ शबलवस्तुविवेकसिद्धेः ॥४२॥

देशेन न्यायनयेन, देशदलनं बौद्धनयदलनं, त्वच्छासने भजनापथे तु स्याद्वादमार्गे तु, निजकरेण मलापनोदो व्रणादिमलापनयनं, स्यात्कारोपादानानुपादानाभ्यां स्याद्वादाज्ञया नययोर्दूषकदूष्यत्वस्थितिरित्यर्थः, तथाप्येकान्तयुक्तीनां तत्त्वतो मिथ्यात्वादाश्रयणानौचित्यमिति चेत्, न, असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहत इति न्यायेन शिष्यमतिविस्फारणार्थं तदुपादानस्यापि न्याय्यत्वात्। परमार्थतस्तु नयभाषाप्रयोग एव नास्ति कुतस्तद्युक्त्याश्रयणमिति बोध्यम्।

एतेन वक्ष्यमाणखण्डनेन, अस्तापास्तमित्यनेनान्वयः, अयं घटः अयं च पट इत्यादिव्यवहारभेदो हि ज्ञानभेदादेव भवति ज्ञानञ्च भवन्मते नित्यैकरूपमेवाभ्युपगतमिति ज्ञानस्य नियामकस्यैकत्वे तन्नियम्यस्य व्यवहारस्याप्येकरूपत्वमेव स्यादित्याशङ्कायामाह—उपाधिभेदाच्चेति, घटपटादितत्तदाकारवृत्तिरूपावच्छेदकभेदाच्चेत्यर्थः। तत्र ज्ञाने, उत्पादविनाशाप्रतियोगित्वेति,

कल्पलतिकोपेतम्। स्याद्वादिनोनयाश्रयणं युक्तमेव

प्रागभावाऽप्रतियोगित्वविशिष्टध्वंसाऽप्रतियोगित्वेत्यर्थः । वैशिष्टयञ्च सामानाधिकरण्यसम्बन्धेन । तत्प्रतियोगित्वेति उत्पादविनाशप्रतियोगित्वेत्यर्थः । लाघवादिति अप्रतियोगित्वं प्रतियोगित्वाभावः, तथा चाभावज्ञाने प्रतियोगिज्ञानस्य हेतुत्वेन प्रथमं कल्पनीयतयोपस्थितितः भावभिन्नत्वमभावत्वं भेदश्च तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावलक्षण इत्यभावस्य प्रतियोगिघटितमूर्त्तिकत्वेन स्वरूपतश्च लाघवादित्यर्थः ॥४१॥ द्विचत्वारिंशत्तमश्लोकमवतारयति नन्वित्यादिना, देशेन देशदलनमित्यादिश्लोकव्याख्यानं ग्रन्थकृतैव कृतमिति नेह प्रतन्यते ।

तदुक्तम् सम्मतौ "सीसमईविप्फारणमेत्तत्थोऽयं कओ समुल्लावो । इहरा कहामुहं चेव णत्थि एयं ससमयंमि"त्ति, अयं च निषेधः स्वतन्त्रनयविषयः, स्याद्वादैकवाक्यतापन्ननयवाक्यस्य तु तत्त्वादेव नाप्रतिपादनीयत्वमिति ध्येयम् ।

सीसमइत्ति शिष्यबुद्धिविकाशनमात्रार्थोयं कृतः प्रबन्धः, इतरथा स्वसिद्धान्ते किमेते क्षणिका अक्षणिका वा भिन्ना अभिन्ना वेति कथैवैषा नास्ति, स्याद्वादस्य वस्तुत्वव्यापकत्वेन वस्तुमात्रस्यानेकान्तात्मकत्वादित्यर्थः। नन्वेवं यदि "नैवावधारणीं भाषां भाषेत" इतिभगवदुक्तानुसारेणैकान्तनिश्चयात्मको नयभाषाप्रयोग एव नास्ति तदा "प्रमाणनयैरधिगमः" इति तत्त्वार्थसूत्रविरोध इत्यत आह अयञ्च निषेध इति, स्वतन्त्रनयविषयः इतरनयानपेक्षिनयविषयः, उक्तविषयस्यासम्भवेन तत्कथापि न सम्भवति, अनन्तधर्मात्मकवस्त्वेकदेशोऽपि स्याद्वादरूप एवेति हेतोरितरधर्माप्रतिक्षेपितयाऽन्याशेषदेशसाकाङ्क्षैकदेशबोधजनकस्य नयवाक्यस्य स्याद्वादतत्त्वप्रतिपादकत्वादेव न निषेध इति सुनयकथातस्तत्त्वाधिगमो भवत्येवेति नोक्तसूत्रविरोध इति भावः । तत्त्वादेव परस्परनिरूप्यनिरूपक-

भावापन्नविषयताकनिराकाङ्क्षखण्डमहावाक्यार्थबोधानुकूलांशबोधजनकतया स्याद्वादरूपत्वादेव, स्याद्वादवाक्यस्य नयवाक्यस्य चैकैकजन्यबोधे परस्परसाकाङ्क्षत्वात् स्याद्वादवाक्यस्यांशतो नयवाक्यत्वं नयवाक्यस्य च स्याद्वादवाक्यत्वमित्येकैकस्योभयरूपत्वमुपदर्शयितुमुत्तरार्द्धमवतारयति

तदाह—भजनाभजना स्याद्वादेऽपि स्याद्वादः, न व्याघातकृत् न स्याद्वादलक्षणक्षतिकृत्, एकत्र धर्मिणि प्रतिधर्मं सप्तधर्मप्रकारकबोधजनकतापर्याप्तिमद्वाक्यत्वस्य स्याद्वादलक्षणस्य प्रतिभङ्गमेकधर्मावधारणत्वरूपनयत्वेऽप्यविरोधात् ॥ तदाह समन्तभद्रः—अनेकान्तेऽप्यनेकान्त इत्यादि, प्रमाणत्वमाश्रित्यानेकान्तो नयत्वमाश्रित्य चैकान्त इत्येतदर्थः ।

तदाहेति, एकत्र धर्मिणीति विशेष्यत्वं सप्तम्यर्थः, तस्य निरूपकतासम्बन्धेन बोधेऽन्वयः । प्रतिधर्ममिति सत्त्वाद्येकैकधर्ममाश्रित्येत्यर्थः । एतेन वस्तुगताखिलधर्मानाश्रित्य अनन्तधर्मबोधकानन्तसप्तभङ्गीलक्षण एव स्याद्वाद इति ध्वनितम् । अनेकान्तेऽप्यनेकान्त इत्यस्यार्थमाह प्रमाणत्वमाश्रित्येति, स्याद्वादो हि प्रतिभङ्गमेकधर्मावधारणरूपत्वेन नयात्मकः, सप्तभङ्ग्यपेक्षया तु सप्तधर्मावधारणरूपत्वात्प्रमाणरूपोऽतो नयत्वप्रमाणत्वोभयधर्मशालित्वात्स्याद्वादोऽपि स्याद्वादरूप इति भावः । अस्मिन् कल्पेऽवच्छेदकस्य संकोचविकाशभावेनैकान्तत्वानेकान्तत्वविचारणा न कृता,

यदि च स्यादस्त्येवेत्यादिसप्तभङ्ग्यात्मकमहावाक्ये स्यात्पदस्य वाचकत्वपक्षे बुद्धिविषयावच्छेदकावच्छिन्नत्वमेव तदर्थः, तदा सामान्यतोऽवच्छेदकलाभे विशेषतस्तज्जिज्ञासायां तदनन्तरं स्वद्रव्याद्यपेक्षयाऽस्त्येवेत्यादिरे-

कान्तेन नयवाक्यप्रयोग इति तस्यापि प्राक्तनानेकान्तसापेक्षत्वेनानेकान्तानेकान्तत्वं परिभाषते, अत एव नानवस्था,

यदि चेति कल्पे तथा विचारणा कृतेति विशेषः। अयंभावः, स्यादस्त्येवेतिभङ्गे बुद्धिविषयत्वेन रूपेण स्वद्रव्यादीनां चतुर्णामप्युपसंग्रहादनेकावच्छेदकमुखेनावच्छेद्यप्रतिपादनादनेकान्तत्वं, विशेषावच्छेदकजिज्ञासया प्रतिपाद्यमाने च स्वद्रव्याद्यपेक्षयाऽस्त्येवेत्यादिभङ्गे प्रतिनियतावच्छेदकविशेषमुखेनावच्छेद्यप्रतिपादनादेकान्तत्वमिति कृत्वा स्यादस्त्येवेत्यादिसप्तवाक्यापेक्षयानेकान्तः स्वद्रव्यापेक्षयाऽस्त्येवेत्यादिसप्तभङ्गापेक्षयैकान्त इत्यनेकान्ते सामान्यतोऽवच्छेदकावच्छेदेनास्तित्वाद्यभिधायकस्य प्रतिभङ्गस्यावच्छेदकांशेऽनेकान्तत्वं विशेषतोऽवच्छेदकावच्छेदेनास्तित्वाद्यभिधायकस्य प्रतिभङ्गस्यावच्छेदकांशे एकान्तत्वमित्येवमनेकान्तत्वैकान्तत्वोभयधर्मयोगादनेकान्तता, पूर्वं स्यादस्त्येवेत्यादिसप्तभङ्ग्यास्सामान्यतोऽवच्छेदकमादाय सप्तधर्मज्ञानं ततश्च सामान्यज्ञानाद्विशेषजिज्ञासया स्वद्रव्यापेक्षयाऽस्त्येवेत्यादिसप्तभङ्गीप्रवृत्तिस्तत्प्रवृत्त्या च प्रथमसप्तभङ्ग्यात्मकाऽनेकान्तस्य स्वस्वरूपेणानेकान्तत्वेपि द्वितीयसप्तभङ्ग्यपेक्षया एकान्तत्वमित्यनेकान्तता, एवं द्वितीयसप्तभङ्ग्यास्स्वस्वरूपेणैकान्तत्वेपि प्रथमानेकान्तसप्तभङ्ग्यपेक्षयाऽनेकान्तत्वमित्यनेकान्ततेति, तदर्थः स्यात्पदस्यार्थः, तज्जिज्ञासायां अवच्छेदकजिज्ञासायाम्, तदनन्तरम् विशेषतोऽवच्छेदकजिज्ञासानन्तरं, स्यादस्त्येवेत्यादिमहावाक्यानन्तरं वा, अत एवेत्यस्यातिदिष्टमाह—

तृतीयचतुर्थानेकान्तयोः प्रथमद्वितीययोरेव विश्रामादन्योऽन्याश्रयस्तु प्रामाणिक इति बहवः। विशेषतोऽवच्छेदकजिज्ञासाया अपि सप्तधाया औत्सर्गिकत्वात्, भङ्गद्वयप्रयोगस्य च व्युत्पन्नापेक्षत्वात्, सामा-

न्यविशेषभावेन सप्तभङ्गीद्वयविश्रामे तदादिवत् स्यात्पदेन लब्धस्यार्थस्य विवरणेन स्पष्टत्वार्थं वोत्तरप्रयोगाच्च दोषस्पर्शोऽपीति तु वयम्। तदाह–इत्थं सामान्यविशेषभावेन विचार्य विवरणपरतया वाऽनेकान्तैकान्तवाक्ययोर्व्यवस्थितौ जनानां शबलवस्तुनोऽनन्तधर्मात्मकतत्त्वसिद्धेर्न भजनाभजना व्याघातकृदिति॥४२॥ इत्थं च स्यात्पदस्यानिर्द्धारणार्थत्वाद्विरुद्धोभयगोचरज्ञानस्य संशयत्वेनाप्रमाणत्वाच्च सप्तभङ्गीनयो न प्रमाणमिति वदन्तं शिरोमणिभट्टाचार्यमधिक्षिपन्नाह—

नोच्चैर्बिभेति यदि नाम कृतान्तकोपा–दुत्प्रेक्ष्य कल्पयति भिन्नपदार्थजालम्॥
चित्रस्थले स्पृशति नैव तवोपपत्तिं, तत्किं शिरोमणिरसौ वहतेऽभिमानम्॥ ४३॥

यदि नाम कृतान्तकोपादपसिद्धान्तादुच्चैर्न बिभेति, उत्प्रेक्ष्य सिद्धान्तविरुद्धविचारं मनस्याधाय, भिन्नपदार्थजालं सप्तपदार्थव्यतिरिक्तं विषयताप्रतियोगित्वाद्यनन्तपदार्थकदम्बकं कल्पयति, चित्रस्थले च तवोपपत्तिं स्याद्वादयुक्तिं न स्पृशति, तच्छिरोमणिः किमभिमानं वहतेऽहमेव सर्वशास्त्रतात्पर्यज्ञ इति, अयुक्तोऽयमस्य पदार्थविवेकाय प्रवृत्तस्य कृतान्तकोपादप्यबिभ्यतस्तत्करणाक्षमत्वेनाभिमान इति भावः। इदमुक्तं भवति, विषयताप्रतियोगित्वादयो यदि पदार्थाः परेण स्वसिद्धान्तमवधूय भिन्नाः कल्प्यन्ते, तदा तत्सम्बन्धोऽप्यधिको वक्तव्यः, एवं तत्सम्बन्धोऽपीत्यनवस्था, न चानन्यगत्या तदुपगमः, विषयतादयोऽतिरिक्ता अभेदश्च तत्सम्बन्ध इत्येवमनन्तधर्मात्मकतत्त्ववादे उपपत्तिसम्भवात्, वदन्ति च "अनन्तधर्मात्मकमेव तत्त्व–मतोऽन्यथा



अनेकान्तानेकान्तत्वोपपत्तिः

सत्त्वमसूपपादम्'' इत्यादि, भेदाभेदप्रवेशभियैव नैवमभ्युपैमीति चेत्, तत्किमेकान्तदरिद्रपुत्रकं गृहे स्थापयसि, स्वगमायान्तीं चानेकान्तश्रियं निवारयसि,

तृतीयेति, ननु माभूदनवस्था परस्परापेक्षणादन्योन्याश्रयस्तु स्यादेवेति चेत्, स प्रामाणिकत्वादभ्युपेयार्ह इत्याह अन्योन्याश्रयस्त्विति, नाद्याया द्वितीयायाश्च सप्तभङ्ग्याः परस्परापेक्षकत्वम्, किन्तु एकस्यैव स्याद्वादस्य सामान्यविशेषोभयरूपत्वं व्याख्येयव्याख्यानोभयरूपत्वं वा, तथा च सामान्यतोऽवच्छेदकजिज्ञासया सामान्यरूपया व्याख्येयरूपया वा सामान्यतोऽवच्छेदकमादाय प्रवृत्तया सप्तभङ्ग्याऽनेकान्तात्मकत्वं विशेषतोऽवच्छेदकजिज्ञासया विशेषरूपया विवरणरूपया वा विशेषतोऽवच्छेदकमादाय प्रवृत्तया स्वद्रव्यापेक्षयाऽस्त्येवेत्यादिरूपया सप्तभङ्ग्यैकान्तत्वमित्यनेकान्तेऽनेकान्तत्वमिति नोक्तदोषावकाश इत्यभिप्रायवान् ग्रन्थकारस्स्वाभिप्रायमावेदयति विशेषतोऽवच्छेदकजिज्ञासया अपीति, अपिना सामान्यतोऽवच्छेदकजिज्ञासाया औत्सर्गिकत्वं ख्यापितम्, नन्वेवं तर्हि क्वचित्कथं भङ्गद्वयप्रयोग इत्याशङ्कायामाह भङ्गद्वयेति, व्युत्पन्नापेक्षत्वादिति, अनेन तत्राप्यव्युत्पन्नश्रोतॄणां भङ्गद्वयप्रयोगमात्रेण न सप्तधर्मावगतिरिति तदर्थं तान्प्रति सप्तभङ्गप्रयोगकरणेपि प्रेक्षाचक्षुषां न दोष इत्यावेदितम्। सप्तभङ्गीद्वयविश्राम इति, सति सप्तमी, अस्याश्च न दोषस्पर्शोपीत्यनेनान्वयः, उत्तरार्द्धमूलं सङ्गमयन्नाह तदाहेति, इत्थमित्यस्य फलितार्थमाह सामान्येति, स्थिताविति पदस्य फलितार्थमाह अनेकान्तेति, शबलवस्तुविवेकसिद्धेरित्यस्यार्थमाह शबलवस्तुन इति ॥४२॥ त्रिचत्वारिंशत्तमश्लोकमवतारयति—इत्थञ्चेति, नोच्चैर्बिभेति यदि नामेत्यादिश्लोकोऽपि सुस्पष्टं व्याख्यातः, तत्करणाक्षमत्वेनेति पदार्थविवेककरणाक्षमत्वेनेत्यर्थः। तदुपगम इति तथा च प्रामाणिक्यनवस्था न दोषायेति भावः। निषेधे

हेतुमाह विषयतादय इति, उपपत्तिसम्भवादिति, तथा च गत्यन्तरसद्भावादुक्तानवस्था न प्रामाणिकीति दोषावहैवेति भावः॥ "अनन्तधर्मात्मकमेव तत्त्व–मतोऽन्यथा सत्त्वमसूपपादम्" इत्यादीति, अत्रादिपदात् "इति प्रमाणान्यपि ते कुवादि-कुरङ्गसन्त्रासनसिंहनादाः" इत्युत्तरार्द्धस्यान्ययोगव्यवच्छेदद्वात्रिंशिकास्थद्वाविंशतितमपद्यान्तर्गतस्योपग्रहः। अस्यार्थः भगवच्छ्रीमल्लिषेणसूरिकृततट्टीकातोऽवसेयः। एकान्तविषयादिभिन्नविषयतादिवादं शिरोमण्यभ्युपगतं निरस्यन्नाह—

कथं च सर्वथा घटातिरिक्तत्वे घटविषयताया घटाभावकालेऽपि न तज्ज्ञानम्, घटोऽपि तत्राभिव्यञ्जक इति चेत्, तत्सत्त्वेऽपि ज्ञानाभावकाले कथं न तज्ज्ञानम्, तज्ज्ञानमपि तत्राभिव्यञ्जकमिति चेत्, तर्हि देवदत्तेन ज्ञाते घटे कथं न यज्ञदत्तस्य घटविषयताग्रहः, तदीयघटज्ञानं कारणमिति चेत्, तदा पुरुषभेदेनापि विषयताभेदापत्तिः॥ एवं तत्तत्प्रकारकज्ञानविषयतात्वादिनापि ग्रहे तत्तत्प्रकारकज्ञानादेर्हेतुत्वं वाच्यमिति, तदभावे सामान्यसामग्रीमहिम्ना सामान्यतो भानापत्तिः, विषयताग्रहस्य तत्तत्प्रकारकज्ञानत्वाद्यन्यतमविशिष्टविषयकस्यैव स्वीकारे तु निर्विकल्पकोच्छेदापत्तिः,

कथञ्चेति, तज्ज्ञानम् घटविषयताज्ञानम्, ज्ञानञ्च प्रत्यक्षात्मकमिह विवक्षितम्, तेन घटाभावकालेपि परोक्षात्मकस्य घटविषयताग्रहस्य सम्भवेपि न क्षतिः। ज्ञानाभावकाले घटज्ञानाभावकाले, तेन ज्ञानान्तरकालेऽपि नापत्त्यनुपपत्तिः। घटस्वरूपसन्नाभिव्यञ्जकः, किन्तु ज्ञातस्सन्निति तज्ज्ञानमप्यपेक्षणीयमित्याशयेनाशङ्कते तज्ज्ञानमपीति, तत्तत्पुरुषीयघटविषयताग्रहे तत्तत्पुरुषीयघटज्ञानं कारणमिति,नोक्तदोष इत्याशङ्कां निराकरोति तदेति, ग्रहे विषयताग्रहे, तत्तत्प्रकारकज्ञानादेरिति विशिष्टबुद्धौ

विशेषणज्ञानस्य कारणत्वेन ज्ञातस्य सतो घटत्वपटत्वादितत्तत्प्रकारकज्ञानादेरित्यर्थः। हेतुत्वं वाच्यमिति उक्तविशेषकार्यकारणभावानभ्युपगमे घटत्वप्रकारकज्ञानादपि पटत्वप्रकारकज्ञानविषयतात्वेन घटविषयताग्रहस्स्यादिति भावः। तदभावे उक्तविशेषसामग्र्यभावे, सामान्यतो भानापत्तिरिति घटादिविषयविशेषाऽघटिता या सामान्यविषयता तत्त्वेन विषयत्वग्रहस्स्यादित्यर्थः। विशिष्टबुद्धिं प्रति विशेषणज्ञानविधया हेतुतयाऽभ्युपगतस्य निर्विकल्पकज्ञानस्योच्छेदे हेतुमाह—

घटादिग्रहस्यापि रूपत्वादिविशिष्टविषयकस्यैव सुवचत्वात्, किं चैवं घटज्ञानविषयताग्रहे घटविषयकज्ञानग्रहो हेतुः पर्यवसितः तथा,चान्योन्याश्रयो व्यक्त एव, अपि चैवं द्वित्वादिवन्न्यायनये विषयताया जन्यता स्यात्, तथा चातीतानागतयोस्तदनापत्तिः, ज्ञानकाले च तदभावान्निर्विषयं ज्ञानं स्यात्॥ अत एव बाधकात् तस्या व्यङ्ग्यत्वमाश्रीयत इति चेत्, न, तुल्यन्यायेन द्वित्वादेरपि तथात्वापत्तौ प्राभाकरमतप्रवेशापत्तेः

घटादिग्रहस्यापीति। विशिष्टज्ञाने हेतुतया निर्विकल्पस्यानभ्युपगमेऽपीन्द्रियादिसन्निकर्षादिबलात्प्रागेव विशिष्टज्ञानं स्यादिति भावः। घटनिष्ठविषयतानिरूपकज्ञानग्रहे निरूपकतासम्बन्धेन विशेषणविधया घटज्ञानीयविषयतायाः प्रविष्टत्वात्कारणीभूतस्य तज्ज्ञानस्य प्राक्सत्त्वे घटविषयकज्ञानग्रहः तस्य च घटज्ञानविषयतायां निरूपितत्वसम्बन्धेन घटज्ञानात्मकं यद्विशेषणं तज्ज्ञानात्मकस्य घटज्ञानविषयताग्रहे कारणत्वेन प्राक्सत्त्वे घटज्ञानविषयताग्रह इत्यन्योन्याश्रय इत्याह किञ्चैवमिति, अत्र च विषयतासंसर्गेण घटविशिष्टज्ञानग्रहस्य कारणत्वे नान्योन्याश्रय इति यदि ब्रूयात्तदाप्याह अपि चैवमिति, विषयताया जन्यत्वाभ्युपगमेऽतीतानागतार्थात्मकाश्रयस्येदानींतनज्ञानकालेऽभावेन तत्र तेन ज्ञानेन विषयताया उत्पत्तिर्न स्यात् आश्रयाऽभावे आश्रितस्याप्यनुत्पत्तेरित्याह

तथा चेति, दूषणान्तरमाह ज्ञानकाले चेति, ज्ञानस्य सविषयकतया निरूपकतासम्बन्धेन विशेषणीभूता विषयता यदि निरूपकत्वसम्बन्धेन स्वविशिष्टज्ञानेन जन्यत इत्यभ्युपगमस्तर्हि सा ज्ञानरूपकारणानन्तरमेव जन्येत, तथा च ज्ञानकाले तस्या अभावेन विषयतासंसर्गेण घटादिविषयविशिष्टं ज्ञानं न स्यादिति ज्ञानमात्रं निर्विषयं स्यादिति भावः। समवायस्य स्वरूपत एकत्वेऽपि घटस्य समवायः पटस्य समवाय इत्यादिनियतव्यवहारोपपत्तये तत्तन्निरूपकभेदेन भेद इति तत्र स्याद्वादावतारो यथा तथा विषयताया अपि विषयतात्वेनैकत्वेऽपि घटज्ञानविषयो घटः पटज्ञानविषयः पट इत्यादिव्यवहारार्थं घटज्ञानपटज्ञानादिनिरूपितत्वेन भेदोऽङ्गीकर्तव्य इत्यत्रापि स्याद्वादावतार एवेति जैनमतानुगामित्वं स्यादित्याह—

किञ्चैवं समवायवदेकैव सा स्यात्, सम्बन्धिविशिष्टतया च तद्भेदेन नियतव्यवहारार्थं भिन्नेतेत्यायातः स्याद्वादः। समवायोऽपि न भिद्यते किन्तु रूपिनिरूपव्यवस्थानुरोधेन समवायसम्बन्धावच्छिन्नतत्तदाधारताभेद एव स्वीक्रियते तद्वद्विषयतायामपि वाच्यमिति चेत्, एवं सति प्रवृत्त्यादिजनकतावच्छेदकतया विषयतासम्बन्धावच्छिन्नाधारताऽधिका सिध्येत्, न तु विषयतेति महद्वैशम्, तद्घटकतया सापि तथेति चेत्, तद्घटकतया सर्व एव पदार्थास्तथा स्युः॥ एतच्च द्रव्यार्थयुक्त्या सर्वमेकं पर्यायार्थदृष्टौ चानेकमित्यस्मन्मते युज्येत, विरोधस्यापि कथञ्चिदेव पर्यवसानात्, न तु भवन्मत इति न किञ्चिदेतत्।

किञ्चैवं समवायवदेकैवेति, विषयतायामपीति, विषयत्वसम्बन्धावच्छिन्नतत्तज्ज्ञानत्वावच्छिन्ननिरूपकतानिरूपिताधारताभेदाद्व्यवहारभेद इत्यर्थः। विषयत्वसम्बन्धावच्छिन्नाधारतासम्बन्धेन प्रवृत्तिं प्रति विषयत्वसम्बन्धावच्छिन्नाधारतासंसर्गेण ज्ञानस्य

कारणत्वेनातिरिक्तोक्ताधारतायास्सिद्धिस्स्यान्नतु विषयताया इत्यसमञ्जसं स्यादित्याह एवं सतीति, विषयतासम्बन्धावच्छिन्नाधारतान्तः प्रविष्टत्वाद्विषयतायास्सिद्धिरित्याशङ्कते तद्घटकतयेति, उक्ताधारतायास्साक्षात्परंपरया सर्वपदार्थसम्बन्धित्वेन सर्वेऽपि पदार्था भेदाभेदादयस्सिद्ध्येरन्नित्युत्तरयति तद्घटकतयेति, स्वमते विषयताविषयित्वयोस्स्वरूपमुपदर्शयन्नाह—

तस्माद्विषयताविषयिते ग्राह्यग्राहकस्वभावाभ्यां तदुत्पत्ती एवान्यथान्यदापि तद्व्यवहारप्रसङ्गात्, ते एव तथाऽग्राह्यग्राहकस्वभावाभ्यां निवृत्ती, द्रव्यार्थतयैकत्वानुभवश्च सर्वसिद्ध इति तद्दृष्टान्तेन सर्वत्र त्रैलक्षण्यसिद्धौ किमपरमवशिष्यते स्याद्वादस्वीकारे ॥

तस्मादिति, विषयताविषयिते इति घटादेर्विषयस्य ग्राह्यस्वभावतयोत्पत्तिर्विषयता, ज्ञानस्य च ग्राहकस्वभावतयोत्पत्तिर्विषयितेत्यर्थः, विषयताविषयित्वयोरन्यादृशस्वरूपत्वे ज्ञानाद्यभावकालेऽपि विषयताविषयिताव्यवहारस्स्यादित्याह अन्यथेति। यदा घटादिरग्राह्यस्वभावतया विनश्यति तदानीं ग्राह्यस्वभावतयोत्पद्यते, यदा च ज्ञानं घटाग्राहकस्वभावतया विनश्यति तदानीं घटग्राहकस्वभावतयोपजायते पूर्वस्वभावविनाशस्योत्तरस्वभावोत्पत्तिनियतत्वात्, तथा च द्रव्यार्थिकनयेन स्वस्वरूपेणाविच्युतस्वरूपयोरेव ज्ञानज्ञेययोः पर्यायार्थिकनयेन पूर्वोत्तरस्वरूपतया नाशोत्पादाविति त्रैरूप्यसिद्धिस्तद्दृष्टान्तेनान्यत्रापि सा स्यादित्युपदर्शयितुमाह ते एव तथेति, प्रकारान्तरेणापि स्याद्वादमवतारयन्नाह—

एवमेकत्र तत्तत्पुरुषाद्यपेक्षाभेदेन पितृपुत्रादिव्यवस्थावज्ज्ञाताज्ञातत्वव्यवस्थया तत्तद्धर्मभेदेन च तया स्याद्वादसिद्धिः। न च पितृत्वपुत्रत्वयोर्जनकताजन्यतारूपयोर्न विरोधोऽपेक्षाभेदस्तु तत्र स्पष्टव्यवहारार्थमु-

पयुज्यते, तत्तदन्यधर्मभेदेन ज्ञातत्वाज्ञातत्वसमावेशस्तु तद्धर्मप्रकारकज्ञानविषयत्वान्यधर्मप्रकारकज्ञानविषयत्वाभ्यामविरुद्ध इति न स्याद्वादसिद्धिरिति वाच्यम्, पितृत्वपुत्रत्वयोर्भावाभावत्वरूपविरोधाभावेऽपि सहानवस्थानरूपविरोधस्फूर्त्तेस्तत्परिहारायापेक्षाभेदोपादानस्यायं घटः कथञ्चिन्मया ज्ञातो न तु सर्वप्रकारैरित्येतत्समाधानस्यैव च स्याद्वादार्थत्वात् ॥ न ह्येकत्र नानाविरुद्धधर्मप्रतिपादकः स्याद्वादः, किन्त्वपेक्षाभेदेन तदविरोधद्योतकस्यात्पदसमभिव्याहृतवाक्यविशेषः स इति, द्योतिते च तदविरोधे संशयावकाशस्यैवाभावात् कथं स्वहृदयगतमनवधारणमस्मास्वारोप्यते शिरोमणिना। परस्यैव हि नयानिर्द्धारितविषयस्वरूपस्य वसंतिदृष्टान्तप्रदर्शितन्यायेन बहुविधविप्रतिपत्त्या गोष्ठे गौरस्तीत्यत्रापि सन्देहापत्तिरुत्तरोत्तरयुक्त्या पूर्वपूर्वबाधाद्बोधशून्यतापत्तिश्च। अस्माकं तु तत्तन्नयप्रयुक्तज्ञाने तत्तन्नयजन्यबाधज्ञानस्यैव प्रतिबन्धकत्वाददोष इत्यादिकं व्युत्पादितं नयरहस्येऽस्माभिरिति तत एवावगन्तव्यम्।

एवमेकत्रेति, परस्य स्याद्वादस्वरूपानभिज्ञतां प्रकटयितुमाह—न ह्येकत्रेति, तदविरोधेत्ति—नानाधर्माविरोधेत्यर्थः, स स्याद्वादः, विरोध्युभयगोचरज्ञानस्य संशयत्वेनाप्रमाणत्वाच्चेति यदुक्तं शिरोमणिना तत्खण्डनेन तदीयाज्ञानतामाविष्करोति—द्योतिते चेति, येन नयेन गोष्ठे गौरस्तीतिज्ञानं तेनैव नयेन यदि गोष्ठे गौर्नास्ति किन्तु गोष्ठकोणेऽस्तीति ज्ञानं स्यात्तदा तयोर्ज्ञानयोः प्रतिबध्यप्रतिबन्धकभावस्स्यात्, नत्वेवम्, एकेन नयेन गोष्ठे गौरिति ज्ञानं नयान्तरेण च गोष्ठकोण इतिज्ञानं, नयभेदेन गोष्ठवृत्तित्व गोष्ठकोणवृत्तित्वादेस्सर्वस्योपपन्नत्वेन तत्सर्वज्ञानं समुच्चयरूपमेव, न तु संशयरूपम्, प्रत्येकमपि तेषां ज्ञानं विभिन्ननयप्रभवतया

कल्पलतिकोपेतम्। शिरोमणेः स्याद्वादाऽनभिज्ञताप्रदर्शनम्

परस्परविरोधित्वाभावेन नोत्तरोत्तरेण पूर्वपूर्वबाधनाद्दोषशून्यत्वापत्तिरस्माकं, शिरोमणेस्त्वेकस्मिन्नेव मते सङ्कुचिताधारवृत्तित्वाऽसङ्कुचिताधारवृत्तित्वादेरेकस्मिन्नसम्भवेन तत्सर्वधर्मज्ञानस्य संशयरूपत्वापत्तिः, परस्परप्रतिबन्धाद्वा प्रत्येकमनुत्पत्तिरित्याशयेनाह—परस्यैव हीत्यादि। चित्रस्थले स्पृशति नैव तत्रोपपत्तिमिति यदुक्तं तदेवोपपादयन्नाह—

एवं चित्ररूपस्थलेऽपि यद्यनुभवमुखप्रेक्षी भवति विपश्चित्तदा स्याद्वादसाम्राज्यलीलामेव पश्यति, तथा हि—नीलपीतादिनानारूपवदवयवारब्धे घटे सामग्रीविरोधात् न नीलादीनि रूपाण्युत्पद्यन्ते, किन्तु चित्रमेवैकमिति नैयायिकवैशेषिकसाम्प्रदायिकाः,

एवं चित्ररूपस्थलेऽपीति, सामग्रीविरोधादिति, अवयवगततत्तद्रूपघटितसामग्र्या अवयविगततत्तद्रूपातिरिक्तरूपं प्रति प्रतिबन्धकत्वादित्यर्थः। अत्रेदं भाव्यम्, सामग्रीत्वेन न प्रतिबन्धकत्वम्, अनेकपदार्थघटितायास्तस्या गुरुतया प्रतिबन्धकतावच्छेदकस्यैकस्य सम्बन्धस्याऽसम्भवात् किन्तु समवायेन नीलरूपंप्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलरूपातिरिक्तरूपत्वेन, एवं पीतादिरूपं प्रति पीताद्यतिरिक्तरूपत्वेनेति, अन्यथा नानाजातीयरूपवत्कपालारब्धे घटे नीलकपालाद्यवच्छेदेन पीतोत्पादापत्तेर्दुर्वारत्वादिति। नन्वेवं तर्हि किमवयवी नीरूपः, ओमितिचेत्तर्हि द्रव्यचाक्षुषं प्रति समवायसम्बन्धेनोद्भूतरूपस्य हेतुत्वात्तस्याप्रत्यक्षत्वप्रसङ्गस्स्यादित्यत आह किन्तु चित्रमेवैकमिति, अत एवैकं चित्ररूपमिति प्रतीत्युपपत्तिः, अतिरिक्तचित्ररूपत्वावच्छिन्नैकविषयताकल्पनायां लाघवात्, अन्यथा चित्रमितिप्रतीतेर्नीलत्वपीतत्वाद्यवच्छिन्ननानाविषयता कल्पनीया स्यादिति गौरवं स्यादिति भावः। नव्यमतमाह—

तत्राव्याप्यवृत्तीनि नीलपीतादीन्येवोत्पद्यन्ते, चित्रत्वव्यवहारस्तु परस्परसमानाधिकरणनानारूपवत्त्व-

चित्ररूप-
दृष्टान्तेन
स्याद्वादमु-
पदर्श्य
शिरोमणे-
र्शिक्षणम्

निबन्धन इति दीधितिकारः, व्याप्यवृत्तीन्येव तत्र नीलपीतादीनि, नीलाद्यवयवावच्छेदेन चक्षुःसन्निकर्षस्य च नीलादिग्राहकत्वान्न बोधातिप्रसङ्ग इत्येकदेशिनः॥ अत्र परस्परोमर्दयुक्तयो लतादौ चित्ररूपवादे प्रदर्शिता एवास्माभिरिति विस्तरभयान्नेह तन्यन्ते, पक्षत्रयेऽप्यनुभवव्यवस्था दुर्वचैव, तथा हि–नीलपीतश्वेताद्यवयवारब्धे यदेव रूपं नीलाद्येकैकावयवावच्छेदेन चक्षुःसन्निकर्षे नीलत्वपीतत्वादिना गृह्यते तदेव द्वित्राद्यवयवावच्छेदेन चक्षुःसन्निकर्षे विलक्षणचित्रत्वेनावान्तरचित्रत्वादिना च। एवं चित्रजचित्रे एकावयवावच्छेदेनापि विलक्षणचित्रत्वेन ग्रहः, नीलनीलतराद्यारब्धेऽपि नीलत्वनीलतरत्वविलक्षणचित्रत्वादिना, निरुपचरितश्चायं बोधोऽस्खलत्प्रत्ययत्वात्, तस्य च सर्वस्योपपत्तिरेकत्रांशभेदेन नीलत्वपीतत्वादिचित्रत्वविलक्षणचित्रत्वाद्यव्याप्यवृत्तिनानाजातिसमावेशस्वीकारं विना न भवति, तत्स्वीकारे चायातः स्याद्वाद इति।

तत्राव्याप्यवृत्तीनीति, नानाजातीयरूपवत्कपालारब्धे घटे पीतकपालावच्छेदेन नीलापत्तिवारणाय न पूर्वोक्तः प्रतिबध्यप्रतिबन्धकभावः कल्प्यते तथा सति तदभावे कारणत्वस्यापि कल्पनीयतया गौरवं स्यात् किन्त्ववच्छेदकतासम्बन्धेन नीलादिकं प्रति समवायेन नीलादेः कारणत्वं कल्प्यते, चित्ररूपाङ्गीकारे तु समवायेन नीलादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलत्वादिना हेतुत्वस्य पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावस्यच कल्पनाद्गौरवं स्यादिति भावः। अत्रावच्छेदकतासम्बन्धघटितोक्तकार्यकारणभावाङ्गीकारेऽप्यवच्छेदकतासम्बन्धेन कपालादौ जायमानस्य नीलादेस्समवायेन घटादाविव गगनादावप्युत्पत्तिवारणाय समवायेन नीलादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलादेर्हेतुत्वं तथाप्यावश्यकमेवेति प्राचां समाधिः। सविषयावृत्तिव्याप्यवृत्तिजातीयगुणानामव्याप्य-

वृत्तित्वे विरोध इति नियममाश्रित्यैकदेशिमतमाह व्याप्यवृत्तिन्येव तत्र नीलपीतादीनीति । ननु नीलपीतादिकं व्याप्यवृत्ति स्यात्तर्हि पीतावयवावच्छेदेनापि नीलप्रतीतिस्स्यादित्यत आह नीलाद्यवयवावच्छेदेनेति । एकत्र एकस्मिन् रूपे । अंशभेदेन नीलपीताद्यवयवात्मकावच्छेदकभेदेन,

एतेन चित्रत्वग्रहे नानारूपवदवयवावच्छेदेन चक्षुःसन्निकर्षोऽवयवगतनानारूपग्रहश्च कारणमिति प्राचां युक्तिर्निरस्ता, नीलत्वादिग्रहाननुग्रहात्, त्रसरेणुचित्रस्थलेऽगतेः, आवृतचित्ररूपसजातीयानावृतचित्रघटित-सन्निकर्षेण चित्रत्वप्रत्यक्षानापत्तेश्च, चित्रत्वादिप्रकारकप्रत्यक्षे त्वस्मदुक्तप्रकारं विना नानुभवानुरोध इति ।

एतेन—चित्रजचित्रे एकावयवावच्छेदेनापि चक्षुस्सन्निकर्षे चित्रत्वेन ग्रह इत्युपदर्शितेन वक्ष्यमाणेन च हेतुना, नानारूपेति—विजातीयनानारूपेत्यर्थः । तेन शुक्लरूपद्वयवत्तन्तुद्वयाद्यवच्छेदेन चक्षुस्सन्निकर्षाच्छुक्लरूपद्वयज्ञानाच्चावयविनि चित्रत्वाग्रहेऽपि न क्षतिः । एतेनेत्यतिदिष्टमेवाह नीलत्वादिग्रहाननुग्रहादिति—एकस्मिन्रूपे अव्याप्यवृत्तिनीलत्वपीतत्वादिनानाजात्यभ्युपगमे इत्यादिः, आदिपदात्पीतत्वाद्यवान्तरचित्रत्वादेरुपग्रहः । अवयवगतनानारूपग्रहस्य हेतुत्वे विषयतासम्बन्धेन रूपादिप्रत्यक्षं प्रति स्वसमवायि-समवेतत्वसम्बन्धेन कारणीभूतस्य महत्त्वस्य द्व्यणुकरूपेऽभावेन तत्साक्षात्कारस्य कारणस्याभावात्त्र्यणुकचित्ररूपप्रत्यक्षं न स्यादित्याह त्रसरेणुचित्रेति ।अन्यत्रापि व्यभिचारमुपदर्शयन्नाह आवृतचित्ररूपेति, तत्रैकस्यावयवस्यावृतत्वादेव न तदवच्छेदेन सन्नि-कर्षो न वा तद्रूपग्रह इत्युभयस्यापि व्यभिचार इति भावः । अत्र चित्रत्वग्रहाभावविशिष्टावयवरूपगतैकत्वग्रहस्यावयविचित्ररूपग्रह-प्रतिबन्धकत्वं तदभावस्य च कारणत्वम्, तेन नातिरिक्तचित्ररूपपक्षोक्तदोषः, नीलत्वादिग्रहाऽननुग्रहस्त्वभीष्ट एवेति प्राचीनानां

समाधिः, चित्रत्वव्यवहारश्च न केवलमनेकजातिसमावेशनिबन्धन एव किन्तु नानापर्यायसमावेशनिबन्धनोपीत्याह—

यथा च नानाजातिसमावेशनिबन्धनश्चित्रव्यवहारस्तथा नानापर्यायसमावेशनिबन्धनोऽपि, भेदद्दष्ट्या तथानुभवात्, षड्गुणहानिवृद्धिपर्यायाणां स्वकारणायातत्वाच्च, तदुक्तम्—'पच्चुप्पण्णंमि वि पज्जयंमि भयणागइं पडइ दव्वं। जं एगगुणाईआ अणंतकप्पागमविसेसत्ति' तस्मादीदृशि सूक्ष्मेऽर्थे मनोऽनिवेशयतः शिरोमणेः प्रज्ञापराध एव भूयानिति किमत्र ब्रूमः ॥४३॥ अनेनैव दृष्टान्तेनान्येऽपि वादिनस्त्वदाज्ञामुल्लङ्घयितुमक्षमा इत्युपदर्शयति—

साङ्ख्यः प्रधानमुपयंस्त्रिगुणं विचित्रां, बौद्धो धियं विशदयन्नथ गौतमीयः ॥
वैशेषिकश्च भुवि चित्रमनेकमेकं वाञ्छन्, मतं न तव निन्दति चेत् सलज्जः ॥४४॥

साङ्ख्यः प्रधानं परस्परविरुद्धसत्त्वरजस्तमोगुणत्रयगुम्फितमेकमुपैति, बौद्धश्च विचित्रामेकानेकग्राहकग्राह्याकारकरम्बितां धियं विशदयति विवेचयति, गौतमीयो वैशेषिकश्चोक्तरीत्या चित्रं चित्ररूपमेकमनेकं च वाञ्छति, तदेते चत्वारोऽपि यदि सलज्जास्तदा तव मतं न निन्दन्ति तन्निन्दायाः स्वपदकुठारप्रहारतुल्यत्वात् ॥

यथा चेति, "पच्चुप्पणम्मि वीति, नयोपदेशटीकायां साक्षीभूतोपन्यस्तायामस्यां गाथायां "गमविसेसा" इत्यत्र गुणविसेसा इति पाठः, तत्रेत्थंव्याख्या—प्रत्युत्पन्नेऽपि वर्त्तमानेऽपि पर्याये भजनागतिं भेदाभेदप्रकारं पतति आसादयति द्रव्यम्, यत् यस्मादेकगुणकृष्णत्वादयोऽनन्तप्रकारास्तत्र गुणविशेषाः, कल्पशब्दः प्रकारवाची, तेषाञ्च मध्ये केनचिदेव गुणविशेषेण युक्तं तदिति

कल्पलतिकोपेतम्। परवादिनां भगवदाज्ञोल्लङ्घनाऽक्षमत्वोपदर्शनम्

कृष्णं हि द्रव्यं द्रव्यान्तरेण तुल्यमधिकमूनं वा भवेत्, प्रकारान्तराभावात्, आद्ये सर्वतुल्यत्वे तदेकतापत्तिः, उत्तरयोः सङ्ख्येयादिभागगुणवृद्धिहानिभ्यां षट्स्थानकप्रतिपत्तिरवश्यम्भाविनी, तथा च प्रतिनियतहानिवृद्धियुक्तकृष्णादिपर्यायेण सत्त्वं नान्येनेति, इत्थञ्च नीलत्वाद्यवान्तरजातीनामनन्तत्वात्तरतमशब्दमात्रेण तदनुगमस्य कर्तुमशक्यत्वात्तत्तदवान्तरजातीयनीलपीतादीनामनन्तानां चित्रहेतुत्वकल्पने गौरवमिति षट्स्थानपतितवर्णपर्यायेण चित्रद्रव्यमेव स्वसामग्रीप्रभवमभ्युपगन्तव्यम्, अर्थसमाजसिद्धधर्मस्यापि तथा भवत्वकार्यतावच्छेदकत्वस्वीकारादिति, चतुश्चत्वारिंशत्तमश्लोकमवतारयति अनेनैवेति, साङ्ख्यप्रधानमुपयंस्त्रिगुणं विचित्रां इत्यादिश्लोको ग्रन्थकृतैव व्याख्यात इति नेह विव्रीयते। साङ्ख्य इति साङ्ख्यो द्विविधः, सेश्वरनिरीश्वरभेदात् तत्र सेश्वरसाङ्ख्यशास्त्रप्रणेता कपिलमुनिः, निरीश्वरशास्त्रप्रणेता च पतञ्जलिमुनिः, कपिलमुनिना प्रणीतं साङ्ख्यशास्त्रेण गीयते, पतञ्जलिमुनिना प्रणीतं योगशास्त्रेणाख्याख्यते, पञ्चविंशतितत्त्वाभ्युपगन्तृत्वञ्चोभयोस्साम्यम्, अत एव समानतन्त्रत्वमिति साङ्ख्यपदेन पातञ्जलदर्शनानुसारिणोऽपि ग्राह्याः, तेन न न्यूनतादोषः, परस्परविरुद्धेति, विरुद्धत्वाञ्चात्र प्रकाशोपष्टम्भावरणादिविरुद्धकार्यकारित्वेन ज्ञेयम्, मूलस्थस्य विचित्रामित्यस्यार्थमाह एकानेकग्राहकग्राह्याकारकरम्बितामिति, एकं यद् ग्राहकाकारं चित्रज्ञानस्वरूपं अनेकं यद् ग्राह्याकारं नीलपीताद्याकारं तत्करम्बितां तत्संवलितामित्यर्थः। बौद्धमतेऽपि नीलपीते इत्याद्याकारं ज्ञानं न विलक्षणचित्राकारं किन्तु नीलपीतात्मकग्राह्याकारं सत् ज्ञानस्वरूपग्राहकाकारमित्यभ्युपेयम्, तथा च नीलपीतयोर्ग्राहकं यज्ज्ञानस्वरूपं तदेकरूपमिति ज्ञानस्य स्वसंवेदनरूपत्वेन तदाकारं तत्संवेदनरूपं नीलपीते इति ज्ञानमप्येकम्, नीलाकारस्य पीताकारस्य च ग्राह्याकारस्य भिन्नत्वेन तद्ग्रहणात्मकं तदनेकरूपमित्येकानेकरूपमिति स्याद्वादावतार एवेतिभावः। ननु मूलप्रकृतिचित्रज्ञानचित्ररूपादीनामेकानेकरू-

पत्वेपि न स्याद्वादावतारः, येनाभीष्टसिद्धिस्स्यात्, यत उभयांशस्य परमार्थभूतत्व एव स स्यात्, न चैवमत्र, एकांशस्य परमार्थभूतत्वेप्यऽपरांशस्य काल्पनिकत्वेनाऽवस्तुभूतत्वादित्याशङ्कायामाह—

एकांशस्य प्राधान्येऽपरांशे च गौणत्वे युक्तेरनवस्थितत्वात्, नयानां परस्परोपमर्दमात्रप्रवृत्तत्वात्, तत्त्वनिर्णयस्य तु स्याद्वादन्यायैकसाध्यत्वादिति भावः ॥ ४४ ॥ सिंहावलोकितेन भूयः शिरोमणिमेव स्याद्वादनिन्दकं शिक्षयन्नाह—

अव्याप्यवृत्तिगुणिभेदमुदीर्य नव्या—भावं प्रकल्प्य च कथं न शिरोमणे! त्वम् ॥
स्याद्वादमाश्रयसि सर्वविरोधिजैत्रं ब्रूमः प्रसार्य निजपाणिमिति त्वदीयाः ॥४५॥

अव्याप्यवृत्तिं गुणिनः संयोगिनो भेदमुदीर्य नव्यं च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकमभावं परिकल्प्य विश्रान्तस्त्वं हे शिरोमणे! किं न स्याद्वादमाश्रयसि, तदाश्रयणं विना सम्पूर्णबोधानुपपत्तेः, सूक्ष्मधियस्तव सोऽवश्यमाश्रयणीय इति शिक्षावचनं वयं त्वदीया निजपाणिं प्रसार्य ब्रूमः, पाणिप्रसारणं शिक्षाभङ्गी॥

एकांस्येति, गौणत्वे युक्तेरनवस्थितत्वादिति, उपचरित्वे युक्तेरघटमानत्वादित्यर्थः, यदैवैको नयोऽपरांशस्य गौणत्वव्यवस्थापिकां युक्तिं प्रदर्शयति तदैव तदपरो नयः प्रतियुक्तिं प्रदर्शयतीति तथा आंदोलायमानरूपत्वेनाभासरूपत्वात्प्रमाणभूतनिश्चितरूपत्वाभावादितिभावः। नयानामिति तत्तद्दर्शनानां परखण्डनमात्रप्रवृत्तत्वेन तत्त्वाऽसाधकत्वादित्यर्थः। नयानां सुन्दोपसुन्दन्यायेन परस्परस्वरूपं विदलयतामत एव यथावस्थितस्वरूपानवगाहमानानां खण्डनमात्रप्रवृत्तत्वेनोपक्षीणशक्तेरितिभावः। पक्ष-



स्याद्वाद
आश्रयणीय
इति शिक्षणं
शिरोमणेः

चत्वारिंशत्तमश्लोकमवतारयति सिंहावलोकितेनेति, अव्याप्यवृत्तिगुणिभेदमित्यादिश्लोकोपि सुस्पष्टं व्याख्यात इति नेह व्याख्यायते। उदीर्येत्यत्र प्रकल्प्येत्यत्र च समानकर्तृके क्त्वाप्रत्ययविधानादुदीरणाक्रियायाः प्रकल्पनाक्रियायाश्च समानकर्तृकोत्तरक्रियासापेक्षत्वाद् विश्रान्तिरूपोत्तरक्रियाप्रदर्शनायाध्याहारमाह विश्रान्त इति, नव्याभावमित्यत्र समासान्तरभ्रमो माभूदिति कर्मधारयसमासज्ञापनाय अभावपदसमानाधिकरणतया नव्यमित्युपात्तम्, समनियताभावानामैक्यमते सर्वेषामेव व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावानां केवलान्वयिनो गगनाभावस्य स्वरूपतया गगनाभावाभ्युपगतौ तेप्यऽभ्युपगता एवेति तेषां स्वरूपे न विवादः, किन्तु व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्व एव, अतएवोक्तमन्यत्र—विवादोप्यतिरिक्तायाम्प्रतियोगितायामेवेति, तदंशस्य न्यायानुयायिनां प्राचामननुमतत्वेन नव्यत्वं नत्वभावांशस्येत्यभिसन्धाय नव्यमिति व्याख्यातं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकमिति॥ सङ्क्षेपेण मूलार्थं प्रदर्श्य भावार्थं प्रदर्शयति—

अयं भावः—मूले वृक्षः कपिसंयोगी न शाखायामित्यबाधितानुभवबलात् संयोगितद्भेदयोरवच्छेदकभेदेन समावेशः परेण साधितः, तथैव स्वद्रव्याद्यपेक्षया घटः सन् परद्रव्याद्यपेक्षया चासन्नित्यबाधितानुभवेन सदसतोरपि तादात्म्यसमावेशः किं न कल्प्यते, प्रतियोग्यनवच्छेदकस्याभावावच्छेदकत्वेऽतिप्रसङ्गस्यानुभवविनिगमनेनैव निवारणात्। प्रतियोग्यनवच्छेदकमपि किञ्चिदेव कस्यचिदभावस्य वृत्तावच्छेदकमिति।

अयं भाव इति, सदसतोरपि तादात्म्यसमावेश इति—यथा शाखावच्छेदेन य एव वृक्षःकपिसंयोगी स एव मूलावच्छेदेन कपिसंयोगिभेदवानिति कपिसंयोगितद्भेदयोर्भिन्नावच्छेदेन सामानाधिकरण्यमुक्ताबाधितानुभवबलात्साधितं तथैवोक्ताबाधि-

तानुभवबलमत्राप्यविशिष्टमेवेति तद्बलात् स्वद्रव्यक्षेत्रकालभावावच्छेदेन य एव घटस्सन् तादात्म्यसम्बन्धेन सदाश्रयः स एव घटः परद्रव्यक्षेत्रकालभावावच्छेदेन नासन् तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताक सद्भेदचानितिसत्तद्भेदयोस्सामानाधिकरण्यं किं न साध्यते, धर्मिभेदधर्मात्यन्ताभावयोरैक्यमिति स्वद्रव्याद्यवच्छेदेन घटे सत्त्ववत् परद्रव्याद्यवच्छेदेन सत्त्वाभावः किं न कल्प्यते, कपिसंयोगितद्भेदयोरिव सत्तद्भेदयोस्सत्त्वतदभावयोर्वाऽव्याप्यवृत्तित्वाभ्युपगमे बाधकाभावादितिभावः। अतिप्रसङ्गस्येति, परद्रव्यादेरिव प्रमेयत्वादेरपि सत्त्वाभावावच्छेदकत्वं स्यादित्यतिप्रसङ्गस्येत्यर्थः। अनुभवविनिगमनेनैवेति, अनुभवश्चात्र घटोमृद्द्रव्यस्य पाटलिपुरक्षेत्रस्येदानींतनकालस्य घटत्वात्मकभावस्य च रक्तत्वात्मकभावस्य वाऽपेक्षया सन् तन्तो राजगृहस्यातीतानागतकालस्य पटत्वस्य च नीलत्वस्य वाऽपेक्षयाऽसन्नित्याकारकः, न तु प्रमेयत्वाद्यपेक्षयाऽसन्नित्याकारक इति प्रतियोग्यनवच्छेदकत्वस्याऽविशेषेप्युक्तविनिगमकादेव कस्यचिदेवाभावावच्छेदकत्वं नतु सर्वस्येति, उक्तविनिगमककृत्यमेवाह प्रतियोग्यवच्छेदकमपीति, यदि च घटत्वेन घटस्सन् न प्रमेयत्वेनेत्यनुभवस्तदा स्वभावत्वं परभावत्वञ्च विवक्षाधीनमिति प्रमेयत्वस्यापि परभावत्वेन विवक्षितत्वात् तस्याप्यभावावच्छेदकत्वमिष्टमेवेत्यतिप्रसङ्गस्याभासरूपत्वमेवेतिभावः। पक्षान्तरमाह—

अथवा, परद्रव्याद्यपेक्षयेत्यस्य प्रतियोग्यनवच्छेदकावच्छेदेनेत्येतावानेवार्थः। यदि वा स्वद्रव्यादीनामप्यस्तित्वशरीरघटकत्वमेवापेक्ष्यत्वं, परद्रव्यादीनां च नास्तित्वशरीरघटकत्वमेव तथा, तथा च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाव एव द्वितीयः।

अथवेति, तथा च प्रमेयत्वं न सत्त्वरूपप्रतियोग्यवच्छेदकमिति तदवच्छेदेन सत्त्वाभावो घट इष्ट एवेतिभावः। अथवा

स्वद्रव्याद्यपेक्षया घटोस्तीत्यस्य स्वद्रव्याद्यवच्छेदेनास्तित्ववान् घट इत्येवं स्वद्रव्यादेः प्रतियोग्यनुयोगितावच्छेदकत्वं परिकल्प्य योऽर्थः पूर्वं कृतः सोऽत्र नाद्रियते किन्तु स्वद्रव्याद्यवच्छिन्नं यदस्तित्वं सखण्डधर्मविशेषरूपं तदाश्रयो घट इत्यर्थः, परद्रव्यादिना घटोऽसन्नित्यस्यापि परद्रव्याद्यवच्छेदेनाऽस्तित्वाभाववान् घट इत्येवमभावानुयोगितावच्छेदकत्वं परिकल्प्यार्थो नाद्रियते किन्तु परद्रव्याद्यवच्छिन्नं यदस्तित्वनिष्ठप्रतियोगित्वं तन्निरूपकाभावाश्रयो घट इत्यर्थ इत्याशयेनाह यदि वेति, तथा अपेक्ष्यत्वम्, द्वितीयः द्वितीयभङ्गविषयः। न च नैयायिकम्मन्यस्यापि शिरोमणेरननुमतोऽयमभाव इत्याह—

अभ्युपगम्यते चायं, यदि च घटत्वेन पटो नास्तीति प्रत्ययः स्वरसवाही लोकानां तदा व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाववारणं गीर्वाणगुरोरप्यशक्यमिति वदता परेणापि, एवं प्रतीतिबलसिद्धव्यधिकरणधर्मावच्छिन्नाधिकरणतावच्छेकाभावमादायापि द्वितीयभङ्गः समर्थनीयः, नानागमभङ्गबहुलत्वात् भगवत्प्रवचनस्य, गमाः प्रतिपत्तिप्रकारा इति विवेकः।

अभ्युपगम्यते चेति, स्वरसवाही यथार्थः। परेणापि शिरोमणिनापि। घटत्वेन पटोनास्तीतिप्रतीत्या घटत्वावच्छिन्नपटनिष्ठप्रतियोगिकाभावविषयिकया सिद्धस्य व्यधिकरणधर्मावच्छिन्नाभावस्येव शशशृङ्गे गोवृत्तित्वं नास्तीत्यादिप्रतीत्या शशीयत्वावच्छिन्नशृङ्गनिष्ठाधिकरणतानिरूपकगोवृत्तित्वाभावपर्यवसानकशशीयत्वेन शृङ्गे गोवृत्तित्वाभावविषयिकया सिद्धस्य व्यधिकरणधर्मावच्छिन्नानुयोगितानिरूपकाऽभावस्याप्यवबोधको द्वितीयभङ्गस्समर्थनीय इति परद्रव्याद्यपेक्षया घटोऽसन्नित्यस्य परद्रव्याद्यवच्छिन्नाधिकरणतानिरूपकसत्त्वाभावाश्रयो घट इत्यर्थकत्त्वेनाप्युपपादनं युक्तियुक्तमेवेत्याह एवं प्रतीतिबलसिद्धेति, अधिकरणता-

वच्छेदकेत्यत्रावच्छेदकशब्दो निरूपकपरतया व्याख्येयः। अपसिद्धान्तदोषनिवृत्त्यर्थमाह नानागमेति, परद्रव्याद्यवच्छिन्नसत्त्वनिष्ठप्रतियोगिताकाभावस्य परद्रव्याद्यवच्छिन्नाधिकरणतानिरूपकसत्त्वाभावस्य च केवलान्वयित्वेन घटमात्रधर्मत्वाभावेऽपि घटोनास्त्येवेत्येतावन्मात्रोक्तौ एवकारपदमहिम्ना सर्वथा घटे नास्तित्वशङ्कायास्सम्भवेन तद्व्यावृत्तये उक्ताभावप्रतिपादनपरस्य स्यात्पदलाञ्छितद्वितीयभङ्गस्य न वैयर्थ्यम्, अत एव न तृतीयादिभङ्गस्य, यथा चित्रे घटे नील एवेत्युक्त्या पीताद्यवच्छेदेनापि नीलत्वं स्यादिति सर्वथा नीलत्वप्रसक्तौ चित्रत्वानुपपत्तिरेवेति तद्वारणार्थं स्यान्नीलएवेत्यत्र स्यात्कारप्रयोगो नानर्थक इत्याशयेनाह—

न चैवं व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावादीनां सार्वत्रिकत्वेनाव्यावर्त्तकत्वाद् द्वितीयभङ्गादिवैयर्थ्यमिति शङ्कनीयम्, एवकारोदितसर्वथानास्तित्वशङ्कायाः स्यात्कारेण निर्दलनेन तत्सार्थक्यात्, यथा चित्रे घटे नील एवेति प्रयुक्ते सर्वथा नीलत्वप्रसक्तौ तद्वारणार्थं स्यात्कारप्रयोगः, प्रथमभङ्गोत्थापिताकाङ्क्षया च क्रमेणान्ये भङ्गा लोकव्यवहारानुसारेण प्रयुज्यन्ते. तथा सर्वत्र सप्तभङ्ग्यामिति दिग् ॥४५॥ अथ प्रकृतं प्रस्तूयते—

न चैवमिति, वक्त्रा स्यादस्त्येवेत्याद्यभङ्गेऽभिहिते श्रोतृणा तेन कथञ्चिदस्तित्वे ज्ञाते तस्य प्रथमभङ्गप्रविष्टस्यात्पदमहिम्ना किं घटे नास्तित्वधर्मोऽस्ति न वेति संशयस्समुद्भवति तेन च मे घटे नास्तित्वधर्मज्ञानं जायतामिति जिज्ञासोल्लसति तया च किं घटेऽस्तित्वमिव नास्तित्वमप्यस्ति येन स्यात्कार उपादीयते इति प्रश्ने क्रियमाणे कथञ्चिन्नास्तित्वधर्मोपदर्शनार्थं स्यान्नास्त्येवेति द्वितीयो भङ्गः प्रयुङ्क्ते वक्ता, तत्र सर्वं हि वाक्यं सावधारणमिति न्यायमनुसृत्य क्रियमाणैनकारप्रयोगेण नास्तित्वस्यावधारणादसम्भवाऽशङ्काव्यवच्छेदेऽप्येकान्तनास्तित्वप्रसक्त्या तत् कथं कथञ्चिदस्तित्वनिरुद्धं तत्र सङ्गतमित्याशङ्कोत्तिष्ठते तद्व्यवच्छेदार्थं स्यात्पदप्रयोगः, तेन

कल्पलतिकोपेतम्। स्याद्वाद आश्रयणीय इति शिक्षणं शिरोमणेः

कथञ्चिन्नास्तित्वप्रतीत्या सोपशाम्यतीति स सार्थक एव, एकान्तवचनं मिथ्यावचनमिति जिनप्रवचनतत्त्ववेदिनो मिथ्यावादित्व-परिजिहीर्षया सर्वमपि वाक्यं स्यात्कारपुरस्सरं भाषन्ते, न तु जातुचिदपि स्यात्कारविरहितम्, यद्यपि च लोकव्यवहारपथमवतीर्णा न सर्वत्र सर्वदा साक्षात् स्यात्पदं प्रयुञ्जते, तथापि तत्राऽप्रयुक्तोपि सामर्थ्यात् स्याच्छब्दो द्रष्टव्यः, प्रयोजकस्य कुशलत्वात्, उक्तञ्च—"अप्रयुक्तोपि सर्वत्र, स्यात्कारोऽर्थात्प्रतीयते। विधौ निषेधेऽन्यत्रापि, कुशलश्चेत्प्रयोजकः ।१। इति, अत्रान्यत्रापीति अनुवादातिदेशादिवाक्येषु, आद्येन द्वितीयेन च कथञ्चिदस्तित्वे कथञ्चिन्नास्तित्वे च ज्ञाते प्राधान्येन तदुभयमस्ति न वेति संशयमूलकतद्धर्मजिज्ञासामूलकतद्धर्मप्रश्नसमुद्भवे स्यादस्ति स्यान्नास्तीत्याकारकस्य तृतीयभङ्गस्य समुद्भवः, एवमवक्तव्यत्वादिधर्मजिज्ञासामूलभूतसंशयनिवर्त्तकानां चतुर्थादिभङ्गान्तराणां समुद्भवो ज्ञातव्यः, एवं भेदाऽभेदनित्यत्वाऽनित्यत्वादिविरुद्धधर्मापेक्षाभेदप्रयोज्याविरोधद्योतकस्यात्पदलाञ्छितसप्तभङ्ग्यन्तररचना ज्ञातव्येति भावः। विज्ञानवादिमतं न प्रमाणमिति प्रकृतज्ञापनार्थं षट्चत्वारिंशत्तमश्लोकसधिकुर्वन्नाह—अथेति

विश्वं ह्यलीकमनुपाख्यमलं न बौद्ध, सोढुं विचारमिति जल्पसि यद्विचारात् ॥
कः कीदृगेष इति पृष्ट इह त्वदीयै—र्यद्वक्ति तद्बठर भौतविचारकल्पम् ॥ ४६ ॥

विश्वमित्यादिमूलम्, अत्र बौद्धेति सम्बोधनपदम्, जल्पसीति क्रियापदम्, कर्तृपदञ्च त्वमितिशेषः। यद्विचारादित्यत्र यच्छब्देन विचारपदस्य कर्मधारयसमास इति तेन विचारस्य संशब्दनम्, आश्रित्यार्थे पञ्चमी, तथा च यं विचारमाश्रित्येत्यर्थः, अस्य च जल्पसीत्यत्रान्वयः, जल्पनक्रियायास्सकर्मकत्वात्तत्कर्माभिलापिन इति शब्दसाभिलाप्यमुल्लिखति विश्वं ह्यलीकमनु-

पारुयं विचारं सोढुं नालमित्यनेन, अत्रापि विशेष्यपदं विश्वम् अलीकमित्यादि विशेषणपदम्, पृच्छास्वरूपमाह कः कीदृगेष इतीति, एषः विचारः, कैः कुत्र पृष्ट इत्यत आह इह त्वदीयैरिति कथायां भवदीयैरित्यर्थः। हे प्रभो इति शेषः, कथाधिकरणकभवदीयकर्तृकोक्त रूपपृच्छाकर्म बौद्धो यदुक्तिं तत् कीदृगित्यत आह तदूथठर भौतविचारकल्पमिति, बठरेति अधिक्षेपे, तद्दूषणं, मूर्खविचारकल्पमिति सङ्क्षेपार्थः, उक्तश्लोकविस्तरार्थं ग्रन्थकार एवाह—

अलीकं विचारासहमनिर्वचनीयं वा यमाश्रित्य जगदुद्गीयते स एव विचारश्चिन्त्यतां कोऽसौ कीदृग्वेति, सतर्कं प्रमाणं वाक्यारूढमिति चेत्, जगदलीकत्वादिसाधकं प्रमाणं विचारसहं नवा, अन्त्ये किं तेन भौतविचारकल्पेन। तथा हि—केनचित् भौतेन राजद्वारि द्विरदमवलोक्य विकल्पितं किमयमन्धकारो मूलकमत्ति, आहोस्विज्जलवाहो बलाकावान् वर्षति गर्जति च, यद्वा बान्धवोऽयं 'राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः' इति परमाचार्यवचनात्, अथवा योऽयं भूमौ दृश्यते तस्य छायेति।

अलीकमिति, अलीकमित्यस्य विचारं सोढुं नालमिति मूलोक्तपदनिकृष्टार्थकस्य विचारासहमित्यस्य च अनुपाख्यमितिमूलपदार्थस्याऽनिर्वचनीयमित्यस्य च विश्वमितिमूलपदपर्यायजगदितिपदेन सहाऽन्वयः, यमाश्रित्य यं विचारमाश्रित्य, तर्कप्रमाणयोरलीकादिसाधकयोः परार्थं कथायामेव प्रदर्शनीयत्वेन तयोर्वाक्यारूढत्वमावश्यकमिति वाक्यारूढं तर्कसहितं यत्प्रमाणं तदात्मक एव विचारोऽलीकादिप्ररूपक इत्याशयेन बौद्धश्शङ्कते सतर्कमिति, नैयायिकस्स्वाशयप्रकटनेन समाधत्ते जगदलीकत्वादीति, भौतेन मूर्खेन, बलाकावान् बकपङ्क्तिमान्, द्विरदात्मकधर्मिस्वरूपानवबोधकमयमितिपदमत्रानुपञ्जनीयम्, एकस्मिन् धर्मिणि

तत्तद्धर्मारोपहेतूनाह—

आद्ये कृष्णत्वेनान्धकारारोपः,आस्यप्रत्यासन्नत्वेन दन्तयोर्भक्ष्यमाणश्वेतमूलकत्वारोपः, द्वितीये जलवाहविकल्पेऽपि दन्तयोरेव बलाकारोपः, मूत्रधारायां वर्षणारोपः बृंहिते गर्जितारोपः, तृतीये इदंत्वावच्छेदेन बान्धवपदवाच्यत्वारोपः, चतुर्थो विकल्पश्छायाच्छायावतोऽर्यत्ययभ्रान्त्या,दूषितं च तदन्येन भौतेन, नाद्यः, तस्य शूर्पयुगलप्रस्फोटनाभावात्, अत्र कर्णयोः शूर्पत्वारोपः, न द्वितीयः, तस्य स्तम्भचतुष्टयाभावात्, अत्र पादेषु स्तम्भत्वारोपः, न तृतीयः, तस्य लगुडभ्रामणाभावात्, अत्र द्विरदकरे लगुडत्वारोपः, न चतुर्थः, तस्य नरशिरःशतोद्गिरणाभावात्, अत्र गजपुरीषपिण्डेषु नरशिरस्त्वारोपः, पायोरास्यत्वारोपेणोत्सर्जने उद्गिरणभ्रान्तिरिति, ततो न किञ्चिदेतदिति, किमेतावता द्विपस्वरूपं व्यावर्त्तते,

आद्य इति, बृंहिते गजगर्जने, गर्जितारोपः मेघशब्दारोपः, नाद्य इति अन्धकारस्य शूर्पयुगलप्रस्फोटनाभावात् अस्य च द्विरदस्य शूर्पयुगलप्रस्फोटनभावान्नायमन्धकार इत्यर्थः। जलवाहस्य स्तम्भचतुष्टयाभावादस्य च स्तम्भचतुष्टयभावान्नायं जलवाह इत्याह न द्वितीय इति, बान्धवस्य लगुडभ्रामणाभावात् अस्य च लगुडभ्रामणान्नायं बान्धवशब्दवाच्य इत्याह न तृतीय इति, न चतुर्थ इत्यत्र निषेधे हेतुमाह तस्येति छायास्वरूपस्येत्यर्थः। उपमाने दर्शितां प्रक्रियां उपमेये सङ्गमयति

एवं विचारासहेन विचारेण जगदपि नालीकतामनुभवितुमुत्सहत इति, आद्ये स्वयमेव विलीनमलीकादिवादैर्नोत्तरप्रतीक्षापि, तर्कप्रमाणवाक्यानां पारमार्थिकत्वे विषयवक्तृप्रयोजनादीनामपि तथात्वस्यावर्जनीय-

त्वादिति भावः। लोकसिद्धं प्रमाणमिति चेत्, तस्य तर्हि परिकरशुद्धिरपि तथैव ग्राह्या, परिकरो वाद्यादिः, अन्यथा लोकस्यापि व्यतिक्रमे विचारस्य यादृच्छिकवाङ्मात्रत्वापत्तेः, यादृच्छिकत्वमुपेक्षापूर्वकत्वम्,

एवमिति, आद्ये जगदलीकत्वादिसाधकप्रमाणात्मकविचारस्य विचारसहत्वपक्षे, उपेक्षापूर्वकत्वमिति, तथा च विचारस्यात्यनादरणीयत्वमेव स्यादिति भावः। ननु लोके कीदृक्परिकरशुद्धं वाक्यं यथार्थशाब्दबोधात्मकार्थप्रतिपत्तेरङ्गमित्यत आह—

लोके चाकाङ्क्षायोग्यतासत्तिमत्तया प्रतिसंहितमश्लिष्टार्थं प्रमाणान्तराप्रतिहतं स्ववचनस्वक्रियास्वज्ञानव्याघातादिदोषरहितं स्वार्थप्रतिक्षेपकयुक्तेरनाक्षेपकं वाक्यमर्थप्रतिपत्तेरङ्गम्, यथा पर्वतोऽग्निमानिति, आकाङ्क्षादीनां ज्ञातानां प्रयोजकत्वपक्षे प्रतिसंहितं ज्ञातं, संसर्गावगमप्रागभावरूपाया आकाङ्क्षाया अव्यवधानेनोपस्थितिरूपाया आसत्तेः बाधकप्रमाभावरूपायाश्च योग्यताया न ज्ञानं हेतुरिति मते सम्बद्धमित्यर्थः।

लोके चेति, प्रतिसंहितमिति समभिव्याहारादिरूपाणामाकाङ्क्षायोग्यताऽऽसत्तीनां ज्ञानं कारणमितिपक्षे ज्ञातम्, संसर्गावगमप्रागभावादिरूपाणां तेषां स्वरूपसतां कारणत्वं नतु तज्ज्ञानस्येतिपक्षे सम्बद्धमित्यर्थः, काव्येऽलङ्कारसम्पादकतया श्लिष्टार्थत्वं गुणः कथायां तु दोषः, तदभाव एव गुण इत्यभिप्रायेणाह—

अश्लिष्टार्थमिति कथाभिप्रायेण, अन्यथा छलाद्यापत्तेः, प्रमाणेति, यद्यपि प्रमाणान्तरप्रतिहतमर्थबाधादयोग्यमेव, तथापि सजातीयान्वयदर्शनं योग्यतेत्यभिप्रायेणेदमित्येके। अयोग्यत्वेऽपि प्रमाणान्तरप्रतिघातस्योद्भटत्वात् पृथगुपन्यास इत्यन्ये। योग्यताविवरणमेवोत्तरमित्यपरे। बाधाभावस्यापेक्षणीयत्वेऽन्वयदर्शनस्य

प्रयोजकतायां मानाभावः, विना च प्रमाणप्रतीघातं क्व बाधोदयः, योग्यताविवरणपरत्वे ह्रदो वह्निमानित्युदाहृत्य शशो विषाणीति नोदाहरेदिति, त्रिष्वपि क्रमेणारुचिबीजानीति गुणानन्दः।

अश्लिष्टार्थमिति नानार्थानभिधायकं स्पष्टार्थमिति यावत्, कथाभिप्रायेणेति अत्र कथापदेन जल्पवितण्डयोरेव ग्रहणं, नतु वादस्य, तत्र तत्त्वनिर्णयेच्छया प्रवृत्तेश्छलाद्युपन्यासस्याऽसामयिकत्वादिति ध्येयम्, अन्यथा कथायां श्लिष्टार्थवाक्योपन्यासे, सजातीयान्वयदर्शनमिति—ययोरन्वयबोधोऽपेक्षितस्तत्सजातीययोरन्वयदर्शनं योग्यता, यथा ययोर्नीलघटयोरन्वयबोधोऽपेक्षितस्तत्सजातीययोर्नीलान्तरघटान्तरयोस्संसर्गज्ञानमित्यर्थः। अयोग्यत्वेपि प्रमाणान्तरप्रतिघातस्थलेऽर्थाऽबाधरूपयोग्यताविरहेपि, उद्भटत्वात् कार्यप्रतिरोधे प्रबलत्वात्, प्रमाणान्तराप्रतिहतमिति विशेषणं न स्वतन्त्रं, किन्तु योग्यतास्वरूपोपदर्शकमेवेति मतान्तरमाह योग्यताविवरणमेवेति। उत्तरमिति प्रमाणान्तराप्रतिहतमिति विशेषणमित्यर्थः। प्रमाणान्तराऽप्रतिहतमिति विशेषणस्य सार्थकत्वे प्रकारत्रयमुपदर्शितम्, तत्र प्रकारत्रयेपि गुणानन्दोक्तान्यरुचिबीजानि यथाक्रममाह बाधाभावस्येत्यादिना।

स्ववचनव्याघातः स्ववचनयोर्मिथो विरुद्धार्थत्वम्, स्वक्रियाव्याघातः स्वकृतिसाध्येनाहं मूक इति वाक्येनैतदर्थबाधः। स्वज्ञानव्याघातः स्वक्रिययेमं न जानामीति वाक्येनाक्षिप्तेनेदमाकारज्ञानेन तदर्थे बाधः, स्वार्थस्य कर्णप्रविष्टगजगर्जननिराकरणार्थभेषजाभिधानस्य प्रतिक्षेपिका युक्तिरत्यन्तासतो निवार्यस्य निराकरणार्थं भेषजाभिधानायोग्यत्वं, तदनाक्षेपकं तदज्ञापकम्, अश्रोतर्यभिधानवैफल्यं स्वार्थप्रतिक्षेपिका युक्तिरित्यन्ये।

एतदर्थबाध इति, यदि त्वं मूकस्तर्हि कथमहं मूक इत्यपि वक्तुं शक्त इति स्वक्रिययाऽहं मूक इत्युच्चारणात्मिकयाऽहं मूक इति

वाक्यार्थबाध इत्यर्थः । आक्षिप्तेनेति, पुरोवर्त्तिन्येवार्थे इदं प्रयोगः, स च तदर्थज्ञानं विना न भवितुमर्हति, वचनरचनां प्रति तदर्थज्ञानस्य कारणत्वादित्युक्तप्रयोगकार्यलिङ्गककारणानुमानसिद्धेनेत्यर्थः । तदर्थे इमं न जानामीति वाक्यार्थे, स्वार्थप्रतिक्षेपकयुक्तेरनाक्षेपकमिति विशेषणं विवृणोति स्वार्थस्येति, कर्णकुहरेऽतिसूक्ष्मेऽतिस्थूलकायस्य गजस्य प्रवेश एवाऽसम्भवीत्याशयेनाह अत्यन्तासत इति कर्णप्रविष्टगजगर्जनस्येत्यर्थः,

उक्तविपरीतमनङ्गम्, तत्र क्रमेणोदाहरणानि, अयं पर्वतो देवदत्तो गौर इति १ जलहृदोऽग्निमानिति २ गिरिर्देवदत्तेन भुक्तमग्निमानिति ३ श्वेतो धावतीति ४ शशो विषाणीति ५ माता वन्ध्येति ६ अहं मूक इति ७ इमं न जानामीति ८ मम कर्णे प्रविश्य गजो गर्जति औषधमुच्यतामिति ९ द्वितीयार्थे गर्जतीत्यन्तस्य न शृणोमीत्यर्थः, तदर्थश्च साधनं दूषणं च, तदर्थः कथान्तर्गतवाक्यविशेषार्थः, साधनं व्याप्तिपक्षधर्मतौपयिकयावद्रूपोपेतं लिङ्गं, यथा विशिष्टधूमवत्त्वादिति, लिङ्गाभासमितरत्, यथा जलाशयत्वादिति, तत्परिकरश्च तर्कः, सोपि व्याप्तिबलमालिङ्ग्यानिष्टप्रसङ्गरूपः, अनिष्टं च द्विविधं प्रामाणिकपरित्यागोऽप्रामाणिकपरिग्रहश्च, यथा यद्युदकं पिपासादुःखन्न शमयेन्न पीयेत्, यदि च तमेव परमन्तर्दहेत् तदविशिष्टं मामपि दहेदिति, इतरस्तु तर्काभासः ॥

उक्तविपरीतमनङ्गमिति, आकाङ्क्षायोग्यताऽऽसत्त्यभावविशिष्टं श्लिष्टार्थमित्यादिरूपं वाक्यमर्थप्रतिपत्तेरहेतुरित्यर्थः, श्वेत इति श्वा इतः श्वेतः शुक्लो वा श्वेत इत्यर्थः । द्वितीयार्थे अश्रोतर्यभिधानेत्यादिपक्षे । तदर्थश्च साधनं दूषणं चेति—यथोक्तरूपं वाक्यमर्थप्रतिपत्तेरङ्गं तथा तदर्थः साधनं सद्दूषणं चार्थप्रतिपत्तेरङ्गमित्यर्थः । निर्विशेषितधूमस्य वह्निव्यभिचारित्वाद्धूमं विशि-

नष्टि–विशिष्टेति, मूलावच्छिन्नेत्यर्थः। तत्परिकरश्च तर्क इति अर्थप्रतिपत्तेरङ्गमित्यनुषज्यते। तत्परिकरः साधनपरिकरः। सत्तर्कस्यैव विचाराङ्गत्वं न तर्काभासस्येति सत्तर्कस्वरूपप्रतिपादनायाह सोपीति, तर्कोपीत्यर्थः। व्याप्तिबलमित्यादि, व्याप्यव्यापकभावमूलको व्याप्यारोपेण व्यापकारोपलक्षणोऽनिष्टापादनात्मक इत्यर्थः। द्विविधस्यापि यथाक्रमं दृष्टान्तमाह यथेति, तमेव परं पुरुषान्तरमेव, अन्यत्र तदेवेति पाठः, अस्य च उदकमेवेत्यर्थः। एतत्पक्षे परमित्यस्य पुरुषान्तरमित्यर्थः, इतरः व्याप्तिबलविकलोऽनिष्टप्रसङ्गः, अत्राप्यनिष्टं पूर्ववद्द्विविधमिति क्रमेण द्रष्टान्तद्वयमाह—

यथा यदि जलं पिपासां नाशमयिष्यद्रूपवदपि नाभविष्यत्, यथाकाशं, यदि च तमेव परमन्तरधक्ष्यत् मामपि सुरभिमकरिष्यदिति, दूषणमपि स्वप्रतिक्षेपकयुक्तेरनाक्षेपकं दूष्यासाधकत्वाविनाभूतं सिद्धम्, यथाऽग्निमत्त्वे साध्ये प्रमेयत्वमहेतुः, अनैकान्तिकत्वादित्यादि। अन्यथा तु तदाभासं, यथा धूमोऽयं नाग्निसाधकः सर्वथानुपलभ्यमानोपाधिशङ्काग्रस्तत्वात्, प्रमेयत्वाद्विरुद्धत्वाद्वेति। नन्वीदृशयोः साधनदूषणयोरेव विचाराङ्गत्वे कथं प्रत्यक्षाद्युपन्यासः कथायां स्यादिति चेत्, तस्याप्यनुमानच्छाययैव विचाराङ्गत्वात्, तर्कमनन्यथासिद्धिं च पुरस्कृत्यैव प्रवृत्तेरिति ॥

यथा यदि जलमित्यादि, अन्यथेति–स्वप्रतिक्षेपकयुक्तेराक्षेपकं दूष्याऽसाधकत्वाऽविनाभूतत्वाभाववदसिद्धं दूषणं तु दूषणाभासमित्यर्थः, धूमेऽग्निसाधकत्वाभावसाधकस्सर्वथानुपलभ्यमानोपाधिशङ्काग्रस्तत्वादिति हेतुर्न धूमेऽग्निसाधकत्वाभावसाधकः सर्वथानुपलभ्यमानोपाधिशङ्काग्रस्तत्वादितिरीत्या स्वप्रतिक्षेपकयुक्तेराक्षेपकत्वाद् दूषणाभासः, प्रमेयत्वादिति च हेतुर्दूष्यीभूते धूमेऽसाधकत्वा

ऽविनाभूतत्वाभावाद्दूषणाभासः, विरुद्धत्वादिति च हेतुःपक्षीभूते धूमेऽविद्यमानत्वेनाऽऽसिद्धत्वाद्दूषणाभास इत्याशयेनोदाहरणार्थमाह यथाधूमोऽयमित्यादिना, ईदृशयोरिति–व्याप्तिपक्षधर्मतौपयिकरूपपञ्चकोपेतत्वविशिष्टस्वप्रतिक्षेपकयुक्त्यनाक्षेपकदूष्यासाधकत्वाविनाभूतसिद्धत्वविशिष्टयोरित्यर्थः, अनुमानच्छायया इदमित्थमभ्युपगन्तव्यमनन्यथासिद्धप्रत्यक्षादिप्रमाणसिद्धत्वादित्येवं परार्थानुमानमर्यादया, तत्र हेतुमाह तर्कमित्यादिना, तथा च तत्राप्येषैव रीतिरनुगन्तव्येति भावः। विचारप्रवृत्तिर्द्विधा भवति स्वपक्षसाधनपरपक्षदूषणाभ्याम्, तत्र प्रथमामधिकृत्य विज्ञानवादिनं प्रतिक्षेप्तुमाह—

**एवं व्यवस्थिते लोकव्यवहारे साधनोपक्रमेण यदि विचारयसि प्रतिज्ञैव तावन्नाङ्गं धारयति। तथा हि—न किञ्चिदस्ति ज्ञेयत्वाद्रज्जुसर्पवत् १ न किञ्चित् सत्यं ज्ञानत्वाद्रज्जुसर्पज्ञानवत् २ न किञ्चित्कारकमसत्त्वात् शशविषाणवत् ३ न किञ्चिद्विचारसहं विकल्पानुपपत्तेर्दर्पणमुखवत् ४ सत्त्वे बाध्यत्वस्यासत्त्वे च व्यवहार्यत्वस्यायोगात्, न किञ्चित् सालम्बनं प्रत्ययत्वात् स्वप्नप्रत्ययवत् ५ न किञ्चिद्दर्शनं कर्मानुपपत्तेः छेद्यानुपपत्तौ छिदावत् ६ न कश्चित्सिद्धान्तः मिथो व्याघातान्मिथः शोषकनिर्वापकानलसलिलवत् ७ इति रीत्या प्रतिज्ञापि नास्ति, न सत्या, न कारिका, न विचारसहा, तद्विज्ञानमपि न सालम्बनं, तत्फलमपि न दर्शनं, तदर्थोऽपि न सिद्धान्त इत्यादेरापत्तेः,**

एवं व्यवस्थित इत्यादि, विकल्पानुपपत्तिहेतोरुपपादनायाह सत्त्वे बाध्यत्वस्येति, यथा दर्पणमुखस्य सत्त्वे बाध्यत्वमसत्त्वे व्यवहार्यत्वमनुपपन्नं तथा जगतोपीति नोक्तहेतुरसिद्ध इति भावः। प्रतिज्ञाऽपि नास्तीति पक्षतावच्छेदकसामानाधिकरण्येन सत्ता-

कल्पलतिकोपेतम्।

विज्ञानवादिमतखण्डनम्

प्यनुमानानि स्युस्तदा यस्मिन् कस्मिँश्चिद्वस्तुनि साध्यसिद्धौ चरितार्थत्वात् वस्तुमात्रेऽभिमता साध्यसिद्धिर्न स्यादिति पक्षतावच्छेदकावच्छेदेनैवोक्तानुमानान्यभ्युपगन्तव्यानि, तथा च पक्षतावच्छेदकीभूतस्य वस्तुत्वपर्यवसायिनः किञ्चित्त्वस्योक्तप्रतिज्ञास्वपि विद्यमानत्वेन तत्राप्युक्तहेतुभ्यः नास्तित्वासत्यत्वाद्यापत्तिस्स्यादिति भावः, इष्टापत्त्याऽऽशङ्कते—

इष्यत एवेदमिति चेत्, न, इच्छामात्रेण व्याघातानिवृत्तेः। यदि हि न कश्चिदस्तीति प्रतिज्ञार्थः प्रतिज्ञां स्पृशेत् कथमयमर्थः प्रत्येतव्यः, न चेत्, कथं सा उपपन्नाऽसतीत्यर्थः। तदनुपपन्नत्वे च कथं प्रतिज्ञार्थ उपपद्येत, तदिदमायातं स्वविषमूर्च्छिता भुजङ्गी दशतीति, एवं प्रतिज्ञायाः साधनानङ्गत्वेनोदाहरणादेः सत्त्वे बाधोऽनैकान्तिकत्वं च, असत्त्वे तु न तदर्थसिद्धिः, यदि सर्वं ज्ञानमप्रमेति ज्ञानमप्रमा तर्हि सिद्धं ज्ञानप्रामाण्यम्, अथ प्रमा, न तर्हि सर्वज्ञानाप्रामाण्यमित्यादिकमुन्नेयम् ॥

इष्यत एवेति। इदं—प्रतिज्ञाऽपि नास्तीत्यादिकम्, व्याघातमेवोपपादयति यदि हीति, प्रतिज्ञां स्पृशेदिति—प्रतिज्ञायां वर्तेत अस्तित्वाभावरूपार्थाश्रया प्रतिज्ञा स्यादिति यावत्। कथमयमर्थः प्रत्येतव्य इति—स्वरूपतः प्रतिज्ञैव नास्तीति तद्विषयीभूतोऽस्तित्वाभावरूपोऽर्थः कथं श्रद्धेयः, न कथञ्चिदित्यर्थः। न चेदिति—प्रतिज्ञां न स्पृशेत् चेदित्यर्थः, तत्राह—कथमिति, प्रतिज्ञार्थस्य प्रतिज्ञायामसत्त्वे प्रतिज्ञाया एव सत्त्वेन वस्तुत्वव्यापकत्वेनाभ्युपगतस्याऽसत्त्वरूपस्य तदर्थस्य तस्यामेव बाधितत्त्वेनाऽसत्याऽसति च तस्मिन्नर्थे प्रतिज्ञा कथमुपपन्ना, न कथञ्चिदित्यर्थः। तदनुपपन्नत्वे—इति प्रतिज्ञाया अनुपपन्नत्व इत्यर्थः। अत्रेदमवधेयम्, न किञ्चिदस्तीति प्रतिज्ञया प्रतिज्ञायामस्तित्वं प्रतिषिध्यते न वा, प्रतिषेधे प्रतिज्ञायास्स्वरूपत एवाऽभावादस्तित्वाभावरूपोऽर्थः कस्या

विषयस्स्यात्, न वेति पक्षे प्रतिज्ञाया एव सत्त्वेन कथमऽसत्त्वरूपः प्रतिज्ञार्थः सर्वस्मिन् सङ्गच्छेत्, सर्वान्तर्गतायां प्रतिज्ञायामेव बाधितत्वादिति। उदाहरणोपनयद्वयवादिना बौद्धेन प्रतिज्ञायास्साधनानङ्गत्वेन स्वीकारेऽप्युदाहरणस्योपनयस्य च साधनाङ्गत्वेन स्वीकारात्तस्य सत्त्वे तत्राऽसत्त्वरूपसाध्याभावाद् बाधः, तत्र हेतोस्सत्त्वेन व्यभिचारश्च, असत्त्वे च तन्निबन्धना साध्यसिद्धिरपि न स्यादित्याह प्रतिज्ञाया साधनानङ्गत्वेनेति, सर्वस्यां प्रतिज्ञायां साध्यकोटौ तत्त्वत इति विशेषणं देयं तथा च जगतः परमार्थदृष्ट्या नास्तित्वादिस्वरूपत्वेपि काल्पनिकास्तित्वादिस्वरूपमादाय न प्रतिज्ञाव्याघातादिदोष इत्याशयेनाशङ्कते—

तत्त्वत इति विशेषणादयमदोष इति चेत्, तर्हि विचारो वा स्यात्, लोकमर्यादातिक्रमो वा, न आद्यः, पूर्वमेव निरस्तत्वात्, तस्य प्रतिज्ञादिरूपतया कुलीरस्येव स्वप्रसूतयुक्त्यपत्यैनैव हतत्वात्, द्वितीये तु स्वच्छायातिक्रमवत् स एव व्याघातः, यदि हि लोकमर्यादाच्छायातिक्रमः, न विचारस्वरूपस्थितिः, तत्स्वरूपस्थितिश्चेत्, न तदतिक्रम इति। प्रतिषेध्यसिद्धासिद्धिव्याघातश्च, यदि हि प्रतिषेध्यं सिद्धं, नात्यन्तं तत्प्रतिषेधः, न चेत्, न तराम्।

तत्त्वत इति। तत्त्वत इत्यत्र तत्त्वं विचारो लोकमर्यादातिक्रमो वेति विकल्पयति—तर्हीति, तस्य—विचारस्य। यदि प्रतिषेध्यमस्तित्वादिकं केनचित्प्रमाणेन न सिद्धं तर्हि तस्यालीकस्यासत्ख्यातेर्निषेधान्निषेधाऽयोगेन न तन्निषेधस्सम्भवतीत्याह—नचेदिति, क आह प्रतिषेध्यमस्तित्वादिकं न सिद्धमिति किन्तु लौकिकव्यवहारसिद्धं, निषिध्यते तु तत्त्वत इति न व्याघात इत्याशङ्कते—

लोकव्यवहारसिद्धमिति चेत्, सिद्धमेव तर्हि, न ह्यन्यतोऽपि किञ्चित् सिद्ध्यति, नाप्यमबाध्यो व्यवहार

इति चेत्, यद्ययमेकत्र बाध्यतेऽन्यत्र तद्बाधप्रसङ्गः, सर्वत्र बाध्यत इति चेत्, तदपेक्षसिद्धिना व्यवहारेण, अनपेक्षेण वा, अव्यवहारेणैव वेति, आद्ये यस्तावत्तदपेक्षसिद्धिः स कथं तमेव बाधेत, नह्यनुष्णत्वानुमानेनोष्णत्वग्राहिप्रत्यक्षबाधो लोके, प्रतियोगिज्ञानाधीनप्रवृत्तिकं निषेधकं प्रमाणं नोपजीव्यप्रतियोगिज्ञानबाधकमिति निर्गलितार्थः,। द्वितीयस्त्वसम्भवी, नहि निषेधकं प्रमाणं निषेध्यसिद्धिनिरपेक्षं भवितुमुत्सहते। अपि च हेतोर्व्याप्तिग्रहो निषेधमात्रेण समं, सत्त्वादिसम्वलितेन वा निषेधेन। आद्ये न ततः सत्त्वादिनिषेधो मानाभावात्,

लोकव्यवहारेति, यदेव लोकानुभवपथाऽऽक्रान्तं तदेव तत्त्वतस्सिद्धमिति न ततोऽन्यत्तेन सिद्ध्यतीति लोकानुभवव्यवहाराभ्युपगमे न तन्निषेध इत्युत्तरयति—सिद्धमेव तर्हीति, अस्तित्वसत्यत्वादिविषयकलोकव्यवहाराधीनसिद्धिकव्यवहारो ह्यस्तित्वसत्यत्वादिलोकव्यवहारमेव बाधेत कथमित्याह आद्ये यस्तावदित्यादि, निषेधकं प्रमाणं बाधकप्रमाणमित्यर्थः।

द्वितीये सत्त्वादेर्नात्यन्तिको निषेधः, प्रमाणसिद्धत्वादिति मन्तव्यम्। तृतीये तु विपरीतापत्तिः, विचारबाध्यत्वमुपक्रम्याविचारबाध्यत्वेन मुद्रणात्। मुद्रणं पर्यवसानम्। न चैतदपि निर्व्यूढं, स ह्ययत्नसिद्धमध्यक्षं वा स्यादनिष्टिमात्रं वा, आद्ये विरोधोऽध्यक्षस्यैव सत्त्वाद्यभ्युपगमात्, असिद्धिश्च, अध्यक्षेण सत्त्वादेरेवावगाहनात्, द्वितीये लोकातिक्रमः, परानिष्ट्या त्वदनिष्टबाधप्रसङ्गश्चेति॥

द्वितीये सत्त्वादेरिति असत्ख्यातेर्निरासादिति शेषः। एतदपि—अव्यवहारबाध्यत्वमपि, निर्व्यूढं निर्वाह्यं प्रमाणोपपन्नमिति यावत्, सः अव्यवहारः, लोकातिक्रम इति अनिष्टमित्येतावन्मात्रेण न किञ्चिद्बाध्यते लोके किन्तु बाधकप्रमाणेनेति तस्या-

तिक्रम इत्यर्थः । अनिष्टमित्येतावन्मात्रेण बाधनं स्यात्तर्हि त्वदनिष्टं न ममेष्टमिति कोपि ब्रूयात्तदा त्वदनिष्टमपि बाधितं स्यादिति दूषणान्तरमप्याह परानिष्ट्येति,

एतेन हेतवोऽपि ज्ञेयत्वादयो निरस्ताः, ते हि स्वार्थप्रतिक्षेपिकां युक्तिमाक्षिपन्ति, स्वसाध्यस्य सर्वासत्त्वादेर्निराकारिणीं युक्तिमुन्नयन्तीत्यर्थः । असतो हेतुत्वानुपपत्त्या हेतोरेव सत्त्वात् १ असत्यस्यानुमितिहेतुत्वानुपपत्त्या हेतुज्ञानस्यैव सत्यत्वात् २ हेतुप्रयोगस्य हेतुज्ञानं प्रति तस्य चानुमितिं प्रति कारणत्वात्,, अन्यथा प्रयोगवैयर्थ्यात् ३ विचारासहस्य हेतुत्वानुपपत्त्या हेतोस्तज्ज्ञानस्य च विचारसहत्वात् ४ हेत्वाद्यनालम्बनस्य प्रत्ययस्यानुमितिहेतुत्वानुपपत्त्या हेत्वादिप्रत्ययानां हेत्वाद्यालम्बनत्वात् ५ हेतुसाध्ययोरेव दर्शनत्वात् ६ अन्यथा हेत्वाद्यसिद्धेः, हेतुसाध्यादेरेवाभ्युपगम्यमानत्वेन सिद्धान्तत्वात् ७ । निषेधसिद्धिं चापेक्षन्ते, तदसिद्धौ तदभावासिद्धेरन्वयतो व्यतिरेकतश्च व्याप्तिग्रहायोगात्,, तत्सिद्धौ च नात्यन्तिकस्तन्निषेध इति बोध्यम् ॥

एतेन वक्ष्यमाणदोषेण, ते ज्ञेयत्वादयः,, असत्यस्येति अप्रमात्मकज्ञानस्येत्यर्थः,, अनुमितीति प्रमात्मकानुमितीत्यर्थः, सत्यत्वादिति प्रमात्मकत्वादित्यर्थः,, यद्वा असत्यस्य अप्रामाण्यज्ञानास्कन्दितस्य,, सत्यत्वात् अप्रामाण्यज्ञानानास्कन्दितत्वादित्यर्थः । हेतुप्रयोगो हि परानुमानार्थं क्रियते तेन चेत् हेतुज्ञानं न जन्यते तदा तद्रूपकारणाभावात् परस्यानुमितिरेव न स्यादिति स व्यर्थस्स्यात् तस्य हेतुज्ञानद्वारा परानुमितिकार्यकारित्वादित्याशयेनाह अन्यथेति, विचारसहत्वादिति,, अन्यथा कारणत्वमेव न स्यादिति भावः । अपेक्षन्ते इति ज्ञेयत्वादिहेतव इति प्रकृतम् । तदसिद्धौ अस्तित्वादीनां निषेध्यानामसिद्धौ । तत्सिद्धौ निषेध्यसिद्धौ,

अनैकान्तिकौ च प्रथमद्वितीयौ, स्वफल एव व्यभिचारात्, अभावे साध्ये प्रतियोगिसामानाधिकरण्यमेवानैकान्तिकत्वम्, स्वस्य हेतोः, फलेऽनुमितौ, तस्या असत्त्वे साध्यासिद्धिः, असत्यत्वे च विपरीतापत्तिरित्यर्थः, असिद्धौ तृतीयचतुर्थौ, अप्रसिद्धेः, स्वरूपासिद्धेश्च, बाह्यस्याबाध्यत्वेन सत्त्वोपपत्तेः। अनैकान्तिकश्च पञ्चमः, पूर्ववत् स्वफल एवेत्यर्थः, असिद्धो व्याहतोऽनैकान्तिकश्च षष्ठः, कर्म हि विषयो वा क्रियाजन्यफलशालि वा, धात्वर्थतावच्छेदकफलशालि वा, आद्ये तदनुपपत्तिरसिद्धा, ज्ञानमात्रस्य सद्विषयत्वात्, द्वितीये भागासिद्धिः, प्रायशो ज्ञेयस्य ज्ञानजन्योपादानादिशालित्वात्,

प्रथमद्वितीयौ ज्ञेयत्वज्ञानत्वहेतू। अभावे अस्तित्वादिनिषेधे। स्वफल इत्यस्य विवरणमाह स्वस्य हेतोरिति, ननु नानुमितेस्सत्त्वं सत्यत्वञ्चाभ्युपगम्येते येन तद्रूपप्रतियोग्याश्रयभूतायामनुमितौ ज्ञेयत्वस्य ज्ञानत्वस्य च हेतोस्सत्त्वेन व्यभिचारस्स्यात्, किन्त्वसत्त्वमसत्यत्वञ्चेत्याशङ्कायामाह तस्या इति—अनुमितेरित्यर्थः। अनुमितिस्स्वरूपतएवासद्रूपेति कथं तद्रूपया तया साध्यसिद्धिस्स्यादिति भावः। किञ्चिज्ज्ञानं न सत्यमित्यनुमितेरसत्यत्वेऽप्रामाण्यं स्यात् तल्लक्षणत्वात्तत्र तस्य, तथा चाप्रमात्मिकयोक्तानुमित्याऽसत्यत्वासिद्ध्या सर्वज्ञानस्य प्रामाण्यलक्षणं सत्यत्वमेव स्यादित्याह असत्यत्वे चेति, तृतीयचतुर्थौ असत्त्वविकल्पानुपपत्तिहेतू, अप्रसिद्धेरिति सत्त्वस्य केवलान्वयित्वेन स्वरूपतोऽसत्त्वहेत्वसिद्धेरित्यर्थः, स्वरूपासिद्धेश्चेति बाह्यस्य प्रमाणतस्सिद्धत्वेन पक्षे विकल्पानुपपत्तिहेत्वभावात्स्वरूपासिद्धेश्चेत्यर्थः, यदालम्बनानुमितिस्तया तत्सिद्धिरिति सालम्बनत्वाभावसिद्ध्यन्यथानुपपत्त्या तदालम्बनायां प्रत्ययत्वहेतुफलभूतायामनुमितावेव प्रत्ययत्वहेतुर्व्यभिचारीत्याह अनैकान्तिकश्च पञ्चम इति, पूर्ववदित्य-

स्यार्थमाह स्वफल इति, यद्वा कर्मानुपपत्तिहेतुः, उक्तहेतुघटककर्मपदार्थं निरूप्याऽसिद्धत्वमुपपादयति कर्म हीत्यादिना, इष्टसा-
धनताज्ञानादिकारणसमाजसत्त्वे यद्विषयकज्ञानं तेन तद्विषयकप्रवृत्तिर्जन्यत इत्युपेक्षणात्मके पक्षान्तर्गते ज्ञाने ज्ञानजन्योपादानादि-
शालिरूपकर्मानुपपत्तिरूपहेतोस्सत्त्वेऽपि प्रवर्तके ज्ञाने उक्तहेतोरसत्त्वाद्भागासिद्धिस्स्यादित्याह द्वितीय इति, ज्ञाधात्वर्थस्य ज्ञान-
मात्रस्य शक्यत्वेऽवच्छेदकं न किञ्चित्फलमिति ज्ञाधात्वर्थतावच्छेदकफलशालित्वरूपज्ञानकर्मत्वस्य हेतावप्रभानेनाज्ञाताद्धेतोस्साध्य-
सिद्धिर्न स्यात्, अज्ञातस्य साध्यसाधकत्वे तदुपन्यासोऽनर्थकः, ज्ञातत्वं नोक्तयुक्त्या न सम्भवतीत्यज्ञातस्य साध्यसाधकत्वं कुत्र
व्याहतमित्याशयेनाह—

तृतीये ज्ञातमात्रस्यैवाज्ञातत्वापत्तावज्ञातस्य हेतोर्गमकत्वे व्याघातः साध्यस्यासिद्धिप्रसङ्गः। अथ तयो-
र्ज्ञानमभ्युपेयते तदा तत्रैव व्यभिचार इति। असिद्धोऽनैकान्तिकश्च सत्समः, मिथो व्याघातो हि मिथो बाध्यत्वं,
मिथो विरोधितामात्रं वा, आद्येऽसिद्धिः, प्रामाणिकस्य पक्षस्याप्रामाणिकेनेतरेणाबाधनात्, द्वितीये व्यभिचारः,
प्रत्यक्षविरुद्धपक्षस्य त्वत्सिद्धान्तत्वादिति। सर्व एव च कालात्ययापदिष्टाः। अनेन दृष्टान्ता अपि विसर्जनीयाः

तृतीये तु ज्ञातमात्रस्येति, साध्यस्य हेतोश्च ज्ञानाभ्युपगमे दर्शनत्वाभावस्य साध्यस्याभाववति साध्यज्ञाने हेतुज्ञाने च
धात्वर्थतावच्छेदकफलशालित्वरूपकर्मानुपपत्तिरूपहेतोस्सत्त्वेन व्यभिचार इत्याह अथ तयोरिति, सत्समः मिथोव्याघातहेतुः, नास्ति-
त्वासत्यत्वाद्यात्मकः पक्षः प्रत्यक्षादिप्रमाणविरुद्धोऽपि त्वत्सिद्धान्त इति तत्र सिद्धान्तत्वरूपसाध्याभाववत्युक्तहेतोस्सत्त्वेन व्यभि-
चार इत्याशयेनाह द्वितीये व्यभिचार इति,—सर्व एवेति हेतव इति शेषः, सर्वेषामसत्त्वादीनां साध्यानामभावस्य पक्षे प्रत्यक्षा-

दिना सिद्धत्वादिति भावः। दृष्टान्तोपदर्शनायाह—

ते हि रज्जुसर्पवदित्यादयः,येन च तत्र सर्पस्यासत्त्वं, तज्ज्ञानस्य मिथ्यात्वं,शशविषणस्याकारणत्वं, दर्पणमुखस्य विचारासहत्वं,स्वप्नज्ञानस्य निरालम्बनत्वं,छेद्यानुपपत्तौ छिदानुपपत्तिश्चावधारितानि तेनैव तत्र रज्जोस्सत्त्वम्, असर्पज्ञानस्य सत्यत्वं, शशस्यान्यत्र गवादेर्विषाण एव कारणत्वं, (कारकत्वं,)दर्पणस्य विचारसहत्वं, अस्वप्नज्ञानस्य सालम्बनत्वं, छेद्यनिष्ठच्छिदासिद्धौ ज्ञानकर्मत्वं चोपपादितानीति। तदनुपपत्तौ वा साध्यविकलतया सर्व एवैते दृष्टान्ताभासाः। अन्तिमस्तु साधनविकलः, सिद्धान्तानां हि व्याघातः परस्परविरहरूपत्वलक्षणः, जलानलयोस्तु वध्यघातकभावलक्षणः, न च शब्दसाम्येनानुमानमित्येषा दिग् ॥ ४४ ॥ एवं विज्ञानवादिनो विचारस्य साधनोपक्रमभागो निराकृतः। अथ दूषणोपक्रमभागं निराचिकीर्षुराह—

याद्ये परस्य न च दूषणदानमात्रात्, स्वामिन् जयो भवति येन नयप्रमाणैः ॥
प्राज्ञैः कृतैव बहुधावयविप्रसिद्धि-र्दृक्सङ्क्रमादवतरन्ति न दूषणानि ॥ ४५ ॥

ते हीति, येन चेति–प्रमात्रा ज्ञानेन वेत्यर्थः, अस्यावधारितानीत्यनेनान्वयः, सर्पस्यासत्त्वमिति–अस्याऽप्यवधारितानीत्यनेनान्वयः, एवं मिथ्यात्वमित्यादेरपि, तज्ज्ञानस्य रज्जुसर्पज्ञानस्य, तेनैवेति यच्छब्दापेक्षो निर्देशः, अस्योपपादितानीत्यनेनान्वयः, असर्पज्ञानस्य नायं सर्पः किन्तु रज्जुरियमित्याद्यबाधितज्ञानस्य, सत्यत्वं प्रामाण्यम्। शशस्येति शशसम्बन्धित्वाभाववति गोविषाणे कारणत्वमित्यर्थः। अस्वप्नज्ञानस्य जाग्रद्दशाभाविज्ञानस्य, छेद्यस्य सिद्धौ तच्छिदाया अपि सिद्धि-

रिति छिदाया यथा छेद्यं कर्म तथा ज्ञानस्यापि ज्ञेयं कर्मेत्याह छेद्यनिष्ठेति। अलीकप्रतियोगिताकोऽभावो नाभ्युपगन्तव्य इति पक्षमाश्रित्याह तदनुपपत्ताविति सत्त्वाद्यनुपपत्तावित्यर्थः ॥४४॥ पञ्चचत्वारिंशत्तमश्लोकमवतारयन्नाह—एवमिति, साधनोपक्रमभागो निराकृत इति, एवं व्यवस्थिते लोकव्यवहारे साधनोपक्रमेणेत्याद्यारभ्येत्येषा दिगित्यन्तेन ग्रन्थेन साधनोपक्रमभागो निराकृत इत्यर्थः। बाह्ये परस्येत्यादिश्लोकस्य स्वामिन् परस्य विज्ञानवादिनो जयो न च भवति, जये हेतुमाह बाह्ये दूषणदानमात्रादिति, निषेधे हेतुमाह येन प्राज्ञैरवयविप्रसिद्धिर्बहुधा कृतैवेति, येनेति यस्मात्कारणादित्यर्थः, कैरिति करणापेक्षायामाह नयप्रमाणैरिति, नन्ववयविनि दूषणानि प्रोल्लसन्त्येवेति कथं तत्प्रसिद्धिर्युक्तेत्याशङ्कायामाह हृत्सङ्क्रमादित्यादि, दूषणानि परोक्तानि दूषणानि, नावतरन्ति अवयविनीति शेषः, निषेधे हेतुमाह हृत्सङ्क्रमादिति, तथा च "यत्रोभयोस्समो दोषः परिहारोऽपि वा समः (परिहारस्तयोस्समः) नैकः पर्यनुयोज्यः स्यात्तादृगर्थविचारणे ॥१॥ इति न्यायाद् बाह्ये उपन्यस्यमानानां दूषणानां तदभ्युपगते ज्ञानेऽपि सङ्क्रमाद्दोषसाम्यात्परैर्नोच्चारणीयानि तानीति सङ्क्षेपार्थः, युक्त्याऽवयविनिरासे सति परमाण्वाकाशादेरतीन्द्रियत्वेनावयविनमधिकृत्यैव प्रवर्त्तमानस्य सर्वप्रत्यक्षस्याप्यसिद्धिस्तदसिद्धौ तन्मूलकानुमानादीनामप्यसिद्धिरिति स्वसंवेदनमात्रज्ञानमवशिष्टं तदभिप्रेत्यैव च न्यायसूत्रमित्याशयेन विज्ञानवाद्याह—

अवयविनिरासे सर्वप्रत्यक्षविलोपे तन्मूलकप्रमाणान्तरासम्भवात् स्वप्रकाशज्ञानमात्रमवशिष्यते, तथा च सूत्रं-'सर्वाग्रहणमवयव्यसिद्धेः' इति विज्ञानवादी। तत्र ज्ञानस्येवावयविनोऽपि सर्वैश्चित्रतयैवानुभवाद् हृद्ये उपन्यस्यमानानां दूषणानां हृद्यपि सङ्क्रमादपश्चिमविकल्पनिर्वचनस्य च द्रव्योपयोगस्य चेतने चेतनाद्वैतवदचेत-

नेऽचेतनाद्वैतस्यापि साधकत्वात्, सूक्ष्मेक्षिकायां तु सदद्वैतस्यैव ततः सिद्धेः, पर्यायार्थिकोपयोगे च भेद-स्याप्यव्याहतत्वात्, उभयनयनयनोन्मीलने च भेदाभेदात्मकस्यैव जगतः स्वच्छन्दतया प्रकाशमानत्वात् नावयव्यसिद्धिरिति भगवदुपज्ञस्याद्वादप्रमाणव्यापारः। नयविचारे त्विदानीं न्यायनयप्रक्रमः, तत्र वदन्ति—अस्तु तर्हि दूषणोपक्रमेण विचार इति चेत्, तमपि पश्यामः कीदृशोऽसावपि।

अवयविनिरास इति, चित्रतयैव अनेकधर्मात्मकतयैव। दृश्ये बाह्ये। दृश्यपि ज्ञानेऽपि। यथा चेतनमात्रे चेतनत्वमनुगतमिति तद्रूपेण चेतनाद्वैतं तथाऽचेतनमात्रेऽचेतनत्वमनुगतमिति तद्रूपेणाचेतनाद्वैतमेव किं न स्यात्, विशेषविचारणे तु सर्वेषु चेतनेष्वचेतनेषु च सत्त्वमेवानुगतं तद्रूपेण सदद्वैतमेव द्रव्यार्थिकनयोपयोगेन सिद्ध्यतीत्याह—अपश्चिमविकल्पनिर्वचनस्येत्यादि। श्लोके नयप्रमाणैरित्युक्तं तत्र प्रथमं नयाधीना तत्त्वप्ररूपणा कृता, अवसरसङ्गत्या प्रमाणाधीना कर्त्तव्येत्याशयेनाह—उभयनयनोन्मीलने चेति, प्रमाणोपयोगे चेत्यर्थः। तम् विचारम्।

नेदं स्थूलं, विरुद्धधर्मासंसर्गप्रसङ्गात्, इदं घटादिबाह्यं, सांवृती च निषेध्यादिसिद्धिः, विरुद्धधर्मसंसर्गश्च दर्शयिष्यत इति बोध्यम्, नास्थूलम्, अस्थूलत्वेन प्रतिभासप्रसङ्गात्, नापरापेक्षं, सदातनत्वप्रसङ्गात्, सदातनत्वमादिमत्त्वविरहः, आकाशादीनां सदातनत्वदर्शनादित्यभिप्रायः। न परापेक्षं, सदसद्व्यतिरेकप्रसङ्गात्, सतो गगनादेरसतश्च शशविषाणादेः परापेक्षत्वविरहादित्यर्थः, कारणेन न सदेव साध्यते, सतः साध्यत्वायोगात्, नासदेव, असत्त्वाविशेषेण पटादिकारणाद् घटादिसिद्धिप्रसङ्गादित्यन्ये, नैकं, तथाप्रतिभासप्रसङ्गात्।

नेदं स्थूलमिति, स्थूलाभ्युपगमे अवयव्यात्मकं घटादिबाह्यं यदि स्थूलं स्यात्तर्हि तत्र रक्तारक्तत्वादिविरुद्धधर्मसंसर्गाऽयोगेन तत्प्रतिभासो न स्यादित्याद्यापत्तिः, एवमग्रेऽपि भाव्यम् । ननु स्थूलं निषेध्यं सिद्धं न वा, आद्ये पर्यवसितं विवादेन, द्वितीये असिद्धस्य निषेधाऽयोगान्न तन्निषेध इत्यत आह—सांवृती चेति, अपरापेक्षमिति, न परापेक्षमपरापेक्षं परानपेक्षमित्यर्थ, यदि परापेक्षं स्यात् सदसद्व्यतिरिक्तं स्यात्, यत् सदात्मकमसदात्मकं वा न तत्परापेक्षम्, अत्र क्रमेण गगनं शशशृङ्गश्च दृष्टान्त इत्याह—न परापेक्षमिति । न परापेक्षं सदसद्व्यतिरेकप्रसङ्गादित्यस्यान्यमतेनार्थमाह—कारणेनेति, नासदेवेति कारणेन साध्यत इत्यस्यानुषङ्गः। ननु घटादावेकत्वं सुप्रतीतमेवेति तन्निषेधोऽज्ञतामेव व्यञ्जयतीत्यतस्तदर्थमाह—

न परस्पराभिन्नं, परस्पराभिन्नत्वेन प्रतीतिप्रसङ्गादित्यर्थः, नानेकं, भेदव्यवसितिप्रसङ्गात्, न व्यापकं, निष्क्रियत्वप्रसङ्गात्, नाव्यापकम्, अविधेयत्वप्रसङ्गात् । व्यापकत्वं सर्वत्र सत्त्वम्, अव्यापकत्वं क्वचिदसत्त्वं, विधेयत्वं सत्त्वेन प्रमापणीयत्वं, न चासतस्तत्सम्भवतीत्यादिरिति चेत्, न, मिथोविरोधमूलशैथिल्येष्टापादनानुकूलत्वविपर्ययापर्यवसानैस्तर्काभासत्वात्, मिथोविरोधः परस्परार्थप्रतिक्षेपकत्वं, मूलशैथिल्यं तर्कमूलयोरापाद्यापादकव्याप्तिनिश्चयापादकाभ्युपगमयोरन्यतरव्यतिरेकः, अनुकूलत्वं वाद्यभ्युपगतार्थसिद्ध्यनुकूलत्वम्, अस्थूलत्वादिषु तथाप्रतिभासादिप्रसङ्गानां विपर्ययैः साध्यानां स्थूलत्वादीनां वाद्यभ्युपगतत्वात्, यत्रेष्टापादनं तत्रापाद्यव्यतिरेकस्यापक्षधर्मत्वाद्विपर्ययापर्यवसानम् ।

न परस्पराऽभिन्नमिति, सर्वत्र सत्त्वमिति सर्वमूर्त्तसंयोगवत्त्वमित्यर्थः। तथाचाऽसंयुक्तदेशाभावात् तत्संयोगासम्भवेन

तत्पूर्वकविभागासम्भवेन च फलाभावाच्च क्रियायास्सम्भव इति निष्क्रियत्वप्रसङ्गो युक्त एवेति भावः। अव्यापकत्वविधेयत्वयोर्विरोधानुगुणं तदर्थमाह—अव्यापकत्वमिति, असतः सत्त्वाभावात्तत्र सत्त्वेन ज्ञानं भ्रान्तमेव नतु प्रमेति सत्त्वेन प्रमापणीयत्वं तत्र न सम्भवतीत्याह—न ह्यसत इति, तत् विधेयत्वम्। ननु मूलशैथिल्यसार्थं कृते किमित्यवसरसङ्गतिप्राप्तस्येष्टापादनस्य नार्थः कृत इति चेत्, स्पष्टार्थत्वात्, प्रसज्यमानस्य यत्रेष्टत्वं तत्र प्रसङ्गस्येष्टापादनत्वमिति तत्त्वम्। ननु यत्रेष्टापादनं तत्रैवापाद्यव्यतिरेकस्य विपर्यये हेतुभूतस्य पक्षेऽभावात्स्वरूपासिद्धेर्विपर्ययापर्यवसानमिति कथं पृथगुपन्यासः कृत इति चेत्, उक्तिवैचित्र्यात्। नास्थूलतया प्रतिभासते तस्मात्स्थूलमित्याद्याकारकैर्विपर्ययैर्यानि स्थूलत्वादीनि साधितानि तानि नैयायिकैरभ्युपगतान्येवेत्युक्तप्रसङ्गानां बाह्यभ्युपगतावयविस्थूलत्वादिसिद्ध्यनुकूलत्वमेवेत्याह, अस्थूलत्वादिष्विति, आदिपदादपरापेक्षत्वैकत्वव्यापकत्वादेरुपग्रहः। मिथो विरोधं सदृष्टान्तं प्रकृते सङ्गमयन्नाह—

यथा हि नायं पर्वतो निरग्निर्निर्धूमत्वप्रसङ्गात्, नाप्यग्निमाँस्तथोपलब्धिप्रसङ्गादित्यनयोरेक आभासः, परस्परार्थप्रतिक्षेपकयोरुभयोरनाभासत्वानुपपत्तेः, तथात्रापि, न ह्यस्थूलादिनिषेधादन्यः स्थूलादिविधिः, तन्निषेधाद्वाऽन्योऽस्थूलादिविधिरिति, शिथिलमूलाश्चैते, प्रतिबन्धस्यानिश्चयात्, क्वचिदापादकानभ्युपगमाच्च, प्रतिबन्धनिश्चये वा व्याप्यव्यापकतदधिकरणानां सिद्धौ विवादनिवृत्तेः, इष्टापादनं च प्रथमेऽनुभूतावसिते विरुद्धधर्मासंसर्गस्य, तथा च वक्ष्यामः, अनुभूतावसित इति, प्रथममनुभूते पश्चादध्यवसिते, अनुभवावसायौ निर्विकल्पकसविकल्पके इत्यर्थः। अनुकूलश्च द्वितीयः, अस्थूलत्वप्रतिक्षेपस्य स्थूलत्वोपलम्भानुग्राहकत्वात्,

तद्रूपताव्यवहारस्य तथाप्रतिभासव्याप्तत्वाच्च, अस्थूलत्वप्रतिक्षेपस्य

यथा हि नायमिति, मूलशैथिल्यं सङ्क्रमयति—शिथिलमूलाश्चैत इति, प्रतिबन्धस्य स्थूलत्वादिविरुद्धधर्मासंसर्गाद्योरापाद्यापादकयोरविनाभावस्य, मूलशैथिल्ये प्रयोजकं व्याप्त्यग्रहमुक्त्वा आपादकासिद्धिमाह—क्वचिदापादकानभ्युपगमादिति स्थूलत्वपरापेक्षत्वाद्यापादकानामभ्युपगमेऽपि तद्विपरीतानामस्थूलत्वापरापेक्षत्वाद्यापादकानां नैयायिकैरनभ्युपगमादित्यर्थः । प्रथम इति यदि स्थूलं स्यात्तर्हि विरुद्धधर्मासंसर्गस्यादिति प्रसङ्ग इत्यर्थः, अनुभूतावसित इत्यस्यार्थमाह—प्रथममनुभूत इति, अस्थूलत्वप्रतिक्षेपस्येत्यस्यार्थमाह—

करणव्युत्पत्त्याऽस्थूलत्वप्रतिक्षेपकस्यास्थूलत्वेऽनिष्टप्रसङ्गस्य, स्थूलत्वोपलम्भः स्थूलत्वसिद्धिः, तद्रूपताव्यवहारो व्यवह्रियमाणा तद्रूपता, तत्र तथाप्रतिभासव्याप्तिप्रदर्शनेनापादकापाद्ययोर्व्याप्तिः प्रदर्शिता, नहि तां विना तर्कस्य तादृशानुकूलत्वमिति, एवं तृतीयोऽपि, अनपेक्षत्वप्रतिक्षेपस्य सापेक्षत्वोपलम्भानुग्राहकत्वात्, अनपेक्षत्वविधेः सदातनत्वव्याप्तत्वाच्च । चतुर्थस्त्वप्रसिद्धव्यापकः, सदसत्त्वस्य विरोधेनैकत्र विधिवन्निषेधस्याप्यनुपपत्तेः,

करणव्युत्पत्त्येत्यादिना, करणव्युत्पत्त्या प्रतिक्षिप्यतेऽनेनेत्येवंव्युत्पत्त्येत्यर्थः, तद्रूपताव्यवहार इत्यस्यार्थमाह व्यवह्रियमाणेति, तत्र तद्रूपतायां, नहि तां विना तर्कस्य तादृशानुकूलत्वमिति, न ह्यापाद्यापादकयोर्व्याप्तिं विना प्रसङ्गस्य विपर्ययपर्यवसानतया वाद्यभ्युपगतार्थसिद्ध्यनुकूलत्वमित्यर्थः, यद्यपरापेक्षं स्यात्तदा सदातनं स्यादिति प्रसङ्गस्यापि तादृशानु-

कूलत्वमेवेत्याह-एवं तृतीयोऽपीति, अप्रसिद्धव्यापक इति प्रसज्यमानस्य सदसद्व्यतिरिक्तत्वस्य क्वचिदप्यप्रसिद्धेरिति भावः। एतदेव भावयति सदसत्त्वस्येति; तस्यैव विवरणमाह—

सत्त्वं यदि वस्तुत्वं, तर्हि तद्व्यतिरेकाप्रसिद्धिः। अथ शक्तिशालित्वमर्थक्रियाकारित्वं वा तद्व्यतिरेकश्चासत्त्वं, न तर्हि क्वचिदपि तदुभयव्यतिरेकप्रसिद्धिरित्येवमप्रसिद्धव्यापकत्वं भावनीयम्। अथैवं विलीनं व्यापकानुपलब्ध्येति चेत्, न विलीनं, व्यतिरेकिणो धर्मस्य भावाभावोभयव्यापकत्वायोगात्। पञ्चमस्त्वनुकूल एव, अनेकाभिमते वस्तुन्येकताप्रतिक्षेपस्यानेकतोपलम्भोपष्टम्भकत्वात्, तादूरूप्यव्यवहारस्य तथाप्रतिभासव्याप्तत्वाच्चेति। षष्ठस्त्विष्ट एवास्माकम्।

सत्त्वं यदीति, तद्व्यतिरेकेति अवस्तुत्वेत्यर्थः, सदसत्त्वोभयव्यापकं निरपेक्षत्वं तदनुपलब्धिस्तदभावः सापेक्षत्वं तेन व्यापकाभावेन व्याप्यस्य सदसत्त्वोभयस्याभावो यदि न प्रसिद्ध्येत्तर्हि वह्न्यभावादिनापि धूमाभावो न सिद्धिकोटिमुपढौकेतेत्याशङ्कते अथैवं विलीनमिति, प्रमेयत्वाभिधेयत्वादौ केवलान्वयित्वेन सदसत्त्वोभयव्यापकत्वेऽपि तत् निरपेक्षत्वे नास्ति, यतो निरपेक्षत्वस्य वृत्तिमदत्यन्ताभावप्रतियोगित्वात्मकव्यतिरेकधर्मत्वेन केवलान्वयित्वाभावेन भावाभावोभयरूपसत्त्वासत्त्वोभयव्यापकत्वासंभवादतः परानपेक्षत्वाभावरूपपरापेक्षत्वहेतुर्न व्यापकानुपलब्धिरूप इति न तद्विलयप्रसङ्ग इति परिहरति—न विलीनमिति, नैकं तथा प्रतिभासप्रसङ्गादिति प्रसङ्गस्त्वनुकूल एव, विपर्ययसाध्यस्य परस्परभिन्नत्वलक्षणस्यानेकत्वस्येष्टत्वादित्याह-पञ्चमस्त्वनुकूल एवेति। यद्यनेकं स्यात्तर्हि भिन्नतयाऽध्यवसीयेतेति प्रसङ्गस्त्वप्रसङ्ग एव, प्रसज्यमानाया भेदव्यवसितेरिष्टत्वेनानिष्टापादनरूपत्वाभावा-

दित्याह—षष्ठस्त्विति, ननु व्यवसितौ भासमानो भेदः कीदृग्रूप इत्याशङ्कते—

ननु भेदः स्वरूपं वा स्यादितरेतराभावो वा धर्मान्तरं वा, न पूर्वः, घटो भिन्न इति सहप्रयोगानुपपत्तेः, स्वरूपं हि स्वस्यानुयोगिनो रूपं धर्मोऽनुयोगितावच्छेदको घटत्वादिः, स्वमेव रूपमनुयोग्यात्मकं वा, आद्ये पुनरुक्तत्वात्, अन्त्ये च स्वस्य स्वानधिकरणत्वेनायोग्यत्वान्मिलितप्रयोगानुपपत्तिः, घट इत्यादौ घटत्वादिकं स्वरूपेण सम्बन्धश्च सम्बन्धमर्यादया भासते, भिन्न इत्यत्र च घटत्वादिकं घटत्वत्वादिना आश्रयत्वं चाश्रयत्वत्वेन प्रकारीभूयेत्यपौनरुक्त्यसमर्थनेऽपि घटत्ववान् भिन्न इत्यादौ पौनरुक्त्यतादवस्थ्यमिति भावं वर्णयन्ति । न द्वितीयः, प्रतीतावात्माश्रयप्रसङ्गात् ॥

ननु भेद इति, स्वस्य रूपं स्वमेव रूपं वा स्वरूपमितिव्युत्पत्तिद्वयमाश्रित्याह स्वरूपं हीति,पुनरुक्तत्वादिति,घटो भिन्न इत्यत्र घटपदस्य भिन्नपदस्यापि च घटत्वविशिष्टार्थत्वेनार्थत एकरूपत्वादिति भावः। पुनरुक्तत्वादित्यस्य मिलितप्रयोगानुपपत्तिरित्युत्तरेण सम्बन्धः, घटो घट इत्यत्रेव घटो भिन्न इत्यत्रापि विशेष्यतावच्छेदकप्रकारतावच्छेदकयोर्भेदाभावाद्विरूपोपस्थित्यभावान्नान्वयबोध इत्यभिसन्धिः। स्वमेव रूपमिति पक्षे घटःपटाद् भिन्न इत्यत्र स्वस्य स्वानधिकरणत्वेन घटस्य घटात्मकपटभेदानधिकरणत्वेनाऽयोग्यत्वात् एकपदार्थेऽपरपदार्थवत्त्वलक्षणयोग्यत्वाभावान्न तत्र प्रमात्मकशाब्दबोध इत्यभिसन्धिः । इतरेतराभावो हि घटभिन्नो यः पटः पटभिन्नो यो घटस्तयोरभावस्तस्य च घटभिन्नपटरूपप्रतियोगिनः पटभिन्नघटरूपप्रतियोगिनश्च ज्ञानाधीनज्ञानम्, एवञ्च घटभेदज्ञाने सति घटभिन्नपटरूपप्रतियोगिज्ञानमेवं पटभेदज्ञाने सति पटभिन्नघटरूपप्रतियोगिज्ञानं, प्रतियोगिज्ञाने च सति भेद-

ज्ञानम्, अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वादित्यन्योन्याश्रयः, तत्र चावश्यमात्माश्रय इति प्रथमोपस्थितिकत्वात्तमाह—प्रतीताविति, आत्माश्रयमेव निरूपयति—

भिन्नप्रतियोगिनिरूपणाद्धि तदभावो निरूप्यते तन्निरूपणमेव च भेदनिरूपणमिति। न तृतीयः, अनवस्थाप्रसङ्गात्, धर्मान्तरं हि अनुयोगितावच्छेदकवद्वृत्तिः प्रतियोग्यवृत्तिर्धर्मः, पटोऽयं न घटस्तन्तुमयश्चेत्यनुरोधात्, तथा च तत्रापि वैधर्म्याभावे तदद्वैते धर्मिद्वैतानुपपत्तेः, एवं तत्रापि वैधर्म्यान्तरमित्यनवस्थातरङ्गिणी दुस्तरैवेति।

भिन्नेति, तदभावः भिन्नप्रतियोगिनो भेदरूपोऽभावः, पटोऽयमिति स्वरूपात्मकभेदस्योदाहरणं, न घट इत्यन्योन्याभावस्य, तन्तुमयश्चेति धर्मान्तरात्मकवैधर्म्यस्य, पटोऽयमित्यनेनानुयोगितावच्छेदकतया पटत्वस्योपवर्णनं, न घट इत्यनेन घटस्य प्रतियोगितोट्टङ्कनम्, ताभ्यां च तन्तुमय इत्यनेन प्रदर्शितस्य तन्तुमयत्वधर्मस्यानुयोगितावच्छेदकपटत्ववति पटे वृत्तित्वं प्रतियोगिनि घटेऽवृत्तित्वञ्च ख्यापितम्, अत एव तस्य धर्मान्तरत्वेन तल्लक्षणभेदरूपत्वमिति भावः, तन्तुमयत्वरूपवैधर्म्ये मृन्मयत्वरूप वैधर्म्यस्य वैधर्म्यरूपभेदाभावे तयोरैक्यापत्तौ घटे मृन्मयत्ववत्तन्तुमयत्वस्यापि सत्त्वे घटपटयोरप्यैक्यं स्यादिति तत्र तस्य वैधर्म्यरूपभेदोऽभ्युपगन्तव्यः तत्राप्येवम् एवमग्रेपीत्यनवस्थां सङ्गमयति—तथा च तत्रापीति, बौद्धःस्वपूर्वपक्षमुपसंहरति—

तत् कथमसौ भेदो व्यवतिष्ठतामिति चेत्, तत्किं भेदज्ञानमेव नास्ति, सदपि वा नित्यम्, अनित्यमपि निर्हेतुकं, सहेतुकमपि निर्विषयं, सविषयमपि वा बाध्यमानविषयमिति, तत्र प्रथमः सर्वतो विरोधादनुत्तरः,

सर्वानुभवसिद्धभेदज्ञानापलापे प्रतियोग्यसत्त्वे निषेधानुपपत्तिः, स्ववचनविरोधो वादिप्रतिवाद्यादिभेदज्ञानं विना कथाप्रवृत्त्ययोगश्चेति । द्वितीयः सुषुप्तावस्थानुरोधादुपेक्षणीयः । तृतीयोऽहेतुकत्वे कादाचित्कत्वविरोधाद्धेयः । चतुर्थस्तु भेदोल्लेखादेव त्याज्यः, घटज्ञानमित्यादौ घटादिविषयत्वस्येव भेदज्ञानमित्यत्रापि भेदविषयत्वस्य सर्वानुभवसिद्धत्वात्, क्वचिदपि सविषयत्वस्याप्रसिद्धौ च ज्ञाने तन्निषेधानुपपत्तेः ।

तत्कथमसाविति, सर्वतो विरोधादिति, वाक्यरचनां प्रति तत्तद्वाक्यार्थज्ञानस्य कारणत्वेन भेदज्ञानं नास्तीति वाक्यघटकस्य भेदपदस्याप्यर्थो भेदरूपो ज्ञातव्य इति भेदज्ञानाभावे उक्तवाक्यप्रयोग एव न स्यात् । किं च भेदग्राहकसामग्र्यस्ति न वा, नाद्यो, यदव्यवहितोत्तरक्षणे कार्यजन्म सैव सामग्रीति भेदग्राहकसामग्रीसत्त्वे भेदज्ञानस्यैवोत्पत्तेस्तत्सिद्धिस्स्यादेव । न द्वितीयः, प्रतियोगिभूताया भेदग्राहकसामग्र्याः परिच्छेदमन्तरेण तन्निषेध एव न स्यात्, भेदग्राहकसामग्रीज्ञानाभ्युपगमे च भेदज्ञानमभ्युपगतमेव स्यात्, अथवा भेदग्राहकसामग्री नास्तीत्यस्मिन् भेदोऽपि प्रतियोगिकोटौ विशेषणमिति तज्ज्ञानमन्तरेणोक्तनिषेध एव न सम्भवति, अथवा पदानां भेदेन ज्ञानमन्तरेण वाक्यप्रयोगाभावात् साधनीयदूषणीययोर्भेदज्ञानमन्तरेण कथायामप्रवृत्तिः साधनदूषणभेदग्रहमन्तरेण तत्प्रयोगानुपपत्तिः, भेदस्य निषेध्यत्वेनापि ज्ञानमन्तरेण निषेधानुपपत्तिरित्याद्यप्यर्थस्सर्वतो विरोधादित्यस्य ज्ञेयः । ग्रन्थकारस्तु तस्यैवमर्थमाह—सर्वानुभवेति, निषेधेति भेदज्ञानं नास्तीत्यर्थः । स्ववचनविरोध इति भेदज्ञानं नास्तीत्यत्र तद्घटकतयाऽपि भेदज्ञानस्य सद्भावादिति भावः । वादिप्रतिवाद्यादीति भेदवाद्यपेक्षया प्रतिवादिनस्स्वस्य भेदग्रहमन्तरेण कथोपक्रमाभाव इत्यर्थः, आदिना साधकप्रमाणभेदग्रहं विना कथायामप्रवेशोऽपि ज्ञेयः। कादाचित्कत्वेति कादाचित्कत्वलक्षणस्यानित्यत्वस्य

सहेतुकत्वेन व्याप्तिरिति भेदज्ञानं निर्हेतुकं स्यात्तर्ह्यनित्यं न स्यादिति भावः। भेदोल्लेखादिति उल्लिख्यमानस्यैव विषयत्वादित्यर्थः।

पञ्चमस्तु चिन्त्यते किमेतेष्वन्यतमात्माऽस्य विषयः तदन्यो वेति, तत्र यद्यन्य एव, किमेताभिर्व्यधिकरणानुपपत्तिभिस्तस्य बाध्येत, एवं च चौरापराधेन व्यक्तमयं माण्डव्यनिग्रहः स्यात्, अथान्यतमात्मा, तत्रापि यदि धर्मान्तरमेवेति तत्त्वं तदाऽनवस्थाभियाऽधिकप्रवाहस्त्यज्यतां, तस्य तु कुतस्तत्यागः, तन्मूलत्वादिति चेत्, न, नह्यनवस्था प्रतिभासमानमर्थं निवर्त्तयति किन्तु प्रवाहं परिहारयति, यथा ह्यबादिभ्यः पृथिव्या गन्ध एव भेदक इत्युक्ते सुरभिरसुरभिर्गन्ध इति व्यवहारेण गन्धेऽपि गन्धान्तरप्रसक्तावनवस्थया गन्धान्तरमेव त्याज्यते गन्धे न तु पृथिवीगन्धोऽपीति तद्वदत्रापि ज्ञेयम्।

एतेष्विति स्वरूपाऽन्योन्याभाववैधर्म्येष्वन्यतमो भेदज्ञानस्य विषय इत्यर्थः। यदि स्वरूपादित्रितयव्यतिरिक्त एव विषयो भेदज्ञानस्य तदा तस्य स्वरूपादित्रितयविषयानुपपत्तिभिः किं बाध्येतेत्याह यद्यन्य एवेति, एवञ्चेति—चौरः पलायितएव माण्डव्यस्तु महर्षिश्शूलमारोपित इतिवत् स्वरूपवैधर्म्यान्योन्याभावातिरिक्तो न दूषयितुं पारितः तद्भिन्नं स्वरूपादित्रितयं दूषितमित्यर्थः। धर्मान्तरमिति वैधर्म्यमित्यर्थः। तस्येति अनुभूयमानस्य प्राथमिकवैधर्म्यस्येत्यर्थः। प्रथममूलकत्वात्प्रवाहस्यातोऽनवस्थाप्रसङ्गभयेन प्रथमस्यापि परित्याग इत्याशङ्कते तन्मूलत्वादितीति। कुसुमं सुरभि असुरभि वेति प्रतीतिवत् सुरभिर्गन्धोऽसुरभिश्चेति प्रतीत्या गन्धे गन्धान्तरस्वीकारेऽनवस्था भवति सा चानवस्था गन्धे गन्धान्तरमेवापाकरोति नतु पृथिव्यामपि, पृथिव्यामनुभूयमानस्यापाकरणे पृथिव्या जलादितो भेद एव न सिद्ध्येत् तद्वत्प्रकृतेऽपीत्याह—यथेति। बौद्धश्शङ्कते—

ननूक्तं वैधर्म्ये वैधर्म्याभावे तदद्वैते धर्मिद्वैतानुपपत्तिस्तत्किं विस्मृतम्, अभिन्नस्योभयवृत्तेर्द्धर्मस्यैकतरभेदत्वे स्वस्मादपि स्वस्य भेदापत्तिश्चेति चेत्, न, वैधर्म्ये स्वरूपादेरेव भेदस्योपगमात्, धर्मान्तरमेवेति तु घटपटादिभेदाभिप्रायकम्, वैधर्म्येऽपि वैधर्म्यान्तरमस्त्येव, प्रामाणिकी चानवस्था न दोषाय, प्रवाहस्त्यज्यतामिति तु तन्तुत्वादेर्भेदरूपत्वे बाधकं नास्तीत्येतावन्मात्रपरमित्यपि वदन्ति। अथ चेतरेतराभावमेव भेदज्ञानमालम्बत इति तत्त्वं, तथापि क्वात्माश्रयः, तेन ह्यात्माश्रयत्वेन भेदज्ञानमेव न स्यात्, अस्ति च तत्, ततस्तदस्तित्वं स्वसिद्ध्यर्थं भेदज्ञाने हेत्वन्तरमाक्षिपेत्, न तु स्वात्मनो हेतुत्वाभावमात्रेण स्वयमेव न स्यादिति, अविद्यावशादिति चेत्, कोऽर्थः ? किमविद्याप्रभावाद्भेदज्ञानं स्वस्मादेव जायत इति, किं वाऽविद्यारूपकारणादिति, आद्ये किं चातः, नह्यविद्येत्येतावतात्माश्रयनिवृत्तिः, तथा सति घटादयोऽपि कुलालादिनिरपेक्षाः स्वयमेव भवेयुः, द्वितीये आत्माश्रयदोषोपहततया न तत् स्वस्यैव कारणं, ततो यतः कुतश्चित्तस्य जन्म तच्च दुर्निरूपमतोऽविद्येत्युच्यत इति बाध्यमानविषयत्वविचारार्थे नास्ति तत्र विवादः, इतरेतराभावरूपभेदज्ञानस्य स्वव्यतिरिक्तहेतुकत्वेनात्माश्रयत्वाभावात् भेदव्यवस्थितेः,

ननूक्तमिति, पटत्वाभिन्नस्य घटपटोभयवृत्तेर्घटत्वधर्मस्य स्वाश्रयपटभेदरूपत्वे स्वाश्रयघटभेदरूपत्वस्यापि सम्भवाद् घटादपि घटस्य भेदापत्तिरिति दूषणान्तरमप्याह अभिन्नस्योभयवृत्तेरिति, प्रवाहस्त्यज्यतामितीति, तदधिक एवेत्यादि, क्वात्माश्रय इति इतरेतराभावप्रतियोगित्वेन ज्ञानमितरेतराभावग्रहकारणं चेत्तदा स्यादेवात्माश्रयः, यदा त्वितरेतराभावज्ञानेन त्वदभ्युपगतेन

स्वं प्रति कारणान्तरस्याक्षेपस्तदा कथमित्यर्थः। नतु स्वात्मन इति नतु भेदज्ञानस्य भेदज्ञानं प्रति हेतुत्वाभावमात्रेण भेदज्ञानमेव न स्यादित्यर्थः। भेदज्ञानस्याविद्यकत्वेन स्वसात्स्त्रोत्पत्तौ नात्माश्रयदोष इत्यभिप्रायेण विज्ञानवाद्याशङ्कते—अविद्यावशादिति। तत्र विकल्पयति—किमिति। तथासति—अविद्याप्रभावादात्माश्रयदोषनिवृत्तौ सति, तत्र भेदज्ञानकारणे,नास्ति तत्र विवादइत्यत्र नाम्नि तर्हि विवाद इति पाठान्तरम्। तस्य च भेदज्ञानस्य सिद्धौ तस्य यत्कारणं तस्याऽविद्येति नाम भवतु अन्यद्वा न तावता काचित्क्षतिरित्यर्थः, नास्ति तर्हि विवाद इत्यपि पाठभेदो दृश्यः। सुहृद्भावेन पृच्छति विज्ञानवादी—

तत्किं हेत्वन्तरमशक्यनिरूपणमेव, न, प्रतियोगिरूपत्वेनाप्रतीतावधिकरणप्रतीतिरधिकरणस्वभावत्वेनास्मृतौ प्रतियोगिस्मृतिश्चेतरेतराभावग्रहणकारणमिति निरूपणात्, इतरयोरधिकरणप्रतियोगिनोरितरत्वेन ज्ञानं न भेदप्रत्यक्षे हेतुर्येनात्माश्रयः स्यात्, किन्तु भिन्नाभ्यां रूपाभ्यां प्रतियोग्यधिकरणयोर्ज्ञानमात्रं कारणं, स्मृतिपदद्वयं ज्ञानमात्रपरं, भिन्नाभ्यां रूपाभ्यां प्रतियोग्यधिकरणयोर्ज्ञानं कारणं, प्रतिबन्धकस्त्वधिकरणतावच्छेदकवति प्रतियोगितावच्छेदकग्रहः, तेन न घटो द्रव्यमित्यधिकरणग्रहे द्रव्यत्वेन प्रतियोगिग्रहात् घटो न द्रव्यमिति प्रत्यय इत्येतदर्थः। अथ स्वरूपमेव भेदप्रतिभासस्य विषय इति तत्त्वं, तथापि सहप्रयोग एवानुपपन्नः परिहीयतां, भेदेन तु किमपराद्धं, सोऽपि दृश्यत इति चेत्, सत्यम्,

तत् किं हेत्वन्तरमिति। उक्तमेव विवेचयति इतरयोरित्यादिना। इतरत्वेन, अधिकरणस्य प्रतियोगीतरत्वेन प्रतियोगिनश्चाधिकरणेतरत्वेन, भिन्नाभ्यां रूपाभ्यामिति, नन्वधिकरणत्वं प्रतियोगित्वमपि च भिन्नमेव रूपमिति तद्रूपाभ्यां तदुभय-

ज्ञानं कारणं चेत्तदाऽन्योन्याश्रयस्स्यादेव, अधिकरणत्वेनाधिकरणज्ञानं प्रति भेदाधिकरणत्वज्ञानस्य कारणीभूतस्य प्रतियोगित्वेन प्रतियोगिज्ञानं प्रति च भेदीयप्रतियोगित्वज्ञानस्य भेदज्ञानं विनाऽसंभवादिति चेत्, न, प्रतियोगितावच्छेदकाधिकरणतावच्छेदकधर्माभ्यामेव ज्ञानस्य कारणत्वविवक्षणादित्याशयः। ज्ञानमात्रपरमिति अनुभवस्यापि क्वचित् प्रयोजकत्वादितिभावः। केचित्तु स्मृतिपदद्वयं शक्यार्थमात्रपरमाहुः, यत्राप्यनुभवस्तत्राप्यन्तरा स्मृतिकल्पनादिति। सहप्रयोग इति घटस्वरूपं भेद इति सहप्रयोगो यद्वा घटोभिन्न इति सहप्रयोग इत्यर्थः, न च घटतत्स्वरूपात्मकभेदयोरभेदे घटस्य भेद इति भिन्नसम्बन्धिनिरूपितसम्बन्धबोधकषष्ठी कथं स्यादिति वाच्यं अभिन्नसम्बन्धिनिरूपितसम्बन्धबोधिकाया अपि षष्ठ्याः दर्शनात्, कथमन्यथा राहोश्शिर इति प्रयोगः। सोऽपि सहप्रयोगोऽपि।

नैमित्तिकस्तु स्यात्, न स्वरूपतः, न हि घटमानय घटमवलोकयेत्यादौ भेदपदमपि प्रेक्षावानुपादत्ते, व्याख्यायां तु मूढप्रतिबोधनाय घटः कुम्भ इतिवत् सहप्रयोगेऽपि न दोष इति। तथापि कः परमार्थः, यथायथं त्रयमपि, घटस्य हि पटाद्यात्मनाऽप्रतीतिरपटाद्यात्मना च प्रतीतिस्ततो वैशिष्ट्यप्रतीतिश्चेत्यनुभवसिद्धम्, तत्राभावस्य प्रथममात्रम्, अभावान्तरधर्मान्तराभावात्।

नैमित्तिकः संज्ञापरिचायननिमित्तकः। घटोभिन्न इत्यत्र भेदपदवाच्यो घटः, यथा कुंभपदवाच्यो घटः इति पर्यायान्तरज्ञापनार्थं सहप्रयोग इत्यर्थः। न स्वरूपत इति नाभेदेनान्वयप्रतिपत्त्यर्थमित्यर्थः। तदेवोपपादयति नहीति, नैमित्तिकस्तु स्यादित्यस्य विवृति व्याख्यायामित्यादि, यथायथमिति, भिद्यत इति भेदः, भेदनं भेदः, भिद्यतेऽनेनेति भेद इति व्युत्पत्तित्रयमाश्रित्य

नानार्थ एवायं भेदशब्द इत्यर्थः, यद्वा द्रव्यगुणकर्मसु त्रयमपि, सामान्यसमवायेषु द्वयम्, अभावे स्वरूपभेदमात्रमित्यर्थः। क्रमेण भेदत्रयोदाहरणमाह घटस्य हीति, घटादेरित्यर्थः, तेन घटाद्यात्मनेत्यविरोधः, वैशिष्ट्येति वैधर्म्येत्यर्थः, प्रथममात्रमिति स्वरूपभेदमात्रमित्यर्थः। एतच्च सुप्रतिपदतयोक्तम्, अभावेष्वपि परस्परं भिन्नाधिकरणकत्वभिन्नप्रतियोगिकत्वरूपवैधर्म्यसत्त्वात्, धर्मान्तराऽभावादिति तु तत्तदभावेऽनुयोगिताविशेपलक्षणादिवैधर्म्यस्य सत्त्वेऽप्यभावे तुच्छरूपे वैधर्म्यं नास्तीति पराभिप्रायेणोक्तमित्याह—

धर्मान्तरेत्यभ्युपगमवादेन, धर्मपदं समवेतपरम्, अग्रे च तन्तुमय इति समवेतधर्मान्तरोपलक्षकमित्यपि कश्चित्, सामान्यादिषु त्रिषु द्वयं, धर्मान्तराभावात्। द्रव्यादिषु त्रिषु त्रयं, त्रयस्यापि सम्भवात्, भवति हि पटोऽयं न घटस्तन्तुमयश्चेति, गन्धोऽयं न रूपं सुरभिश्चेति, गतिरियं, नोत्क्षेपणं तिर्यक् चेति। ननु स्वरूपस्य भेदत्वे इदं तन्न वेति संशयो नेदं तदिति विपर्ययश्च न स्यात्, धर्मिणो ग्रहे भेदस्यैव ग्रहादग्रहे च तयोरनुत्पादात्, स्वस्य स्वावृत्तित्वादिदं भिन्नमिति प्रतीत्याद्यनुपपत्तिश्च, धर्मिभेदस्य धर्मस्वरूपस्य धर्मिवृत्तितया तत्रैव तद्भेदप्रतीत्यादिप्रसङ्गश्च, निष्प्रतियोगिकस्य स्वरूपस्यसप्रतियोगिकत्वायोगश्चेति।

धर्मान्तरेत्यभ्युपगमवादेनेति, धर्मपदं समवेतपरं पटस्तन्तुमय इत्यत्रापि तन्तुमयत्वं न समवेतधर्मरूपमिति तस्य वैधर्म्यलक्षणभेदरूपत्वाभावेऽपि तस्य समवेतधर्मान्तरोपलक्षकत्वेन नाग्रिमग्रन्थासंगतिरिति केषाञ्चिन्मतमुपदर्शयति—धर्मपदमिति, द्वयमिति स्वरूपभेदेतरेतराभावद्वयमित्यर्थः, यद्यपि सामान्ये सामान्यान्तराभावेऽप्याश्रयव्यक्तिरेव वैधर्म्यं, विशेषसमवाययोर-

ध्याश्रयो वा निरूपकान्तरं वा यथायथं वैधर्म्यमस्ति, तथापि तत्र सामान्याभावमात्रविवक्षयेदमुक्तम्, अतो धर्मान्तराऽभावादित्यस्य सामान्याऽभावादित्यर्थो ग्राह्य इति, पटोऽयमिति स्वरूपभेदस्य,न घट इत्यन्योन्याभावस्य,तन्तुमय इति वैधर्म्यस्योदाहरणम्, द्रव्ये त्रयमुक्त्वा गुणेऽप्याह गन्धोऽयमिति। कर्मण्याह गतिरियमिति। अग्रहे चेति धर्मिग्रहस्य कारणत्वेन तदभावे संशयविपर्ययावेव न स्यातामित्यर्थः, घटत्वे घटभेदस्य घटत्वस्वरूपतया घटे सत्त्वेन घटो न घट इति प्रतीत्यापत्तिरित्याह–धर्मिभेदस्येति। भेदवादी समाधत्ते—

अत्र वदन्ति–स्वरूपग्रहेऽपि तद्भेदत्वाग्रहात् संशयादिः, तद्भेदत्वं च न तदविषयकप्रतीतिविषयत्वं प्रतीतीघटितत्वेनाचाक्षुषत्वप्रसङ्गात्, किन्तु विलक्षणं प्रतियोग्यनुयोगिभावलक्षणः सम्बन्धः, स च स्वरूपमतिरिक्तो वेत्यन्यदेतत्, तद्भानमपि सम्बन्धविधया प्रकारतया वेत्यपि तथा, सम्बन्धविशेषेण भिन्नमिति प्रतीतिनियामकेन स्वस्य स्ववृत्तित्वं स्वाश्रयवृत्तित्वं च नानुपपन्नं, स्वस्य स्वाभावप्रतियोगिकत्ववत् स्वभिन्नप्रतियोगिकत्वमपि तथा, एतेन वैधर्म्यं व्याख्यातम्, स्वरूपतः प्रकारान्तरेण वा वैधर्म्यस्य ग्रहेऽपि तत्तद्भेदत्वेनाग्रहात्, संशयस्य भ्रमस्य चोक्तप्रणाल्योपपत्तेरित्यर्थः।

अत्र वदन्तीत्यादिना। स्वरूपग्रहेऽपीति, धर्मिस्वरूपात्मकतद्भेदस्य धर्मितावच्छेदकरूपेण ग्रहेऽपीत्यर्थः। तद्भेदत्वाऽग्रहात् तद्भेदत्वेन रूपेण तद्भेदस्याऽग्रहात्, तद्भेदत्वावच्छिन्नतद्भेदनिष्ठप्रकारताकनिश्चयस्यैवोक्तसंशयादिप्रतिबन्धकत्वेन तस्य चात्राऽभावेन संशयादिस्स्यादेवेति भावः, सम्बन्धविधया प्रकारतया वेति, आद्यपक्षे स्वनिष्ठप्रतियोगितानिरूपितानुयोगितापर्यवसायिप्रति-

योग्यनुयोगिभावसम्बन्धेन पटविशिष्टभेदवान् घट इति बोधः, द्वितीयपक्षे च पटनिष्ठप्रतियोगितानिरूपितानुयोगिताश्रयभेदवान् घट इति बोधः, तथा वादान्तरम्, स्वस्य स्वावृत्तित्वादित्यादि यदुक्तं तत्समाधत्ते सम्बन्धविशेषेणेति, तथा चेदं भिन्नमिति-प्रतीतौ प्रकारतावच्छेदकतया नियामकसम्बन्धस्स्वरूपसम्बन्ध एवेति तेन सम्बन्धेन भेदस्य स्वस्वरूपस्य भेदत्वेन रूपेण स्वस्मि-न्नपि वृत्तित्वं नानुपपन्नमितीदं भिन्नमितिप्रतीत्युपपत्तिः, घटत्वस्वरूपस्य घटत्वगतघटभेदस्यापि स्वरूपेण सम्बन्धेन स्वाश्रये घटे घटभेदत्वेन न वृत्तित्वमिति न घटो न घट इति प्रतीत्यापत्तिः, निष्प्रतियोगिकस्यापि घटस्य द्वितीयाभावरूपत्वात् द्वितीयाभाव-त्वेन रूपेण प्रथमाभावप्रतियोगिकत्ववद् घटस्य पटभेदरूत्वात्पटभेदत्वेन पटप्रतियोगिकत्वमपि नानुपपन्नमित्याह स्वस्य स्वाभा-वेति। एतेनेत्यनेनातिदिष्टमाह स्वरूपत इति, घटे पटभेदस्य घटत्वलक्षणस्य मृन्मयत्वलक्षणस्य वा निरवच्छिन्नतया स्वरूपतः प्रमे-यत्वादिना वा ग्रहेऽप्ययं पटभिन्नो न वाऽयं पटाभिन्न इति संशयविपर्ययौ उपपद्येते, तत्प्रतिबन्धकस्य पटभेदत्वेनोक्तवैधर्म्यलक्षण-भेदग्रहस्याभावादिति भावः। घटभेदे घटभेदप्रतीत्या यदि घटभेदोऽतिरिक्तस्तदाऽऽधाराधेयभूतघटभेदद्वयं, द्वितीयेऽपि घटभेदे घटभेदप्रतीतिर्भवति सा च प्रथमं यदि पटवृत्तिघटभेदमादायोपपाद्यते तदाऽन्योन्याश्रयः, द्वितीयघटभेदे यो घटभेदः स न तदा श्रयप्रथमघटभेदरूपः किन्त्वतिरिक्तः, तत्रापि घटभेदप्रतीतिर्भवति सा च यदि प्रथमघटभेदादिकमादाय तदा चक्रकम्, अति-रिक्तभेदमादाय चेत्तदा यदि क्वचित्पूर्वभेदमादाय विश्रान्तिस्तदा चक्रकमेव, अविश्रान्तौ त्वनवस्था, एतद्दोषत्रयापेक्षया घटभेदे यो घटभेदस्स तदात्मैव नातिरिक्त इति स्वस्मिन्नपि वर्त्तते इत्यभ्युपगम्यात्माश्रयाभ्युपगम एव श्रेयान्, एकस्यैव भेदस्य कल्पने लाघवादित्याशयेनाह—

अन्योन्याभावस्तु भाववदभावान्तरे स्वस्मिँश्च वर्त्तते, भिन्नताप्रतीतेरविशेषात्, अन्योऽन्याश्रयचक्रकानवस्थानामन्यतममपेक्ष्यात्माश्रयस्यैवोचितत्वात्, यद्यन्योऽन्याभावद्वयं परस्पराश्रितं कल्प्यते, तदान्योऽन्याश्रयः, यदि च तद्दाशत्रयं चतुष्कादि वा नियतसङ्ख्याकं तदा चक्रकम्, अनियतसङ्ख्याकतदुपगमे चानवस्था, एतदपेक्षया स्ववृत्तित्वकल्पनमेवोचितं कल्पनालाघवादिति गुणानन्दः। एतेनात्यन्ताभावो व्याख्यातः, अभावत्वान्योऽन्याभावत्वसंसर्गाभावत्वादिना चाभावाद्भेदः स्वरूपं वैधर्म्यमन्योन्याभावो वा, तत्तदभावभेदस्तु नाधिको, भेदानन्त्यप्रसङ्गात्, अत एवाभावप्रतियोगिको भेदो नाधिकरणातिरिक्त इति सिद्धान्तः।

अन्योन्याभावस्त्ववति, एतेन कल्पनालाघवेन। व्याख्यात इति घटात्यन्ताभावे घटात्यन्ताभावो नातिरिक्तः, किन्तु तद्रूप एवेत्यर्थः, अभावत्वमन्योन्याभावत्वं संसर्गाभावत्वमत्यन्ताभावत्वादिकमनुगतमित्युक्तधर्मावच्छिन्नाभावनिष्ठप्रतियोगिताकभेदस्वरूपादित्रयाणामन्यतमात्मा, अतिरिक्तत्वे भेदानन्त्यप्रसङ्गात्, घटाभावत्वपटाभावत्वमठाभावत्वादीनामननुगतत्वेन तत्तद्धर्मावच्छिन्नाभावनिष्ठप्रतियोगिताकभेदस्तु स्वरूपात्मकः, अतिरिक्तत्वे भेदानन्त्यप्रसङ्गादित्याशयेनाह अभावत्वेत्यादि। अभावप्रतियागिकोभेद इति, तत्तदभावत्वावच्छिन्नप्रतियोगिताकभेद इत्यर्थः। तेनानुगताभावत्वाद्यवच्छिन्नप्रतियोगिताकभेदस्यातिरिक्तत्वेपि नापसिद्धान्तापत्तिः। अन्यमतमाह—

घटपटाभावस्वरूपयोर्मिथो भेदे तयोः परस्पराश्रितत्वात् स्वस्मादपि भेदापत्तिः, परस्परानाश्रितत्वे च घटपटाभावयोः पटघटौ न स्त इति प्रतीत्यनुपपत्तिः, तदुभयस्वरूपमपि तयोर्नास्तितेति चेत्, तर्हि घटशून्यस्य

पटवतः पटशून्यत्वं पटशून्यस्य च घटवतो घटशून्यत्वं स्यात्; तस्माद् भेदानन्त्यमेव ज्यायः, प्रामाणिकं च वस्त्वानन्त्यं न दोषाय, एवं यदि स्वरूपसम्बन्धेन न निर्वाहस्तदा सम्बन्धानन्त्यमप्यस्तु, न चोत्तरोत्तरेण पूर्व-पूर्वकार्यकरणसम्भवात् पूर्वपूर्वसम्बन्धवैयर्थ्यम्, पूर्वस्य सम्बन्धताप्रतीत्यन्यथानुपपत्त्या कल्पितेन तदुत्सारणायोगादुपजीव्यव्याघातादित्यपि वदन्ति ॥

घटपटेति, घटाभावस्य पटाभावभिन्नत्वात्स भेदो यदि घटाभावरूपाधिकरणात्मकोऽभ्युपगतस्तदा घटाभावे पटाभावाऽऽश्रितत्वस्याभ्युपगमे तस्य तत्र सत्त्वेन घटाभावरूपपटाभावभेदस्यापि तत्र सत्तया पटाभावः पटाऽभावो नेतिप्रतीतिस्स्यात्, स्याच्च पटाभावे घटाभावभेदस्य पटाभावरूपत्वपक्षेपि घटाभावो घटाऽभावो नेति प्रतीतिरित्यर्थः, घटाभावे पटाभावाश्रितत्वस्य पटाभावे घटाभावाश्रितत्वस्य चानभ्युपगमे घटाभावे पटो नास्तीति पटाभावे घटो नास्तीति च प्रतीत्यऽनुपपत्तिरित्याह परस्परेति, अभावाधिकरणकाभावोऽधिकरणरूप इति नियमात् घटाभाववृत्तिपटाभावो घटाऽभावरूप इति न घटाभावाद्भिन्नः पटाभाव इति घटाभावे पटाभावस्य सत्त्वेऽपि न घटाभावभेदप्रसङ्गः, न वा पटाभावे घटाभावस्य सत्त्वेऽपि पटाभावभेदप्रसङ्गः, भाववृत्तिपटाभावस्तु घटाभावाद्भिन्न इत्याशङ्कते तदुभयेति, घटाभावपटाभावयोरभिन्नत्वे पटवति घटाभावसत्त्वे तदभिन्नस्य पटाभावस्य सत्तया पटो नास्तीति घटवति पटाभावसत्त्वे तद्रूपघटाभावस्यापि विद्यमानतया घटो नास्तीति च प्रतीत्यापत्तिरिति समाधत्ते तर्हि घटशून्यस्येति। घटाभावे पटाभावभेदस्यातिरिक्तत्वे तद्भेदोऽपि घटाभावे वर्त्तते स यदि घटाभावरूपस्तदा तस्य पटाभावभेदे सत्त्वात्तत्स्वरूपपटाभावभेद-भेदस्यापि पटाभावभेदे सत्त्वापत्तिरिति भेदभेदोऽतिरिक्तस्स्वीकर्त्तव्यः, एवं तद्भेदोऽपीत्यनवस्था प्रामाणिकत्वान्न दोषायेत्याह तस्मा-

द्भेदानन्त्यमेवेति। नन्वेवं स्वरूपसंसर्गस्य घटाभावात्मकत्वेन स्वस्य च स्वावृत्तित्वेन द्विष्ठत्वाभावान्न सम्बन्धत्वं स्यात् इत्याह एवं यद्यीति । कल्पितेनेति उत्तरेणेति शेषः । तदुत्सारणेति पूर्वोत्सारणेत्यर्थः। गुणानन्दोक्तं वदन्तीत्यरुचिबीजमुपनिबध्नाति—

वदन्तीत्यरुचिबीजं तु अभावभेदत्वावच्छिन्नविशेषणताया भिन्न इतिप्रतीतिनियामक एवोपगमान्न तदाश्रये स्वस्मिन् स्वभिन्नत्वप्रत्ययः। अत एव न घटाभावप्रतियोगितात्मकघटवति प्रतियोगीति प्रत्यय इति गुणानन्दः। अत्यन्ताभावस्यात्यन्ताभावान्तराभ्युपगमेऽपि नानवस्था, स्वस्यैव स्वाभावाभावत्वात्। एतेन ध्वंसप्रागभावयोः प्रागभावप्रध्वंसौ व्याख्यातौ। इदं त्ववधातव्यम्—यदन्योऽन्याभावसम्भवे स्वरूपवैधर्म्ययोर्भेदत्वकल्पनमन्याय्यमिति, भिद्यते व्यावृत्तत्वेन प्रत्याय्यतेऽयमनेनेति व्युत्पत्तिभेदादेव धर्मिवैधर्म्ययोर्भेदव्यवहार इत्यपि वदन्ति।

वदन्तीत्यरुचिबीजन्त्वित्यादिना, न तदाश्रय इति न घटाभावभेदात्मकपटाभावाश्रये घटाभावे घटाभावभिन्नत्वप्रत्यय इत्यर्थः, अतएव स्वात्मकाश्रयवत्यपि स्वप्रतियोगिकस्वरूपसम्बन्धस्यैव नियामकत्वेन घटवति घटनिष्ठप्रतियोगितात्वावच्छिन्नप्रतियोगिताकस्वरूपसम्बन्धाभावादेव, भावेऽभावत्वधर्माभावेन घटाभावाभावो न घटरूपस्तदभावस्तु घटाभावरूपः तदभावोऽपि तदभावरूप इति प्रथमाभावद्वितीयाभावाभ्यामुत्तरोत्तराभावप्रतीत्युपपत्तेर्नानवस्थेत्याह अत्यन्ताभावस्येति, "अभावविरहात्मत्वं वस्तुनः प्रतियोगितेति" वचनादुदयनाचार्येण तु द्वितीयाभावस्य प्रथमाभावप्रतियोगिरूपत्वाभ्युपगमेन भावेऽप्यभावरूपत्वमभ्युपगतमिति द्वितीयाभावस्य प्रथमाभावप्रतियोगिस्वरूपत्वात्तृतीयाभावस्य च द्वितीयाभावप्रतियोगिप्रथमाभावस्वरूपत्वान्नानव-

सेति ध्येयम्, उदयनाचार्यमते ध्वंसप्रागभावः ध्वंसप्रतियोगिरूपः प्रागभावध्वंसः प्रागभावप्रतियोग्यात्मेति तन्मतमाश्रित्याह एतेनेति, द्वितीयाभावस्य प्रथमाभावप्रतियोगिस्वरूपत्वेनेत्यर्थः, ननु स्वरूपवैधर्म्ययोर्भेदरूपत्वाऽभावे कथं तत्र भेदव्यवहार इत्यत आह भिद्यत इति, भेदपदप्रवृत्तिनिमित्तं भेदत्वमन्योन्याभावे वर्तत इति तत्र तद्व्यवहारो मुख्यः, स्वरूपे तु भिद्यतेऽयमिति कर्मव्युत्पत्त्या, वैधर्म्ये च भिद्यतेऽनेनेतिकरणव्युत्पत्त्या भेदत्वमिति तत्र तद्व्यवहारो गौण इति भावः ॥ धर्मिभेदधर्मात्यन्ताभावयोरैक्यमितिमतेनाह—

केचित्तु प्रतियोगितावच्छेदकधर्मात्यन्ताभाव एव तद्वदन्योन्याभावः, वैपरीत्यमेव किं न स्यादिति चेत्, न, अनवयोधात्, एकस्यैवोभयरूपताभ्युपगमात्, धर्म्यन्योन्याभावत्वधर्मात्यन्ताभावत्वोपगमादित्यर्थः, अवृत्तिगगनादेरत्यन्ताभावस्यावश्योपेयत्वाच्च, तेन न भेदत्वमत्यन्ताऽभावत्वमित्यपि सुवचम्। अथैवमव्याप्यवृत्तिधर्मवदन्योन्याभावोऽप्यव्याप्यवृत्तिः स्यादिति चेत्, न, इष्टत्वात्, अस्तु वाऽन्योऽन्याभावव्याप्यवृत्तित्वप्रवादरक्षार्थं तत्सहचरितव्याप्यवृत्तिधर्मान्तरात्यन्ताभाव एव तथा।

केचित्तु प्रतियोगितावच्छेदकधर्मेति, गगनवद्भेदस्याप्रसिद्धत्वेन गगनात्यन्ताभावस्य गगनवद्भेदरूपत्वासंभवेनातिरिक्तत्वव्यवस्थितेरन्यत्रापि धर्माऽत्यन्ताभाव एव धर्म्यन्योन्याभावात्मक इत्याह अवृत्तिगगनादेरिति। नन्वेवं सति कपिसंयोगात्यन्ताभाव इव तदभिन्नत्वात् कपिसंयोगवद्भेदोऽप्यव्याप्यवृत्तिस्स्यादित्याशङ्कते अथैवमिति। तत्सहचरितेत्यादीति अव्याप्यवृत्तिनः कपिसंयोगादेस्सहचरितं समानाधिकरणं यद्व्याप्यवृत्तिधर्मान्तरं तत्तद्वृक्षत्वादि तदत्यन्ताभाव एव कपिसंयोगवदन्यो-

न्याभाव इत्यर्थः।

अथ घटवति भूतले नेदं घट इतिवन्नात्र घट इत्यपि स्यात्, स्याच्च घटे न घटत्वमित्यपीति चेत्, न, यथा हि घटाभावपटाभावस्वरूपयोः परस्परप्रतियोगिकमेव भेदत्वं घटपटप्रतियोगिकमेव चात्यन्ताभावत्वम्, अन्यथा घटपटशून्ये तदुभयाभावशून्यतायां घटपटयोश्च स्वात्यन्ताभाववतोः स्वभेदवत्ताया दुर्वारत्वात्,

नात्र घट इत्यपि स्यादिति नात्र घट इत्यपि प्रतीतिः प्रामाणिकी स्यादित्यर्थः। ननु नात्र घट इत्यत्रात्रेत्यस्य लुप्तसप्तमीविभक्त्यन्तानुयोगिवाचकपदत्वेन यत्रानुयोगिवाचकपदोत्तरसप्तमी विभक्तिस्तत्रात्यन्ताभावबोध इति नियमस्यात्रावकाशत्वे नोक्तप्रतीतिर्भूतले घटात्यन्ताभावविषयिणी घटवति भूतले कथं प्रामाणिकी स्यादिति चेत्, मैवम्, घटभेदस्यापि घटनिष्ठप्रतियोगिताकत्वेन घटत्वात्यन्ताभावरूपतयाऽत्यन्ताभावत्वेनोक्तप्रतीतिविषयत्वात्तस्य च भूतले सत्त्वादितिभावः स्याच्च घटे न घटत्वमित्यपि, घटे न घटत्वमित्यस्य घटत्वनिष्ठप्रतियोगिताकात्यन्ताभाववान् घट इत्यर्थः, स चाबाधित एव, यतः घटत्वभेदस्य घटत्वनिष्ठप्रतियोगिताकत्वं घटत्वत्वात्यन्ताभावरूपतयाऽत्यन्ताभावत्वं चेति तस्य घटत्वनिष्ठात्यन्ताभावत्वेन घटवृत्तित्वेन चोक्तप्रतीतिविषयत्वसंभवादित्यर्थः, घटाभावस्य पटाभावभेदरूपत्वेऽपि घटप्रतियोगिकमेवात्यन्ताभावत्वं, नतु पटाभावप्रतियोगिकमत्यन्ताभावत्वं, तथा सति पटाभावस्य घटाभावप्रतियोगिकभेदरूपत्वेन घटाभावप्रतियोगिकात्यन्ताभावता, एवं घटाभावस्य पटाभावप्रतियोगिकभेदरूपत्वेन पटाभावप्रतियोगिकात्यन्ताभावतेति घटशून्ये घटाभावाभावस्स्यात् पटाभावस्य घटाऽभावाऽभावत्ववत्तत्र सत्त्वात्, पटशून्ये च पटाभावाभावस्स्यात्, घटाभावस्य पटाऽभावाऽभावत्ववतस्तत्र सत्त्वादिति तत्रापि प्रमात्मकतत्प्रत्यय-

स्स्यात, एवं घटात्यन्ताभावे घटप्रतियोगिकमत्यन्ताभावत्वमेव, नतु तस्य पटाभावभेदरूपतया घटप्रतियोगिकं भेदत्वं, पटाऽभावेऽपि पटप्रतियोगिकमत्यन्ताभावत्वमेव, नतु घटाऽभावभेदरूपतया पटप्रतियोगिकं भेदत्वं, तथा सति घटात्यन्ताभाववति घटे घटो नेति घटभेदप्रतीतिस्स्यात्, पटाऽत्यन्ताभाववति पटे पटोनेति पटभेदप्रतीतिश्च स्यादित्याह अन्यथेति, अथवोक्तदोपनिवृत्तये पटाभावे घटाभावभेदस्यातिरिक्तत्वे तद्भेदोऽप्यतिरिक्त इत्येवं भेदधाराया अविश्रान्तिस्स्यादिति दूषणान्तरमाह—

भेदानन्त्यप्रसङ्गाद्वा, तथा तस्यापि धर्मप्रतियोगिकमेवात्यन्ताभावत्वं, धर्मिप्रतियोगिकमेवान्योन्याभावत्वमित्यदोषात्, अनुयोगिवाचकपदोत्तरसप्तमीसमभिव्याहृतनञ्पदजन्यपदार्थोपस्थितेरत्यन्ताभावत्वप्रकारकशाब्द एव हेतुत्वात्, तादृशस्थले संसर्गावच्छिन्नप्रतियोगिताकत्वस्य संसर्गत्वाच्च नात्यन्ताभावरूपान्योन्याभावमादायोक्तापत्तिः। अत एव घटो न घट इति वाक्यस्य न भेदरूपघटात्यन्ताभावमादाय योग्यत्वम्, अनुयोगिप्रतियोगिवाचकपदयोः समानविभक्तिकत्वे तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य संसर्गत्वात् घटभेदत्वविशिष्टस्य घटेऽसत्त्वाच्चेति निष्कर्षः। भावस्येवाभावस्यापि भेदो विरुद्धधर्माध्यासादेवेति वदन्ति ॥

भेदानन्त्यप्रसङ्गाद्वेति। तस्मादभावप्रतियोगिकाभावाधिकरणकाभावस्याधिकरणरूपत्वमिति नियमाद् घटाऽभावपटाभावभेदयोरैक्येऽपि यथा घटाभावस्य पटाभावप्रतियोगिकं भेदत्वमेव, नतु पटाभावप्रतियोगिकमत्यन्ताभावत्वं, तथा धर्मिभेदधर्मात्यन्ताभावयोरैक्येऽपि घटभेदस्य घटत्वप्रतियोगिकमेवात्यन्ताभावत्वं घटप्रतियोगिकमेव भेदत्वं न तु घटप्रतियोगिकमत्यन्ताभावत्वं घटत्वभेदस्यापि च घटत्वत्वप्रतियोगिकमत्यन्ताभावत्वं भेदत्वं च घटत्वप्रतियोगिकमेवेति न घटवति भूतले नात्र घट इति घटे

न घटत्वमिति च प्रतीत्यापत्तिर्दोषः, अनुयोगिवाचकपदोत्तरसप्तम्यास्संसर्गाभावबोधने तन्त्रत्वेन तद्बोध्यस्यात्यन्ताभावस्य घटप्रतियोगिकस्य घटवति भूतलेऽसत्त्वाद् घटत्वप्रतियोगिकस्य च घटेऽसत्त्वादित्याह तथा तस्यापीति, भेदरूपेति पटाभावभेदरूपेत्यर्थः। घटभेदत्वविशिष्टस्येति पटाभावभेदत्वेन रूपेण घटात्यन्ताभावस्य घटे सत्त्वेऽपि घटभेदत्वेन रूपेण न सत्त्वं घटभेदत्वस्य घटात्यन्ताभावेऽभावादित्यर्थः।

लक्षणं तु स्वरूपभेदस्य ताद्रूप्येणाप्रतीतौ प्रतीतिः, अप्रतीतावप्रमितौ, तथा च तादात्म्यप्रमाविषयत्वाभाव एव लक्षणं, प्रतीतिस्तु व्यवहारनिमित्तमुक्तेति ध्येयम्। इतरेतराभावस्य त्वबाधितः समानाधिकरणो निषेधप्रत्ययः, समानाधिकरणः समानाधिकरणसमभिव्याहृतजन्यः, सामानाधिकरण्यं च समानविभक्तिकत्वं, तथा चानुयोग्युपस्थापकपदसमानविभक्तिकप्रतियोग्युपस्थापकपदसमभिव्याहृतेन नञा जन्यो निषेधप्रत्यय इत्यर्थः। तादृशनञ्प्रतिपाद्यत्वं तु फलितार्थः। भूतलं घटो नेत्यत्र पदत्रयस्यापि प्रथमान्तत्वात्, अघटं भूतलमित्यत्र प्रतियोग्यधिकरणवाचकयोः समानविभक्तिकत्वेऽप्यत्यन्ताभावस्यैव बोधात्त्रयग्रहणम्, अत एव तादृशत्वं नञि प्रतियोग्यधिकरणवाचकपदसमानविभक्तिकत्वमिति व्याख्या। न च प्रथमाविभक्तिसमभिव्याहृतानुयोगिकत्वमेव तथास्त्विति वाच्यम्,

ताद्रूप्येणेति तादात्म्येनेत्यर्थः। घटस्यापि पटतादात्म्यभ्रमविषयत्वादुक्तलक्षणासम्भवमाकलय्य प्रतीतिपदं प्रमितिपरतया व्याचष्टे अप्रतीतावप्रमितावविति। तादात्म्येति यत्प्रतियोगिकस्वरूपभेदो लक्षितस्तत्प्रतियोगिकतादात्म्येत्यर्थः, ताद्रूप्येणाप्र-

तीतौ प्रतीतिरित्यत्र द्वितीयप्रतीतिपदं व्यवहर्त्तव्यज्ञाने सति व्यवहार इत्येतदर्थं, नतु लक्षणे प्रविष्टमित्याह प्रतीतिस्त्विति, समानविभक्तिकत्वमिति तच्च स्वाव्यवहितोत्तरविभक्तिसजातीयविभक्त्यव्यवहितपूर्वत्वम्, तत्र साजात्यं विभक्तिविभाजकप्रथमात्वादिना बोध्यम्, इतरभेदानुमापकं हि लक्षणमित्युक्तलक्षणहेतुना इतरेतराभावपक्षे इतरभेदानुमाने उक्तलक्षणहेतोस्तादृशनिषेधप्रत्ययस्यात्मनि सद्भावेनोक्तपक्षेऽभावात्स्वरूपासिद्धिस्स्यादित्यत आह तादृशेति, पदत्रयस्यापीत्यनेन नञ्पदस्याप्यनुयोगिप्रतियोगिपदसमानविभक्तिकत्वं व्यञ्जितं, तत्फलमाह अघटमिति, अत्यन्ताभावस्यैव बोधादिति न विद्यते घटो यत्रेतिव्युत्पत्त्याऽघटमित्यनेन घटात्यन्ताभावस्यैव बोधादित्यर्थः,तथेति अन्योन्याभावलक्षणमित्यर्थः। अघटं भूतलमित्यत्र दोषसद्भावेऽपि दोषान्तरमाह—

**न पचति देवदत्तो नेदं देवदत्तस्येत्यादिकमादायातिव्याप्त्यापत्तेः । नन्वेतदप्रतिपाद्यमानतादशायामव्यापकं, न च यदा कदाचित् प्रतिपाद्यमानत्वं घटकमिति वाच्यम्, तथापि सकलतद्व्यक्तीनां प्रमाणाभावेन तादृशाभिलापासम्भवेनोक्तदोषानुद्धारात्, योग्यतायाश्चानुगतरूपनिरूप्यत्वात् ॥**

न पचतीति, देवदत्त इत्यस्येदमित्यस्य च प्रथमाविभक्तिसमभिव्याहृतानुयोगिपदत्वेप्याद्ये पाकानुकूलकृत्यत्यन्ताभावस्यैव द्वितीये च देवदत्तनिरूपितस्वत्वसम्बन्धात्यन्ताभावस्यैव बोधात्तादृशनञ्प्रतिपाद्यत्वमलक्ष्यीभूतेऽत्यन्ताभावेऽपि गतमित्यतिव्याप्तिस्स्यादिति भावः, ननु यदा नञाऽन्योन्याभावो न प्रतिपादितस्तदानीं तत्राव्याप्तिः,न च प्रतियोगिन्यधिकरणप्रतिपाद्यमानत्वाभावाभावतत्त्वं विवक्षितमिति तदानीं स प्रतिपाद्यमानत्वाभावविशिष्टोऽपि न प्रतियोग्यनधिकरणवृत्तित्वविशिष्टतद्विशिष्टः, यदा कदाचिन्नञा तस्य प्रतिपाद्यमानत्वेन तदभावस्य प्रतियोगिसमानाधिकरणत्वादित्युक्ताव्याप्तिर्नेति वाच्यं; तथापि याऽन्योन्याभावव्यक्ति-

नेत्रा न केनापि प्रतिपादिता तत्राव्याप्तिः, नच तस्या अप्रतिपादनेऽपि प्रतिपादनयोग्यत्वमस्तीति योग्यताया लक्षणघटकत्वेन नाव्याप्तिरिति वाच्यम्, अन्योन्याभावत्वस्यानुगतस्योपदर्शयितुमशक्यत्वेन तन्निरूप्याया योग्यताया अपि ज्ञातुमशक्यत्वादित्याशयेनाह—नन्वेतादिति ।

अथ प्रतियोगिनः समानाधिकरणो निषेधप्रत्ययः प्रतीयमानो निषेधः, तथा च प्रतियोगिसमानाधिकरणाभावत्वं फलितार्थः, न च ध्वंसप्रागभावयोरव्याप्यवृत्त्यत्यन्ताभावे चातिव्याप्तिः, एकदैकावच्छेदेन सामानाधिकरण्यस्य विवक्षितत्वात्, व्याप्यवृत्तेरप्यवच्छेदकाभ्युपगमादक्षतेरिति चेत्, न, यत्किञ्चित्प्रतियोगिसामानाधिकरण्यस्यातिप्रसक्तत्वात्, स्वप्रतियोगिसामानाधिकरण्यस्य चाननुगतत्वात्, सम्बन्धान्तरेण प्रतियोगिमति वर्तमाने सम्बन्धान्तरेणाभावेऽतिव्याप्तेः ॥

प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यधिकरणे समवायेन निषेधप्रत्ययो न वर्त्तत इति हेतोर्निषेधप्रत्यय इत्यस्यार्थमाह प्रतीयमानो निषेध इति, तत्रापि लक्षणे प्रतीयमानत्वं नोपयुक्तं इतरव्यवच्छेदकत्वाभावादित्यतः पर्यवसितार्थमाह तथा चेति, ननु भेदस्य व्याप्यवृत्तित्वेन निरवच्छिन्नवृत्तिकतया कथमेककालावच्छेदेनैकदेशावच्छेदेन तस्य प्रतियोगिसामानाधिकरण्यमित्यत आह व्याप्यवृत्तेरपीति । पटादेरपि पटाभावप्रतियोगितया तत्सामानाधिकरण्यस्य घटात्यन्ताभावे सत्त्वेनातिव्याप्तिरित्युत्तरयति यत्किञ्चिदिति । अननुगत्वादिति स्वत्वस्याननुगतत्वेनेतिशेषः, नचाननुगतत्वे लक्षणस्य को दोष इति चेत्, लक्षणस्येतरभेदानुमितिः फलमिति तद्धेतुभूतस्य तस्य पक्षैकदेशरूपलक्ष्यैकदेशेऽसत्त्वेन भागासिद्धिः। दोषान्तरमाह सम्बन्धान्तरेणेति, संयोगेन

घटवति समवायादिसम्बन्धावच्छिन्नघटात्यन्ताभावस्य सत्त्वेन तत्रातिव्याप्तेरुक्तलक्षणहेतुकभेदपक्षकेतरभेदसाध्यकानुमाने व्यभिचारदोष इत्यर्थः । लक्षणान्तरमाशङ्क्य प्रतिक्षिपति—

न चाधिकरणावृत्तिस्वप्रतियोगिकवृत्त्यभावविभाजकशून्याभावत्वमपि तथा, अवृत्तिगगनान्योन्याभावेऽतिव्याप्तेः । अथ प्रतियोग्यवृत्तिसार्वदिकाभावत्वं तत्, न च कालान्योन्याभावेऽव्याप्तिः, काले द्रव्यभेदद्रव्यत्वाभावयोर्वृत्तावपि कालो न द्रव्यं काले न द्रव्यत्वमित्यप्रत्ययात् तादृशप्रतीतिनियामकवृत्तेर्विवक्षितत्वादिति चेत्, न, सामान्यं सत् सती सत्तेति प्रत्ययानुरोधादेकार्थसमवायेन सामान्यं द्रव्यमित्याद्यतिप्रसङ्गवारकस्वरूपसम्बन्धविशेषेण वा सत्तायामपि सत्ताया वृत्तिरुपेया, तेन सम्बन्धेन च सत्ताविरहो न सत्तावृत्तिरिति तत्रातिव्याप्तेः, पूर्वोक्तदोषाच्च । अथ प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिनमारोप्य निषेधः प्रतीयते, अन्यथा यावत्सम्बन्धेन घटाभावप्रतीतिप्रसङ्गात् ॥

न चाधिकरणेति । अधिकरणावृत्तिस्वप्रतियोगी यस्य सोऽधिकरणावृत्तिस्वप्रतियोगिकस्तद्वृत्तिर्योऽभावविभाजकधर्मस्तच्छून्याभावत्वमित्यर्थः, गगनस्यावृत्तिमत्त्वपक्षे गगनभेदस्याधिकरणावृत्तिस्वप्रतियोगिकतया तद्वृत्त्यभावविभाजकान्योन्याभावत्वस्यान्योन्याभावमात्रे सत्त्वेन तच्छून्यत्वे सत्यभावत्वस्य कस्मिँश्चिदपि भेदेऽसत्त्वेनासंभवापत्तेरित्याह अवृत्तीति । अतिव्याप्तेरिति लक्षणघटकस्याधिकरणावृत्तिस्वप्रतियोगिकत्वस्यातिव्याप्तिरित्यर्थः । तेन तद्घटितलक्षणस्याऽसम्भव एवेत्यर्थतो लभ्यते, प्रतियोग्यवृत्तीत्यादिलक्षणं प्रतियोग्यवृत्तीति विशेषणादत्यन्ताभावे सार्वदिकेति विशेषणात्प्रागभावध्वंसयोश्च नातिव्याप्तिः । काल: सर्वेषामिति

प्रतीतेः कालो जगतामाश्रयः, जगदन्तर्गतश्च कालान्योन्याभावोऽपीति सोऽपि प्रतियोगिभूते काले वर्त्तत इति तत्राव्याप्तिरित्याशङ्कते न च कालेति, समाधत्ते काल इति, प्रतियोग्यवृत्तित्वघटकं वृत्तित्वं स्वरूपसम्बन्धविशेषेण विवक्षितमिति नोक्ताव्याप्तिः, काले कालान्योन्याभावस्य कालिकसम्बन्धेन वृत्तित्वेऽपि स्वरूपसंसर्गेणावृत्तित्वादित्यर्थः, स्वाश्रयसमवेतत्वसंसर्गेण सामान्ये द्रव्यत्वस्य सत्त्वेन तत्र तत्प्रतीत्यापत्त्या तस्य सत्प्रतीतिनियामकत्वाभावेऽपि स्वरूपसम्बन्धविशेषस्य सत्प्रतीतिनियामकसम्बन्धत्वमवश्यमभ्युपगन्तव्यमिति सामान्ये सत्तायां च तेन सम्बन्धेन सत्तायास्सत्त्वेन सामान्यं सत् सत्ता सतीति विशिष्टबुद्धिः, तस्य च स्वरूपसम्बन्धविशेषस्य न सामान्येन सह द्रव्यत्वस्य सम्बन्धत्वमिति न सामान्यं द्रव्यमिति विशिष्टबुद्धिप्रसङ्गः, एवं चैकार्थसमवायावच्छिन्नप्रतियोगिताकस्य सम्बन्धविशेषावच्छिन्नप्रतियोगिताकस्य वा सत्ताऽभावस्य न सत्तारूपप्रतियोगिवृत्तित्वमिति तत्रातिव्याप्तेरुक्तलक्षणं निराकरोति सामान्यं सदिति। प्रतियोग्यवृत्तीत्यत्र यत्किञ्चित्प्रतियोगिप्रवेशे घटात्यन्ताभावस्यापि भूतलाभावप्रतियोगिनि घटाधिकरणे भूतलेऽवृत्तित्वेनातिव्याप्तिः, प्रतियोगिसामान्यप्रवेशे चाऽसम्भवो घटान्योन्याभावस्यापि पटाभावप्रतियोगित्वेन प्रतियोगिसामान्यान्तर्गते पटे वृत्तित्वेन प्रतियोगिसामान्याऽवृत्तित्वस्य कस्मिँश्चिदपि भेदेऽभावात्। स्वप्रतियोगिप्रवेशे चाननुगम इत्याह पूर्वोक्तदोषाच्चेति। प्रतियोगितावच्छेदकसम्बन्धेन संयोगेन यद्यत्र घटस्स्यादित्याकारारोपस्य संयोगेन घटो नास्तीति प्रतीतावकारणत्वे यत्र संयोगेन घटो नास्तीति प्रतीतिस्तत्र समवायादिना घटो नास्तीति प्रतीतिप्रसङ्ग इत्याह अन्यथा यावदिति।

इत्थं च संयोगादिना प्रतियोग्यारोपे संसर्गाभावस्तादात्म्येन च तस्मिन्नन्योन्याभावः प्रतीयत इति तादात्म्यसम्बन्धकारोपजन्यप्रतीतिकाभावत्वमन्योऽन्याभावत्वमिति, मैवं, प्रतियोग्यारोपस्याभावधीहेतुत्वे

मानाभावात्, अनाहार्यस्यारोपस्य विरोधित्वात्, आहार्यस्य चाभावप्रत्ययतः प्रागसम्भवात्, विरोधिनिश्चयकालीने हि प्रत्यये तादृशेच्छाया हेतुत्वात् तज्जन्यमाहार्यम्, अभावप्रत्ययाभावे च विरोधिनिश्चयाभावान्नेच्छाहेतुत्वावकाशः, प्रागपि तदुपगमे त्वनवस्थाव्यभिचारान्यतरावकाश इति।

इत्थं च संयोगादिनेति आदिनाऽत्यन्ताभावस्य प्रतियोगितावच्छेदकसंबन्धस्समवायादिरिव ध्वंसप्रागभावयोरपि प्रतियोगितावच्छेदकसम्बन्धावुत्तरकालपूर्वकालरूपौ ग्राह्याविति ताभ्यां सम्बन्धाभ्यां प्रतियोग्यारोपः प्रागभावध्वंसयोः प्रत्यक्षहेतुरतस्तयोर्नाव्याप्तिरित्याशयः। सर्वत्राभावज्ञाने प्रतियोग्यारोपस्य कारणत्वेऽनाहार्यस्य तस्य तद्वत्तानिश्चयरूपत्वेन तदभाववत्ताबुद्धिं प्रति प्रतिबंधकत्वात्कारणत्वासंभवेनाऽऽहार्यस्यैव तत्त्वं वाच्यं, तच्च न संभवति, यतो बाधकाले हीच्छाजन्यज्ञानस्याहार्यत्वेन प्रतियोग्यारोपात्पूर्वमभावनिश्चयो वाच्यः, सोऽपि च प्रतियोग्यारोपजन्य इति तत्पूर्वं प्रतियोग्यारोपो वाच्यस्तस्यापि चाहार्यत्वेन तत्पूर्वमभावनिश्चयो वाच्य इत्येवमनवस्था, क्वचिद्गत्वा प्रतियोग्यारोपं विनैवाभावज्ञानमुपेयते तदा तत्रैव व्यतिरेकव्यभिचारात् प्रतियोग्यारोपस्याभावज्ञाने न कारणत्वमित्याह मैवमिति। अभावप्रत्यक्षेच्छाविरहविशिष्टस्यैवानाहार्यस्य प्रतियोगिज्ञानस्याभावधीप्रतिबन्धकत्वेनाभावप्रत्यक्षपूर्वसमये चाभावप्रत्यक्षेच्छायास्सत्त्वेन तद्विरहविशिष्टत्वस्याभावबुद्धिकारणतयाऽभिमते प्रतियोग्यारोपेऽसत्त्वेन न तस्य प्रतिबन्धकत्वमिति प्रतिबन्धकाभावरूपस्य तस्याभावधीहेतुत्वादिच्छाकाले तत्सत्त्वेन नाभावप्रत्यक्षानुपपत्तिरित्याशङ्क्य परिहरति—

न च तत्तदिच्छाविरहविशिष्टविरोधिनिश्चयाभावस्यैव तत्तद्विशिष्टधीहेतुत्वात् प्रतियोग्यारोपसत्त्वेऽपि नाभावप्रत्ययानुपपत्तिरिति वाच्यम्, सर्वस्याभावप्रत्यक्षस्येच्छापूर्वकत्वासिद्धेः। अथैवं संसर्गाभावप्रत्ययका-

लेऽन्योन्याभावोऽपि प्रतीयेतेति चेत्, सत्यपि प्रतिबन्धकाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्युपस्थित्यादौ न प्रतीयत इति कः प्राह। अत्रानुभवकलहे तूपेयतामारोपनियामकमेव तत्र नियामकं, यदि चारोपहेतूनामननुगतत्वादारोपकत्वेन तदुपगमे उपजीव्यत्वादारोपस्यैव हेतुत्वं तदाप्यभावस्य प्रत्यक्षविशेषे तत्, न तु प्रत्ययमात्रे, अनुमित्यादौ व्यभिचारात्, तथा चातीन्द्रियाण्योन्याभावाव्याप्तिरिति ।

न च तत्तदिच्छेति, निषेधे हेतुमाह सर्वस्येति, तथा च यदभावप्रत्यक्षज्ञानं नेच्छापूर्वकं तत्र तदिच्छाविरहविशिष्टानाहार्यप्रतियोग्यारोपस्यैव प्रतिबन्धकतया नाभावप्रत्यक्षं स्यादिति भावः । प्रतियोग्यारोपस्याऽकारणत्वे युगपदेवात्यन्ताभावान्योन्याभावौ प्रतीयेतामितिचेद्भवतु तयोस्समूहालम्बनज्ञानं यदि कारणान्तरसंपत्तिः, प्रतियोग्यारोपस्य कारणत्वेऽपि संयोगेनैव प्रतियोग्यारोपो भवति न तु तादात्म्येनेत्यत्र यदेव नियामकं त्वया वाच्यं तत् अत्यन्ताभावप्रतीतिं प्रत्येव नियामकमस्तु तावता नात्यन्ताभावप्रतीतिकालेऽन्योन्याभावप्रतीतिरित्याह अथैवमित्यादिना । नन्वारोपनियामका नानुगता इति तेषामारोपजनकत्वेनानुगतेन धर्मेणानुगमय्य तेषामारोपनियामकत्वाभ्युपगमे वरमारोपस्यैव हेतुत्वाभ्युपगमः, उपजीव्यत्वात्तस्य, आरोपहेतूनां चतुर्थान्यथासिद्धत्वाच्चेति यदि ब्रूयात्तदाऽपि तस्य लौकिकसन्निकर्षजन्यप्रतियोगिविशिष्टाभावत्वावच्छिन्नविषयकप्रत्यक्षत्वावच्छिन्नं प्रत्येव हेतुत्वं नतु प्रत्ययत्वावच्छिन्नं प्रति, कार्यतावच्छेदकीभूतप्रत्ययत्वधर्माक्रान्तस्यानुमितिशाब्दादेरारोपं विनाप्युत्पत्तेर्व्यतिरेकव्यभिचारादित्याह यदि चेति । ननु भवतु लौकिकसन्निकर्षजन्यप्रतियोगिविशेषिताभावप्रत्यक्षएवारोपस्य हेतुत्वं, तेन को दोषः प्रकृते इत्याशङ्कायामाह तथा चेति, अन्योन्याभावप्रत्यक्षेऽधिकरणयोग्यताया अपेक्षितत्वेनातीन्द्रियपरमाण्वादिगतान्योन्याभावस्यातीन्द्रियतया तस्य प्रत्य-

क्षाऽभावेन प्रतियोग्यारोपजन्यप्रतीतिविषयत्वाभावादव्याप्तिरिति भावः। अन्योन्याभावस्यैव लक्षणान्तरमुपपादनपूर्वकमाशङ्कते—

अथैकसम्बन्धेन प्रतियोगिमत्यपि सम्बन्धान्तरेणाभावसत्त्वात् सम्बन्धविशेषोऽपि प्रतियोगितावच्छेदकोऽभ्युपेयते, तथा च तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमन्योन्याभावत्वमिति चेत्, न, तादात्म्यं हि तद्वृत्तिर्धर्मविशेषः, प्रतियोगितावच्छेदकमिति यावत्, संयोगिनश्च तादात्म्यं संयोग एव, तथा च संयोगसम्बन्धेन संयोगिनोऽत्यन्ताभावेऽतिव्याप्तेः। संयोगितादात्म्यं संयोगित्वं, न तु संयोग इति चेत्, न, सम्बन्धाविशेषणत्वेन शुद्धस्यापि संयोगस्य समवायेन प्रकारत्वसम्भवेन तादात्म्यत्वात्, ध्वंसप्रागभावान्योऽन्याभावप्रतियोगिताया सम्बन्धभेदानुप्रवेशे मानाभावाच्च॥

अथैकसम्बन्धेनेति, संयोगिनोऽत्यन्ताभावस्य प्रतियोगी संयोगी, स च संयोगसम्बन्धवद्रूपः, तत्र च संयोगसम्बन्धो विशेपणत्वात् प्रतियोगितावच्छेदको धर्मः, नतु संयोगः, तस्य सम्बन्धविशेपणत्वेन प्रतियोगितावच्छेदकतावच्छेदकत्वात्; एवञ्च संयोगित्वमपि संयोग सम्बन्ध एव, तदेव च संयोगितादात्म्यम्, तदेव च संयोगिभेदप्रतियोगितावच्छेदकसम्बन्धः न तु संयोगस्तथेति नोक्तातिव्याप्तिरित्याशङ्कते संयोगितादात्म्यमिति, संयोगीत्यस्य समवायेन संयोगवानित्येवार्थः, तथा च संयोगस्यैव प्रतियोगितावच्छेदकत्वं; स एव च संयोगितादात्म्यमित्यतिप्रसङ्गस्तदवस्थ एवेत्युत्तरयति—सम्बन्धाऽविशेषणत्वेनेति, एकसम्बन्धेन प्रतियोगिमत्त्वनिश्चयेऽपि सम्बन्धान्तरेणाभाववत्त्वबुद्ध्युत्पादात्सम्बन्धान्तरेणाभाववत्त्वनिश्चयेऽपि सम्बन्धान्तरेण प्रतियोगिमत्त्वबुद्ध्युत्पादाच्च तत्सम्बन्धेन तद्वत्त्वबुद्धिं प्रति तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वनिश्चयस्य तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वबुद्धिं प्रति तत्स-

म्बन्धेन तद्वत्त्वनिश्चयस्य च प्रतिबंधकत्वं वाच्यं, तथा च तदनुरोधेनात्यन्ताभावीयप्रतियोगिता सम्बन्धविशेषावच्छिन्ना वाच्या, न ध्वंसप्रागभावान्योन्याभावीयप्रतियोगिता, तत्र तथाविधायाः कस्याश्चिदपि युक्तेरभावादिति तादात्म्यसम्बन्धावच्छिन्नप्रतियोगित्वाऽप्रसिद्ध्याप्युक्तलक्षणाऽसम्भवइत्याह ध्वंसप्रागभावेति । कपाले घटस्य सत्त्वेऽप्युत्पत्तेः पूर्वमसत्त्वेन, एवं विनाशानन्तरमसत्त्वेन प्रागभावीयप्रतियोगितायाः पूर्वकालाख्यस्वरूपसम्बन्धविशेषः ध्वंसीयप्रतियोगितायाश्चोत्तरकालाख्यस्वरूपसम्बन्धविशेषोऽवच्छेदकः, यद्यपि पूर्वकाले उत्तरकाले वा कपाले घटस्समवायेनैव निषिध्यत इति समवायस्यैव प्रतियोगितावच्छेदकत्वं युक्तं, तथापि समवायेन घटात्यन्ताभावात्तयोरविशेषो मा प्रसाङ्क्षीदित्यतः पूर्वकालोत्तरकालयोरेव समवायनिष्ठसंसर्गतावच्छेदकत्वस्य स्वीकरणीयतया तदपेक्षया तयोः प्रतियोगितावच्छेदकसम्बन्धत्वमेव लाघवान्न्याय्यम्, अन्योन्याभावीयप्रतियोगितायाश्च सम्बन्धविशेषावच्छिन्नत्वाभ्युपगमस्तदा स्वावच्छेकेन सम्बन्धेन तादात्म्याख्येन स्वात्मकप्रतियोग्यधिकरणे स्वभिन्नान्येन सम्बन्धेन स्वभेदप्रतीतिस्स्यात् तदनुरोधेन तत्प्रतिबध्यप्रतिबन्धकभावे सम्बन्धविशेषप्रवेशश्चावश्यकस्स्यात्, न चैवमित्याशयेनाह—

**ध्वंसप्रागभावप्रतियोगितायां कालिकसम्बन्धावच्छिन्नत्वोपगमेऽप्यन्योन्याभावप्रतियोगितायां तत्कल्पने मानाभाव इति तत्त्वम् । तर्हि सम्बन्धावच्छिन्नप्रतियोगिताकत्वशून्यनित्याभावत्वमेव तदिति चेत्, न, विनान्योन्याभावं सम्बन्धत्वस्य दुर्वचत्वात्, विशेषणविशेष्यान्यविशिष्टधीविषयत्वादिकं हि तदिति, अभेदेन च विशिष्टज्ञाने तादात्म्यमेव सम्बन्धो भासते, तच्च घटत्वादिकमेवेत्यन्योन्याभावस्यापि संसर्गावच्छिन्नप्रतियोगिताकत्वात्, अवच्छेदकतायां विशेषस्य दुर्वचत्वात्, शून्यत्वस्य चानिर्वचनात्, नित्यत्वस्यानिरुक्तेश्च ॥**

ध्वंसप्रागभावप्रतियोगितायामिति। सम्बन्धावच्छिन्नेत्यादिलक्षणे सम्बन्धावच्छिन्नप्रतियोगिताकत्वशून्येति विशेषणादत्यन्ताभावे नित्येतिविशेषणात् प्रागभावीयध्वंसीयप्रतियोगिता न किञ्चित्सम्बन्धावच्छिन्नेति पक्षे प्रागभावे ध्वंसे च नातिव्याप्तिः, अन्योन्याभावस्य सम्बन्धघटितत्वेन सम्बन्धस्य च भेदघटितत्वेनान्योन्याश्रयः, भेदाघटितञ्च सम्बन्धत्वं दुर्वचमित्याशयेनोक्तलक्षणं निराकरोति विनाऽन्योन्याभावमिति। ननु सम्बन्धत्वस्य कथं भेदघटितत्वमित्यत आह विशेषणेति। तदिति सम्बन्धत्वमित्यर्थः। विशिष्टबुद्धिनियामकत्वं भेदाघटितमेव सम्बन्धत्वस्य लक्षणं यदि ब्रूयात्तदाप्याह अभेदेनेति, द्रव्यं घट इत्यादिशाब्दबोधस्थले द्रव्ये प्रकारतया भासमानस्य घटस्य सम्बन्धस्तादात्म्यं तच्चासाधारणधर्मरूपतया घटत्वरूपमेव स्वीकरणीयम्, एवं च घटत्वधर्मनिष्ठावच्छेदकतापि घटत्वात्मकतादात्म्यसंसर्गनिष्ठा भवतीति तन्निरूपितप्रतियोगिताकत्वेन घटान्योन्याभावादौ सम्बन्धावच्छिन्नप्रतियोगिताकत्वशून्यत्वाभावादसंभव इति भावः, न च सम्बन्धावच्छिन्नेत्यत्र संसर्गविधयाऽवच्छेदकता विवक्षितेति नासंभव इति वाच्यम्, सम्बन्धावच्छिन्नावच्छेदकताभिन्नावच्छेदकता हि संसर्गविधयाऽवच्छेदकतोच्यते, तथा च तत्र भेदप्रवेशादन्योन्याश्रयः, भेदाघटितं च संसर्गविधयाऽवच्छेदकतालक्षणं दुर्वचमित्याशयेनाह अवच्छेदकतायामिति, शून्यत्वस्याप्यत्यन्ताभावरूपत्वेन तस्य च नित्यसंसर्गाभावरूपतया संसर्गाभावस्य चान्योन्याभावभिन्नाभावरूपतया चक्रकापत्तिः, भेदाघटितं च शून्यत्वं दुर्वचमित्याशयेन दूपणान्तरमाह शून्यत्वस्येति, अन्योन्याभावऊक्षणस्य नित्यत्वघटितत्वेन नित्यत्वस्य च भेदघटितत्वेन परस्परापेक्षकत्वादन्योन्याश्रय इत्याशयेनाह नित्यत्वस्येति, नित्यत्वस्यान्योन्याभावघटितत्वं स्पष्टयति—

कालवृत्त्यन्योन्याभावप्रतियोगितानवच्छेदकत्वरूपस्य तस्यान्योऽन्याभावगर्भत्वात्, अथ प्राक्ध्वंसा-

प्रतियोगित्वं तत्, प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वमित्यर्थः। गन्धानाधारसमयानाधाराभावः प्रागभावः, तत्प्रतियोगी चाभावः प्रध्वंस इति चेत्, गन्धानाधारत्वं गन्धाभाववत्त्वं, गन्धाधारताभाववत्त्वं, गन्धवद्भिन्नत्वं वा, नाद्यः, सर्वेषामेव समयानां जलाद्यवच्छेदेन दैशिकविशेषणतया गन्धसामान्याभावाधारत्वात्। न द्वितीयः,

कालवृत्त्येति, तस्य नित्यत्वस्य। अन्योन्याभावाऽगर्भितं नित्यत्वलक्षणमाशङ्कते अथेति, पर्यवसितार्थमाह प्रागभावेति, अत्र प्रागभावाप्रतियोगित्वे सतीत्युपादानाद् ध्वंसे ध्वंसाप्रतियोगित्वमिति विशेष्योपादानात्प्रागभावे नातिव्याप्तिः। उक्तनित्यत्वलक्षणे प्रविष्टयोः प्रागभावध्वंसयोर्लक्षणं भेदाघटितमाह गन्धानाधारेति, गन्धानाधारस्समयो महाप्रलयः, नतु खण्डप्रलयः, तदानीं जन्यद्रव्यस्य ध्वंसः नतु जन्यमात्रस्येति परमाणुगन्धस्य विद्यमानत्वात् सोऽनाधारो यस्याभावस्य स तथेत्यर्थः। तत्प्रतियोगीति प्रागभावस्य प्रतियोगिभूतो योऽभावस्स ध्वंस इत्यर्थः। गन्धसामान्याभावाधारत्वादिति, तथा च समयमात्रस्यैव गन्धानाधारसमयत्वात्तदाधार एव प्रागभाव इत्यसम्भव इति भावः। जन्यमात्रे काले च कालिकेन गन्धाधारत्वस्य सत्त्वेऽपि नित्ये कालिकायोगादिरयुक्तेर्नित्येऽभावेन गोत्वादिनित्यावच्छेदेन स्वरूपसम्बन्धेन तस्याभावस्य सर्वसमये सत्त्वेन सर्वसमयस्य गन्धानाधारसमयत्वादसंभवस्तदवस्थ एवेत्याह—

गोत्वादिवृत्तिर्यः कालिकसम्बन्धेन गन्धाधारत्वस्याभावः तस्य कालिकसम्बन्धेन सर्वसमयवृत्तित्वात्। न च दैशिकसम्बन्धेनानाधारत्वविवक्षणाददोष इति वाच्यम्, इदानीं जले न गन्धाधारत्वमिति प्रत्ययाद्दैशिक-

सम्बन्धेनापि तत्र तस्य सत्त्वात्। गोत्वाद्यनुधावनस्य तु कालिकसम्बन्धेन गन्धाधारत्वाभाववत एव तदवच्छेदकत्वसूचनार्थत्वात्। न तृतीयः। गन्धाधारभिन्नत्वस्य भेदघटितत्वेनान्योन्याश्रयात्, अनवच्छिन्नगन्धानाधारत्वग्रहे न दोष इति चेत्, तथापि तादृशसमयसिद्धिर्न विना प्रध्वंसादिप्रत्ययम्, गन्धध्वंसो गन्धानधिकरणवृत्तिः ध्वंसत्वाच्छब्दध्वंसवदित्यनुमानेन तत्सिद्धेः॥

गोत्वादिवृत्तिरिति, इदानीं जले न गन्धाधारत्वमिति प्रत्ययो हि न कदापि जलं समवायेन गन्धीभवतीत्यतो जले गन्धानाधारत्वस्य व्याप्यवृत्तित्वेन न तदवच्छेदकत्वमेतत्कालस्यावगाहते, किन्तु कालेऽव्याप्यवृत्तित्वाज्जलस्यैवेति स्वरूपसंबन्धेनापि जलावच्छेदेन कालमात्रे समवायसम्बन्धावच्छिन्नगन्धत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वाभावस्यैव सत्त्वादसंभवस्तदवस्थ एव, गोत्वादिवृत्तिरित्यत्र गोत्वाद्यनुधावनस्य तु तदधिकरणस्यैव तदवच्छेदकत्वमितिनियममाश्रित्य यः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकगन्धाधारत्वाभावस्वरूपेण तद्वतः कालिकसम्बन्धावच्छिन्नप्रतियोगिताकगन्धाधारत्वाभावावच्छेदकत्वसूचनपरत्वमेवेत्याह—इदानीमिति। अन्योन्याभावलक्षणे नित्यत्वस्य नित्यत्वलक्षणे प्रागभावस्य प्रागभावलक्षणे भेदस्य प्रविष्टत्वेनापेक्षणाच्चक्रकदोषः, स चान्योन्याश्रयनियत इत्यन्योन्याश्रयं तृतीयपक्षनिषेधहेतुतयोपन्यस्यति गन्धाधारभिन्नत्वस्येति, प्रथमपक्षे द्वितीयपक्षे च योऽसम्भव उक्तस्तन्निवृत्त्यर्थमाशङ्कते अनवच्छिन्नेति। अन्योन्याभावापेक्ष्यनित्यत्वापेक्ष्यप्रागभावलक्षणप्रविष्टगन्धानधिकरणसमयज्ञानेऽनुमित्यात्मके पक्षहेतुज्ञानविधया ध्वंसज्ञानापेक्षा, ध्वंसज्ञाने च ध्वंसलक्षणस्य प्रागभावघटितत्वेन प्रागभावलक्षणस्य च गन्धानाधारसमयघटितत्वेनेतिकृत्वा गन्धानाधारसमयज्ञानापेक्षेत्यन्योन्याश्रय इत्याह तथापीति, तादृशसमयेति अनवच्छिन्नगन्धा-

नाधारसमयेत्यर्थः। तादृशसमयसिद्धौ कथं ध्वंसज्ञानापेक्षेत्यत आह गन्धध्वंस इति। तत्सिद्धेः गन्धानाधारसमयसिद्धेः। गन्धत्वं पक्षीकृत्य गन्धानाधारसमयसिद्ध्यभ्युपगमे ध्वंसज्ञानानपेक्षणान्नान्योन्याश्रय इत्याशङ्कते—

गन्धत्वं स्वाधिकरणानधिकरणसमयवृत्ति कार्यमात्रवृत्तिजातित्वात् चैत्रत्ववदिति तत्सिद्धिरिति चेत्, न, पक्षतावच्छेदकस्य गन्धत्वत्वस्य गन्धेतरासमवेतत्वघटितत्वेनान्योऽन्याभावगर्भत्वात्, स्वाननुगमात्, कार्यत्वस्य प्रागभावगर्भत्वात्, जातित्वस्य नित्यसमवेतत्वघटितत्वात्, समयत्वस्य च विनाऽन्योन्याभावं दुर्वचत्वात्। स्वप्रतियोग्यधिकरणयावत्कालवृत्त्यवधिकसामयिकपरत्वाश्रययावद्व्यक्त्यधिकरणवृत्तिः कादाचित्काभावः सः। स्वं लक्ष्यत्वेनाभिमतं, तत्प्रतियोग्यधिकरणेषु यावत्सु कालेषु यद्वर्त्तते, कालिकसम्बन्धेन स्वप्रतियोगिव्यापकमिति यावत्, तदवधिकं यत्सामयिकपरत्वं तदाश्रयीभूता यावती व्यक्तिस्तदधिकरणक्षणवृत्तिः कादाचित्कोऽभावः प्रागभाव इत्यर्थः।

गन्धत्वमिति। तत्सिद्धिः गन्धानाधारसमयसिद्धिः, पक्षतावच्छेदकस्येति अन्योन्याभावनित्यत्वप्रागभावानां त्रयाणां परस्परमपेक्षणाच्चक्रकमिति भावः। स्वाननुगमादिति स्वत्वस्यानुगतस्याभावेन दृष्टान्ते गृहीतव्याप्तिकस्य साध्यस्य पक्षेऽभावेन बाधः, पक्षवृत्तिसाध्यस्य च दृष्टान्तेऽभावाद्व्याप्यत्वासिद्धिः, पक्षदृष्टान्तव्यतिरिक्तेऽपि हेतोस्सत्त्वेन तत्र पक्षगतस्य प्रकृतदृष्टान्तगतस्य वा साध्यस्याभावेन व्यभिचारश्चेत्याशयः। प्रकारान्तरेणापि चक्रकदोषं सूचयति कार्यत्वस्येत्यादिना, प्रागभावस्य लक्षणान्तरमाशङ्कते स्वप्रतियोग्येति, सः प्रागभावः। तद्घटप्रागभावप्रतियोगितद्घटोत्पत्तिकालानन्तरोत्पत्तिकपदार्थोऽपि स्वप्रतियोग्यधिकरण

यत्किञ्चित्कालवृत्तिः, तदवधिककालिकपरत्वाश्रयस्तद्घटप्रागभावप्रतियोगिभूतस्तद्घटोऽपि, उक्तपदार्थापेक्षयाऽधिकतरसूर्यपरिस्पन्दान्तरितजन्मत्वात्, तदधिकरणक्षणवृत्तित्वं तद्घटप्रागभावे नास्तीत्यव्याप्तिस्तद्वारणाय प्रथमं यावत्पदमित्याह—

स्वप्रतियोग्यनन्तरोत्पत्तिकावधिकपरत्वाश्रयस्वप्रतियोग्यधिकरणक्षणावृत्तित्वेनाव्याप्तिवारणाय प्रथमं यावदिति, स्वप्रतियोग्यवधिकदैशिकपरत्वाश्रयानन्तरोत्पन्नाधिकरणक्षणावृत्तित्वेन तद्वारणाय समयेति ॥ स्वप्रतियोग्यवधिकपरत्वाश्रययत्किञ्चिद्व्यक्त्यधिकरणक्षणवृत्तौ ध्वंसेऽतिव्याप्तिवारणाय द्वितीयं यावदिति, तादृशस्थूलकालवृत्तितया तथैवातिव्याप्तिवारणाय क्षणेति, न च प्रागभावस्य घटवद् घटध्वंसोऽपि प्रतियोगी तद्व्यापकावधिकं च परत्वमप्रसिद्धमिति वाच्यम्, भावत्वेन प्रतियोगिनो विशेषणीयत्वात्, अत्यन्ताभावेऽतिव्याप्तिवारणाय कादाचित्केति।

स्वप्रतियोग्यनन्तरेति। तद्घटप्रागभावप्रतियोग्यधिकरणयावत्कालवृत्तितद्घटावधिकदैशिकपरत्वाश्रयो यो घटोत्पत्त्यनन्तरोत्पन्नपदार्थस्तदधिकरणक्षणवृत्तित्वं घटप्रागभावे नास्तीत्यव्याप्तिस्तद्वारणाय सामयिकेति पदमित्याह स्वप्रतियोग्यवधिकेति। कनिष्ठात्मकप्रतियोगिन्युत्पन्ने ज्येष्ठे यत्परत्वमुत्पद्यते तत्समानकालीनत्वाभावात् तत्प्रागभावाव्याप्तिरित्यत उक्तं लक्षणे आश्रयपदम्। तद्घटपूर्वकालोत्पन्नतद्घटध्वंसोत्तरकालस्थायियत्किंचिद्व्यक्तिमादाय तद्घटध्वंसेऽतिव्याप्तिस्तद्वारणाय द्वितीयं यावत्पदमित्याह स्वप्रतियोग्येति। यावत्पदोपादाने च तद्घटपूर्वकालोत्पन्नो यस्तद्घटसमयवृत्तिध्वंसप्रतियोगी तस्याऽपि यावदन्तर्गततया तदधिकरणक्षणवृत्तित्वाभावात्तद्घटध्वंसस्य नातिव्याप्तिरिति भावः। स्वप्रतियोगिव्यापकावधिकसामायिकपरत्वाश्रययावद्व्यक्त्यधिकरणका-

लस्तद्घटप्रागभावतद्घटविनाशसमयस्थायिस्थूलकालोऽपि तद्वृत्तित्वात्तद्घटध्वंसेऽतिव्याप्तिस्तद्वारणाय क्षणेति पदमित्याह तादृशास्थूलेति। घटप्रागभावस्य यथा घटः प्रतियोगी तथा घटध्वंसोऽपि विरोधित्वाविशेषात्, अन्यथा घटध्वंसकाले प्रागभावविरोधिनो घटस्याभावेन घटप्रागभावापत्तिः, एवं घटध्वंसस्यापि घटतत्प्रागभावौ प्रतियोगिनौ, अन्यथा घटप्रागभावकाले घटरूपप्रतियोगिनोऽभावाद् घटध्वंसापत्तिः, तथा च घटप्रागभावप्रतियोगी घटो घटध्वंसश्च तद्व्यापको नित्यपदार्थ एव तदवधिकसामायिकपरत्वमप्रसिद्धमित्यसंभव इत्याशङ्क्य निषेधति न च प्रागभावस्येति, अदृष्टस्य फलोपभोगनाश्यत्वेन कस्यचिददृष्टस्य कल्पान्तरफलोपभोगजननसमर्थस्य खण्डप्रलयकालेऽपि सत्त्वेन तदानीं जन्यद्रव्याभावेन तद्व्यापकं नित्यद्रव्यं गुणादिकं वा स्वीकर्त्तव्यं तदवधिकपरत्वाप्रसिद्ध्या तादृशादृष्टप्रागभावेऽव्याप्तिः। एवं खण्डप्रलयकालस्थायिपार्थिवपरमाणुरूपादेः प्रागभावे तत्कालस्थायिभावनासंस्कारस्य च प्रागभावे तत्कालवर्त्तिपरमाणुक्रियायाः प्रागभावे चाऽव्याप्तिस्स्यादित्याह—

यदि च कल्पान्तव्यापकस्यादृष्टस्य सम्भवेन तद्व्यापकावधिकपरत्वस्याप्रसिद्धिर्जन्यद्रव्यस्य तत्कालवृत्तित्वासम्भवादिति विभाव्यते, तदास्तु स्वप्रतियोग्यवधिकत्वमेव परत्वस्य विशेषणम्, अपरत्वानाधारयोरपि गुणकर्मणोः परत्वावधित्वप्रतीतेर्बाधकं विना भ्रान्तत्वायोगात्, मूर्त्तमवधिं कृत्वेत्यस्य च प्रवादमात्रत्वात्, सामायिकेति च जातिविशेषपरिचायकं, तेन न समयसमवेतसंयोगजन्यत्वमादाय जन्यत्वस्य प्रागभावघटितत्वेनात्माश्रय इति चेत्, न, स्वत्वाननुगमात्, कादाचित्कत्वस्य विनान्योन्याभावं दुर्वचत्वात्।

यदि चेति, न च तदापि ब्रह्माण्डान्तरवर्तिं द्रव्यमेव तद्व्यापकं तदवधिकपरत्वप्रसिद्ध्या नोक्तदोष इति वाच्यं, तस्य विशिष्या-

ऽज्ञानात्। सामायिकपरत्वस्य कालपिण्डसंयोगजन्यपरत्वरूपत्वेन जन्यत्वस्य च प्रागभावघटितत्वेनात्माश्रयस्स्यादतस्तद्वारणायाह जातिविशेषेति, समयपिण्डसंयोगजन्यतावच्छेदकतया सिद्धपरत्वव्याप्यजातिपरिचायकमित्यर्थः, न च तथापि महाप्रलयपूर्वक्षण-भाविकर्मादिप्रागभावेऽव्याप्तिः, यतो न च तदानीं ब्रह्माण्डान्तरमपि, येन तत्रस्थं द्रव्यं कर्मादिव्यापकं स्यादिति वाच्यं, तदनभ्युप-गमेनैवास्य लक्षणस्योक्तत्वात्, समाधत्ते नैयायिकः—नेति, स्वत्वाननुगमादिति, स्वत्वस्य तत्तद्व्यक्तित्वपर्यवसायितया तद्घटित-लक्षणस्य लक्ष्यैकदेशेऽपरप्रागभावेऽभावेनाव्याप्त्यापत्त्या तद्धेतुकानुमाने भागासिद्धिस्स्यादिति भावः। अन्योन्याश्रयमप्याह कादा-चित्कत्वस्येति, कादाचित्कत्वलक्षणमन्योन्याभावघटितमेवेति स्फोटयितुं तल्लक्षणमाह—

कालवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकत्वस्यैव तत्त्वात्, अत्यन्ताभावगर्भत्वस्य प्रतियोगिव्यधिकर-णत्वादिप्रवेशेन दुर्वचत्वात्, अनवच्छिन्नवृत्तिताकत्वेनात्यन्ताभावविशेषणेऽप्यन्योन्याभावप्रवेशात्, किं चोत्पन्नपरत्वे तज्ज्ञानात् प्रागभावादिज्ञानं, ज्ञाते च प्रागभावादौ अवध्युत्पत्तिक्षणवृत्तिनाशप्रतियोगिस्पन्द-प्रागभावाधिकरणक्षणोत्पत्तिकत्वस्य तद्घटितबहुतरतपनपरिस्पन्दान्तरितजन्मत्वस्य क्षणमात्रज्यायसोऽपि परत्वात् पूर्वकालोत्पन्नत्वस्य वा ज्ञानात् परत्वोत्पत्तिरित्यन्योऽन्याश्रयात्, क्षणजन्मान्तरितत्वानां ध्वंसाद्य-न्यतरघटितत्वात् यावत्त्वानिरुक्तेश्च ।

कालवृत्त्येति। तत्त्वात् कादाचित्कत्वात्, ननूक्तरूपं कादाचित्कत्वं न, किन्तु कालवृत्त्यत्यन्ताभावप्रतियोगित्वरूपमिति चेन्, न, घटाद्यवच्छेदेन पटत्वाद्यभावस्यापि कालवृत्तितया तत्प्रतियोगिनि पटत्वादावपि कादाचित्कत्वं स्यात्तन्निवृत्तये तत्र प्रति-

योगिन्यधिकरणत्वादि प्रवेश्यं, तस्य च भेदघटिततयाऽन्योन्याश्रयतादवस्थ्यम्, भेदाऽघटितस्य च तस्य दुर्वचत्वमेवेत्याह—अत्यन्ताभावगर्भत्वस्येति, ननु प्रतियोग्यधिकरणवृत्तित्वाभावलक्षणं तत्सुवचमिति चेत्, न, सर्वेषामभावानां प्रतियोग्यधिकरणे महाकाल एव वृत्तेरसम्भवापत्तेः, ननु कादाचित्कत्वलक्षणे परमाण्वादिनित्येऽतिव्याप्तिनिवृत्तयेऽनवच्छिन्नवृत्तिताकत्वेनात्यन्ताभावो विशिष्यत इति चेत्, न, तस्यावच्छिन्नवृत्तिताकभिन्नत्वार्थकत्वाद् भेदघटितत्वेनान्योन्याश्रयादित्याह—अनवच्छिन्नेति, प्रकारान्तरेणान्योन्याश्रयमाह—किञ्चेति, अवध्युत्पत्तीत्यादेः तद्घटितेत्यादेः पूर्वेत्यादेश्च ज्ञानादित्यनेनान्वयः, तद्घटितेति प्रागभावघटितेत्यर्थः। पूर्वकालोत्पन्नत्वज्ञानस्य परत्वोत्पत्तिं प्रति कारणत्वं कथमित्यत आह क्षणमात्रज्यायसोऽपि परत्वादिति, अयं भावः, अपेक्षाबुद्ध्या परत्वस्योत्पत्तौ विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वेनोक्तप्रागभावलक्षणे प्रविष्टस्य तस्य पूर्वं ज्ञानं, ज्ञाते च परत्वे तद्घटितप्रागभावज्ञानं, ज्ञाते च प्रागभावेऽपेक्षाबुद्धेः प्रागभावघटितत्वेन तज्ज्ञानरूपविशेषणज्ञानमहिम्नाऽवध्युत्पत्तिक्षणवृत्तिनाशप्रतियोगिस्पन्दप्रागभावाधिकरणक्षणोत्पत्तिकोऽयमिति एतदपेक्षया बहुतरतपनपरिस्पन्दान्तरितजन्माऽयमिति वा पूर्वकालोत्पन्नोऽयमितिविशिष्टज्ञानात्मिकाऽपेक्षाबुद्धिः तया च परत्वोत्पत्तिरित्येवं परत्वप्रागभावापेक्षाबुद्धीनां परस्परापेक्षणाच्चक्रकेऽपि द्वयोरपेक्षाविलक्षणादन्योन्याश्रयः, क्षणादिघटितविषयकत्वेनाप्यपेक्षाबुद्धेरन्योन्याश्रय एवमवधार्यः, तथाहि क्षणत्वं यदि स्ववृत्तिध्वंसप्रतियोग्यनाधारसमयत्वं तदा तत्र ध्वंसस्य प्रवेशः ध्वंसलक्षणे च प्रागभावस्य प्रवेश इत्यन्योन्याश्रयः, आद्यक्षणसम्बन्धो जन्मपदार्थः, क्षणे आद्यत्वं च स्वाधिकरणक्षणध्वंसानधिकरणत्वे सति स्वाधिकरणत्वं स्वाधिकरणक्षणावृत्तिप्रागभावप्रतियोगित्वे सति स्वाधिकरणत्वं वेति ध्वंसप्रागभावान्यतरघटितमेव, स्पन्दान्तरितजन्मत्वं च स्पन्दप्रागभावाधिकरणक्षणोत्पत्तिकत्वं स्पन्दोत्पत्तिक्षणवृत्तिध्वं-

ग्रप्रतियोगिक्षणोत्पत्तिकत्वं चेति तदपि ध्वंसप्रागभावान्यतरघटितमित्यन्योन्याश्रय इति। यावत्त्वानिरुक्तेश्चेति अन्योन्याभावा-
घटितत्वेनेतिशेषः, प्रागभावलक्षणप्रविष्टं यावत्त्वं व्यापकत्वपर्यवसन्नं व्यापकत्वं चान्योन्याभावघटितं, सोऽपि प्रागभावघटित इत्य-
न्योन्याश्रय इति भावः।

एतेन स्वप्रतियोग्यधिकरणकालापेक्षिकाधिककालवृत्तियावत्समानकालीनकादाचित्काभावत्वं तत्त्वम्।
प्रतियोगिनः पूर्वमुत्पद्य प्रतियोगिनाशकालेऽपि यद्वर्त्तते तत्समानकालीने नाशेऽतिव्याप्तिवारणाय यावदिति,
समानकालत्वं क्षणघटितमिति स्थूलकालमादाय नातिप्रसङ्ग इत्यपि निरस्तम्। यथाकथंचिदधिककालवृत्तित्वस्य
स्वसमानकालोत्पन्ने ततश्चिरजीविन्यपि सत्त्वात्, स्वपूर्वकालोत्पन्नत्वे सति स्वध्वंसकालवृत्तित्वे सति वा स्वा-
धिकरणकालाधिकसत्ताकालवृत्तित्वादिरूपस्य च तस्य विना प्रागभावध्वंसौ दुर्वचत्वात्। अथात्र नित्यत्वं गो-
त्वादेः पृथिव्या वा व्यापकत्वं, इदं च कालिकं ग्राह्यमिति चेत्, न, व्यापकत्वं तत्समानाधिकरणाभावाप्र-
तियोगित्वं,

एतेनेति उक्तयुक्त्या वक्ष्यमाणयुक्त्या चेत्यर्थः। अस्य निरस्तमित्यनेनान्वयः। स्वप्रतियोग्यधिकरणेति स्वप्रतियोग्यधि-
करणकालापेक्षिकाधिककालवृत्तियावत्पदार्थाधिकरणक्षणवृत्तिकादाचित्काभावत्वमित्यर्थः, यावदितीति तथा च तद्घटपूर्वकालवृ-
त्तितद्घटचरमसमयपर्यन्तस्थायिपदार्थस्यापि यावदन्तर्गततया तत्समानकालत्वस्य तद्घटध्वंसेऽभावान्नातिव्याप्तिरिति भावः। स्थू-
लकालमिति घटप्रागभावघटविनाशसमयस्थायिस्थूलकालमित्यर्थः। एतेनेत्यतिदिष्टमेवाह यथाकथञ्चिदिति, अधिककालवृत्तित्वं

यथा घटपूर्वकालघटसमानकालवृत्तिपदार्थे तथा घटसमानकालोत्तरकालवृत्तिपदार्थेपीति तादृशपदार्थमादाय घटप्रागभावेऽसम्भवः, एवं प्रागभावान्तरेपीत्यसम्भवः इति भावः । तस्येति प्रतियोग्यधिकरणकालापेक्षिकाधिककालवृत्तित्वस्येत्यर्थः,सम्बन्धावच्छिन्नप्रतियोगिताकत्वेत्यादिभेदलक्षणप्रविष्टं नित्यत्वं भेदागर्भितलक्षणकमपि संभवतीति नोक्तरीत्याऽन्योन्याश्रय इत्याशङ्कते अथात्रेति । यत्र यत्र कालिकेन गोत्वं पृथिवी वा तत्र तत्र कालिकेन वृत्तित्वं व्यापकत्वं, तच्च नित्येष्वेव घटते, न तु जन्ये, तस्य महाप्रलयावृत्तित्वात्, तदानीमपि परमाण्वात्मिकायाः पृथिव्या गोत्वस्य च विद्यमानत्वादिति भावः । भेदवत्तदत्यन्ताभावस्यापि नित्यतया सर्वकालवृत्तित्वेन गोत्वसमानाधिकरणो योऽभावः स भेदाभावः तत्प्रतियोगित्वमेव भेद इत्यसंभव इत्याह—

सर्वे चान्योन्याभावाः प्रतियोगितावच्छेदकात्मकस्यातिरिक्तस्य वा समयवृत्तेरत्यन्ताभावस्य प्रतियोगिन इत्यसम्भवात्, प्रतियोग्यसामानाधिकरण्यमभावे विशेषणमिति चेत्, तद्धि न प्रतियोग्यधिकरणवृत्तित्वाभावः, सर्वेषामभावानां प्रतियोग्यधिकरणे महाकाल एव वृत्तेः । नापि प्रतियोग्यभावाधिकरणवृत्तित्वं सर्वाभावसाधारण्येन वैयर्थ्यात् । प्रतियोग्यधिकरणभिन्नवृत्तित्वं चेत्, भेदगर्भम् ।

सर्वे चेति । अन्योन्याभावा इत्यस्य प्रतियोगिन इत्यनेनान्वयः, स्वरूपसम्बन्धावच्छिन्नभेदनिष्ठप्रतियोगिताकात्यन्ताभावस्य भेदीयप्रतियोगितावच्छेदकरूपत्वज्ञापनायाह प्रतियोगितावच्छेदकात्मकस्येति, ननु व्यापकत्वलक्षणघटकीभूतप्रतियोगित्वं कालिकसम्बन्धावच्छिन्नं ग्राह्यमिति कालिकसम्बन्धावच्छिन्नघटभेदनिष्ठप्रतियोगिताकाभावस्य नित्यमात्रवृत्तितया तस्य घटभेदप्रतियोगितावच्छेदकीभूतघटत्वात्मकत्वं नेत्यत आह अतिरिक्तस्य वेति । समयवृत्तेः गोत्वाधिकरणसमयवृत्तेः, तदभावप्रति-

योगिनोऽभावस्तु तदभाव एवेति तदधिकरणवृत्तित्वं तु तस्य सुस्पष्टमेवेति प्रतियोग्यभावाधिकरणवृत्तित्वरूपस्य प्रतियोग्यसामाना-
धिकरण्यस्याभावे विशेषणस्य व्यर्थत्वमेवेत्याह नापीति, भेदगर्भमिति तथाचान्योन्याश्रय एवेति भावः। भेदत्वादिनस्समादधति-
अत्र वदन्ति—अभावत्वान्योऽन्याभावत्वप्रागभावत्वसंसर्गाभावत्वप्रध्वंसत्वादयः प्रतीतिविशेषसाक्षिका अ-
खण्डोपाधयोऽतिरिक्ता एव पदार्थाः, तदेव चान्योऽन्याभावत्वं तादृशनञ्प्रतिपाद्यतावच्छेदकमिति, वैधर्म्यस्य तु
विरोधः, स चैकधर्म्यसमावेश इत्येषा दिग्। सप्तमोऽप्यनुकूल एव, घटादौ व्यापकताप्रतिक्षेपस्याव्यापकतोपल-
म्भोपष्टम्भकत्वात्, व्यापकत्वस्य निष्क्रियत्वव्याप्तत्वाच्च। अष्टमे त्वविधेयत्वं यदापाद्यते, तत् क्वचित् सर्वत्र वा।

अत्र वदन्तीति, तदेव प्रतीतिविशेषसाक्षिकमखण्डोपाधिरूपमेव। तादृशनञ्प्रतिपाद्यतावच्छेदकमितीति प्रतियोग्य-
नुयोगिवाचकपदसमानविभक्तिकनञ्प्रतिपाद्यतावच्छेदकमितीत्यर्थः, अत्र च तादृशनञ्प्रतिपाद्यतावच्छेदकत्वमखण्डोपाधिरूपस्य भेद-
त्वस्य परिचायकं ज्ञेयम्। वैधर्म्यरूपभेदस्य लक्षणं विरोधः, स च सहानवस्थानलक्षण इत्याह वैधर्म्यस्येति। लक्षणमित्यनुषज्यते,
सप्तमः घटादिवाहं यदि व्यापकं स्यात्तदा निष्क्रियं स्यादित्याकारः। अनुकूल एवेति विपर्ययसाध्यस्याव्यापकत्वस्य घटादौ नैया-
यिकैरभ्युपगमादिति भावः। अष्टमे घटादिवाहं यद्यव्यापकं स्यात्तदाऽविधेयं स्यादित्याकारके। इष्टापत्त्या परिहरति—

नाद्यः। अविधेयत्वे क्वचिदिति विशेषणोपादानात् क्वचिद्विधेयत्वलाभात्, यत एव च क्वचिद्विधेयोऽत
एवाव्यापक इति व्यवह्रियते। न द्वितीयः, व्याप्त्यसिद्धेः, नहि यदव्यापकं तत् सर्वत्राविधेयमिति व्याप्तिर्निश्चि-
तास्ति, आपाद्याप्रसिद्धेः। यदि च कथंचिद्गगनादावलीके वा तत्प्रसिद्धिरुपेयते, तथाप्येकत्रासतोऽन्यत्र सत्त्वेन

विधेयत्वोपपत्त्या व्याप्त्यसिद्धेः। क्वचिदस्तीत्यव्यापकार्थः, अव्यापकत्वनिरुक्तिबलायातोऽर्थः,क्वचिदसत्त्वे क्वचित् सत्त्वलाभात्, सर्वत्र नास्तीति चाविधेयार्थोऽविधेयत्वाक्षिप्तोऽर्थस्तवाभिमतः, तदनयोः क्वचिदस्तित्वसर्वत्र नास्तीत्वयोर्विरोधः स्यात्। यद्विधेयस्वभावं तत्कथं प्रतिषेध्यस्वभावमिति, न, प्रतिषेधस्वभावता हि विधेयस्य विरुद्धा, न तु प्रतिषेधप्रतियोगितापि, तत्रास्तित्वतत्रनास्तित्वयोर्विरोधो न पुनरस्तित्वतत्रनास्तित्वयोरित्यर्थः। अथ योऽस्ति तस्य कथं प्रतिषेधोऽप्यस्तीति चेत्, को दोषः, अनयोरविरोधप्रसङ्ग इति चेत्, प्रकारभेदेन प्रसक्तोऽपि न दोषमावहति, तदभेदेन तु विधिप्रतिषेधौ केन स्वीकृतौ, यं प्रत्यविरोधः प्रसज्यत इति, प्रकारभेदो देशभेदः, एतेन कालभेदादिनाप्यविरोधो व्याख्यातः। तेन न कार्यस्य समवायिन्यव्याप्यवृत्तेश्चैकत्र धर्मिण्यि सत्त्वासत्त्वानुपपपत्तिः। अस्तु तर्हि स्थूलघाती विरुद्धधर्माध्यासो ग्रहणाग्रहणादिः। न। असिद्धेः। यादृशस्य विरोधस्तदध्यासस्य यस्याध्यासस्तद्विरोधस्य चाभावादित्यर्थः।

नाद्य इति, आपाद्याऽप्रसिद्धेरिति सर्वदेशासत्त्वलक्षणस्य सर्वत्राऽविधेयत्वस्याप्रसिद्धेरित्यर्थः। गगनं सर्वत्र सर्वदाऽस्तीतिप्रतीतेस्तत्रापि कालिकसम्बन्धेन विधेयत्वसम्भवादाह कथञ्चिदिति सर्वाधारतानियामककालिकसम्बन्धातिरिक्तसम्बन्धेनेत्यर्थः। विरोधमुपपादयति क्वचिदस्तीत्यादिना। ननूक्तोऽर्थो न शब्दशक्त्या लभ्य इत्याशङ्कायामाह अव्यापकत्वेति, अर्थापत्तिबललभ्यं इति भावः। तदेव स्पष्टयति क्वचिदसत्त्व इति, विज्ञानवाद्यारेकते यद्विधेयेति। प्रतिषेध्यस्वभावमत्यन्ताभावप्रतियोगिरूपम्। उक्तस्यैव फलितार्थमाह तत्रास्तित्वेति। अनयोः अस्तित्वनास्तित्वयोः। नैयायिकस्समाधत्ते प्रकारभेदेनेति देशभेदेनेत्यर्थः।

प्रसक्तोपीति अत्राविरोध इति दृश्यम्। तदभेदेन देशाभेदार्थकप्रकाराऽभेदेन, प्रसज्यते इति प्रसज्येतेति पाठान्तरम्, प्रकारभेदेनेत्यत्र प्रकारभेद इत्यस्य व्याख्यामाह प्रकारभेदो देशभेद इति। एतेन देशभेदेनाविरोधप्रदर्शनन्यायेन। व्याख्यात इति अत्र निर्दोषत्वेनेति दृश्यम्। देशकालादिभेदेन सत्त्वाऽसत्त्वयोरविरोधस्य निर्दोषतया व्याख्यानफलमाह तेन न कार्यस्येति समवायिकारणे कार्योत्पत्त्यनुत्पत्तिकालावच्छेदेन कार्यस्य सत्त्वासत्त्वयोरव्याप्यवृत्तेः संयोगस्यैकस्मिन्नेव वृक्षे शाखामूलावच्छेदेन सत्त्वासत्त्वयोश्चाविरोधेन नानुपपत्तिरित्यर्थः। बौद्धश्शङ्कते—

यो हि येन यत्र यदैवोपलभ्यते स तेन तत्र तदैव नोपलभ्यत इति नानुभवो, नाप्यभ्युपगमः। एकावयवसहितस्योपलम्भेन्यावयवसहितस्यानुपलम्भ इति चेत्, एवं तर्हि अवयविन्युपलभ्यमाने कश्चिदवयव उपलभ्यते कश्चिन्नेति वाक्यार्थः, सविशेषणे विधिनिषेधौ विशेषणमुपसंक्रामत इति न्यायात्। तथा चावयवानामुपलम्भानुपलम्भाववयविनि सश्चार्यं प्रसङ्गस्तदलमनेन। एवं कस्यचिदवयवस्यावरणेऽप्यवयविनस्तदभावेनावृतानावृतत्वाभ्यामपि न भेदः, कतिपयावयवावरणेऽप्यवयविनस्तथाविधस्थौल्योपलम्भः किं न स्यादिति त्ववशिष्यते, तदप्यसत्, तस्य परिमाणगतसामान्यविशेषस्य ततोऽन्यस्य नियतसामग्रीवेद्यस्य तदभावे तदुपलम्भेऽप्यनुपलम्भात्। एतेन कम्पाकम्पसंसर्गोऽपि निरस्तः। अवयवकम्पेऽप्यवयविनो निष्कम्पत्वात्। नैवम्, अवयवे कर्मोत्पादेऽवयविनि कर्मोत्पत्तिध्रौव्यात्, अन्यथा सर्वावयवकम्पेऽपि निष्कम्पोऽवयव्युपलभ्येतेति। चलावयवावच्छेदेनावयविनि कर्म निश्चलावयवावच्छेदेन तत्र निश्चलत्वोपलम्भात् कर्माभावोऽपीति विरुद्धसंसर्गान-

पायादिति चेत्।

येनेति येन प्रकारेणेत्यर्थः। यत्र यस्मिन् देशे, यत्रैवेति पाठान्तरम्। यदैवेति यस्मिन् काल एवेत्यर्थः। तत्रेति तत्रैवेति पाठान्तरम्। एतेन आवृतत्वानावृतत्वलक्षणविरुद्धधर्माध्यासोपि निराकृत इत्याह एवमिति, तदभावेन आवरणाभावेन, न भेद इति अवयविनो निरावृतत्वरूपैकधर्मवत्त्वादेवेति भावः। कतिपयावयवेत्यादि, यदि यावदवयवावरण एवावयव्यावरणमित्यभ्युपगमस्तर्हि कतिपयावयवावरणेप्यवयव्यनावृत एवेत्यवयव्युपलम्भे तदानीं तस्य स्थौल्योपलम्भोपि किं न स्यात्, अपि तु स्यादेवेत्यर्थः। तस्य स्थौल्यस्य, परिमाणगतसामान्यविशेषस्य, परिमाणत्वजात्यवान्तरजातिविशेषस्येत्यर्थः। ततः अवयविनः, तदभावे जातिविशेषोपलम्भकसामग्र्यभावे, तदुपलम्भेऽपि अवयव्युपलम्भेऽपि। निष्कम्पत्वादिति एकस्मिन्नवयवे कम्पः तदन्यस्मिन् अकम्प इत्येवमवयवगते कम्पाकम्पत्वे, नत्ववयविनि, तत्र निष्कम्पत्वरूपैकधर्मस्यैव सत्त्वादिति भावः। बौद्ध आशङ्कते नैवमित्यादिना, नैवम् अवयवकम्पेप्यऽवयविनो निष्कम्पत्वमित्यभ्युपगमो न युक्तः, तत्र हेतुमाह अवयव इति, यदा सर्वेष्ववयवेषु कर्म तदानीमेवावयविनि कर्म नान्यदेत्याशयेनोत्तरयति—

न। सामग्रीभेदेनावयवनियतकर्मोत्पादेन तस्यां दशायामवयविनो निश्चलत्वात्। सामग्रीभेदश्च क्षुद्रावयवकम्पेऽपि महावयविनि कर्मानुपलम्भात् फलबलात् कल्प्यते। अथ मूले वृक्षः कपिसंयोगी न शाखायामिति प्रतीतेः संयोग इव पाणौ शरीरं सकम्पं न चरणे इति प्रतीतेः कर्मापिक्याप्यवृत्त्यस्तु, अवयववृत्तिकम्पतदभावान्यतरस्य परम्परयाऽवयविगतत्वेन प्रतीतिविषयत्वोपपादनस्यावयवगतसंयोगतदभावान्यतरस्य तथा-

त्वेन तुल्ययोगक्षेमत्वात्, कर्मणो व्याप्यवृत्तित्वे संयोगस्यापि तथात्वापत्तेरिति चेत्।

नेति, तत्र हेतुमाह सामग्रीभेदेनेति, बौद्धश्शङ्कते अथेति, परंपरया स्वाश्रयवृत्तित्वसम्बन्धेन, तथात्वेन स्वाश्रयवृत्तित्वसम्बन्धेनावयविवृत्तित्वेन मूले वृक्षः कपिसंयोगी न शाखायामिति प्रतीतिविषयत्वोपपादनेन। तथात्वापत्तेः व्याप्यवृत्तित्वापत्तेः। अवयविनि संयोगानभ्युपगमे कपालद्वयसंयोगो न स्यात् कपालस्याप्यवयवित्वात्, एवं कपालिकासंयोगोऽपि न स्यात् तस्या अप्यवयवित्वात्. एवंरीत्या द्व्यणुकपर्यन्तसंयोगस्याभावे परमाणुमात्रवृत्तिरेव संयोगस्स्यात्, तथा चातीन्द्रियस्स्यात् स्वाश्रये परमाणौ प्रत्यक्षकारणीभूतस्य महत्त्वस्याभावेन स्वाश्रयसमवेतत्वसम्बन्धेन स्वस्मिन्नप्यभावात्, एवं घटादेरपि द्व्यणुकरूपत्वापत्त्या तत्प्रत्यक्षं न स्यात्, तत्कारणीभूतस्य महत्त्वस्य तत्राभावात्, एवं चक्षुरादिना घटस्यैकदेशावच्छेदेनैव संयोग इति व्याप्यवृत्तिसंयोगाऽभावेन प्रत्यक्षं न स्यात्, परमाणुना सह परमाण्वन्तरस्य यस्संयोगस्सोपि विवक्षितैकदिग्देशावच्छेदेनैवेति तत्रापि व्याप्यवृत्तिसंयोगाभावेनाऽसमवायिकारणस्य संयोगस्याभावाद् घटादेरनुत्पत्तिश्च स्यादित्युत्तरयति—

न, संयोगस्य व्याप्यवृत्तित्वेऽवयविन्यवयवपरम्परायां च क्षुद्रक्षुद्रतराद्यवयवावच्छेदेन तत्तत्संयोगाभावोपलम्भात् अणुमात्रवृत्तित्वेऽतीन्द्रियत्वं घटादेरप्रत्यक्षत्वमनुत्पत्तिश्च स्यादिति तस्याव्याप्यवृत्तित्वमास्थीयते, चले चावयवे कर्म व्यापकमेवोपलभ्यते, अवयविनि च तस्याव्यापकत्वे कर्मत्वस्य तदुभयवृत्तित्वे सविषयावृत्तिजातेर्व्याप्यवृत्त्यव्याप्यवृत्तिवृत्तित्वविरोधात्, वेपते पल्लवो न तु महीरुह इत्यादिप्रयोगाच्चेति सम्प्रदायः।

न, संयोगस्य व्याप्यवृत्तित्व इति, तस्याव्यापकत्वे कर्मणोऽवृत्तित्वे,तदुभयवृत्तित्वे व्याप्यवृत्त्यव्याप्यवृत्तिकर्मद्वयवृत्तित्वे, सविषयावृत्तिजातेः ज्ञानेच्छाप्रयत्नाऽवृत्तिजातेः । विरोधादिति अवच्छेदकतासम्बन्धेनाऽसदादेर्ज्ञानमिच्छां प्रयत्नं च प्रति शरीरस्य तादात्म्येन कारणत्वाच्छरीरावच्छेदेनात्मनि समवायसम्बन्धेन तत्सत्त्वं घटाद्यवच्छेदेन तदभाव इति तेषामव्याप्यवृत्तित्वात् ईश्वरज्ञानादीनां च निरवच्छिन्नवृत्तिकत्वेन व्याप्यवृत्तित्वात्तदुभयवृत्तीनां ज्ञानत्वेच्छात्वप्रयत्नत्वजातीनां व्याप्यवृत्त्यव्याप्यवृत्तिवृत्तित्वं, नान्यजातेरितिनियमः, कर्मत्वस्य व्याप्यवृत्त्यव्याप्यवृत्तिवृत्तित्वे तु तस्य नियमस्य भङ्गस्स्यादित्यर्थः। अनुभवप्रमाणमप्याह वेपत इति। नव्यमतमुपदर्शयति—

यत्रैकस्मिन्नवयवे निश्चलेऽप्यवयवी चलतीति प्रतीयते, तत्राव्याप्यवृत्त्येव कर्म, सविषयावृत्तीत्यादेः परिभाषामात्रत्वात्। एतेन रूपादयो व्याख्याता इति तु नव्याः। एवं तर्हि कम्पाकम्पयोरवयवयोर्विभागात् संयोगनाशाद् द्रव्यनाशः स्यादिति चेत्, किं ततः, अपसिद्धान्त इति चेत्, न, एवमपि क्वचिदभ्युपगमात्। सर्वत्रैवं प्रसङ्ग इति चेत्, तथाप्यवयविनः किं बाधितं, विनाशस्य प्रतियोगिनोऽबाधकत्वात् प्रत्युत साधकत्वादेव, न चैवमपि, कर्मणो द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनननियमानभ्युपगमात्, अवयवकम्पेऽप्यवयविनः प्रत्यभिज्ञानात्।

यत्रैकस्मिन्नवयव इति। यत्र विजातीयनानारूपैरवयवैरनयव्यारभ्यते तत्रावयविनि नानारूपाण्यव्याप्यवृत्तीनि,न त्वतिरिक्तं चित्ररूपमिति तान्येव चित्रप्रत्ययविषयस्स्यादित्याशङ्कामिष्टापत्त्या परिहरति एतेनेति,यत्किञ्चिदवयवे कर्मसत्त्वेऽपि न तदवच्छेदेनाव-

यविनि कर्मत्यभ्युपगमे यस्मिन्नवयवे कर्म तस्य तेन कर्मणाऽवयवान्तरेण विभागः तेन चासमवायिकारणावयवद्वयसंयोगनाशस्त-स्माच्च द्रव्यनाशस्स्यात्, अवयविनि कर्मणोऽव्याप्यवृत्तित्वे त्ववयवे चलति सत्यवयव्यपि चलतीति यद्देशावच्छेदेनावयवस्य विभा-गस्तद्देशावच्छेदेनावयविनोऽपि विभाग इति न निष्कम्पावयवदेशं परित्यज्याऽन्यत्र गमनसंभावना निष्कम्पावयवसहितस्यैवावयविनो-ऽन्यत्र गमनादिति नावयविविनाशसंभव इत्याशयेन शङ्कते एवं तर्हीति। क्वचिदभ्युपगमादिति आरम्भकसंयोगप्रतिद्वन्द्विविभाग-जनककर्मस्थले संयोगनाशाद् द्रव्यनाशस्याभ्युपगमादित्यर्थः, युक्तेस्साम्यात्सर्वत्रावयविविनाशप्रसक्तिस्स्यात्, तथा चापसिद्धान्तस्स्या-दिति चेत्, भवतु तथापि न तेनावयविविलोपः, तस्यापसिद्धान्तस्य पुरुषधर्मत्वादित्याह सर्वत्रेति। अबाधकत्वादिति पूर्वं प्र-तियोगिनस्सत्त्व एव विनाशस्य सत्त्वादितिभावः। साधकत्वादेवेति प्रतियोगितासंबन्धेन ध्वंसं प्रति तादात्म्यसंबन्धेन प्रतियो-गिनः कारणत्वेन कार्यविधया ध्वंसस्य साधकत्वादेवेतिभावः। अवयवकर्मणोऽवयवविभागादिना द्रव्यनाशकत्वं पूर्वमभ्युपगमवा-देन स्वीकृतम्, अधुना तदपि परमार्थवृत्तिमभ्युपगम्य निरस्यति न चैवमिति, उक्तनियमानभ्युपगमे हेतुमाह अवयवेति, शङ्कते—

ननु कर्मत्वाविशेषेऽपि किञ्चिदेव कर्म द्रव्यारम्भकसंयोगविरोधिनं विभागमारभते नेतरदिति कुत इति चेत्, कारणविशेषात् कस्यचिदेव कर्मणस्तथाभूतविशेषलब्धेः। एतेन पाणौ चलति तन्मूलपरमाणुरपि चलेत्, तस्मिन्नचलति तदारब्धावयविनश्चलनानुपपत्तेः, ततो चलाद् भुजपरमाणोर्विभागस्ततो द्व्यणुकादिविभागक्रमेण भुजादपि विभागः, यो येन संयुज्यते वियुज्यते वा स तत्कार्यद्रव्येणापीति न्यायात्, अनेनैव क्रमेण पाणि-र्भुजाद्विभज्यत इति पाणिभुजविभागाच्छरीरनाश इति निरस्तम्।

नन्विति, तथाभूतविशेषलब्धेरिति एकस्यैव कर्मण आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्यानारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वस्य चाभ्युपगमे त्वग्रावच्छेदेनानारम्भकसंयोगविरोधिविभागजनकेनैव कर्मणा मूलावच्छिन्नारम्भकसंयोगविरोधिविभागस्यापि जननात्तेन चारम्भकसंयोगनाशेन कमलनाशस्स्यादितिभावः। एतेनेति, अस्य निरस्तमित्यनेनान्वयः, एतेन कर्मणो द्रव्यारम्भकसंयोगप्रतिद्वन्द्विविभागजनकत्वमिति नियमानभ्युपगमेन, एतेनेत्यतिदिष्टमेव सूचयति—

नहि पाणिपरमाणुक्रिया भुजान्तपरमाणुविभागमारभते, पूर्वं चलाचलयोर्विभागात् साक्षात्तदारब्धावयविनोऽपि विनाशः स्यादिति चोद्यमपास्तम्, इदानीं चलाचलावयवारम्भकपरमाणुविभागद्वारेण चलाचलयोरपि विभागादवान्तरावयविनाशद्वारेण परमावयविनोऽपि नाशः स्यादिति चोद्यं पूर्वनिरासहेतुनैव निरस्तमवगन्तव्यमिति नारायणः। नियमेन तदनारम्भे कर्मलक्षणक्षतिः,'संयोगविभागयोर्निरपेक्षं कारणं कर्मेति' तल्लक्षणादिति चेत्,न,आकाशादिदेशविभागोपजननेनापि तदुपपत्तेर्नोद्यकर्मवत्। नोद्यस्य हीषोः कर्म न सहसा नोदकेन द्रव्येण विभागमारभते, किन्तु तत्रत्याकाशदेशेनेति। एतच्च प्रकृतसम्भवाभिप्रायेण। वस्तुतो जननयोग्यत्वं लक्षणं, न तूपधानम्। अत एव विनश्यदवस्थेपि द्रव्ये कर्मोत्पादं सामग्रीसम्भवादुपगच्छति। अवयवगतं कर्मावयवान्तरेण कदाचिद्विभागमारभते कदाचिन्नेत्यत्र किं नियामकमिति चेत्,कारणविशेषाधीनः कर्मगतः स्वभावविशेष इत्युक्तमेव। एवं तर्हि यद्यवयवकम्पेप्यकम्प एवावयवी,हन्तावयवसंयोगिविभागिभ्यामाकाशादिदेशाभ्यां न संयुज्येत न विभज्येत, संयोगादिकारणस्य कर्मणोऽन्यतरत्राप्यभावात्।

नङ्गीति, पौनरुक्त्यनिरसनायाह पूर्वमिति, एवं तर्हि कम्पाकम्पयोरित्यादिग्रन्थेन, इदानीम् एतेन पाणौ चलतीत्यादिग्रन्थेन, तदनारम्भे द्रव्यारम्भकसंयोगविरोधिविभागानारम्भे, निरपेक्षमिति स्वोत्तरोत्पन्नभावभूतकारणानपेक्षमित्यर्थः, तेनोत्तरसंयोगजनने पूर्वसंयोगनाशापेक्षणेऽपि न क्षतिः। सद्रूसा, तत्रत्याकाशदेशेन विभागमजनयित्वैव। अत एवेति कर्मलक्षणे जननयोग्यत्वलक्षणमेव कारणत्वं प्रविष्टं नतु कार्याव्यवहितप्राक्क्षणसम्बन्धलक्षणफलोपधानकारणत्वं प्रविष्टमितिहेतोरित्यर्थः। अवयवक्रियया विभागानन्तरमारम्भकसंयोगनाशक्षणे यत्रावयविनि यत्कर्म तस्य कर्मणो न विभागजनकत्वं संभवति, उत्तरक्षण एव द्रव्यस्य समवायिकारणस्य विनाशेन विभागोत्पत्त्यसंभवात्, न च तथापि कर्मलक्षणक्षतिः, कारणतावच्छेदकधर्मवत्त्वरूपजननयोग्यत्वस्य तत्र सत्त्वादितिभावः। उपगच्छतीत्यस्य स्वीकरोतीत्यर्थं कर्मोत्पादमिति कर्मण उत्पादमित्यर्थः, प्राप्नोतीत्यर्थे प्रापणक्रियायाः कर्त्ता कर्म, तस्याः कर्म चोत्पादः, तथा च कर्मोत्पादं प्राप्नोतीत्यर्थः। अन्यतरत्रापि आकाशदेशावयविनोर्मध्यादेकस्मिन्नपि। समवायसंबन्धेनावयविसंयोगं प्रति स्वाश्रयसमवेतत्वसम्बन्धेनावयवकर्मणः कारणत्वमिति तेनैव निष्कम्पेऽप्यवयविन्याकाशसंयोगोपपत्तिरित्यन्तरा शङ्कते—

न नावयवकर्मैव तत्र कारणं कार्थप्रत्यासत्त्याऽसमवायिकारणं वाच्यम्, अवयवावयवादौ चलितेऽवयविनि संयोगाद्यनुत्पादप्रसङ्गात् इति चेत्, न, अवयवसंयोगविभागाभ्यामेव तत्सिद्धेः। एतच्च सम्यगवबोद्धुं वैशेषिकमधीष्वेति। तर्हि चलदवयवसमाश्रितोऽप्यचलन्नेवावयव्युपलभ्येतेति चेत्, नेदमनिष्टं, पाणौ कम्पमाने शरीरं न कम्पत इति प्रत्ययात्। नन्वेवं निश्चलैकद्व्यवयवोऽप्यवयवी चलत्वेन नोपलभ्येतेति चेत्, यो

यदाश्रिततयोपलभ्येत स तस्मिंश्चलत्यचलोऽपि चल एवोपलभ्यते, दर्पणमुखवज्जलचन्द्रवच्चेति किमिति न बुध्यसे ॥

न चावयवकर्मैवेति, अवयवावयवतदवयवावयवादिवृत्तिकर्मणः उक्तसम्बन्धेन महावयविन्यवृत्तेर्व्यभिचारेणावयविसंयोगकारणत्वं न सम्भवतीत्याह अवयवावयवादाविति, संयोगो हि त्रिविधः, आद्योऽन्यतरक्रियाजन्यः यथा श्येनशैलादिसंयोगः, द्वितीय उभयकर्मजन्यः यथा मेषयोस्संयोगः, तृतीयः संयोगजन्यसंयोगः यथा हस्ततरुसंयोगाच्छरीरतरुसंयोगः । विभागोऽपि त्रिविधः, अन्यतरक्रियाजोभयक्रियाजविभागजभेदात्, तत्राद्यः श्येनशैलयोः, द्वितीयो मेषयोः, तृतीयस्तु द्विविधः, तत्राद्यः कारणमात्रविभागजन्यः यथा कपालद्वयविभागेन कपालाकाशविभागः, द्वितीयः कारणाकारणविभागजन्यः यथा हस्ततरुविभागाच्छरीरतरुविभागः, तथा च प्रकृतेऽवयवाकाशदेशयोः संयोगादवयव्याकाशदेशयोः संयोगस्य विभागाद्वा विभागस्योत्पादेन सिद्धिस्स्यादिति समाधत्ते,न,अवयवसंयोगेति, तर्हीति अवयवकम्पेप्यवयविनो निष्कम्पत्वे हीत्यर्थः।। दर्पणमुखवत् दर्पणस्य चलने तत्प्रतिबिंबितमचलितमपि मुखं चलितमुपलभ्यते तद्वत्, जलचन्द्रवत् जलस्य चलने तत्प्रतिबिंबितोऽचलितोऽपि चन्द्रः चलितइत्युपलभ्यते तद्वत्, अवयवकर्मणः स्वाश्रयसमवेतत्वसम्बन्धेनावयविनि सत्त्वेन तत्र चलावयवावच्छेदेन चलतीति प्रत्ययवन्निश्चलावयवावच्छेदेनापि तत्प्रत्ययः स्यात् अवयविन एकत्वादित्याशङ्कते—

यद्यवयवचलनग्रहादेवावयविनि चलतीति प्रत्ययो निश्चलावयवावच्छेदेनापि तदा भवेत्, अव्यापके तु कर्मण्युपगते नायं दोषस्तदवच्छेदेनावृत्तेरिति चेत्, न, यत्राश्रये चलनं गृह्यते तदवच्छेदेनैव तदारोप्यत इति

फलयत्वेन कल्पनात्। तथापि चलाचलाश्रयस्य चलतया प्रतीतौ चलाचलजलचन्द्रवद्द्वैतप्रत्ययोऽपि स्यादिति चेत्, स्यादपि, यद्याश्रयविच्छेदः स्यात्,

यद्यवयवेति, यत्राश्रये यस्मिन् अवयव्याश्रयेऽवयव इत्यर्थः। तदिति चलनमित्यर्थः, अवयविनीतिशेषः। चलाचलाश्रयकस्यावयविनः चलावयवावच्छेदेन चलप्रतीतौ कतिभागे जलस्य चलनेऽचलने यथा चन्द्रे द्वैतबुद्धिर्भवति तथावयविन्यपि सा स्यादित्याशङ्कते तथापीति, आश्रयविच्छेदस्य द्वैतप्रत्ययनियामकत्वमुपपादयति—

न ह्येकस्मिन्नविच्छिन्नावयवभेदेन द्विचन्द्रभ्रमो नाम, किन्तु स एवैकश्चन्द्रश्चले चल उपलभ्यतेऽचले त्वचल इति। वीचिषु सोऽपि सहस्रायत इति चेत्, एवमेतत्तासां भेदेनाकलनात्, गृह्यमाणविच्छेदाश्रयद्वयवृत्तित्वग्रहणादुभयमध्यवृत्तिव्यवधायकग्रहणाद्वा दोषाद्भेदप्रत्ययः, अत एव चलयोरचलयोरेव वा जलयोरादर्शयोश्च चन्द्रवदनादिभेदप्रत्ययः। करचरणादिविच्छेदग्रहेऽप्युभयमध्यवृत्तिव्यवधायकाग्रहणान्न शरीरभेदग्रहः, सति चारोपे निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इति भावः ॥

नन्वीति,आश्रयानन्तर्याभावलक्षणाश्रयविच्छेदरूपहेत्वभावेपि द्वैतप्रत्ययसद्भावेनोक्तहेतौ व्यतिरेकव्यभिचारशङ्कामाह वीचिष्विति। सोपि चन्द्रोपि, नोक्तव्यतिरेकव्यभिचारः, वीचीनां विच्छिन्नतया ग्रहणेनोक्तहेतोरपि सद्भावादित्युत्तरयति एवमेतदिति, गृह्यमाणविच्छेदाश्रयद्वयवृत्तित्वग्रहणादिति गृह्यमाणो भ्रान्तबुद्धिविषयो विच्छेद आनन्तर्याभावो यस्यैवम्भूतमाश्रयद्वयं वीचिभावापन्नजलद्वयं तत्र वृत्तित्वग्रहणादित्यर्थः, अस्य दोषादित्यनेनान्वयः, भेदप्रत्ययः चन्द्रे द्वैतप्रत्ययः। चन्द्रवद-

नादिभेदप्रत्यय इति, द्वैतप्रत्ययस्य चलाचलतया प्रत्यय एव कारणमिति पूर्वाभ्युपगतपक्षे त्वत्र तस्य कारणस्याऽभावेनोक्तप्रत्ययो न स्यादितिभावः। न शरीरभेदग्रह इति प्रथमपक्षे तु शरीरभेदग्रहप्रसङ्गस्स्यादेवेति तत्परिहारेण द्वितीयपक्षाश्रयणमिति भावः। ननु प्रथमपक्षोक्तदोषबलादेवात्र किमिति न भेदारोप इत्यत आह सति चारोप इति, दोषाणामननुगतत्वेन तत्तद्व्यक्तित्वेनैव भ्रमं प्रति कारणत्वं तेन यज्जातीयदोषस्यैकत्र भ्रमजनकत्वं तज्जातीयस्यैव नान्यत्र भ्रमजनकत्वमिति गृह्यमाणविच्छेदाश्रयद्वयवृत्तित्वग्रहस्य जलचन्द्रे द्वैतभ्रमजनकत्वेऽपि न शरीरे द्वैतबुद्धिजनकत्वमित्याशयः। बौद्धश्शङ्कते—

अस्तु तर्हि चलाचलयोर्युतसिद्धिप्रसङ्ग इति चेत्, न, स्वयं प्रतिबन्धासिद्धेः। युतसिद्धिरसम्बद्धयोर्विद्यमानत्वं स्वमते, प्रतिबन्धासिद्धिश्च बौद्धस्य, निरन्तरोत्पन्ननिश्चलपरमाणुद्वयारब्धयोश्चलाचलयोः क्षणिकनिरन्तरपरमाण्वोरसम्बद्धविद्यमानत्वाभावादिति दीधितिकारः। अस्तु तर्हीति—अयमर्थः—अवयवावयविनोः समवायाभ्युपगमादयुतसिद्धिरिष्टा युतसिद्ध्यभावश्चायुतसिद्धिः, युतसिद्धिश्च द्वयोरपि सम्बन्धिनोः सम्बन्धिद्वयातिरिक्ताश्रयाश्रयित्वं, द्वयोरन्यतरस्य पृथग्गतिमत्त्वं च, द्विविधयुतसिद्ध्यभावश्चायुतसिद्धिः, एकैकाभावेऽप्ययुतसिद्धित्वाभावात्। अपृथग्गतिमत्त्वेऽपि त्वगिन्द्रियशरीरयोरपृथगाश्रयत्वविगमेन तदसिद्धेः। शरीरस्य स्वावयवाश्रयत्वेऽपि परमाणोर्निराश्रयत्वेन शरीरपरमाण्वोरपृथगाश्रयत्वेऽपि पृथग्गतिमत्त्वेन तदसिद्धेः। अतोऽवयवावयविनोः पृथग्गतिमत्वे युतसिद्धिप्रसङ्ग इति। स्वयमिति, न हि भवन्मतेऽयुतसिद्धयोरपृथग्गतिमत्त्वं पृथग्गतिमतोश्च युतसिद्धत्वं सिद्धं. भवतो बाह्यार्थाभावेन साधर्म्यवैधर्म्यदृष्टान्ताभावेन व्याप्तेर्ग्रहीतु-

मशक्यत्वादिति नारायणः ॥

अस्त्विति, चलाचलयोः सकम्पनिष्कम्पावयवावयविनोः। स्वयं प्रतिबन्धासिद्धेरित्यस्यैव दीधितिकारीयमर्थमाह युतसिद्धिरिति। प्रतिबन्धासिद्धिः कथं बौद्धस्येत्यत आह बौद्धस्य निरन्तरेति,बौद्धस्येत्यनन्तरं मते इति शेषः,यत्र देशे परमाणुस्तत्रैव द्वितीयक्षणे तेनैव परमाणुना परमाण्वन्तरोत्पत्तिः परमाणोरचलत्वं, देशान्तरे परमाणोरुत्पत्तिश्चलत्वम्, एवंभूतयोश्चलाचलपरमाण्वोर्निरन्तरोत्पन्ननिश्चलपरमाणुद्वयारब्धत्वेन सम्बद्धतयैव विद्यमानत्वेनासम्बद्धत्वे सति विद्यमानत्वाभावान्न चलाचलयोर्युतसिद्धत्वेन व्याप्तिसिद्धिरिति भावः। नारायणाचार्यीयव्याख्यामाह अस्तु तर्हीतीति। त्वगिन्द्रियस्य वायवीयत्वेन शरीरस्य च पार्थिवत्वेन पृथगाश्रयाश्रयित्वेन नायुतसिद्धत्वमित्याह अपृथग्गतिमत्त्वेऽपीति, तदसिद्धेः अयुतसिद्धत्वासिद्धेः। भवतः विज्ञानवादिनो बौद्धस्य, बौद्धश्शङ्कते—

ननु भवतस्तावत् सिद्धैव व्याप्तिस्तामादाय प्रसङ्गः सुकरो ममेति चेत्, न, तादृशव्याप्तौ कस्याप्यभ्युपगमस्याभावात्, वस्त्रोदकादौ सहचारदर्शनाद्व्यभिचारादर्शनाच्च तथाव्याप्तिनिश्चयः स्यादिति चेत्, न, तन्तुवस्त्रादौ सत्यपि चलाचलत्वे विपर्ययस्यासम्बद्धयोरविद्यमानत्वस्यापि दर्शनात्। इदं मिथ्येति चेत्, तत् कथं सत्यम् अबाधादिति चेत्, इह तर्हि बाधकान्तरं वाच्यम्, चलाचलत्वमेवेति चेत्, न, युतसिद्धावेव किमिति नेदं बाधकमिति भावनीयम्। विपक्षे बाधकाभावात् न सहचारदर्शनमात्रादुक्तव्याप्तिनिश्चय इति परमार्थः॥

नन्विति, भवतः नैयायिकस्य। वस्त्रोदकयोः पृथग्गतिमत्त्वेन युतसिद्धत्वात्तत्र चलाचलत्वयुतसिद्ध्योस्सहचारग्रहादन्यत्र

व्यभिचारस्याग्रहाच्च तयोर्व्याप्तिनिश्चयस्स्यादिचेत्, न, तन्तुवस्त्रादौ पृथग्गतिमत्त्वेऽपि युतसिद्धत्वाभावेन युतसिद्धत्वस्यापाद्यस्याभाववति तत्र चलाचलत्वस्यापादकस्य सत्त्वेन व्यभिचारग्रहादित्याह वस्त्रोदकादाविति। तन्तुवस्त्रादौ व्यभिचारदर्शनं भ्रम इति चेत्, न, वस्त्रोदकादौ सहचारदर्शनं कथं प्रामाणिकमित्यपि वाच्यं स्यादिति शङ्कोत्तराभ्यामाह इदमिति। नेदं न चलाचलत्वम्। रक्तत्वारक्तत्वरूपविरुद्धधर्माध्यासएव स्थूलावयविनि बाधक इत्याशङ्कते बौद्धः—

रक्तारक्तविरोधोऽत्रेति चेत्, न, रागिद्रव्याद्र्लिप्ते पटादौ रक्तत्वस्यैवाभावात्, एकदेशे तत्प्रतीतेस्तु भ्रान्तत्वात्, प्रादेशिकभ्रममूलरागद्रव्यसंयोगासंयोगविरोधोऽस्त्विति चेत्, न, परमाणुवादिनं सौत्रान्तिकं प्रति एकस्यैव परमाणोरेकदिगवस्थितेन परमाणुना संयोगोऽसंयोगश्च यथा तथावयविन्यपीत्येवं विरोधस्य प्रागेव परिहृतत्वात्। इतरं प्रति का वार्त्तेति चेत्, सैव तावत्प्रकारभेदेनाविरोधात्, एवमपि विरोधाभ्युपगमे व्याप्तेरसिद्धेः। संयोगतदभावयोर्विरोधस्य भेदेन व्याप्त्यसिद्धेरित्यर्थः, तथा हि–संयोगतदभावौ प्रमाणसिद्धौ न वा, यदि न सिद्धौ, कथं तयोर्भेदेन व्याप्तिः, अथ सिद्धौ, तर्हि तद्ग्राहकप्रमाणेनैव तयोः प्रकारभेदेनाविरुद्धं सादेश्यमिति। एकत्रैवावच्छेदकभेदेन संयोगतदभावग्राहिणा प्रत्यक्षेणाविरोधस्य स्वहस्तितत्वात्, तयोरसामानाधिकरण्यनियमरूपव्याप्त्यसिद्धेरित्यपि केचित्। न चैवं पदार्थान्तरवैधर्म्येण संयोग एव निराकर्त्तव्यः,

रक्तेति। प्रदेशावच्छेदेन भ्रममूलं यो रागद्रव्यसंयोगस्तस्य तदभावस्य न विरोधोऽस्त्वित्याशङ्कते प्रादेशिकेति। विज्ञानवादिनां मते विज्ञानातिरिक्तबाह्याभावेन तत्संयोगासंयोगविरोधाभावदृष्टान्तस्योपदर्शयितुमशक्यत्वेन पृच्छति इतरं प्रतीति, विज्ञा-

नयादिनं प्रतीत्यर्थः। एवमपि विरोधाभ्युपगमे भिन्नभिन्नप्रकारावच्छेदेनैकाधिकरणवृत्तिसंयोगतदभावयोरपि विरोधस्याभ्युपगमे, व्याप्यसिद्धिमेव विशदयति तथाहीत्यादिना। व्याप्तेरसिद्धेरित्यस्य विवरणं मतान्तरेणाह एकत्रेति, स्वहस्तितत्वात् स्वीकृतत्वात्। तयोः संयोगतदभावयोः। घटपटादीनां व्याप्यवृत्तीनां स्वस्वाभावेन सहासामानाधिकरण्यं साधर्म्यं तच्च संयोगेऽव्याप्यवृत्तित्वान्नास्तीत्येवं पदार्थान्तरवैधर्म्येण संयोगः स्वरूपत एव न स्यादित्याशङ्कते न चेति, यत्र यस्य वैधर्म्यं तत्र तत्तादात्म्यं निराकर्तव्यं, नतु स्वरूपमपि, तथा च व्याप्यवृत्तिपदार्थवैधर्म्यात्प्रमाणसिद्धस्याव्याप्यवृत्ते र्व्याप्यवृत्तितादात्म्यमेव न स्यात्, नतु स्वस्वरूपस्यापि क्षतिः, अन्यथाऽव्याप्यवृत्तेस्संयोगस्य वैधर्म्येण व्याप्यवृत्तित्वेन प्रमाणसिद्धानां घटपटादीनां स्वरूपमपि निराकृतं स्यादिति परस्परापेक्षया स्वरूपनिराकरणात्सर्वशून्यत्वं स्यादित्युत्तरयति—

नद्वैधर्म्येण हि तत्तादात्म्यं निराक्रियेत, न तु स्वरूपमपि, प्रमाणसिद्धविशेषेऽप्येकवैधर्म्येणान्यस्वरूपनिराकरणे संयोगवैधर्म्येणेतरेषामपि स्वरूपनिराकरणात् सर्वशून्यताप्रसङ्गात्, न चैवमेव न्यायम्, नियमवता हि सत्यवैधर्म्येणेतरन्निराक्रियेत,असत्यवैधर्म्येण सत्यत्वस्यैव निर्वाहात्,नियमतस्तद्रूपावच्छिन्नव्यावृत्तेन वैधर्म्येधर्मेण तादृप्यं निराक्रियते,न च कस्यचिद्धर्मस्य स्वस्वमात्रावृत्तित्वं कस्यापि प्रमाणस्य विषयो,येन सत्यत्वं क्वापि निराक्रियेत, प्रत्युतासत्यवैधर्म्येण सत्यत्वनियतेन धर्मेणार्थक्रियाकारित्वादिना सत्यत्वस्यैव सिद्धेरिति भावः।

नद्वैधर्म्येणेति। सर्वशून्यत्वस्याऽन्याय्यत्वे हेतुमाह नियमवता हीति, इतरन्निराक्रियत इति असत्यं गगनकुसुमादि स्वरूपतो निषिध्यत इत्यर्थः "निराक्रियेत"इति पाठान्तरम्, यत्पूर्वमुक्तं तस्यैवैदम्पर्यार्थमाविष्करोति नियमत इति। प्रत्युतास-

त्यवैधर्म्येणेति स्वाभावेन सह सामानाधिकरण्यमसामानाधिकरण्यं वा न सत्यवैधर्म्यं,येन तेन सत्यत्वस्य निराकरणं स्यात्, किन्त्वसत्यवैधर्म्येणाऽर्थक्रियाकारित्वविधिनिषेधगोचरत्वादिनाऽसत्यत्वनिराकरणात्संयोगादीनां सत्यत्वस्यैव सिद्धिरितिभावः । युक्त्यन्तरेणापि संयोगसिद्धिमाह—

निषेध्यप्रतीतिनान्तरीयकत्वाच्च निषेधसिद्धेः, शशविषणादौ कल्पितेनापि निषेध्येन निषेधसिद्धिरिति चेत्, न, असत्ख्यातिनिरासे निराकृतत्वात्, संयोगस्य वाङ्मात्रेण काल्पनिकत्वसिद्धावतिप्रसङ्गाच्च । शशशृङ्गन्यायस्य योग्यानुपलम्भाभावेनासिद्धेः । इत एव बाधकात्तत्सिद्धावितरेतराश्रयत्वं, काल्पनिकत्वसिद्धौ योग्यानुपलम्भसिद्धिस्तत्सिद्धौ च काल्पनिकत्वसिद्धिरिति ।

निषेध्येति, संयोगसिद्धावेव तन्निषेधसिद्धिः, अलीकस्य निषेधायोगादितिभावः । शशशृङ्गं नास्तीत्येवमलीकस्यापि निषेधप्रतीतिर्भवतीति चेत्, न, असत्ख्यातेर्निराकरणाच्छशशृङ्गं नास्तीतिप्रतीतिर्व्युत्पत्तिवैचित्र्याच्छशे शृङ्गाभावावगाहिनी पीतशङ्खो नास्तीत्यत्र पीतत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावे शङ्खप्रतीतिवत् शशपदसमभिव्याहारबललभ्येन शशीयत्वावच्छिन्नप्रतियोगिताकत्वसंसर्गेण शृङ्गस्य नास्तिपदार्थेऽभावेऽन्वयादुक्तसम्बन्धेन शृङ्गविशिष्टाभावागाहिनी वेति शङ्कोत्तराभ्यामाह शशविषाणादाविति । संयुक्ताविमावित्यादिप्रतीतिसिद्धस्यापि संयोगस्य काल्पनिकत्वाभ्युपगमे प्रमाणसिद्धानां घटपटादीनामपि तथात्वं स्यादित्याह संयोगस्येति । शशे शृङ्गं स्याच्चक्षुपलभ्येतेत्यापादानबलाद्योग्यानुपलब्ध्या शृङ्गनिषेधो भवति प्रकृते त्वस्मिन् देशे संयोगस्स्याच्चक्षुपलभ्येतेत्यापादनबलेन देशगर्भितयोग्यानुपलब्धिर्विवक्षितदेश एव संयोगनिषेधं प्रत्यला, सर्वोपसंहारेण योग्यानुप-

लब्धिस्तु न संभवत्येव, संयोगासिद्धौ तत्सत्त्वतदुपलम्भयोर्व्याप्यव्यापकभावाभावेनापादनस्यैवाभावात् इति तया न संयोगनिषेधसंभव इत्याह शशशृङ्गन्यायस्येति, य एव देवदत्तेनोच्चरितश्शब्दस्स एव मया श्रूयते इति प्रत्यभिज्ञा यथा साजात्यावगाहित्वात्र व्यक्त्यभेदे मानं तथा संयोगप्रतीतिर्व्यवधानाऽभावाऽऽदिनोपपद्यमाना नातिरिक्ते संयोगे मानमित्याशङ्कते—

यथा प्रत्यभिज्ञानं तज्जातीयविषयत्वेनोपपाद्यमानं न व्यक्त्यभेदे मानमिति शब्दानित्यत्वसाधकप्रमाणप्रवृत्तिरेवं संयोगप्रतीतिरन्यथोपपद्यमाना न तत्र तत्त्वान्तरे मानमिति संयोगबाधकप्रमाणप्रवृत्तिः स्यादिति चेत्, अन्यथाऽन्यविषयत्वेनोपपत्तिः, भ्रान्तत्वेन वा, नाद्यः, प्रत्यभिज्ञाने सामान्यवत् संयोगप्रत्यये तदनुरूपविषयान्तराभावात्। न द्वितीयः। अनुभवस्य तदनुरूपमुपाधिमुपपिण्डमदत्त्वा भ्रान्तत्वेनान्यथोपपत्तौ तद्विपरीतानुमानप्रवर्त्तनेऽप्यानुगुण्यत्वानुमानप्रवृत्तिप्रसङ्गात्। एवंभूतमर्यादातिक्रमे च त्वदभिप्रेतप्रतिबन्धप्रत्ययस्यापि भ्रान्तत्वेनान्यथासिद्धिप्रसङ्गः कथं वार्य इति तदवारणे शिथिलमूलस्तर्कः कथं प्रवर्त्तेत। यदेकं तन्न विरुद्धधर्माध्यस्तं, यथा क्षणिकस्वलक्षणं, यच्च विरुद्धधर्माध्यस्तं, न तदेकं यथा गवाश्वमिति प्रतिबन्धः, यदेकं तन्न विरुद्धधर्माध्यस्तं, यथा क्षणिकः परमाणुः, एकश्चाभ्युपेयतेऽवयवी परेणेति तर्कः।

यथा प्रत्यभिज्ञानमिति। तदनुरूपेति संयोगात्मकविषयानुरूपेत्यर्थः। तदनुरूपम् अनुभूयमानानुरूपम्, तद्विपरीतेति अनुभवविपरीतसंयोगाभावानुमानोपगमेऽप्यानुगुण्यत्वानुभवस्यापि भ्रान्तत्वेनान्यथोपपत्तेस्तत्रानुगुण्यत्वानुमानमपि स्यात् प्रमाणमित्यर्थः, बौद्धश्शङ्कते—

नन्वर्थक्रियाशून्यविषयत्वं संयोगप्रत्ययस्य प्रामाण्ये बाधकमिति चेत्, न, संयोगस्यापि शब्दपाकजाद्यर्थक्रियास्थितेः। अथ नैरन्तर्यमेव संयोगस्थानेऽभिषिच्यतां कृतं तत्त्वान्तरेणेति चेत्,

नन्विति, शब्दो हि संयोगजविभागजशब्दजभेदात्त्रिविध इति संयोगाव्यवहितोत्तरध्वन्यात्मकशब्दं प्रति भेरीदण्डादिसंयोगस्य निमित्तकारणत्वं भेर्याद्याकाशसंयोगस्य चाऽसमवायिकारणत्वं वर्णात्मकाद्यशब्दं प्रत्यपि कण्ठताल्वादिसंयोगस्य कारणत्वमित्यर्थक्रियाकारित्वेन संयोगस्य सद्रूपत्वात् तद्विषयकप्रत्ययस्यापि प्रामाण्यसिद्धिः, एवं पार्थिवपरमाणुरूपादिकं प्रति तेजस्संयोगस्यासमवायिकारणत्वेन प्रत्यक्षं प्रतीन्द्रियार्थसंयोगस्य ज्ञानादिप्रत्यात्ममनस्संयोगस्य कारणत्वेन एवं कार्यान्तरं प्रति तत्तत्संयोगस्य कारणत्वेनार्थक्रियाकारित्वात्तस्य तद्विषयकज्ञाने नार्थक्रियाशून्यविषयत्वाद्भ्रान्तत्वमिति नैयायिकस्समाधत्ते,न, संयोगस्यापीति, नैयायिको नातिरिक्तस्संयोगः किन्तु नैरन्तर्यमेव स इत्यभ्युपगन्तारं बौद्धं पृच्छति—

किमिदं नैरन्तर्यं, द्वयोर्मध्ये मूर्त्तद्रव्यविरह इति चेत्, उष्णं जलं शीतलं शिलातलमित्यादौ जलशिलातलादिमध्ये तेजःपाथसोः सत्त्वेन त्वचा जलाद्यग्रहणप्रसङ्गः। निविडद्रव्याभावस्तथेति चेत्, विच्छेदेऽपि तथात्वे त्वचा द्रव्यग्रहणप्रसङ्गः, संयुक्तव्यवहारप्रसङ्गः, निविडसंयुक्तयोर्मध्याग्रहणात् संयुक्तव्यवहारानुदयप्रसङ्गश्च। न च तदविषयकमपि तज्ज्ञानं क्षणिकतानये तत्तद्व्यवहारकुर्वद्रूपमिति न दोष इति वाच्यम्, तद्विषयत्वव्याप्यस्यैव तत्कुर्वद्रूपत्वस्य वाच्यत्वात्, कुर्वद्रूपत्वातिरिक्तबीजत्वास्वीकारे बीजत्वव्यवहारे व्यभिचारस्यापि तन्नये दोषत्वादित्यादि स्वयमूहनीयम्।

किमिदमिति, आकाशादीनाममूर्त्तानां सर्वत्र सत्त्वाच्च कुत्रचित्स्थाने द्रव्यविरह इत्यत आह—मूर्त्तद्रव्येति, जलशिलातलादिमध्ये इति, जलत्वचोस्सम्बन्धिनोश्शीलातलत्वचोस्सम्बन्धिनोर्मध्य इत्यर्थः, तथा नैरन्तर्यम् । जलेन सह त्वगिन्द्रियस्यातिसन्निधानाभावेऽपि निविडद्रव्यस्य मध्येऽभावेन तद्रूपसंयोगसत्त्वात्त्वगिन्द्रियेण जलग्रहणप्रसङ्गस्संयुक्तव्यवहारप्रसङ्गश्चेत्याह विच्छेदेऽपीति, निविडसंयुक्तयोर्द्रव्ययोर्मध्यदेशस्यागृह्यमाणत्वेन तद्वृत्तितया द्रव्यान्तराभावस्यापि ग्रहणासंभवेन तद्रूपसंयोगग्रहणाभावात्तयोस्संयुक्तव्यवहारो न स्यादित्याह निविडसंयुक्तयोरिति । मध्याविषयकत्वेन तद्घटितसंयोगाविषयकमपि पदार्थद्वयज्ञानं संयुक्तव्यवहारकुर्वद्रूपमिति नोक्तदोष इत्याशङ्कते न च तदविषयकमपीति, तद्विषयत्वेति संयोगविषयकत्वेत्यर्थः । तत्कुर्वद्रूपत्वस्य संयोगव्यवहारकुर्वद्रूपत्वस्य । यज्ज्ञानं यद्व्यवहारकुर्वद्रूपं तज्ज्ञानं तद्विषयकमेवेतिव्याप्तेस्संयुक्तव्यवहारकुर्वद्रूपं चेदुक्तज्ञानं तदा तत्संयोगविषयकमभ्युपगन्तव्यमेवेति भावः। बीजत्वं कुर्वद्रूपत्वमेवेतिपक्षे बीजत्वव्यवहारः कुर्वद्रूपत्वादेव भवतीति चेत्, तर्हि कुशूलस्थबीजादौ तदभावाद् बीजत्वव्यवहारो न स्यात्, स्याच्चाङ्कुरकुर्वद्रूपात्मके क्षित्यादौ बीजत्वव्यवहारः, किञ्च तत्तत्कुर्वद्रूपत्वेषु कुर्वद्रूपत्वमतिरिक्तमस्ति न वा, आद्येऽनवस्थाप्रसङ्गः, द्वितीये कुर्वद्रूपत्वेऽपि कुर्वद्रूपत्वव्यवहारो भवतीति स कुर्वद्रूपत्वव्यवहारोऽकुर्वद्रूपादपि कुर्वद्रूपत्वादभ्युपगन्तव्य इति व्यभिचारदोषः कुर्वद्रूपत्वपक्षेऽपि जागरूक इत्याशयेनाह कुर्वद्रूपत्वातिरिक्तेति । तद्देशवृत्तित्वाऽतद्देशवृत्तित्वरूपविरुद्धधर्माध्यासादवयविनो भेद इत्याशयेनाशङ्कते—

अस्तु तर्हि तद्देशत्वातद्देशत्वरूपो विरोध इति चेत्, अतद्देशत्वं तदन्यदेशत्वं तद्देशत्वाभावो वा, नाद्यः, विरोधलक्षणाभावात्, नहि तद्देशसंसर्गविधौ नियमेन देशान्तरसंसर्गनिषेधः । न द्वितीयः, स्थिरस्य तद्देशसं-

योगिनः कदाचित्तदभावस्य कालभेदेनाविरुद्धत्वात्। अध्यक्षमेवैकसंसर्गपरिच्छेदकं तदभावव्यवच्छेदमुखेन तद्वदन्यव्यवच्छेदफलमिमं विरोधमुद्गिरतीति चेत्, स्यादप्येवं, यदि नियमेनैकसंसृष्टस्यान्यसंसर्गं प्रतिक्षिपदध्यक्षमुदियात्, न त्वेतदस्ति।

अस्त्विति। तद्देशत्वेति, स देशोऽस्यास्तीति तद्देशस्तस्य भावस्तद्देशत्वमितिव्युत्पत्त्या तद्देशवृत्तित्वात्मकतद्देशसंसर्गेत्यर्थः। अतद्देशत्वेति न सः असः, असः देशो यस्य सोऽतद्देशः तस्य भावोऽतद्देशत्वमितिव्युत्पत्त्याद्यपक्षे देशान्तरसंसर्गेत्यर्थः। द्वितीयपक्षे स देशोऽस्यास्तीति तद्देशस्तस्य भावस्तद्देशत्वं न तद्देशत्वमतद्देशत्वमितिव्युत्पत्त्या तद्देशवृत्तित्वात्मकतद्देशसंसर्गाभावेत्यर्थः। तत्रैकस्य विधौ नियमेनान्यस्य निषेधः यथा घटत्वविधौ पटत्वस्य तयोरेव विरोधः न च तथा प्रकृते इत्याह नहीति, तद्देशसंसर्गतदन्यदेशसंसर्गयोर्विरोधेऽध्यक्षमेव प्रमाणमित्याशङ्कते अध्यक्षमेवेति, एकसंसर्गपरिच्छेदकम् एकदेशसम्बन्धनिश्चायकम्, तदभावव्यवच्छेदमुखेन एकदेशसम्बन्धाभावनिषेधबोधद्वारा, तद्वत् उक्तबोधवत्, अन्यव्यवच्छेदफलम् अन्यदेशसम्बन्धनिषेधबोधफलकम्, एकसंसृष्टस्य एकदेशसम्बन्धिनः, अन्यसंसर्गम् अन्यदेशसम्बन्धम्—

युगपदेकस्यानेकसंसर्गप्रवृत्तमध्यक्षमविशेषात् सर्वसंसर्गं वा प्रतिक्षिपेत्, न वा कमपि, स्वात्मानमेव वा सर्वथा विरोधं न दीपयेत्, अध्यक्षस्याप्यनेकविषयसंसर्गत्वात्, अन्ततः परमाणोरप्येकस्यानेकैः परमाणुभिः संसर्गस्वीकाराच्च। तदभावव्यवच्छेदमुखेन तदन्यव्यवच्छेदे तदन्यसंसर्गे तदभावाविनाभूतत्वमुपाधिरित्यर्थः। एतेन वृत्तिविकल्पोऽपि निरस्तः। परमाणुवृत्त्याऽवयविवृत्तेस्तुल्ययोगक्षेमत्वात्। परमाणुर्यथाऽनेकेषु पर-

माणुषु वर्त्तते, तथाऽवयव्यवयवेषु। एतदुक्तं भवति, न कार्त्स्न्येन, नापि भागशः, भेदरहितत्वात्।

युगपदेकस्येति अयं घटस्समवायेन एतद्देशसंसर्गी तदपरदेशसंसर्गी चेत्येवमेकस्यानेकसंसर्गावगाहि प्रत्यक्षं यदि स्वविषयं प्रतिक्षिपेत्तर्ह्यविशेषादेकस्य तदन्यदेशसंसर्गमिव तद्देशसंसर्गमपि प्रतिक्षिपेत् तथा च कुतो विरोधः विरुद्धत्वेनाभ्युपगतयोस्तद्देशसंसर्गातद्देशसंसर्गयोरेवाभावादिति भावः। यदि तद्देशसंसर्गं स्वविषयत्वान्न प्रतिक्षिपेत्तर्हि तदन्यदेशसंसर्गमपि न प्रतिक्षिपेत् स्वविषयत्वाविशेषात् तथा च न विरोधः तद्देशसंसर्गातद्देशसंसर्गयोरेकस्मिन्नवयविनि प्रत्यक्षप्रमाणसिद्धत्वात् प्रमाणसिद्धे च विरोधानवकाश एवेति भावः। स्वात्मानमिति यदि प्रत्यक्षमेकस्यानेकसंसर्गनिषेधप्रत्यलं स्यात्तर्हि तत्स्वात्मनिषेधकमपि स्यादित्यर्थः। तत्रैव हेतुमाह अध्यक्षस्यापीति अध्यक्षस्यापि विषयतासंसर्गेणानेकपदार्थसंसर्गित्वादित्यर्थः। ननु नाध्यक्षमनेकविषयसंसर्गि समुपजायते किन्तु निराकारं विलक्षणमेवेति यदि ब्रूयात्तदाप्याह अन्तत इति, वृत्तिविकल्प इति अवयवेष्ववयवी वर्त्तत इत्यत्र किं निश्शेषसमुदायलक्षणकार्त्स्न्येन प्रत्यवयवेष्ववयवी वर्त्तते उत समुदायघटकयत्किञ्चित्समुदायिलक्षणैकदेशेनेति विकल्पद्वयं, तत्र नाद्यः, एकस्मिन्नेवावयवे कार्त्स्न्येनावयवी वर्त्तत इत्यवयवान्तराणामवयविशून्यत्वं स्यात्। न द्वितीयोऽपि, प्रत्यवयवेष्ववयविवृत्तित्वनियामकीभूतानां मूलभूतावयवातिरिक्तानां तत्तद्देशानामप्यवयवरूपतया तत्रापि प्रत्येकावयवमेकदेशेनैवावयविनो वृत्तित्वं स्यादिति तन्नियामकीभूता अतिरिक्ततद्देशा अभ्युपगन्तव्याः, तेषामप्यवयवरूपतया पूर्ववत् एकदेशेनैव प्रत्यवयववृत्तिरवयवी स्यादिति तन्नियामका अतिरिक्तदेशा अभ्युपगन्तव्याः, एवमग्रेऽपीत्यनवस्था। एतेनेत्यतिदिष्टमाह—परमाणुवृत्त्येति परमाणुः बहुभिः परमाणुभिस्संयुज्यत इति बौद्धैरप्यभ्युपगम्यते, तत्रेवं विकल्पः, किं परमाणुरेकदेशेन संयुज्यते कार्त्स्न्येन वा, प्रकारान्तराभावात्, नाद्यः, पर-

माणोर्निरंशतयैकदेशाभावात्, भावे वा स्वस्वरूपमेव जह्यात् सांशरूपत्वात्, न द्वितीयः, एकेनैव परमाणुना परमाणोः कात्स्न्र्येन संयोगात् संपूर्णस्वरूपस्यैव तत्र निमग्नत्वाद्रूपान्तराऽभावात् परमाण्वन्तरेण संयोगो न स्यात् तत्र च यत्साधनं बाधनाभावो वा क्रियते तत्सर्वमवयविवृत्तावपि समानमितिभावः । न कात्स्न्र्येनेति अवयवेष्ववयवी कात्स्न्र्येन न वर्त्ततइत्यर्थः । भागश इति एकदेशेनेत्यर्थः, भेदरहितत्वादिति एकत्वेन निरंशत्वादित्यर्थः, उक्तमर्थं संवादयति—

तदुक्तं नहि भेदविनिर्मुक्ते कात्स्न्र्यभागविकल्पनमिति, किन्तु व्यासज्यैव वर्त्तत इति नारायणः ॥ एवं तावदवयविमात्रविषया विरुद्धधर्माध्यासा निराकृताः, अथ चित्रावयविविशेषविरुद्धधर्माध्यासमाशङ्कते–अस्तु तर्हि चित्रावयविनि नीलादिविरोधः । नहि तदेकं रूपं, चित्रत्वविरोधात्, नानारूपाणामेव चित्रपदार्थत्वात्, नानेकम्, एकावयविसमवायविरहात्, युगपदेकत्रानेकरूपाणामवृत्तेः, अन्यथैकजातीयरूपारम्भेऽप्यनेकरूपवृत्तिप्रसङ्गादित्यर्थः । न चानेकं व्यापकं, तथानुपलम्भविरोधात्।

तदुक्तमिति, व्यासज्यैव वर्त्तत इतीति अवयवी यावत्स्ववयवेषु पर्याप्तिसम्बन्धेन वर्त्तते,तथा च समुदायत्वावच्छिन्नयावदवयववृत्त्यनुयोगितानिरूपकपर्याप्तिप्रतियोगी अवयवीत्यर्थः,एकावयविसमवायविरहादिति एकावयविनि समवायेन वृत्तित्वविरोधादित्यर्थः,तदेव विवृणोति–युगपदिति । अनेकरूपवृत्तिप्रसङ्गात् एकजातीयानेकरूपवृत्तिप्रसङ्गादित्यर्थः । एकस्मि ऽवयविनि नानेकं रूपं व्याप्यवृत्तितयोपलभ्यत इति रूपसमानाधिकरणरूपान्तरं नाभ्युपगन्तव्यं सामानाधिकरण्यघटकवृत्तित्वमेककालीनसर्वावयवावच्छिन्नसमवायसम्बन्धावच्छिन्नं ग्राह्यमित्याशयेनाह नानेकमिति । व्यापकम् अधिकरणं व्याप्य वृत्ति ।

न चाव्यापकं, स्वाभावविदेशजातीयत्वविरोधात्। स्वाभावविदेशजातीयत्वे सत्यपि स्वाभावसादेश्येऽनयोर्विरोधोऽनयोरविरोध इत्येवं विरोधाविरोधव्यवस्थानुपपत्तिप्रसङ्गात्, नहि जातिमन्तरेण विरोधाविरोधव्यवस्थापकं सम्भवतीति। नारूप एवावयवी, चाक्षुपत्वविरोधात्। न च रूपवद्द्रव्यसमवेतत्वं द्रव्यचाक्षुपे तन्त्रं, चित्रावयवपरम्परारब्धे तस्याप्यसम्भवात्, आरभ्यारम्भकवादस्य निराकरणात्। नीलाद्येकस्वभावे लाघवेन रूपवत्त्वस्यैव प्रयोजकत्वेन कल्पनादिति चेत्,

न चाव्यापकमिति नचाव्याप्यवृत्तीत्यर्थः,स्वाभावेति,स्वाभावेन सह विदेशो विभिन्नदेशो यस्य स स्वाभावविदेशः,व्याप्यवृत्तिरिति यावत् तज्जातीयत्वविरोधादित्यर्थः। स्वविषयावृत्तिव्याप्यवृत्तिवृत्तिजातिमद्गुणानामव्याप्यवृत्तित्वाभावनियमस्य रूपस्याव्याप्यवृत्तित्वाभ्युपगमे विरोधस्स्यादितिभावः। व्याप्यवृत्तिजातीयत्वे सत्यप्यव्याप्यवृत्तिजातीयत्वाभ्युपगमे दोषमाह स्वाभावेति, स्वाभावसमानाधिकरणजातीयत्वे सत्यपि स्वाभावसामानाधिकरण्ये व्याप्यवृत्तिजातिमतोर्घटपटयोस्तादात्म्येन विरोधो न स्यादित्यपि न स्यात्, कस्याश्चिद्व्यक्तेर्व्याप्यवृत्त्यव्याप्यवृत्तिजातीयत्वेन घटपटोभयात्मकत्वसम्भवादितिभावः। नन्वस्तु व्यक्त्यऽपेक्षया विरोधः जात्यपेक्षया चाऽविरोध इति व्यक्तिरेवैका व्याप्यवृत्त्यव्याप्यवृत्त्युभयरूपा न भवेत् तज्जातीयस्तु व्याप्यवृत्तिरपि कश्चिदव्याप्यवृत्तिरपि कश्चिदित्यभ्युपगमे कोदोष इत्यत आह न हि जातिमन्तरेणेति,एतत्तत्त्वं च व्यक्तौ विरोधगमने इत्यादिपूर्वश्लोके स्पष्टीकृतम्। चाक्षुपत्वविरोधादिति द्रव्यचाक्षुपं प्रति समवायसम्बन्धेनोद्भूतरूपस्य कारणत्वेन तस्य चावयविन्यनभ्युपगमे तस्य चाक्षुपप्रत्यक्षं न स्यादित्यर्थः। न च रूपवद्द्रव्यसमवेतत्वमिति अत्र साक्षात् रूपवद्द्रव्यसमवेतत्वं विवक्षितं किं वा परंपरयेति विक-

ल्पद्वयं, आद्ये आह चित्रावयवेति, चित्रावयविनि यो रूपं नाभ्युपगच्छति तन्मते साक्षादवयवेपि रूपाभावादितिभावः । परंपरयाऽवयवेषु यद्रूपं तदादायैवावयविनः प्रत्यक्षमित्येवं रूपो द्वितीयविकल्पोपि तदा घटेत यदि परम्परयाऽवयवेऽवयवी समवेयात्, यदि वा परंपरयाऽवयवत्वेन सम्मता अवयवा एव प्रकृतावयविरूपेण परिणमेरन् तदा समवायस्थानेऽभिव्यञ्जकसंनिवेशघटितपरंपरासम्बन्धेनावयवरूपस्यावयविनि सत्त्वेन प्रत्यक्षोपपादनं स्यात्, न चैतद् द्वयमपि, प्रथमे परंपरयाऽवयवेषु समवायिकारणत्वाभावेनावयविनः समवायायोगात्, द्वितीयस्य तु परिमाणवाद एव सम्भवित्वेन तदसंभवे तदसम्भवात्। अचित्रावयविस्थले लाघवेन रूपवत्त्वस्यैव प्रत्यक्षं प्रति प्रयोजकत्वेन चित्रस्थलेऽपि तस्यैव प्रयोजकत्वमित्यवयविनो नीरूपत्वे प्रत्यक्षं न स्यादितिभावः। अस्तु तर्हि चित्रावयविनीत्यादेः पूर्वपक्षस्यावयविन्येकमेवाखण्डं चित्ररूपमिति प्राचीनपक्षमाश्रित्य समाधत्ते—

न, चित्रत्वं हि नानात्वं वा मिथोविरुद्धनानाजातिसमवायं वाऽभिप्रेत्य यद्येकत्वाभ्युपगमे विरोध उद्भाव्यते तदैवमेतत्, न तु तथाभ्युपगमः, न खल्वनेकत्वं चित्रत्वं, शुक्लेष्वप्यनेकेषु चित्रप्रत्ययप्रसङ्गात्। नाप्येकस्मिन् विरुद्धानेकजातिसमवायः, विरोधेनैव निराकृतत्वात्, अपि तु नीलत्वादिवच्चित्रत्वमपि जातिविशेष एव, स चावयववृत्तिविजातीयरूपसमाहाराभिव्यङ्ग्यत्वान्नैकरूपावयवसहितस्यावयविन उपलम्भेऽप्युपलभ्यते, अवयवत्वमिह साक्षात्परम्परासाधारणं विवक्षितं, तेन न चित्रारब्धे चित्रप्रत्ययानुपपत्तिः।

न, चित्रत्वमिति, नानात्वम् रूपाणां भिन्नत्वम्, मिथोविरुद्धेति एकस्मिन्नेव रूपे समवायेन विरुद्धनानाजातिमत्त्वमित्यर्थः। जातिविशेष एवेति रूपविभाजकजातिरेवेत्यर्थः। इहेति अवयववृत्तीत्यत्रेत्यर्थः।

अत एव द्व्यणुके चित्रेऽपि न चित्रप्रत्ययः कदापि। तथापि चित्रे पार्श्वे चित्रप्रत्ययो माभूद्धवलप्रत्ययस्तु कुत इति चेत्, अवयवरूपसञ्चारेणावयविनोऽपि तथा प्रत्ययात्। अत एव यत्रावयवरूपमप्रत्यक्षं तत्र त्रसरेणाविव तदपि नास्ति, द्रव्यमेव आलोकरूपमारोप्य पिञ्जरस्त्रसरेणुरालोक्यते, पार्श्वे धावल्यादिग्रहेऽवयविनि चित्ररूपाऽग्रहोऽवयवरूपारोपश्चावयविरूपे वा चित्रत्वाग्रहोऽवयवरूपजात्यारोपश्च हेतुरिति पुनरन्यदेतत्।

अत एवेति तत्तदवयववृत्तिविजातीयरूपज्ञानस्यावयविनि रूपस्य चित्रत्वेन रूपेण ग्रहे हेतुत्वादेवेत्यर्थः,न चित्रप्रत्यय इति चित्रत्र्यणुकपरमाण्वात्मकसाक्षात्परंपरावयववृत्तिरूपग्रहस्याभावादेव चित्रे त्रसरेणौ न चित्रप्रत्यय इत्यर्थः,अत्र यत्र चित्रत्र्यणुकारब्धचतसेणुस्तत्रापि न तद्गतचित्रप्रत्ययः,साक्षादवयवभूतत्रसरेणुरूपस्य चित्रत्वेन नानात्वाभावात् परंपराऽवयवभूतद्व्यणुकेषु नानारूपवत्त्वेऽपि तद्ग्रहाभावादित्यपि बोध्यम्,आत्मतत्त्वविवेके तु अत एव त्र्यणुके चित्रेऽपि चित्रप्रत्ययो न कदापीत्येव पाठः,चित्रे पार्श्वे इति पृष्ठादिभागवर्तित्वादिन्द्रियासन्निकृष्टचित्रावयवेऽवयविनीत्यर्थः। अवयवरूपसञ्चारेणेति,अवयविन्यवयवरूपारोपेणेत्यर्थः, तदपीति अवयवरूपस्याप्रत्यक्षेण तदारोपेणावयविनि धवलप्रत्ययोपीत्यर्थः,आत्मतत्त्वविवेके तत्र त्रसरेणावेतदपि नास्तीत्येवमेवपाठः। ननु तर्हि त्रसरेणौ पिञ्जरप्रत्ययोऽपि कथमित्यत आह द्रव्यमेवेति। यत्रावयवगतनानारूपग्रहस्थलेऽवयविनि चित्रे शुक्लरूपग्रहस्तत्रावयविनः स्वकीयं रूपं नोपलभ्यते किन्तु चित्ररूपाग्रहादवयवरूपारोपाच्च शुक्लरूपप्रतीतिः,अथवाऽवयविनश्चित्ररूपमेव शुक्लत्वेन प्रतीयते स्वगतचित्रत्वाग्रहादवयवरूपगतशुक्लत्वारोपाच्चेत्याह—पार्श्वे धावल्यादिग्रह इति। बौद्धश्शङ्कते—

अथ चित्रावयवारब्धे चित्रोत्पाद एव कथम्, अवयवे विजातीयरूपविरहादिति चेत्, साक्षात्परम्परा-

साधारणावयववृत्तेर्मूलभूतपरमाणुवृत्तेर्वा विजातीयरूपस्य चित्ररूपनिमित्तकारणत्वादिति केचित्। नीलधवलारब्धात् पीतरक्तारब्धमिव नीलाद्यारब्धाद्विजातीयमेव चित्रारब्धं चित्रं,चित्रमात्रे त्ववयवरूपमेव प्रयोजकं विशेषसामग्रीणां नियामकत्वाच्च न सर्वत्र चित्रोत्पाद इत्यपरे। एकदेशिनस्तु विजातीयानेकरूपसमाहार एव चित्रप्रत्ययालम्बनं सेनावनादिवच्चैकत्वप्रत्ययः,

अथेति, नीलाद्यारब्धादिति नीलपीताद्यारब्धाच्चित्रादित्यर्थः,ननु यदि चित्ररूपत्वावच्छिन्नं प्रत्यवयवरूपमेव कारणं तर्हि सजातीयरूपवदवयवद्वयारभ्येऽवयविनि कथं न चित्ररूपस्योत्पत्तिः,अवयवरूपस्य कारणस्य सत्त्वादिति चेत्, विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः कार्योत्पादकत्वेनावयवगतविजातीयनानारूपादिलक्षणविशेषसामग्रीविरहेण न चित्रोत्पाद इत्याह विशेषसामग्रीणामिति। सेनावनादिवच्चैकत्वप्रत्यय इति,सेनाया रथाश्वादिसमुदायरूपत्वेन वनस्य वृक्षसमुदायरूपत्वेन च तत्र समुदायत्वगतैकत्वमादाय यथैकत्वप्रत्ययस्तथा विजातीयानेकरूपसमुदायगतैकत्वमादायैकत्वप्रत्यय इत्यर्थः। सजातीयात्सजातीयस्यैवोत्पत्तिरितिनियमान्न नीलपीतादितो विजातीयचित्ररूपोत्पत्तिरित्याशयेनाह—

नीलादेरनीलाद्यनारम्भकत्वान्नीलाद्यारम्भे बाधकाभावाच्च। न चैकस्यानारम्भकत्वं बाधकं, समवाय्यनुत्पादादनारब्धवताप्येकेन तदुत्पादे आरम्भसम्भवात्। अथ नीलाद्युत्पत्तौ नीलादिसंवलनं प्रतिबंधकं, न तु चित्रे, तस्य तदप्रतिबध्यत्वेनैव सिद्धेरिति चेत्, न, तत्र तत्प्रतिबन्धकत्वे मानाभावात्, स्वाधिकरणावयवावच्छेदेन च नीलाद्यारम्भात् तदव्याप्यवृत्ति, नीलादिमात्रावयवारब्धे तत्तत्सामग्रीसमाजाज्जायमानमेकं व्या-

पकं, सर्वावयवावच्छिन्नत्वादव्याप्यवृत्तेरपि प्रतीतिबलेनावच्छेदकाभ्युपगमादित्येके।

नीलादेरिति, व्याप्यवृत्तिजातीयत्वाव्याप्यवृत्तिजातीयत्वयोर्विरोध इति नियमं नाभ्युपगम्यते इति सोपि व्याप्यवृत्तिजातीयनीलपीतादितोऽव्याप्यवृत्तिजातीयनीलपीताद्युत्पत्तौ न बाधक इत्याह नीलाद्यारम्भ इति,एकस्यावयवगुणस्य सजातीयगुणानारम्भकत्वमिति नीलपीततन्तुद्वयजातचित्रपटस्थलेऽवयवगतस्यनीलरूपस्य पीतरूपस्य वा कथमवयविनि नीलारम्भकत्वं पीतारम्भकत्वं वेति चेन् यत्रैक एव तन्तुस्तत्र तन्तुद्वयसंयोगाऽभावात्पटानुत्पादे तदात्मकसमवायिकारणाभावात् कुत्रैकेन तन्तुरूपेण रूपोत्पत्तिस्स्यात्, चित्रस्थले तु तन्तुद्वयसंयोगात् पटरूपसमवायिकारणोत्पादे सति तत्रैकैकेनापि तन्तुरूपेण नीलादिना स्वसजातीयोत्पत्तौ बाधकाभाव एव, समवायिकारणस्यावयविनोऽनुत्पादादेव तदात्मकस्याश्रयस्याभावेन तत्र गुणानुत्पादनवताप्येकेनावयवगुणेन समवायिकारणस्यावयविन उत्पादे सति तस्मिन् आश्रये गुणारम्भसम्भवादित्याशयेनाह न चैकस्येति। अवयविन्यव्याप्यवृत्तिनानारूपोत्पत्तावयवगतविजातीयनानारूपसमाहारः प्रतिबन्धक इति तत्तदवयवगतपीतनीलादिनाऽवयविनि तत्तदवयवावच्छिन्ननीलपीताद्युत्पत्तिप्रतिबन्धात्र तदुत्पत्तिः,किन्तु चित्ररूपस्यैव, तस्य तदप्रतिबध्यत्वेनैव सिद्धेरित्याशयेनाशङ्कते अथेति,मानाभावादिति, ननु समवायेन नीलं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलातिरिक्तरूपत्वेन पीतरूपं प्रति पीतातिरिक्तरूपत्वेन च प्रतिबन्धकत्वमित्येवं रूपस्य प्रतिबध्यप्रतिबन्धकभावस्याभावे नानाजातीयरूपवत्कपालारब्धे घटे नीलकपालाद्यवयवावच्छेदेन पीताद्युत्पादापत्तिर्दुर्वारा स्यादिति चेन्, मैवम्, अवच्छेदकतासम्बन्धेन पीतादिकं प्रति समवायेन पीतादेः कारणत्वकल्पनादुक्तदोषाऽभावात्, चित्ररूपाङ्गीकारे तु समवायेन नीलादिकं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलत्वादिना हेतुत्वस्य पूर्वोक्तप्रतिबध्यप्रतिबन्धकभावस्य

च कल्पनाद्गौरवं स्यादिति भावः। व्यापकमिति अधिकरणं व्याप्य वृत्तीत्यर्थः। ननु नीलादिमात्रावयवारब्धेऽवयविनि नीलादिकमेकम् अत एव व्यापकं तर्हि तत्र सर्वावयवावच्छिन्नत्वादिति हेत्वभिधानं व्यर्थमेव व्याप्यवृत्तिपदार्थस्यावच्छेदकत्वानभ्युपगमादित्याशङ्कायामाह व्याप्यवृत्तेरपीति, यत्र सर्वेष्ववयवेष्वेकजातीयमेव नीलादिकं तत्र नीलावयवावच्छिन्ननीलं प्रति अवयवगतविजातीयरूपस्य कारणस्याऽभावेन तत्तदवयवावच्छिन्ननीलपीतादिरूपस्य नोत्पत्तिरिति नीलादेस्तत्तदवयवानवच्छिन्नवृत्तिताकत्वाद् व्याप्यवृत्तित्वमित्यभ्युपगन्तृमतमाह—

नीलावयवावच्छिन्ननीलं प्रति नीलेतररूपस्यावयवगतस्य हेतुत्वेन तदनवच्छिन्नवृत्तिताकत्वाद्व्यापकमित्यपरे। संयोगतदभाववच्चैकत्राध्यक्षसिद्धत्वात् नीलपीतादीनां प्रकारभेदेनाविरुद्धत्वात् न भेदापादकत्वमित्याहुः। यदि चित्रत्वं नाम जातिविशेषः, कथं तर्हि विरुद्धजातीयरूपसमाहारमात्रे चित्रप्रत्यय इति चेत्, न वै नीलधवलारुणेषु पटेषु क्वचिदपि कर्बुरार्थश्चित्रप्रत्ययः कस्यचिदपि, वैधर्म्यनिमित्तस्तु न वार्यते, चित्रशब्दस्याक्षादिवदनेकार्थत्वात्। नीलापीतादिषु मिथःसंसृष्टेष्वनारब्धद्रव्येष्वपि कर्बुरप्रत्ययो भवतीति चेत्, सत्यं, द्रव्यान्तरोत्पादाभिमानात् स्थौल्यातिशयप्रत्ययवदुपपत्तेः, यथानारब्धद्रव्येष्ववयवेषु बहुषु संहतेषु स्थौल्यातिशयप्रत्ययो द्रव्यान्तरभ्रान्त्या भवति, इतरथा तस्यैकस्य परिणामस्यानेकाश्रयत्वानुपपत्तेः तथा कर्बुरप्रत्ययोऽपीति भावनीयम् ॥ ४७ ॥

एतानवयविनो विरुद्धधर्माध्यासनिरासप्रकारान् सञ्जिघृक्षुराह—

नीलावयवावच्छिन्ननीलं प्रतीति, चित्रावयविनि एकदेशिमते नीलपीतादिनानारूपाणां भिन्नभिन्नावयवावच्छेदेन वृत्ति-
त्वेनाविरोधाच्च भेदाभावादेकत्वमिति सदृष्टान्तमाह संयोगेति,नीलत्वादिवच्चित्रत्वमपि जातिविशेष एवेति प्राचाम्मतमधिक्षिपन् परः
शङ्कते यदीति, विरुद्धजातीयरूपसमाहारमात्र इति, विरुद्धजातीयानि रूपाणि येषां ते तथा,तेषां समाहारमात्रे इत्यर्थः,मा-
त्रपदेनानारब्धावयवितोपदर्शिना, तेन नीलपटधवलपटरक्तपटादिसमाहारस्थल इति भावः। नोक्तस्थले कस्यचिदपि पुरुषस्य चित्र-
रूपातिरिक्तज्ञानिनिमित्तकत्वेनोक्तजात्यवच्छिन्नविषयताकश्चित्रप्रत्यय इति समाधत्ते नवै इति, नन्वेवं तर्हि किंनिमित्तकस्स इत्या-
शङ्कायामाह वैधर्म्येति. वैधर्म्यं विरुद्धजातीयरूपवत्त्वं तन्निमित्तस्तद्विषयक इत्यर्थः। चित्रप्रत्ययपदेन चित्रव्यवहारस्याऽप्युपग्रहे
वैधर्म्यनिमित्तं प्रवृत्तिनिमित्तं शक्यतावच्छेदकमितियावत् यस्य स वैधर्म्यनिमित्त इत्यर्थः। मिथः संसृष्टेष्वित्यनेन संयोगविशेषा-
च्चित्रप्रत्ययस्योत्पत्तिस्त्विनेति वैधर्म्यनिमित्तत्वे व्यभिचारोपदर्शनं कृतम्। अनारब्धद्रव्येष्वित्यनेनातिरिक्तावयव्यनुत्पादादाश्र-
याभावेन तत्र चित्ररूपमपि नोत्पन्नमिति न तन्निमित्तत्वमपि चित्रप्रत्ययस्येति सूचितम् ,उपपत्तेः कर्बुरप्रत्ययस्योपपत्तेः, द्रव्यान्त-
रेणाभिभ्रान्त्याऽतिरिक्तचित्ररूपभ्रम इति भावः, तदेव सदृष्टान्तं द्रढयति यथेत्यादिना। अनेकाश्रयत्वानुपपत्तेरिति अनुत्पा-
दितद्रव्येष्वनेकेषु वस्तुषु एकमात्रवृत्तिस्वभावस्य परिमाणस्य वृत्तित्वं न स्यादित्यर्थः ॥४७॥ अष्टचत्वारिंशत्तमश्लोकमवतारयति
एतानवयविन इति.

ज्ञानाप्रकाशकृतिनिरावृतिसप्रकरूपा–करूपत्वरक्तिमविपर्ययतन्निदानैः ॥
नष्टेशतेनरसभागविभागवृत्ति–चित्रैतरैरवयवी न हि तत्त्वतोऽन्यः ॥४८॥

ज्ञानाग्रहौ ग्रहणाऽग्रहणे, आवृतिनिरावृती आवृतत्वानावृतत्वे, सप्रकम्पाकम्पत्वे कम्पाकम्पौ, रक्तिमविपर्ययौ रागिद्रव्यार्द्रलिप्तत्वालिप्तत्वे तन्निदाने प्रादेशिकभ्रममूलरक्तद्रव्यसंयोगासंयोगौ,तैः, तद्देशतेतरे तद्देशातद्देशत्वे, सभागविभागवृत्ती एकदेशाकात्स्न्याभ्यां वृत्तित्वे, चित्रेतरैश्चित्रत्वाचित्रत्वाभ्यां, हि यतः, अवयवी तत्त्वतः परमार्थतोऽन्यो नास्ति, काल्पनिकं त्वन्यत्वं न पारमार्थिकमवयविन एकत्वमपवदतीति भावः॥४८॥

कथमेवमित्याकाङ्क्षायामाह—

ज्ञानाग्रहावृत्तीत्यादिश्लोकस्तु सुस्पष्टं व्याख्यात एवेति नेह प्रतन्यते ॥४८॥ एकोनपञ्चाशत्तमपञ्चाशत्तमश्लोकौ युगपदेवावतारयति कथमेवेत्यादिना, उक्तविरुद्धधर्माध्यासेऽपि कथं न परमार्थतोऽवयविनो भेद इत्यर्थः।

दृष्टो ह्यदृष्ट इति को निरपेक्षमाह, देशावृतौ स्फुटमनावृत एव देशी ॥
देशे चलत्यपि चलत्वमसौ न धत्ते, देशभ्रमादवयवी भ्रमभाजनं नो ॥४९॥
संयोगतद्विरहयोश्च गतिः प्रकार-भेदेन तन्निलयतातदभावयोश्च ॥
वृत्तिस्वरूपनिरतैव च चित्रमेक-मित्यादि ते नयमतं समयाऽभिषक्तैः ॥५०॥

उक्ततत्त्वमेतद्द्वयम्, एतस्य न्यायनयस्य फेनत्वोक्तिश्चापाततः पाण्डुरत्वेन मनोहारित्वेन दृश्यमानस्यापि प्रदर्शयिष्यमाणानेकान्तयुक्तिपवनतरङ्गघाताऽक्षमत्वादिति भावनीयम् ॥ ४९–५० ॥

एवं नावयविविलोपाद् बाह्यविलोपः, नापि परमाणुविलोपादित्याह—

इद्धो माऽद्र इत्यादि संयोगतद्विरहयोश्चेत्यादि श्लोकद्वयमुत्तानार्थम्, देशावृत्तौ अवयवावरणे, देशी अवयवी, देश-
भ्रमात् रागिद्रव्याद्र्लिप्ते पटादावयवे रक्तत्वभ्रमात् । नोशब्दो निषेधवाची, गतिः एकस्मिन्नवयविनि वृत्तिः, प्रकारभेदेन
भिन्नभिन्नावच्छेदेन, नविलयनात्तदभावयोः तद्देशवृत्तित्वातद्देशवृत्तित्वलक्षणतद्देशत्वातद्देशत्वयोः, तन्निलयतेत्यत्र स निलय आ-
श्रयो यस्य स तन्निलयः तस्य भावः तन्निलयतेति निरुक्तिरवसेया, चकारोपादानाद् गतिः प्रकारभेदेनेत्यस्याप्यत्रावृत्त्याकर्षणं ज्ञेयम् ।
वृत्तिः अवयवेष्ववयविनो वर्त्तनम्, स्वरूपनिरतैव स्वरूपत एव, न तु कार्त्स्न्यैकदेशाभ्याम्, चित्रमेकम् अवयविन्येकमेव चि-
त्ररूपं ननु नाना, ते तव स्याद्वादोपदेष्टुः, अस्य च समयेऽन्वयः, समयशब्दस्य समासघटकपदार्थान्वितार्थकत्वेनासमर्थत्वेपि नित्य-
साकाङ्क्षत्वान्न समासानुपपत्तिः । नयमतम्, नैगमनयावलम्बिनैयायिकस्य मतम्, समयाब्धिफेनः समयः स्याद्वादसिद्धान्तः
स एवाब्धिः समुद्रः तस्य फेनः । न्यायनयस्य समयाब्धिफेनत्वं कथमित्याकाङ्क्षायां हेतुमाह एतस्येति ॥४९॥ ५० ॥ एकपञ्चा-
शत्तमश्लोकमवतारयति एवमिति उक्तप्रकारेणेत्यर्थः ।

नाणोरपि प्रतिहतिश्च समानयोग-क्षेमत्वतः किल धियेति न बाह्यभङ्गः ॥
योग्या च नास्ति नियतानुपलब्धिरुच्चै-र्नैरात्म्यमित्युपहतं नयवल्गितैस्ते ॥५१॥

अणोः परमाणोरपि च धिया तुल्ययोगक्षेमत्वात् न प्रतिहतिर्न निरासः, तथा चावयविपरमाणुपूर्णता-
सम्भाराङ्गशालिनि जगति नास्ति बाह्यदेशभङ्गः । तदाहुः—अस्तु तर्हि परमाणुनिवृत्त्या सर्वविलोपः, तथा हि—
षड्भिः परमाणुभिः संयुज्यमानः परमाणुः प्रत्येकं किमेकदेशेन संयुज्यते, कार्त्स्न्येन वा, प्रकारान्तराभावात्,

न प्रथमः, तस्यैकदेशाभावात्, भावे वा परमाणुत्वव्याघातात् । न द्वितीयः, परमाण्वन्तरेणासंसर्गप्रसङ्गात् । नह्यस्ति सम्भव एकत्रैव परिसमाप्तवृत्तिरन्यत्रापि वर्तत इति, न, बुद्ध्या समानयोगक्षेमत्वात्, तथा हि-बुद्धिरपि सन्तमसन्तं वानेकं विषयमालम्बमानाकारं वा बिभ्रती कार्त्स्न्येन वा एकदेशेन वा विद्यते । न प्रथमः।

नाणोरपीति, अपि चाणोर्न प्रतिहतिर्न निरासः, तत्र हेतुः धिया समानयोगक्षेमत्वतः, किलेति पादपूरणे, इति इति-हेतोः, न बाह्यभङ्गः, परमाण्वाद्यभावसाधकानुपलब्धिनिरसनायोत्तरार्द्धमाह योग्येति, यत्रैव योग्यानुपलब्धिस्तत्रैव निषेध इत्येवं निषेधनियता योग्यानुपलब्धिः परमाण्वादेरयोग्यत्वेन परमाणुर्यदि स्याच्चक्षुरुपलभ्येतेत्यापादयितुमशक्यतया तत्र नास्त्येवेति न तया तन्निषेधः, अयोग्यानुपलब्धिस्तु नाभावनियता, अयोग्यस्य परमाण्वादेस्सत्त्वेप्यनुपलम्भसम्भवात्, तथा चाभावसाध्यकाऽयोग्यानुपलब्धिहेतुकानुमानं व्यभिचारदोषदुष्टमिति न तेन तदभावस्सिद्ध्यति, तदेवं न्यायनयेन भग्नं बाह्यार्थभङ्गप्रयुक्तनैरात्म्यमित्ययमपि त्वन्नयामृतबिन्दूद्गार इत्युपसंहारव्याजेन भगवन्तमुद्दिश्य चतुर्थचरणमाह नैरात्म्येति, इति उक्तप्रकारेण, ते तव, अस्य च नयेऽन्वयः, नयवल्गितैर्न्यायनययुक्तिभिर्नैरात्म्यमुपहतं भग्नमिति सङ्क्षेपार्थः । सर्वविलोप इति अवयविमात्रस्य मूलकारणीभूतपरमाणुजन्यत्वेन परमाण्वात्मककारणनिषेधेऽवयव्यात्मककार्यनिषेध आयात एवेति सर्वविलोप इत्यर्थः । सन्तमिति सत्ख्यातिमाश्रित्य, असन्तमिति असत्ख्यातिमाश्रित्य, तदुभयस्य अनेकमित्यस्य च विषयमित्यत्र आकारं वेत्यत्र चान्वयः, विषयमिति निराकारवादिनमपेक्ष्य, आकारमिति साकारवादिनमपेक्ष्य, एकस्मिन्नेव विषये आकारे वा कार्त्स्न्येन विद्यमाना बुद्धिर्नान्यस्मिन् विषये आकारे वा विद्यते, अंशाभावात्, इति तदवलम्बितुं न शक्येति नीलाद्येकैकविषया नीलाद्येकैकाकारा वा बुद्धिस्स्यात् न

तु नीलपीतादिसमूहालम्बना नीलपीतादिसमूहाकारा चेति तद्विलोपप्रसङ्गस्स्यादित्याशयेनाह—

पीतादिविषयाकारविलोपप्रसङ्गात्, न ह्यस्ति सम्भवो नील एव विषये आकारे वा परिसमाप्तात्मा पीतादिसम्बन्धात्मा चेति। न द्वितीयः, तदभावात्, एवमविषयत्वं बुद्धेरनाकारत्वमपि चेष्यत एवेति चेत्, तत्किं यत् प्रतिभासते तदसत्, आहोस्विन्न प्रतिभासत एव किञ्चित्। नाद्यः,असत्यपि नीलपीतादौ ज्ञानवृत्तिविकल्पस्य तदवस्थत्वात्। नहि कृत्स्नमेव ज्ञानं नीलोल्लेखि, पीताद्यनुल्लेखप्रसङ्गात्। नापि तदेकदेशः, तदभावादित्युक्तत्वात्। न द्वितीयः, तत्रापि वृत्तिविकल्पस्यानुपपत्तेः, नहि कस्मिंश्चिदप्यप्रतिभासमाने कथं वर्त्तत इति विकल्पः कर्त्तुं शक्यत इति।

पीतादिविषयेति, एतदेवोपपादयति नह्यस्तीति, तदभावात् बुद्धेरेकदेशाभावात्, तदेकदेशः बुद्धेरेकदेशः, नीलोल्लेखिमात्रानुरक्तः, तत्रापि वृत्तिविकल्पस्येति, बहुभिः परमाणुभिः संयुज्यमानः परमाणुः प्रत्येकं किमेकदेशेन संयुज्यते कार्त्स्न्येन वेत्येवं परमाणावपि वृत्तिविकल्पस्येत्यर्थः, तदेव विवृणोति नहीति। वाक्यप्रयोगरूपः कार्त्स्न्यैकदेशविकल्पस्तदा कर्तुं शक्यते यदि कारणीभूतं वाक्यार्थविषयकं ज्ञानं पूर्वं स्यात्, तच्च नास्त्येव, निर्विषयत्वेन ज्ञानस्याभ्युपगमादिति भावः। पर्यनुयोगमाप्यपादयितुं बौद्धस्य तावद्बुद्धौ समाधानं तच्छङ्कयोपदर्शयति—

स्यादेतत्–निःशेषः समुदायी कृत्स्नशब्दार्थः, समुदाये कश्चिदेव समुदाय्येकदेशपदार्थः, न च बुद्धिः समुदायस्वभावा, तस्या एकरूपत्वात्, नत्कुतः कृत्स्नैकदेशविकल्पसमुत्थानम्, कथं तर्हि तद्विषयिणी तदाकार-

वती वा प्रकारान्तराभावादिति यदि तदा स्वरूपेणेति ब्रूम इति चेत्, स्फुटं निरटङ्कि तार्किकवेदिकाविटङ्केन केवलमस्मभ्यमभ्यसूयता दूरङ्गत्वेति। तद्विषयिणीत्यादौ तद्द्वयां समुदायपरामर्शः, तार्किकवेदिका तार्किकाणां सम्मिलनस्थानं, तत्र विटङ्को धूर्तः, एतेन तदतद्देशत्वं निरस्तम्। तथा हि–बुद्धेर्नीलाकारतां परिच्छिन्ददध्यक्षं तदभावव्यवच्छेदमुखेन तदविनाभूतां पीताद्याकारतामपि व्यवच्छिनत्ति, तथा च कथमेका बुद्धिर्नीलपीताद्याकारा स्यादिति तुल्योऽनुयोगः।

स्यादेतदिति, तद्विषयिणीत्यादौ तद्द्वयामिति, अत्रादिपदेन तदाकारवती वेत्यस्योपग्रहः, सप्तम्यर्थः घटकत्वम्, तथा च तद्विषयिणी तदाकारवती वेत्येतद्घटकतत्पदाभ्यामित्यर्थः। तदभावव्यवच्छेदमुखेन नीलाकारत्वाभावस्य व्यापकस्याभावद्वारा, तदविनाभूतां नीलाकारत्वाभावव्याप्तां, व्यवच्छिनत्तीति व्यवच्छिन्द्यादिति पाठान्तरम्, बौद्धश्शङ्कते—

भवेदेवं यदि नीलाद्याकारतायाः पीताद्याकारत्वाभावाविनाभावः स्यात्, स एव तु कुतः, नीलपीताद्याकाराया बुद्धेरेकात्म्येनैव निश्चयात्, प्रत्याकारनियतत्वे चित्रप्रतिपत्तेरनुपपत्तेः,नीलाद्यनेकाकारालम्बनप्रतिपत्तेरेव तत्त्वादिति चेत्, तदेतत्तुल्यं परमाण्ववयव्यादिषु, नहि तत्राप्यनेकपरमाणुसंसृष्टस्य परमाणोरनेकावयवसंसृष्टस्यावयविनो वैकात्म्यं नानुभूयते, तथात्वे वैकस्यानेकसंसर्गप्रतिपत्तिः कदापि न स्यात्,तथा चैकत्र साधनवत्त्वाद्यग्रहान्नानुमानादिवार्त्तापीति तुल्यैवार्थगतिः, वाग्वैचित्र्यं तु क्वोपयुज्यते, संयोगव्यवस्थापनयैव च 'षट्केन युगपद्योगात् परमाणोः षडंशता ॥ दिग्देशभेदतश्छायाऽऽवृतिभ्यां चास्य सांशता' इत्यनेन परमा-

गोर्युगपत् परमाणुषट्कयोगात् षडंशता, प्राच्यादिव्यपदेशस्य मूर्त्तत्वात् सिद्धयोश्छायावरणयोश्च सावय वत्वं विनाऽनुपपत्तेस्तस्य सावयवत्वं स्यात्, भवतां निरवयवे विहायसि सामान्ये च तदभावादित्यादि यदा-गादिनं तन्निरस्तं द्रष्टव्यं, यतः स्वरूपनियन्धनसंयोगित्वं नांशमपेक्षते, युगपदनेकमूर्त्तसंयोगित्वं चानेकदिग-वच्छेदेनाविरुद्धं, प्राच्यादिव्यपदेशोऽपि प्रतीच्याश्रसंयोगित्वे सति प्राच्यादिसंयोगित्वादविरुद्धः, सावयवेऽपि दीर्घदण्डादौ मध्यवर्त्तिनमवयवमपेक्ष्य प्राच्यादिव्यवहारविरहात्,

भवेदेवमिति,नीलादीत्यत्रादिपदात्पीतादेः पीतादीत्यत्र च नीलादेर्ग्रहणम्,तेन पीताकारतायाः नीलाकारत्वाभावाविना भावस्य लाभाच्च सन्दर्भविरोधः. नीलाकारत्वपीताकारत्वाभावयोर्न व्याप्यव्यापकभावः नीलाकारत्वपीताकारत्वयोरेकस्यां बुद्धावनु-भूयमानत्वादिति न व्यापकाभावाद् व्याप्याभावस्य सिद्धिरिति भावः। बुद्धेरेकाकारमात्ररूपत्वे दोषमाह प्रत्याकारेति, तत्त्वात् निजप्रतिपत्तित्वात्,तथात्वे एकात्मतयाऽननुभवे,एकस्यानेकैस्सह संसृष्टतया प्रतिपत्त्यनभ्युपगमे साध्यसाधनयोरप्येकत्र दृष्टान्ते पक्षे वा संसर्गाभावात् तत्र संसृष्टतया प्रतिपत्तिर्न स्यादिति व्याप्तिग्रहाभावात् एवं साध्यवत्तया संदिग्धे पक्षे साध्यसम्बन्धाद्धेतुसंसृष्ट-तया प्रतिपत्तिर्न स्यादिति हेतौ पक्षधर्मत्वग्रहाभावाच्चानुमित्यादिरपि न स्यादित्याह तथा चैकत्रेति, साधनवत्त्वादीति आ-दिपदात्साध्यवत्त्वादेरुपग्रहः। संयोगव्यवस्थापनमेवेति अस्य निरस्तमित्युत्तरेणान्वयः, दिग्देशभेदत इति एकस्मात् परमा-णोरियं प्राचीयं प्रतीचीत्यादिरूपदिग्भेदव्यपदेशात्, अयं परमाणुरस्मात्परमाणोः पूर्वदेशस्थः अयं च पश्चिमदेशस्थः अयं च दक्षिणदेशस्थ इत्यादिरूपविभिन्नदेशभेदव्यपदेशाच्चेत्यर्थः। छायाऽऽवृतिभ्याम्,परमाणुः छायावान् मूर्त्तत्वात् परमाणुः आवरणवान्

मूर्त्तत्वात्, उभयत्र घटो दृष्टान्त इत्यनुमानसिद्धाभ्यां छायावरणाभ्याम्, चकारो दिग्देशभेदत इत्यस्य छायावृतिभ्यामित्यस्य च सांशतेत्यनेनान्वयलाभार्थः । अस्य परमाणोः । इत्यनेन, अमुना श्लोकेन, अस्यापादितमित्यनेन सम्बन्धः, परमाणुः सावयवः प्राच्यादिव्यपदेशकारित्वात् छायावत्त्वात् आवरणवत्त्वाच्च, यो यः प्राच्यादिव्यपदेशकारी छायावान् आवरणवाँश्च स सावयवः यथा घटादिः, यश्च न सावयवः स न प्राच्यादिव्यपदेशकारी छायावान् आवरणवाँश्च, यथाऽऽकाशः सामान्यं चेत्यन्वयव्यतिरेकाभ्यां परमाणोस्सावयवत्वसिद्ध्यर्थमाह प्राच्यादिव्यपदेशस्येति । अस्य छायावरणयोश्चेत्यस्य च सावयवत्वं विनानुपपत्तेरित्युत्तरेणान्वयः, हेतुतयोपात्तं छायावत्त्वं आवरणवत्त्वं च स्वरूपासिद्धमित्यन्तरा शङ्कानिवृत्त्यर्थमाह मूर्त्तत्वात्सिद्ध्योरिति, घटादौ मूर्त्तत्वछायावरणवत्त्वयोर्व्याप्तिग्रहेण मूर्त्तत्वहेतुना पक्षीभूते परमाणौ छायावरणवत्त्वसिद्धिरिति नोक्तदोषः । परमाणोः परमाणुषट्केनैककालावच्छेदेन संयोगो न स्वावयवावच्छेदेन, किन्तु स्वरूपतः इत्यवच्छेदकविधया स्वांशापेक्षाऽभावान्न परमाणोष्षडंशतेति नैयायिकस्समाधत्ते यत इत्यादिना, अविरुद्धमिति एककालावच्छेदेनापि तत्तद्दिगवच्छेदेन तत्तत्परमाण्वात्मकानेकमूर्त्तेन सह निरंशस्याप्येकस्य परमाणोः संयोगोपपत्तेर्नांशतासिद्धिरिति भावः । दीर्घदण्डादावपि प्रतीच्यादिदिग्वर्त्तिपदार्थापेक्षया प्रतीच्याद्यऽसंयोगित्वे सति प्राच्यादिसंयोगित्वादेव प्राचीव्यपदेश इति नात्र सावयवत्वं तन्त्रम्, आत्मादौ प्रतीच्याद्यसंयोगित्वाभावादेव न प्राच्यादिव्यवहारः, यदि च सावयवत्वमेव तन्त्रं स्यात्तर्हि दीर्घदण्डादौ मध्यवर्त्तिनमवयवमपेक्ष्यापि प्राच्यादिव्यवहारस्स्यात्, न च भवतीत्यतोन्वयव्यभिचारान्न तत्तन्त्रम्, किन्तूक्तोपाधिरेव, एवमेव परमाणावपीति न प्राच्यादिव्यपदेशकारित्वहेतुना सावयवत्वसिद्धिरिति दिग्देशभेदत इति यदुक्तं तन्न युक्तमित्याशयेनाह प्राच्यादिव्यपदेशोऽपीति, छायावृतिभ्यां चास्य सांशतेति निरासायाह—

छायापि यदि प्रामाणिकी तदा तेजोगतिप्रतिबन्धकसंयोगभेदात् सम्भविनी, एवमावरणमपि, परमाणुसिद्ध्यसिद्धिभ्यामेव मूर्त्तत्वादयो निरवकाशिताः, सावयवः परमाणुः मूर्त्तत्वात् क्रियावत्त्वात् अविभुद्रव्यत्वात् स्पर्शवत्त्वादित्यादयः लाघवादनवस्थाप्रसङ्गाच्च, निरवयवस्य परमाणोः सिद्धौ धर्मिग्राहकमानबाधः, असिद्धौ चाश्रयासिद्धिरित्येतावतैव दूषिता नोत्थातुमुत्सहन्त इत्यर्थः।

छायापि यदीति, मूर्त्तत्वादय इत्यादिपदेन कतिविधा हेतवो ग्राह्या इत्यपेक्षायां न्यायप्रयोगप्रदर्शनपूर्वकं तान् प्रदर्शयति सावयवः परमाणुः मूर्त्तत्वादित्यादिना। परमाणुसिद्ध्यसिद्धिभ्यामिति यदुक्तं तदेव विवृणोति लाघवादित्यादिना, धर्मिग्राहकमानबाध इति येनैव प्रमाणेन धर्मिणः परमाणोस्सिद्धिस्तेनैव प्रमाणेन सावयवत्वानुमाने बाध इत्यर्थः। परमाणुः सावयवः आकाशव्यतिभेदात्, न चात्र हेत्वसिद्धिः, आकाशः परमाणोरभ्यन्तरेऽपि विद्यते सर्वगतत्वादित्यनुमानेन तत्सिद्धेः, न चात्र पक्षे साध्यं नास्तु हेतुरस्त्विति व्यभिचारशङ्का कर्त्तव्या, यद्याकाशः परमाणोर्मध्ये न स्यात् तर्हि न स्यात्सर्वगत इति तन्निवर्त्तकतर्कसद्भावादित्यादिकं निरस्तं ज्ञेयम्, परमाणोरभ्यन्तराऽभावेन विशेषणाभावादापादकाऽसिद्ध्योक्ततर्कस्याभासरूपतया व्यभिचारशङ्कानिवर्त्तकत्वाभावेन व्यभिचारिणाऽऽकाशव्यतिभेदाऽसिद्ध्या परमाणुस्सावयव इत्यनुमाने आकाशव्यतिभेदहेत्वसिद्धेरित्याशयेनाह—

आकाशव्यतिभेदादयस्त्वसम्भाविता एव, आकाशेन परमाणोर्व्यतिभेदोऽभ्यन्तरे संयोगोऽभ्यन्तराभावेऽसम्भवी, सर्वगतत्वं तु विभूनां सर्वमूर्त्तसंयोगितामात्रमित्यादिकं बोध्यम्। सर्वत्र चात्र स्वतन्त्रहेतुतायां प्रतिज्ञापदयोर्व्याघातः, सावयवः परमाणुरित्यत्र निरवयवस्याणोरेव परमाणुशब्दार्थत्वात्, परमाणु-

ग्राहकप्रमाणेन बाधात्, कालात्ययापदेशश्च । यदि परमाणुः स्यात् सावयवः स्यादिति प्रसङ्गसाधनदशायामाश्रयासिद्धिः, परमाणोः स्वमतेऽसिद्धेः, सावयवस्य कस्यचिद् दृष्टान्तस्यासिद्धेर्व्याप्त्यसिद्धिश्च ।

आकाशव्यतिभेदादय इति । नन्वेवं तर्ह्याकाशस्य सर्वगतत्वं कथमित्याशङ्कायामाह सर्वगतत्वं त्विति, प्रतिज्ञापदयोर्व्याघात इति यदि परमाणुः कथं सावयवः, यदि सावयवस्तदा कथं परमाणुः, निरवयवस्याणोरेव परमाणुशब्दार्थत्वादित्येवं प्रतिज्ञाघटकपक्षसाध्यबोधकपरमाणुसावयवपदयोः परस्परविरुद्धार्थत्वरूपो व्याघात इत्यर्थः । स्वतन्त्रानुमाने दोषमुक्त्वा प्रसङ्गानुमाने तमाह यदीति, स्वमते विज्ञानवादिमते, परमाणोस्सावयवत्वं स्यात् तदाऽवयवधाराया अविश्रान्त्याऽणुपरिमाणतारतम्यविश्रान्तिर्न स्यादित्येवमनवस्थाप्रसङ्गलक्षणस्य सावयवत्वप्रतिघातकतर्कस्य परमाणुः निरवयवः अणुपरिमाणतारतम्यविश्रान्तेः, यत्र परिमाणतारतम्यविश्रान्तिस्स निरवयवः यथाकाशः, यन्नैवं तन्नैवं यथा घट इति निरवयवत्वसाधकप्रमाणोपष्टम्भकतया विद्यमानत्वेन न सावयवत्वं न चोक्ततर्कस्तदाभास इति वाच्यम्, अनवस्थिताऽवयवधाराभ्युपगमे मेरुसर्षपयोरपि साम्यप्रसक्त्याऽवयवावयवपरंपरासु महत्तरतमभावाभावस्स्यात्, महत्तरतमभावाभ्युपगमे तु त्र्यणुकाऽवयवावयवानामपि महत्त्वापत्त्या प्रत्यक्षं स्यात्, त्र्यणुकस्य चात्यन्तापकृष्टमहत्त्वं न स्यादित्याह—

अनवस्थालक्षणविपरीततर्कस्य तदुपष्टम्भकतया अवयवेष्वपि महत्तरतमाभावात् त्रुटेरमेयत्वप्रसङ्गस्य विद्यमानत्वाच्च । अमेयत्वमपकृष्टतरमहत्त्वाऽभावः । न च विनाशित्वात् परमाणोः सावयवत्वं, तत्साधकाभावात्, सावयवत्वापादकानां च हेतूनामनवस्थोत्थापकत्वात्, समवाय्यसमवायिनाशं विना द्रव्यनाशासम्भ-

वात्, समवायिकल्पने चानवस्थानात् निरवयवस्य नित्यस्यैव परमाणोः सिद्धेः। तदन्य एवायं परमाणुरक्त-बीजो यस्य भागा युक्तिचामुण्डोदरमपि भित्त्वा निष्पतन्तीति।

अनवस्थालक्षणेनेति, हेत्वसिद्धिमाह तत्साधकाभावादिति परमाणौ विनाशित्वसाधकप्रमाणाभावादित्यर्थः। समवायसमवायिनाशं विनेति प्रतियोगितासम्बन्धेन समवायिकारणनाशजन्यद्रव्यनाशं प्रति स्वप्रतियोगिसमवेतत्वकालिकोभयसम्बन्धेन समवायिकारणनाशस्य कारणत्वं, असमवायिकारणनाशजन्यद्रव्यनाशं प्रति स्वप्रतियोग्याश्रयसमवेतत्वकालिकोभयसम्बन्धेनाऽसमवायिकारणनाशस्य कारणत्वमिति कार्यकारणभावोऽत्र ज्ञेयः। परमाणुनिरासयुक्तय एव परमाणुसाधिका इत्युपसंहारव्याजेनाह तदन्य एवायमिति प्रसिद्धरक्तबीजासुरात् परमाणुरूपरक्तबीजस्यान्यत्वे हेतुमाह यस्येति, युक्तिचामुण्डोदरमिति युक्तिरूपा या चामुण्डा चण्डमुण्डनाशिनी देवी, "यस्माच्चण्डश्च मुण्डश्च, गृहीत्वा त्वमुपगता॥ चामुण्डेति ततो लोके ख्याता देवी भविष्यसि" ॥१॥ इत्युक्तेः, तदुदरमित्यर्थः। अस्य भावार्थमाह—

अत्रायं भावः—रक्तबीजो नाम कश्चिदसुरश्चामुण्डोदरं प्रविष्टस्तत्रैव जीर्ण इत्येवं कथासु प्रसिद्धिः। परमाणुरक्तबीजस्त्वन्य एव यः स्वाभावसाधकयुक्तिचामुण्डोदरमपि भित्त्वा निष्पततीत्यतिशयोक्तिरिति। न च कल्पनाश्रयाः कल्पनप्रतिबन्धाश्च प्रसङ्गा भविष्यन्तीति युक्तम्। इच्छाकल्पितेन व्यवहारेण सर्वविधिनिषेधप्रसङ्गात्। लोकव्यवस्थापेक्षणे तु तद्विरोधेनोत्तरस्य निषेधकस्यात्मलाभाभावादित्यसकृदावेदितत्वात्,

अत्रायं भाव इति पक्षस्य दृष्टान्तस्य च विकल्पसिद्धत्वान्नाश्रयासिद्धिर्व्याप्यसिद्धिश्च दोषः, येन प्रसङ्गानुमानप्रवृत्तिर्न स्या-

दित्याशङ्क्य निषेधति न चेति, सर्वेति तथा च घटपटादीनां सत्त्वप्रसक्त्या ज्ञानस्यापि वाऽसत्त्वप्रसक्त्या विज्ञानवादोपि विशीर्येतेति भावः, सर्वविधिनिषेधप्रसङ्गादिति अत्र सर्वविधिनिषेधव्यवहारविलोपप्रसङ्गादित्यपि पाठः। तस्य च सर्वविधिनिषेधव्यवहारस्येच्छाकल्पितो यो निषेधव्यवहारस्तेन सर्वविधिनिषेधव्यवहारोप्युच्छिद्येतेति भावः। लोकव्यवस्थाऽपेक्षणे इति व्यवहारोच्छेदप्रसक्तिभयाल्लोके प्रमाणमूलैव प्रसङ्गप्रवृत्तिरभ्युपगता न विकल्पमूलेति व्यवस्थाऽपेक्षणे इत्यर्थः, तद्विरोधेनेति लोके परिमाणतारतम्यविश्रान्तिः क्वचिदभ्युपगता, यत्र तद्विश्रान्तिस्स एव परमाणुसंज्ञक इति लोकव्यवस्थायाः परमाण्वनभ्युपगमे विरोधेनेत्यर्थः। उत्तरस्य निषेधकस्यात्मलाभाभावादिति, परमाणुसिद्ध्युत्तरकालीनस्य तन्निषेधकप्रमाणस्योत्पत्त्यसम्भवात् उपजीव्यबाधादित्यर्थः। नैयायिकः प्रतिबन्द्या बुद्धिं दूषयति—

अन्यथा सर्वमेतद्बुद्धावपि समानं, सापि षट्केन युगपद्योगादिभ्यः सावयवा प्रसज्येत। तस्यामसिद्धास्त इति चेत्, न, अनुमानसिद्धत्वात्, तथा हि—बुद्धिः षट्कयोगिनी मूर्तिमती च सत्त्वाद्व्यवहर्तव्यत्वात् बोद्धव्यवदिति शक्येत। विपर्ययस्य धर्मिग्राहकसिद्धत्वादनवकाशमिदमिति चेत्, एवमन्यत्रापि प्रतिसन्दधीथा इत्येषा दिग्। अन्यस्तु चक्षुषी निमील्य निर्भयीभवितुमिच्छन्नाह—अस्तु तर्हि बुद्धेरपि विलोप इति, तत्र तु किं वक्तव्यम्, यत्र हेत्वादिव्यवहारोऽपि नास्ति। अस्ति परं सांवृत इति चेत्, भवेदेवं यदि संवृतिः परमार्थसती स्यात्, अन्यथा तु यथा न वास्तवस्तथा न सांवृतोऽपि। संवृतिरपि संवृतिसतीति चेत्, तस्या(अस्या) अप्यसत्यत्वे न किञ्चिदधिकमुक्तं, परसंवृतेस्तु परमार्थसत्त्वस्वीकारे सैव बुद्धिरपरिहेयेति।

अन्यथेत्यादिना, ते पक्षेन युगपद्योगादयः। चोद्भाव्यत्वदिति आरोप्यत्वदित्यपि पाठः। ननूक्तानुमानं धर्मिग्राहकमानेन बाधितमिति न प्रवर्तत इत्याशङ्कते विपर्ययस्येति उक्तसाध्याभावस्येत्यर्थः, इदं सावयवत्वसाधनम्, अन्यत्रापि परमाणवपि, माध्यमिकमतमपाकर्तयितुमुपक्रमते अन्यस्त्विति.निर्भयीभवितुमिति निर्दयीभवितुमित्यपि पाठः, नैयायिकस्समाधत्ते तत्रेति, अत्रेत्यपि पाठः। सैव बुद्धिरपरिहेयेति यया संवृत्या संवृतेस्सत्त्वमेवम्भूतसंवृतिरूपबुद्धेः परमार्थसद्रूपत्वं तद्विषयस्य परमार्थसद्रूपत्वमन्तरेण नोपपद्यत इति तस्याः परमार्थसद्रूपत्वे तद्विषयस्यापि तथात्वेन बाह्यार्थतत्त्वस्यैव सिद्धेर्न सर्वशून्यतावकाशः, विषयस्य बुद्धावन्तः प्रविष्टत्वेन तदतिरिक्ततयाऽनभ्युपगमेऽपि संवृतिसत्ताऽऽधायकसंवृतिरूपबुद्धेः परमार्थसद्रूपत्वे बुद्धिवदन्यस्यापि परमार्थसद्रूपत्वसंभवात् मादृशैरपि न सर्वशून्यतावकाश इति भावः। संवृत्या हेत्वादौ सत्त्वव्यवस्था तदा स्यात् संवृतिः सती स्यात् स्वतोऽसतोऽन्यसत्त्वव्यवस्थापकत्वानुपपत्तेः,संवृतिः सतीत्यभ्युपगमे क सर्वशून्यता,न च संवृतिर्न सत्तासम्बन्धात्,न वा स्वरूपतः सती,किन्तु तदन्तरसंवृत्या, तापि तदन्तरसंवृत्येत्येवं पूर्वपूर्वसंवृतिः सती तदुत्तरोत्तरसंवृत्येति वाच्यं, कस्याश्चिदपि संवृतेः परमार्थतः सद्रूपत्वस्याभ्युपगमे न सर्वशून्यता,अनभ्युपगमे आमूलमसत्त्वापत्तिरित्यसद्रूपया मूलभूतसंवृत्या हेतोः सत्त्वं न प्रमापयितुं शक्यमिति हेत्वादिव्यवस्थाविप्लवस्स्यादित्याशयेनाह—

अनवस्थित एव संवृतिसन्तान इति चेत्, कस्याश्चित् संवृतेः सत्त्वाभ्युपगमे कथं सर्वशून्यताऽन्यथा च कथं हेत्वादिव्यवस्था। अपि च संवृतिविषयत्वं संवृतिरूपसत्ताशालित्वं, संवृतिविषयसत्ताकत्वं संवृतिजन्यव्यवहारविषयत्वं वा यत्किञ्चित्सांवृतत्वमभिधीयते, तद् यदि वास्तवं, क नाम सर्वशून्यता, नो चेत्, तदन्त-

रेण हेत्वादिशून्यतैव कथं सिद्ध्येत्, तथात्वे वा किमपराद्धं पूर्णतयेति दिग्।

अनवस्थित एवेति, सांवृतत्वं यल्लक्षणं तन्निरूप्य तत्किं वास्तवमवास्तवं वेति विकल्पयति, तत्र नोभयपक्षेऽपि शून्यतासिद्धिरित्याह–अपि चेति, सांवृतत्वं न वास्तवं चेत्तर्हि संवृत्यापि न हेतुरसन्निति हेत्वाद्यभावात्कथं शून्यतासिद्धिः, अथवा हेत्वादौ सांवृतत्वस्यावास्तवत्वे सांवृतत्वविरोधिपारमार्थिकत्वं वास्तवं स्यात्, तथापि क्व सर्वशून्यतेत्यभिप्रायेणाह नो चेत्तदिति, प्रथमपक्षे तत्तदा, अन्तरेण हेत्वादि हेत्वादिकमन्तरेण, द्वितीयपक्षे तदन्तरेणेति सांवृतत्वस्य वास्तवत्वमन्तरेणेत्यर्थः, हेत्वादिशून्यता हेत्वादिनिष्ठशून्यता, तथात्वे वा सद्भूतहेत्वादिकमन्तरेण सांवृतत्वस्य वास्तवत्वमन्तरेण वा शून्यत्वस्य सिद्धौ वा, सत्त्वबाधकवत्त्वोभयशालित्वाद् धीस्संवृतिसती, अन्यथा पारमार्थिक्येव स्यादित्याशङ्कते—

सती च बाधकवती चेति संवृतिसती धीरिति चेत्, सत्त्वेऽपि यदि तत्, कथं बाधकं, तथा चेत्, कथं तदालीकस्य सत्त्वमिति। दृश्यते तावदेवं,सत्त्वबाधकवत्त्वयोरुभयोरपि दर्शनान्नैकतरावधारणमित्यर्थ इति चेत्, सत्त्वैकार्थसमवायिनो बाधकत्वमेव तर्हि हेयं, बाधकैकार्थसमवायिसत्त्वमेव किं न हीयत इति चेत्, बाधकस्यापि योगप्रसङ्गात्, तस्य सत्त्वे शून्यत्वायोगात्, असत्त्वे तु तद्बलादन्यासत्त्वासिद्धेरिति यावत्। उभयमप्यवर्जनीयमेव तर्हि, एवमेतत्, मिथोविरोधस्तु हेयः। नहि विरुद्धयोरेकार्थसमवायः, तथाभूतयोर्वा विरोधः शक्य उपपादयितुमृते स्वसमयात्। न च विचारावसरे समयावतार इति यथा यथा च बुद्धिनिवारणाय प्रयासस्तथा तथोज्ज्वलः प्रकाश इति,

सत्ता चेति, बुद्धेः परमार्थदृष्ट्या तद्रूपत्वे कथं बाधकत्वेनाभिमतं तत्र,सत्त्वबाधकत्वयोर्विरोधात्, बाधकत्वे कथं तदा बाधकत्वाश्रियः सत्त्वमित्याशयेन समाधत्ते सत्त्वेपि यदीति,दृश्यते तावदेवमित्यस्यार्थमाह सत्त्वेति,सत्त्वसमानाधिकरणधर्मस्य बाधकत्वायोगाद् बाधकत्वमेव हेयं स्यादिति समाधत्ते सत्त्वैकार्थेति। योगप्रसङ्गादिति सत्त्वप्रसङ्गादित्यर्थः। बाधकस्य बाधकत्वं परमभ्युपगम्यते तदा सत्त्वप्रसङ्गः,तस्य तन्नियतत्वेन तेन विना तदनुपपत्तेरितिभावः। अत्र त्यागप्रसङ्गादित्यपि पाठः,तस्य चायमर्थः-बाधकस्यार्थपरतत्त्वेनाधारस्याऽसत्त्वे कुत्र तिष्ठेतेति बाधकत्वमेव हेयं ननु बुद्धेस्सत्त्वमिति। उक्तमेव विवेचयति तस्येति बाधकस्येत्यर्थः। शून्यत्वायोगादिति बाधकस्य सत्त्वे तद्घटितसर्वस्य शून्यत्वाऽयोगेन सर्वं शून्यमिति माध्यमिकमतक्षतिस्स्यादितिभावः। तथाभूतयोः एकार्थसमवायिनोः। ननु बुद्धेर्निराकरणप्रयासे सति तन्निराकरणमेव स्यात् कथं तत्सिद्धिरित्याशङ्कायामाह—

तन्निवारणमपि बोद्धव्यमेवेति, असत्त्वेन ज्ञानस्य ज्ञापनस्य वा तस्य बाधज्ञानाधीनत्वात्, ज्ञानरूपत्वात् ज्ञानघटितमूर्त्तिकत्वाच्चेति भावः। तदेतदायातं प्रदीपान्तरेण प्रदीपं निर्वाप्य तिमिराऽऽपादनमिति।

तन्निवारणमपीति, बुद्धिनिवारणमपि बुद्ध्यैव, तदपि च बुद्धिरूपं बुद्ध्यनुकूलव्यापाररूपं वा, तथा च बुद्धेरभावे तन्निराकरणमपि कथं स्यादितिभावः। तदेव विवृणोति असत्त्वेनेति, बुद्धिरसतीत्येवं यज्ज्ञानं तदनुकूलव्यापारो वा बुद्धिनिवारणं, तदुभयमपि बाधज्ञानाधीनमेव साफल्यतामनुभवतीति बाधज्ञानस्य सत्त्वमपरिहार्यमेवेतिभावः। बुद्धिनिवारणस्य बुद्धिरूपत्वपक्षमाश्रित्याह ज्ञानरूपत्वादिति, व्यापाररूपत्वपक्षमाश्रित्याह ज्ञानघटितमूर्त्तिकत्वादिति, शून्यवादी हेतुफलभावानुपपत्तिमाशङ्कते—

स्यादेतत्-ज्ञानं ज्ञेयं वा जन्यमजन्यं वा, द्वितीये कादाचित्कत्वानुपपत्तिः। जन्यं चेत्, असतो जन्यत्वे-

ऽतिप्रसङ्गः, सतश्च जन्यत्वे सत्त्वाविशेषाज्जन्यजनकभावनियमानुपपत्तिः। न च जन्यत्वाजन्यत्वाभ्यामन्यः प्रकारोऽस्तीत्यवयविप्रभृतेरनित्यवर्गस्य विलयः, विलीने च तस्मिँस्तदधीनसिद्धीनां परमाण्वादीनां नित्यानामपि विलयात् सर्वविलोप इति, मैवं, बाध्यबाधकबाधादिज्ञानानामवश्योपेयत्वे स्वभावनियमादनतिप्रसङ्गादिति।

स्यादेतदिति, जन्यजनकभावनियमानुपपत्तिरिति, तथा च कार्यस्यापि कारणत्वं कारणस्यापि च कार्यत्वं स्यादिति भावः। एकं बाध्यमपरं बाधकमेकं बाधकज्ञानमपरञ्च बाध्यज्ञानमिति शून्यवादिनापि शून्यतासिद्ध्यर्थमभ्युपगन्तव्यस्य बाध्यबाधकभावादेरपि स्वभाववादानाश्रयणे पूर्ववत् वैपरीत्यप्रसक्त्या तन्नियमानुपपत्त्या शून्यतैव न सिद्ध्येत्, स्वभाववादाश्रयणे च बाध्यबाधकभावादिव्यवस्था स्वभावादेव यथा तन्मते,तथा पूर्णतापक्षेपि स्वभावादेव कार्यकारणभावादिव्यवस्थोपपद्यत एवेति नातिप्रसङ्ग इत्याशयेन समाधत्ते मैवमिति, तृतीयं चरणमवतारयति—

ननु माभूवन्नेतानि बाधकानि, अनुपलम्भस्तु स्यात् ,तत्राह—'योग्या च नास्ति नियतानुपलब्धिरुच्चै'रिति। अयोग्यानुपलम्भः परमाण्वादौ न बाधः, योग्यस्य तु घटादेः स्थूलैकत्वेनोपलम्भ एव सर्वजनसिद्ध इति। विकल्पमात्रं तदिति चेत्, न, स्पष्टप्रतिभासत्वात्। औपाधिकमस्य स्पष्टत्वमिति चेत्, उपाधिः समानाकारोऽनुभवो भिन्नाकारो वा, आद्ये तत एव स्थूलैकसिद्धिः। द्वितीये तु परम्परयापि विषयानधीनत्वेन निश्चयोपप्लवे प्रत्यक्षस्याप्यसिद्धिर्निश्चित एवार्थे तस्य प्रामाण्यादिति। न च परमाणवः स्थूलास्तत्त्वव्याघातात्॥



नन्विति, अनुपलब्धिर्योग्यायोग्यभेदेन द्विविधा, तत्र योग्या याऽनुपलब्धिस्साऽभावसाधिका, योग्यत्वञ्चानुपलब्धौ प्रतियो-

गिगन्वन ज्ञनप्रनाङ्गिनप्रनियोगिकत्वम्, अयोग्या त्वनुपलब्धिर्नियमेन नाभावसाधिका, अभावप्रनियोगिनस्सत्त्वेऽप्ययोग्यस्य तस्या-
ऽयोग्यानुपलम्भसम्भवात्, तथा च परमाणुसंख्याभावेन न योग्य इति तत्सत्त्वप्रसञ्जनरूपापादकस्याभावादुपलब्धेः प्रसञ्जनाऽस-
म्भवेन नाशा तत्र सम्भवति,द्वितीया तत्र यद्यपि सम्भवति तथापि तया न तदभावस्साधयितुं शक्यः,तस्या अभावनियतत्वाभावात्,
स्थूलैकत्वेन घटानुपलम्भस्यैव सर्वजनसिद्धस्य प्रतिबन्धकस्य सत्त्वाद् योग्यस्य घटादेस्तु योग्यानुपलब्धिर्नास्त्येव, यया तदभाव-
सिद्धिरित्याशयेनाह—तत्रेति, ननु स्थूलैकत्वेनोपलम्भो विकल्पैकरूपः, विकल्पश्चाऽप्रमाणत्वेन न वस्तुसाधक इति तदात्म-
केनोपलम्भेन न घटादेस्सिद्धिरित्याशयेनाशङ्कते विकल्पमात्रमिति, यस्य धर्मोऽन्यत्रोपसङ्क्रामति स उपाधिः, उपाधिगतो
धर्मो योऽन्यस्मिन् प्रतिभासते स औपाधिक इत्युच्यते, तथा च स्थूलैकत्वेन घटाद्युपलम्भे यत्स्पष्टत्वं प्रतिभासते तस्य क उपाधिरिति
परं पृच्छति उपाधिरिति, समानाकारोऽनुभव इति समानाकारानुभवधर्मस्य स्पष्टत्वस्य विकल्पे प्रतिभासः, अन्याकारानुभ-
वधर्मस्य नेति विकल्पार्थः। तत एव समानाकारानुभवादेव, स्थूलैकसिद्धिः स्थूलस्यैकस्य घटादेस्सिद्धिः, विकल्पस्स्वतो न विष-
यीति इति न तस्य स्वतःप्रामाण्यं, किन्तु समानविषयकानुभवद्वारा विषयजन्यत्वेन,भिन्नाकारस्यानुभवस्योपाधित्वे त्वनुभवद्वारापि
विकल्पस्य विषयाजन्यत्वेन निर्विषयत्वापत्त्या घटादिविषयकनिश्चयात्मकस्य न स्यादिति विकल्पाविषयत्वेनानिश्चितरूपे घटादिवि-
षयेऽनुभवस्यापि प्रामाण्यरूपतया सिद्धिर्न स्यात्,'यत्रैव जनयेदेनां तत्रैवास्य प्रमाणतेति' सिद्धान्तबलेन यद्विषयकोऽनुभवो यद्विषये
निश्चयात्मकं विकल्पबुद्धिं जनयेत्तद्विषय एवानुभवस्य प्रामाण्यमित्यभ्युपगमादित्याशयेन द्वितीयपक्षं निरस्यति द्वितीये त्विति,
प्रत्यक्षस्यापि मिथ्यात्वमिति, अत्र प्रामाण्येनेति शेषम्, स्थूलप्रतिभासोऽवयविन एव नतु परमाणूनां, विपरीताभ्युपगमे दण्डमाह

न चेति, यदि परमाणवस्स्थूलास्स्युस्तदा तेषां परमाणुत्वमेव न स्यादिति भावः। परमाणुसमुदाय एव स्थौल्यमिति स्थूलोऽवयवीति प्रतीतिविषयः परमाणुसमुदाय एव, नावयवीत्याशङ्क्य निषेधति—

न च तत्समुदायस्तथा, तस्य समुदितपरमाण्वाधारस्यावयविस्थानीयस्य त्वयानभ्युपगमात्। अभ्युपगमे वा किमपराद्धमवयविना, न च समुदिता एव तथा भासितुमर्हन्ति, तेषामस्थूलत्वात्। न च निरन्तराणां नानादिग्देशव्यापितैव स्थौल्यम्, परमाणुषु प्रत्येकमसम्भवात्। न च नानात्वैकार्थसमवायिन्येव सा स्थौल्यमिति साम्प्रतं, स्थूल एक इति प्रत्ययनियमात्। न च भागेष्वेवारोपितेनैकत्वेन स्थूल एक इति प्रतिभानमुपपत्तिमत्, तदसम्भवात्।

न च तत्समुदायस्तथेति, निषेधे हेतुमाह तस्येति,तस्य समुदायस्य, तथा स्थूलत्वेन,परमाणूनां प्रत्येकमस्थौल्ये प्रत्येक समुदितयोरभेदात्समुदितानामपि तेषामस्थूलत्वान्न ते समुदितास्स्थूलत्वेन प्रतिभासविषया इत्याशयेनोत्तरयति तेषामिति, निषेधे हेतुमाह परमाणुष्विति, परमाणुषु प्रत्येकं नानादिग्देशव्यापित्वलक्षणस्थौल्यस्याभावेन निरन्तरेष्वपि तेषु तन्न सम्भवतीतिभावः। बहुत्वस्य व्यासज्यवृत्तित्वान्नानात्वावच्छेदेनैवानेकेषु बहुत्वपर्याप्तिरिति यथा नैकः बहुरिति प्रत्ययः किन्तु नाना बहवः इति तथा स्थौल्यस्य व्यासज्यवृत्तित्वे नैकत्वावच्छेदेन तस्य पर्याप्तिसम्बन्धः किन्तु नानात्वावच्छेदेनेति स्थूलो नानेति प्रत्ययस्स्यात्, न त्वेकः स्थूल इति, प्रतीयते त्वेकः स्थूल इति न नानात्वसमानाधिकरणं नानादिग्देशव्यापितालक्षणं स्थौल्यमित्याशङ्क्य निषेधति—न च नानात्वेति, भागेषु अवयवेषु, तदसम्भवात्, भागेष्वैक्यारोपासम्भवात्, उक्तमेव विवेचयति—

न हि करचरणचिबुकनासिकादिपरमाणूनामैक्यं कश्चिदारोपयेत्। न च तेषु भेदेन प्रथमानेषु न स्थूलप्रत्ययः। न च तत्त्वे स्फुरत्येव तद्विपरीतातत्त्वसमारोपसम्भवः। अपि चैवमेकपरमाण्वात्मना परमाणुकोटिरप्यारोपिता परमाणुमात्रतयैव परिस्फुरेत्र स्थूलतया, न च नानादिग्देशव्यापित्वस्यैव महिमा यत् परमाणुत्वेनाऽस्फुरणं स्फुरणं च स्थूलत्वेनेति साम्प्रतं, विरोधात्, यदि हि नानादिक्काः परमाणवो देशतया भासेरन् नैकतया देशिकया भासेरन्, तथा न कस्य नानादिग्देशव्यापिता, देशिनोरपरिस्फुरत्तेः। अथ तथारोप्येरन् न नानात्वेन देशत्वेन न भासेरन्, तथा न कस्य नानादिग्देशव्यापिता, नानादेशानामपरिस्फुरत्तेः। तस्मादेकत्वारोपे परमाणुमात्रावभास एव स्यादिति।

कथीति, कश्चिदारोपयेदिति—कश्चित् कचिदारोपयतीत्यपि पाठः, अवयवेषु भेदग्रहदशायामैक्यारोपाभावेऽप्येकस्स्थूलोऽस्तीति प्रत्ययो भवतीति व्यभिचारेण नैक्यारोपः कारणं स्थौल्यप्रत्ययस्येत्याह—न च तेष्विति, तत्त्वे भेदे, अतत्त्वेति एकत्वेत्यर्थः। परमाणुकोटिरप्यारोपितेति—कोटिसंख्यकपरमाणुरारोपित इत्यर्थः। विरोधमेवोद्घाटयति यदि हीति, देशतया भिन्नभिन्नावयवरूपतया, देशितया अवयवितया। नानादिग्देशव्यापितेति, अत्र ज्ञायेतेतिशेषः। तथाऽऽरोप्येरन् एकतया देशितया नाऽऽरोप्येरन्, यदि हि नानादिक्का इत्यादेः फलितार्थमाह—

यदि नीलस्यायमर्थः—नानादिग्देशव्यापित्वेन स्थौल्यं, परिमाणभेदो वा। नायः, दिग्देशा हि भवतां परमाणव एव, ते यदि नानात्वेन देशत्वेन न गृह्यन्ते, न तर्हि तेष्वेकत्वस्य देशित्वस्य चारोपः, न चान्यस्य

देशिनो ग्रहणमस्तीति कस्य दिग्देशव्यापिता प्रत्याय्या। अथ ते एकत्वेन देशित्वेन चारोप्यन्ते, न तर्हि तेषां नानात्वेन देशत्वेन च ग्रहणं, न चान्येषां देशानां ग्रहणमस्तीति कथं नानादिग्देशव्यापिता प्रतीयतां, न च घटादिपरमाणवो देशिनो देशाश्च भूतलादिपरमाणव इति वाच्यम्, भूतलादावप्येकत्वस्थूलत्वप्रत्ययात्। न च देशदेशिभावापन्नानन्तपरमाणुसमूहपरम्परा प्रत्ययगोचरः, देशान्तराग्रहणेपि चान्धतमसे करेण परामर्शी एकः स्थूलो घट इति प्रत्ययात्,

यदि हीत्यस्यायमर्थ इति, ते तेषु ते तेषामित्यत्र सर्वत्र तत्पदेन परमाणवो ग्राह्याः, घटादिपरमाणूनां देशित्वेनैकत्वेन च ग्रहणं भूतलादिपरमाणूनां नानात्वेन देशत्वेन च ग्रहणमिति नानादिग्देशव्यापित्वग्रहणसम्भव इत्याशङ्क्य निषेधति—न च घटादीति, निषेधे हेतुमाह भूतलादाविति, भूतलपरमाणूनां स्वदेशभूतानि परमाण्वन्तराणि नानात्वेन देशत्वेन नोपलभ्यन्त इति नानादिग्देशव्यापित्वग्रहणाऽभावेपि भूतलादावैकत्वस्थूलत्वप्रत्ययो भवतीति व्यभिचारेण न तत्कारणमिति भावः। यद्वा भूतलादौ स्थूल एक इति प्रत्ययानुरोधेन तदाधारभूता नानादेशा अभ्युपगन्तव्यास्स्युः, तत्राप्युक्तप्रत्ययोपपत्तये तदाश्रयभूतास्तेऽभ्युपगन्तव्यास्स्युरित्येवमनवस्थाप्रसक्तिस्स्यात् न च सा प्रामाणिकीतिभावः।

द्वितीये त्वेकैकपरमाणौ तदसम्भवेन सिद्धस्तदाश्रयोऽवयवी, परमाणुषु व्यासज्यवृत्तेस्तस्याभ्युपगमे तु किमपराद्धमवयविना। न च धर्मिकल्पनात इत्यादिन्यायावकाशः, एतौ द्वौ घटौ संयुक्ताविति वदेते परमाणवः स्थूला इति प्रत्ययप्रसङ्गात्, व्यासज्यवृत्तिधर्मग्रहे आश्रयभेदग्रहस्यापि हेतुत्वादिति दीधितिकारानुयायिनः।

पवनेकेषु नैकत्वस्फुरत्त्वारोपः, कथं तर्हि अनारब्धद्रव्यराशिषु तत्प्रत्यय इति चेत्, तावद्देशव्याप्तिसाम्येन तावत्परिमाणद्रव्यत्वारोपात्, स चैतज्जन्मानुभूतस्यापि तादृशद्रव्यस्य जन्मान्तरानुभूतस्य वा दैवादिवशेन स्मरणादिति गृहाण। न चैवं परमाणुष्वपि तावत्परिमाणद्रव्यत्वारोपः स्यात्, अन्यत्राप्रसिद्धेः। न चासन्नेवैकः स्थूलः परिस्फुरति, बाधकानामपास्तत्वात्।

द्वितीये परिमाणभेदो वा स्थौल्यमिति पक्षे, तदसम्भवेन मध्यममहत्परिमाणवत्त्वरूपस्थौल्यस्याऽसम्भवेन, ननु परमाणुषु प्रत्येकं व्यासज्यवृत्तित्वावच्छेदेन स्थौल्यं न वर्त्तते, वर्त्तते च पर्याप्तिसम्बन्धेन बहुत्वावच्छेदेनेति तद् व्यासज्यवृत्त्येवेत्येवमभ्युपगम्यत इति चेत्, तर्हि अवयवेष्ववयविनो व्यासज्यवृत्तितयाऽभ्युपगम एव श्रेयान्, सिद्धान्तविरोधस्तूभयत्र सम एवेति किमेकत्र पक्षपातेनेत्याशङ्कनाह परमाणुष्विति, ननु धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायात् अवयविनमभ्युपगम्य तत्र परिमाणविशेषस्य कल्पनापेक्षया किन्तु परमाणुषु तस्य कल्पनायां लाघवमित्याशङ्क्य निषेधति न चेति, निषेधे बाधकमाह एतावतीति, संयोगस्येव स्थौल्यस्यापि व्यासज्यवृत्तित्वाभ्युपगमे संयोगप्रतीतिवत् स्थौल्यप्रतीतिरपि यावदाश्रयभेदोल्लेखिन्येवाभ्युपगन्तव्या स्यादित्यत्र हेतुमाह व्यासज्यवृत्तिधर्मग्रह इति, तावद्देशव्याप्तिसाम्येनेति अनेन साधारणधर्मग्रहः आरोपहेतुः, स चात्र वर्त्तत इति तद्बलादेवारोप इति ध्वनितम्। ननु सामग्री वै जनिकेति न्यायान्न साधारणधर्मग्रहमात्रं कारणं, किन्तु स्मरणद्वाराऽऽरोप्यानुभवोऽपि, स चात्र नास्तीत्याशङ्कायामाह स चेति, तावत्परिमाणद्रव्यत्वारोपश्चेत्यर्थः। दैवादिवशेनेति दैवं तत्तत्कार्यविशेषनियामकोऽदृष्टविशेषः, आदिपदात्कालविशेषादिग्रहः, उद्बोधकान्तरस्योपग्रहः। अन्यत्राप्रसिद्धेरिति, अवयविनोऽनभ्युपगमेन तावत्परिमाणद्रव्यान्तरस्य चाभा-

वेन कुत्रापि तावत्परिमाणद्रव्यत्वस्याऽप्रसिद्ध्याऽऽरोपाऽसम्भवात्, नह्यप्रमितमारोप्यते इति नियमादितिभावः। बाधकानामिति अवयविबाधकानामित्यर्थः। बुद्धिगतमेकत्वं स्थौल्यं च परमाणुष्वारोप्यैकस्स्थूल इति प्रतीतिर्भवतीति चेत्, बुद्धिधर्मोऽपि यद्यऽसद्रूपस्तदाऽसत्ख्यातिनिरासेन निरस्तः, बुद्ध्यन्तरेण कल्पितो यदि तदा नह्यसतः कल्पनेति बुद्ध्यतिरिक्ते सत्त्वं वाच्यं स्यात्, यदि च बुद्धौ वास्तविकः परमाणुष्वारोप्यते तदा बाधकाभावाद्ग्राह्य एव कथं न वास्तव इत्याशयेनाह—

एतेन प्रतिभासधर्मो निरस्तः। सोऽपि ह्यसन् बौद्धो वास्तवो वेति न त्रयीं गतिमतिवर्त्तत इति। अतीन्द्रियाश्च प्रत्येकमणवः कथं मिलिता अपि दृश्येरन्, अतीन्द्रियसमूहस्याप्यतीन्द्रियत्वात्, विशिष्टोत्पादादैन्द्रियकत्वमिति चेत्, किमद्यापि स्वप्ने हस्तं प्रसारयसि, तथोत्पादो न विना क्षणभङ्गं, स च प्रागेव निराकृत इति न जानासि।

एतेनेति, परमाणूनामवयविप्रतीतिविषयत्वे दोषान्तरमप्याह अतीन्द्रियाश्चेति, ननु यथैकस्य केशस्य दूरेऽप्रत्यक्षत्वेपि तत्समूहस्य प्रत्यक्षत्वं तथाऽत्रापि स्यादिति वाच्यं, केशस्यैकस्यातीन्द्रियत्वेन नाऽप्रत्यक्षत्वं, किन्तु दूरत्वदोषस्य प्रतिबन्धकत्वादेव, तदभावादेव च समीपवर्त्तिनस्तस्यैकस्यापि योग्यस्य प्रत्यक्षत्वोपपत्तिः, परमाणोस्त्वेकस्यातीन्द्रियत्वमेवेति ते परस्परसंयुक्ता अप्यऽयोग्या एवेति तेषां परस्परसंयोगमात्रेण योग्यत्वस्याऽभावेन न प्रत्यक्षत्वोपपत्तिरितिभावः। न चाऽदृश्यैरेव परमाणुभिस्तदानीं दृश्यपरमाणुपुञ्जोत्पाद इति नाऽप्रत्यक्षत्वप्रसङ्ग इति वाच्यम्, अदृश्यस्य दृश्यानुपादानत्वात्, अन्यथा चक्षुरुष्मादिसन्ततेः कदाचिद् दृश्यत्वं स्यात्, नचातितप्ततैलादौ कथमदृश्यदहनसन्ततेर्दृश्यदहनोत्पत्तिरिति वाच्यम्, तथात्वानभ्युपगमात्, तत्र तदन्तः पातिभि-

दृश्यदहनावयवस्थूलदहनोत्पत्तेरुपगमात् । किञ्चोक्तयोत्पादोपि क्षणिकत्वसिद्ध्युत्तरकालावच्छेदेनैव सिद्ध्यति, नचाद्यापि क्षणिकत्वं सिद्धमित्याशयेनाशङ्कोत्तराभ्यामाह विशिष्टोत्पादादेवेति, क्षणभङ्गपक्षे प्रत्यक्षाऽकुर्वद्रूपत्वविशिष्टलक्षणाऽदृश्यात्प्रत्यक्षकुर्वद्रूपत्वविशिष्टलक्षणदृश्योत्पादस्वीकारो न युक्त इत्याह—

क्षणभङ्गेऽपि विशिष्टस्याजनकाद्व्यावृत्तस्योत्पादो वक्तव्यः, व्यावृत्तिश्च जातिभेदो जातिसङ्करप्रसङ्गादेवासम्भवी, व्यक्तिभेदस्तु नानुगतरूपकार्यप्रयोजक इत्यन्वयव्यतिरेकाभ्यां स्थौल्यमेव प्रत्यक्षप्रयोजकं वाच्यम्, अन्यथा स्थूलतामप्राप्नुवन्नेकोऽपि परमाणुः प्रत्यक्षतामियादिति। न च बहुत्वमेव स्थौल्यं, तद्विपर्यय एव सूक्ष्मता, विप्रकृष्टानामपि प्रत्यक्षत्वप्रसङ्गात्, नैरन्तर्यमपि विवक्षितमिति चेत्, न, तस्य प्रकृतेऽप्यसम्भवात्,

क्षणभङ्गेऽपीति, अजनकात् प्रत्यक्षाऽकुर्वद्रूपात्मकात्, प्रत्यक्षाजनकपरमाणुवृत्तिः प्रत्यक्षकुर्वद्रूपात्मकपरमाणुवृत्तिः प्रत्यक्षकुर्वद्रूपत्वात्मकव्यावृत्तिर्जातिविशेषो न सम्भवति, परमाणुवृत्तिरूपत्वादिना साङ्कर्यात्, तथाहि रूपत्वाभाववति प्रत्यक्षकुर्वद्रूपात्मकरसपरमाणुपुञ्जे प्रत्यक्षकुर्वद्रूपत्वस्य प्रत्यक्षकुर्वद्रूपत्वाभाववत्यऽदृश्यरूपपरमाणुपुञ्जे रूपत्वस्य च सद्भावः, प्रत्यक्षकुर्वद्रूपात्मके रूपे च तयोस्समानाधिकरण्यमित्याह व्यावृत्तिश्चेति, अजनकव्यावृत्तव्यक्तिविशेषलक्षणव्यावृत्तिस्त्वननुगतत्वान्नानुगतप्रत्यक्षकार्यम्, कार्यमात्रं प्रति कारणसाजात्यस्यैव प्रयोजकत्वादित्याह व्यक्तिभेदस्त्विति, अन्यथा—स्थौल्यमन्तरेण प्रत्यक्षकुर्वद्रूपत्वस्य जातिविशेषस्य कारणत्वे. प्रकृतेऽपीति प्रत्यक्षतयाऽभिमते परमाणुपुञ्जे इत्यर्थः, तत्र हेतुमाह—

रूपपरमाणूनां रसादिपरमाणुभिरन्तरितत्वात्। न चारोप्यते नैरन्तर्यम्, इतरेतराश्रयप्रसङ्गात्, नैर-

न्तर्यारोपे तेषां स्थूलानां ग्रहणम्, ग्रहणे च सति नैरन्तर्यारोप इति, तस्मादैन्द्रियकत्वे स्थूलतायाः प्रयोजकत्वात्तेषां प्रत्येकमस्थूलत्वादतीन्द्रिया एव परमाणव इति। अस्तु तर्हि क्षणमात्रस्थायी स्थूलोऽर्थ इति चेत्, न, भागभागिनोर्युगपदनुपलम्भप्रसङ्गात्, निरन्वयविनाशिनो हि भागाः पूर्वक्षणे सन्तो भागी चोत्तरक्षण इति। न कारणभूता भागास्तन्त्वादयः पटादावुपलभ्यन्ते, किन्तु तेन सह समानोपादाना भागान्तराणीति चेत्,

रूपेति, रसादीत्यत्रादिपदाद् गन्धादेरुपग्रहः। नन्ववयविनो रूपाणुरसाणुगन्धाणुस्पर्शाणुसमुदायरूपत्वेन रसादिपरमाणुभिरन्तरितानां रूपपरमाणूनां माभूद् वस्तुगत्या नैरन्तर्यम्, आरोप्यमाणं तु तदस्त्येवेत्याशङ्क्य निषेधति न चेति। अवयवावयविनोर्युगपदुपलम्भः कथं न स्यादित्यत आह निरन्वयेति, अवयविप्रत्यक्षकालेऽवयवप्रत्यक्षं तदा स्यात् यद्यवयवास्तत्क्षणे स्युः, प्रत्यक्षं प्रति विषयस्य समानकालवृत्तितयैव कारणत्वात्, तत्क्षणे सत्त्वाभ्युपगमे त्ववयवानां क्षणद्वयावस्थायित्वं स्यात्, अवयविनं प्रत्युपादानकारणतया पूर्वक्षणेऽपि तेषां सत्त्वादिति भावः। पटोपादानकारणीभूतास्तन्तवः पटप्रत्यक्षकाले नोपलभ्यन्ते, तेषां तत्क्षणे विनाशात्, किन्तु येभ्यस्तन्तुभ्यः पट उत्पन्नस्तत्काले तेभ्यस्तत्सजातीया येऽन्ये समुत्पन्नास्त एवेत्याशयेनाशङ्कते न कारणभूता इति। तेन सह पटेन सह। कार्यद्वयं प्रति नैकमुपादानमिति सुगतसिद्धान्तभङ्गापत्त्या परिहरति—

हन्त यदि तन्तव एव तन्त्वन्तराणि पटं चाप्युपाददते, तदा पटभङ्गे तन्तूनामुत्पादे च तन्त्वोः सप्रतिघत्वं समानोपादानत्वे व्याहन्येत, सप्रतिघत्वं तुल्यकार्योर्द्वयोरेकानुपादानत्वं, तथा च तव द्वयोर्नैकोपादानत्वमिति सिद्धान्तभङ्गः। अथ तन्तोः पट इव पटादपि कश्चित्तन्तुरुत्पद्यत इति मतं, तथापि धामसलिल-

भरणिर्बीजेभ्यो जायमानानामुत्तरधामाङ्कुराणामेकोपादानकत्वप्रसङ्गः, उत्तरधामादीनामेव धामादय उपादानम्, अङ्कुरस्य तु बीजमिति चेत्, तदेतत् कुतो विशेषात्, कार्यसमवायित्वस्यानभ्युपगमात्, कारणत्वस्य चाविशिष्टत्वात् ।

तन्व यदीति, पटभङ्गे तन्तूनामुत्पाद इति अनेन पटकाले न तन्तुसम्भवः, तन्तुकाले च न पटसम्भवः,द्वयोर्मध्याद्वयोर्नाशे पटस्य तिनाशादिति तद्भयोस्सप्रतिघत्वं तत्तयोस्समानोपादानत्वेन व्याहतम्,अत्र पटतन्तवो न सप्रतिघाः समानोपादानत्वादित्यनुमानं पर्यवसानं निरासः। तथा च सप्रतिघत्वव्याघाते च सति, पटोपादानीभूतेभ्यस्तन्तुभ्यः पट एवोत्पद्यते,न तन्तव इति द्वयोस्समानोपादानत्वाभावाच सप्रतिघत्वव्याहतिः, न चाशङ्क्यं तन्तुपटयोर्युगपदुपलम्भो न स्यादिति, इष्टत्वात्, शतपत्रवेधन्यायेन क्रमिकोपलम्भयोर्योगपद्यभ्रान्तेः, न चैवं पटोत्पादकाले तन्तूपलम्भो मास्तु पटनाशकाले कथं स्यात् पूर्वक्षणे तन्त्वभावेन तदानीं तन्तूनामिति वाच्यं. तदानीं पटादपि तन्तूत्पत्त्यभ्युपगमादित्यभिप्रायकं परमतं प्रदर्श्य स्थलान्तरे द्वयोस्समानोपादानत्वमनेन तत्कृतनिराकरणमाह अथेति. धामेति धाम अङ्कुरगतपाकजरूपादिनियामकस्तेजोविशेषः, तस्याङ्कुरस्य रूपादिपरमाणुपूर्वान्तरस्यैव बीजस्यैवेनाङ्कुरप्रयोजकत्वम्। विशेषाभावप्रदर्शनायाह—कार्यसमवायित्वस्यानभ्युपगमादिति, उपादाने निमित्तकारणविभक्तोपदर्शकत्व यस्मिन् कार्यं समवैति तस्य तदुपादानत्वमित्यस्य विशेषस्यानभ्युपगमादित्यर्थः, तदेतत्कुतो विशेषादिति यदुक्तं तत्र विशेषप्रदर्शनाय चोदयति—

सारूप्यासारूप्यात् प्रकृतिविकारभावात्। यथोक्तम् "अभ्रान्तमनेकान्तसाम्यः प्रकृतिविक्रिये च नावितिति," तौ

हेतुफलयोरुपादानोपादेयलक्षणं, धरणिधामादीनामपि कदाचित् समताभ्रमादेकाध्यवसायसम्भवात् तद्वारणायाभ्रान्तेति। काष्ठादेरपि भस्माद्युपादानत्वात् तत्सङ्ग्रहाय प्रकृतिविकियेे इतीति चेत्, न, परस्परव्यभिचारेणोभयोरनियामकत्वात्, व्यवहारानुरोधात् केनापि धर्मेण द्वयमेकीकृत्य लक्षणं वक्ष्यत इति चेत्, का चेयं प्रकृतिः, विजातीयं कारणमिति चेत्, तत् किमङ्कुरसजातीया एव धरणिधामादयः, उच्छिन्ना विजातीयं कारणम्,

साम्यावसायात् प्रकृतिविकारभावाच्चेति, तथाचोक्तविशेषादुत्तरधामादीनामेव धामादय उपादानकारणम् अङ्कुरस्य तु बीजमितिभावः। तत्र संवादमाह—यथोक्तमित्यादिना, समताभ्रमात् अङ्कुरेण सहकार्येण सह साम्यभ्रमात्, तथा चाङ्कुरस्य धरणिधामादय उपादानं स्यादिति तन्निवृत्तये अभ्रान्तेति विशेषणमुक्तमितिभावः। अभ्रान्तसमतैकावसायाऽभावेपि प्रकृतिविकारभावेन काष्ठभस्मयोरुपादानोपादेयभाव इति विसभागसन्ततिस्थलेऽभ्रान्तसमतैकावसायस्य व्यतिरेकव्यभिचारः, प्रकृतिविकारभावाभावेप्यऽभ्रान्तसमतैकावसायबलेन प्रतिक्षणमुत्पद्यमानपटादीनां पूर्वापरीभूतानामुपादानोपादेयभाव इति सभागसन्ततिस्थले प्रकृतिविकृतिभावस्य व्यतिरेकव्यभिचार इति तयोर्नोपादानोपादेयभावनियामकत्वम्, नचोभयानुगतः कश्चिद्धर्मोऽस्ति येनानुगतकारणत्वं स्यादित्याशयेन समाधत्ते—परस्परव्यभिचारेणेति, केनापि धर्मेणेति अन्यतरत्वेनेत्यर्थः, यदि विजातीयं कारणं प्रकृतिस्तदा धरणिधामादयोऽङ्कुरप्रकृतिरूपतया नाभ्युपगता बौद्धैरिति ते किमङ्कुरसजातीया एवेति पृच्छति तत् किमिति, विजातीयं कारणमित्यस्य लक्षणमाह उच्छिन्ना इति, तथाचाङ्कुरोत्पत्तिसमये धरणिधामादयो नोच्छिद्यन्त इति किं तेऽङ्कुरसजातीया एवेष्टव्या इति भावः। यत्कारणजातीयं कार्यकाले उच्छिद्यते तद्विजातीयमिति कृत्वा प्रकृतित्वादुपादानमित्युच्यते यत्कारणजातीयं कार्यकाले

सांख्यानां मत्र प्रकृतिरित्यत्राक्षपाभ्युपगम एवेत्याशयेन बौद्ध आह—

ओमिति चेन्न, न, पटरूपाणां तन्तुजातीयानुच्छेदस्य सर्वानुभवसिद्धत्वेन तन्तोः पटानुपादानत्वप्रसङ्गात्, संगतमधिकरणसिद्धान्तन्यायेन स्थूलसिद्धौ क्षणभङ्गभङ्गः, अभ्युपगतवाक्यार्थसिद्धिनान्तरीयकसिद्धिकोऽर्थोऽधिकरणसिद्धान्तः। तथा च वार्त्तिकं—वाक्यार्थसिद्धौ तदनुषङ्गी योऽर्थः सोऽधिकरणसिद्धान्त इति, येन केनापि प्रमाणेन वाक्यार्थसिद्धौ जन्यमानानां योऽन्योऽर्थः सिद्ध्यति स तथेत्यर्थः। हेतुरीदृशः पक्षश्च वाक्यार्थ इति, प्रकृते क्षणभङ्गनिरासको हेतुरधिकरणसिद्धान्तसिद्धः, स्थूलोऽवयवी वाक्यार्थः पक्ष इति गुणानन्दः, उपलक्षणमेतत्, उदाहरणं भाष्ये—'इन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति, अत्र हेतु प्रतिसन्धानं सिद्धत् स्वानुषङ्गिगुणव्यतिरिक्तद्रव्यादिलक्षणार्थान्तरान्वितमेव सिद्ध्यतीति।

ओमिति चेदिति, पटानुपादानत्वप्रसङ्गादिति पटं प्रति प्रकृतिरूपोपादानकारणत्वं न स्यादित्यर्थः। तथेति अधिकरणसिद्धान्त इत्यर्थः। एतल्लक्षणाक्रान्तः को भवतीत्यपेक्षायामाह हेतुरीदृश इति, ईदृशःअधिकरणसिद्धान्तस्य विषयः। वाक्यार्थसिद्धावित्यत्र वाक्यार्थः क इत्याकाङ्क्षायामाह पक्षश्च वाक्यार्थ इति। प्रकृत इति यस्स्थूलोऽवयवी वाक्यार्थस्तस्य सिद्धौ योऽन्योऽर्थः स्फुटं प्रतीत्यनुषङ्गिन्नन्तरः क्षणभङ्गनिरासकहेतुस्सिद्ध्यति सोऽधिकरणसिद्धान्तसिद्ध इति भावः। हेतुरिवान्योऽप्यधिकरणसिद्धान्तविषय इत्याशयेनाह उपलक्षणमेतदिति, भाष्ये न्यायभाष्ये, प्रतिसन्धानमिति योऽहं घटमद्राक्षं सोऽहं स्पृशामीत्याकारकज्ञानमित्यर्थः। उक्तोदाहरणे वाक्यार्थः प्रतिसन्धानलक्षणो हेतुरेव तन्निरूढार्थानसिद्धिकश्च हेतुर्न किन्तु

तद्गतं दर्शनावस्थास्पर्शनावस्थानुगामिद्रव्यविशेषवृत्तित्वमेव, क्वचित्साध्यगतविशेषोऽप्यधिकरणसिद्धान्तसिद्ध इत्युपदर्शनायाह—

टीकायां–क्षित्यादेरुत्पत्तिमत्त्वेनोपलब्धिमत्पूर्वकत्वं साध्यमानं स्वसिद्ध्यन्तर्गतानुषङ्गिसर्वज्ञत्वान्वितमेव सिद्ध्यतीति, केचित्तु पक्षधर्मताबललभ्योऽर्थोऽधिकरणसिद्धान्तः, प्रकृते च स्थौल्यग्राहिप्रत्यक्षगम्यं स्थैर्यमत उक्तं न्यायेनेति प्राहुः । न्यायशब्दोऽर्थसादृश्यार्थः, एतेन यत् सत्तन्निरवयवं यथा घटविज्ञानं संश्च विवादास्पदीभूतः पटादिरिति निरस्तम् । विपर्यये बाधकाभावेन व्याप्त्यसिद्धेः, यत् सत् तत् सावयवं यथा घटः, सच्च विज्ञानमिति चार्वाकपरिवर्त्तस्यापि प्रसङ्गाच्च । समो वा समाधिः ।

टीकायामिति वाचस्पतिमिश्रविरचितन्यायवार्त्तिकतात्पर्यटीकायामित्यर्थः, सोऽयमधिकरणसिद्धान्तन्यायेनेत्यत्रोपात्तन्यायेनेतिपदप्रयोजनमाह प्रकृते चेति अवयविनि स्थैर्यं प्रत्यक्षगम्यं न त्वनुमानगम्यं येन पक्षधर्मताबलेन सिद्ध्यमानः क्षणभङ्गभङ्गः अधिकरणसिद्धान्तसिद्धस्स्यादित्यत उक्तं न्यायेनेति, तथा च यथाऽधिकरणसिद्धान्तस्थलेऽनुमानेनैकार्थसिद्धावनुषङ्गादन्योऽर्थस्सिद्ध्यति तथा प्रत्यक्षेण स्थूलसिद्धौ तदनुषङ्गात्क्षणभङ्गभङ्गस्सिद्ध्यतीत्यर्थसादृश्यार्थकोऽत्र न्यायशब्दो ज्ञेय इति भावः । विपर्यये बाधकाभावेनेति व्यभिचारशङ्कानिवर्त्तकतर्काभावेनेत्यर्थः । चार्वाकपरिवर्त्तस्यापि प्रसङ्गाच्चेति चार्वाकसिद्धान्तेनोक्तानुमानेन ज्ञाने सावयवत्वसिद्धौ पूर्वोक्तानुमाने दृष्टान्ते साध्याप्रसिद्धिरिति भावः । दोषपरिहारयोस्साम्यमसहमानो बौद्धश्शङ्कते—

ननु विज्ञानं निरवयवमेव स्वसंविदितरूपं, घटस्य च सावयवतायामद्यापि विवाद एव, तत्कथं परिवर्त्तः, समो वा कथं समाधिरिति चेत्, न, शुष्कविवादस्य विज्ञानेऽपि दुर्वारत्वात् । शुष्कोऽनुभवविरुद्धः । नहि कश्चि-

सुरभि अरविन्दत्वादित्यनुमानमप्याश्रयासिद्धं न स्यादित्याश्रयासिद्धिर्निर्मूलिका स्यादिति समाधत्ते तदेतदिति, अयं पक्षो नाऽसिद्ध इत्यत्र लोकसिद्धत्वमेव प्रयोजकमित्येवमनभ्युपगम्य यद्यनुमानात्प्रागेव पक्षस्वरूपं विकल्प्याश्रयासिद्ध्यादिरापाद्यते तदा पर्वतो वह्निमान् धूमादित्यादिकं पर्वतस्य किं ब्रह्मविवर्त्तत्वं किं वा परमाणुपुञ्जत्वमवयवित्वं वेत्यादिविकल्पहततयाऽनुमानमपि दुर्घटं स्यादित्याशयेनाह अन्यथा ब्रह्मविवर्त्तेति, अविरोधादिति यथा पर्वतो ब्रह्मविवर्त्तरूपो वेदान्तिमते तथा वह्न्यादिरपीति न तयोः कश्चिद्विरोध इत्यर्थः। तदेव विवृणोति—नहीति, पर्वतवह्न्यादेर्ब्रह्मविवर्त्तत्वेपि पर्वतत्ववह्नित्वादिविशिष्टस्वरूपमृते नान्यत्स्वरूपमस्तीति भावः। आश्रयादय इत्यत्रादिपदात्साध्यहेत्वादीनामुपग्रहः, अन्यप्रकाराः ब्रह्मविवर्त्तादितोऽन्यप्रकाराः।

तदा हि सर्वत्र स्वप्नपर्वते स्वप्नधूमेन स्वप्नवह्निरेव साध्यते,केवलं सांवृतेऽपि व्यवहारे सत्यानृतव्यवस्थाऽस्तीति तस्यां निर्भरः कर्त्तव्यः। इह तु घटादिव्यपदेशेन स्थूल एव यदि पक्षीकृतः, कथं निरवयवत्वेन साध्येन न विरोधः। अथ परमाण्वादिरेव, कथं न सिद्धसाधनं, विप्रतिपन्नं प्रति न तथेति चेत्, न वै कश्चित् परमाणूनां निरवयवत्वे विप्रतिपद्यते, लोकव्यामोहनिबर्हणाय साधनमिति चेत्,तथापि यं लोकः स्थूलमेकमुपलब्धवाँस्तस्य पक्षत्वे विरोध एव, ततोऽन्यस्य पक्षत्वें सिद्धसाधनमेव।

तदाहि पर्वतादीनां ब्रह्मविवर्त्तत्वादिवादे हि, तर्हि ब्रह्मविवर्त्तत्वनिराकरणं कथं नैयायिकेन कृतमित्याशङ्कायामाह—केवलमिति, पर्वतादिव्यवहारः खलु पर्वतादिज्ञानेन जायते स च स्वप्नावस्थायामपि जाग्रद्दशायामपि च भवति तत्र स्वप्नदशायां व्यवहारो मिथ्या जाग्रद्दशायां सत्य इति सत्यासत्यव्यवस्था ब्रह्मविवर्त्तरूपत्वे किं कृतेत्याशङ्कानिवृत्त्यर्थं ब्रह्मविवर्त्तरूपत्वनिराकरणाय

न च मिथ्यात्व एवेदं सत्त्वं शक्यमुपसंहर्त्तुं, व्यधिकरणत्वात्। यदि स्थूलस्य मिथ्यात्वमेवालीकत्वं साध्यते, तदा व्यधिकरणत्वं विरुद्धत्वं, सत्त्वस्य नास्तवधर्मत्वात्, अथ स्थूलप्रलंबस्य मिथ्यात्वं भ्रमत्वं, तदा व्यधिकरणत्वं साध्यानधिकरणवृत्तित्वं, भ्रमभिन्नस्य स्वलक्षणस्य निर्विकल्पकस्य च सत्त्वादिति भावः।

न च मिथ्यात्व इति, निषेधे हेतुमाह—व्यधिकरणत्वादिति, अत्रैव विवेचनमाह यदीत्यादिना, न चात्र मिथ्यात्वं भ्रमत्वरूपं सम्भवति, तस्य ज्ञानधर्मत्वेन पक्षीभूते घटेऽभावादित्यतस्तदन्यलक्षणमाह अलीकत्वमिति, तथा चाऽलीकत्वरूपस्य मिथ्यात्वस्यालीकधर्मत्वेन सत्त्वस्य च वास्तवधर्मत्वेन विरुद्धत्वं हेतोरित्यर्थः। यदि च स्थूलप्रलंबस्य भ्रमत्वरूपं मिथ्यात्वं सत्त्वेन हेतुना साध्यते तदा सत्त्वहेतोर्व्यभिचारित्वमित्याह अथेति, प्रसाधनीयत्वमित्यादिकं न सत्प्रसाधनमित्यस्योपसंहारमाह—

तस्मात् येन रूपेण यस्य पक्षत्वं विवक्षितं तेन सिसाधयिषितधर्माविरोधविवादाभ्यां तत्रानुमानप्रवृत्तिर्नातोऽन्यथेति। नापि द्वितीयः, विपर्ययापर्यवसानात्। न च विवादविषयो निरवयवस्तस्मात् न सन्निति विपर्ययः, यत् सत्तन्निरवयवं यथा विज्ञानं, न चायं निरवयवो घटादिरिति विपर्यय इत्यर्थः। तस्मात् न सन्निति तु स्वमतावष्टम्भेन सावयवत्वस्य हेतुतायाः स्पष्टत्वार्थं, परेण निगमनस्य न्यायाङ्गत्वानङ्गीकारादिति निष्कर्ष इति वाक्यम्,

तस्मादिति येन रूपेण यस्य पक्षत्वं विवक्षितं तेन सह साध्यतावच्छेदकेन रूपेण सिसाधयिषितसाध्यधर्मस्याविरोधो विवादश्च यत्र तत्राऽनुमानप्रवृत्तिः यत्र च विरोधस्तत्र बाधदोषात् यत्र नाऽविवादस्तत्र सिद्धसाधनदोषान्नानुमानप्रवृत्तिः। न चात्र

स्थूलत्वेन परमाणुत्वेन च पक्षत्वं सम्भवति, आद्ये बाधात्, द्वितीये च सिद्धसाधनादिति भावः। यत्सत् तन्निरवयवमित्यादिप्रसङ्ग साधनमिति द्वितीयपक्षं निरस्यति नापि द्वितीय इति,अत्रापि विपर्ययोऽस्त्येवेति बौद्धमतमाशङ्क्य निषेधति न चेति, वाच्यमित्युत्तरेण सम्बन्धः। प्रसङ्गमूलभूताया आपाद्येन सहापादकस्य व्याप्तेः प्रदर्शनपूर्वकं विपर्ययस्वरूपमाह यत्सत्तन्निरवयवमिति, इत्यर्थ इति न च विवादविषयो निरवयव इत्यस्यार्थ इत्यर्थः, यद्वा उदाहरणोपनयावयवद्वयाभ्युपगन्तॄणां बौद्धानां मते यत्सत्तन्निरवयवं यथा विज्ञानमित्याकारकं विपर्ययानुमाने व्यतिरेकोदाहरणं न चायं निरवयवो घटादिरित्याकारक उपनय इत्यर्थः, अवयवद्वयाभ्युपगन्तॄणां बौद्धानां मते तस्मान्न सन्निति निगमनं न सम्भवतीत्यत आह स्वमतावष्टम्भेनेति, न्यायमतावलम्बनेनेत्यर्थः। निगमनोपन्यासप्रयोजनमाह सावयवत्वस्येति, परेण बौद्धेन, पक्षीभूतघटे स्थूलत्वमनिच्छता बौद्धेन सावयवत्वं नाभ्युपगतमिति तस्य हेतोः स्वरूपासिद्धतया न सत्त्वाभावसाधकत्वमित्यभिप्रायेण हेतुमाह—

पक्षस्य सावयवत्वमनिच्छता तस्य प्रवर्त्तयितुमशक्यत्वात्। न च तत्त्वयेष्यते। न च तस्येष्टौ तेनासत्त्वं शक्यसाधनम्, आश्रयासिद्धेर्विरोधादसाधारण्याद्वा, घटादेरसिद्धावाश्रयासिद्धिः, सिद्धौ धर्मिग्राहकप्रमाणबाधः, विपक्षाद्विज्ञानादेः सपक्षाच्च शशविषाणादेर्व्यावृत्तत्वादसाधारण्यमितिभावः। न च विपर्ययोऽपि प्रसङ्गयत्परेच्छया प्रवर्त्तते, सर्वविरुद्धत्वात्। कः पुनरवयविनि न्यायः, किं प्रत्यक्षान्न्यायो गरीयान्, यद्येवं, बुद्धावेव कोऽसौ, तस्मादसारमेतत्।

पक्षस्येति, घटादेरित्यर्थः। तस्य, विपर्ययस्य, तत् पक्षस्य सावयत्वम्; पक्षीभूते घटे स्वरूपासिद्धिपरिहाराय सावयवत्व-

मभ्युपेत्य तेन तत्राऽसत्त्वसाधने दोषमाह आश्रयासिद्धेरिति, दोषत्रयं क्रमेण सङ्गमयति घटादेरिति, घटस्य पक्षस्यासिद्धावाश्रयासिद्धिः, घटस्य केनापि प्रमाणेन सिद्धौ सत्तयैव सिद्धत्वेन बाधः, साध्याभावव्याप्तत्वाच्च प्रकृतहेतोर्विरोधोप्यत्र ज्ञेयः, असाधारण्यदोषमप्याह विपक्षादिति, न च हेतुपक्षयोर्नैयायिकमतसिद्धत्वेन विपर्ययस्सम्भवति, विपर्ययकर्तृमतसिद्धत्वस्यैव तत्र तन्त्रत्वादित्याह—न चेति, यद्येवमिति, प्रत्यक्षान्न्यायो गरीयान् यदीत्यर्थः, तदेति दृश्यम्, असौ न्यायः।

तथापि यन्निरस्तसमस्तविरुद्धधर्माध्यासं तदेकमेव व्यवहर्त्तव्यम्, यथा विज्ञानं, तथा च विवादाध्यासित एकः स्थूलानुभवगोचर इति स्वभावहेतुः, तावन्मात्रानुबन्धित्वादेकताव्यवहारस्य। न ह्ययमेकव्यवहारो निर्निमित्तोऽनियमप्रसङ्गात्, नाप्यन्यनिमित्तो, द्रवकठिनशीतोष्णादावपि तद्व्यवहारप्रसङ्गादिति। अस्तु तर्हि बाह्येष्वर्थेषु नित्यसन्देहः, तथ्यातथ्यविभागस्याशक्यत्वादिति चेत्, न तावत् सर्वस्य यथार्थत्वादेव विभागोऽनुपपन्नः, उत्तरविरोधात्, याथार्थ्यायाथार्थ्यप्रश्ने यदुत्तरं तद्विरोधादित्यर्थः।

तथापीति न्यायात्प्रत्यक्षस्य गरीयस्त्वेन प्रत्यक्षप्रमाणसत्त्वे न्यायाभिधानस्यानावश्यकत्वेपीत्यर्थः। अनुमानाङ्गपक्षसत्त्वसपक्षसत्त्वविपक्षासत्त्वरूपत्रयज्ञापकोदाहरणोपनयन्यायवाक्यद्वयाभ्युपगन्तृबौद्धमतेन तत्सन्तोषार्थं न्यायवाक्यद्वयमुपदर्शयति नैयायिकः यन्निरस्तेति, निरस्तसमस्तविरुद्धधर्माध्यासत्वस्य स्वभावहेतुत्वमुपपादयति तावन्मात्रानुबन्धित्वादिति, निरस्तसमस्तविरुद्धधर्माध्यासत्वनिमित्तकत्वादित्यर्थः। एतदेव निष्टङ्कयति—न ह्ययमिति, तद्व्यवहारप्रसङ्गादिति तथाव्यवहारप्रसङ्गादित्यपि पाठः। भेदव्यवहारनिमित्तस्यापि विरुद्धधर्माध्यासस्यैकव्यवहारनिमित्तत्वे द्रवकठिनयोः शीतोष्णयोर्घटपटाद्योर्विरुद्धधर्माध्यासि-

नोरप्येकताव्यवहारस्स्यादिति भेदव्यवहार एव विलुप्तस्स्यादितिभावः। नित्यसन्देह इति सत्त्वासत्त्वाभ्यामितिशेषः, द्विधा तथ्यातथ्यविभागस्यानुपपत्तिः सर्वज्ञानानां यथार्थत्वमेवेतिप्रभाकरमतमाश्रित्य, अयथार्थत्वमेवेति शून्यवादिमतमाश्रित्य च, नच द्वयमपि सम्भवति, कस्यचिज्ज्ञानस्य यथार्थत्वं कस्यचिच्चायथार्थत्वमिति तथ्यातथ्यविभागस्य कर्तुं शक्यत्वादिति ये यथार्थज्ञानविषयास्ते सन्त एव, ये चाऽयथार्थज्ञानविषयास्ते भासमानरूपेणाऽसन्त एवेति बाह्येष्वर्थेषु सत्त्वासत्त्वाभ्यां न नित्यसंदेह इत्यभिप्रायवान् समाधत्ते—न तावदिति, सर्वस्य सर्वज्ञानस्य, ज्ञानविषयिका विपरीतमवगतं मयेति लौकिकी प्रतीतिरन्यथाऽवगतमित्यन्यथाख्यातिरिति च वैनयिकी प्रतीतिर्यथार्था नवेति प्रश्ने यदि यथार्थेत्युत्तरं तदेदंरजतमित्याकारकप्राथमिकज्ञानस्य स्वविषयीभूतस्याऽयथार्थत्वम्,प्राथमिकज्ञानविशेष्यकायथार्थत्वप्रकारकप्रतीतेश्च यथार्थत्वम्,यदि च न यथार्थेत्युत्तरं तदा प्राथमिकज्ञानस्य यथार्थत्वं प्राथमिकज्ञानविशेष्यकायथार्थत्वप्रकारकप्रतीतेश्चाऽयथार्थत्वमिति तथ्यातथ्यविभागोपपत्तेस्सर्वज्ञानस्य यथार्थत्वादेव विभागोऽनुपपन्न इति न सम्भवतीत्याह—

तथा हि विपरीतमवगतं मयेति लौकिकी प्रतीतिरन्यथाख्यातिरिति च वैनयिकी, विनयः शास्त्रार्थज्ञानं तदधीना, इदमुक्तं भवति—लौकिकपरीक्षकाणां व्यवहारमात्रे वैचित्र्यं प्रतीतिस्तुल्यैवेति तदियमुभयेषां विपरीतज्ञानविषया प्रतीतिर्यथार्था न वा, यथार्था चेत्, स्वविषयीभूतज्ञानायथार्थत्वग्राहिणः प्रत्ययस्य यथार्थत्वेन विषयज्ञानस्यायथार्थत्वसिद्धिः, नेति पक्षे तस्यैवायथार्थत्वान्न सर्वयाथार्थ्यमिति। शब्दसंलापमात्रमेतत् न प्रतीतिरिति चेत्, न, नहि व्यवहारमात्रे परीक्षकाणां वादः, न च नायमस्तीति।

तथाहीति, व्यवहारमात्रे वैचित्र्यमिति शब्दप्रयोगमात्रे वैचित्र्यं, नतु ज्ञाने विषयांशे तदित्यर्थः,विपरीतमवगतं मयेत्यस्यान्यथावगतमित्यस्य च समानप्रकारकत्वात्, अत एवाह प्रतीतिस्तुल्यैवेति, उभयेषां लौकिकपरीक्षकाणाम्, विपरीतज्ञानविषया प्रतीतिरिति इदन्त्वावच्छिन्नशुक्तिनिष्ठविशेष्यतानिरूपितरजतत्वनिष्ठप्रकारताकमिदं रजतमित्याकारकं यज्ज्ञानं तन्निष्ठविशेष्यतानिरूपिता या स्वनिरूपितत्वस्वाश्रयाभाववद्वृत्तित्वोभयसम्बन्धेन प्रकारताविशिष्टविशेष्यताकत्वलक्षणाऽयथार्थत्वनिष्ठा प्रकारता तन्निरूपकप्रतीतिरित्यर्थः । स्वविषयीभूतज्ञानाऽयथार्थत्वेति विपरीतज्ञानविषयकप्रतीतिविशेष्यीभूतप्रथमज्ञानगतायथार्थत्वेत्यर्थः । विषयज्ञानस्य प्रथमज्ञानस्य, विपरीतमवगतं मयेत्यऽन्यथाख्यातिरिति वा प्रतीतिर्नास्त्येवेति नोक्तप्रश्नावकाशः, केवलं तादृशश्शब्दप्रयोग एवेत्याशयेन शङ्कते शब्दसंलापेति; विपरीतज्ञानविषयिका अन्यथाख्यातिविषयिका वा प्रतीतिस्सर्वेषां भवत्येव, न चानुभवे परीक्षकाणां विवादस्सम्भवति, अन्यथा यद् यज्ज्ञानं तत्तत्सर्वं शब्दसंलापरूपमित्युक्त्या ज्ञानमात्रस्यैवोच्छेदस्स्यात्, न चोक्तज्ञानव्यवहारो नास्तीति वक्तुं शक्यं, सतोऽपलापाऽयोगादित्याशयेन समाधत्ते, न, नहीति, नन्वस्तूक्तज्ञानव्यवहारस्तथापीयं प्रतीतिरन्यथाख्यातिरितिवाक्यस्यार्थे उक्तव्यवहारविषये प्रतीतावन्यथाख्यातित्वेऽस्ति विवादः प्रतीतावन्यथाख्यातित्वमस्ति न वेत्याकारक इति चेत्, मैवम्, विवादो हि विप्रतिपत्त्यपराख्यो विधिनिषेधोभयकोटिक इति निषेधकोटौ प्रतियोगिनोऽन्यथाख्यातित्वस्य कुत्राप्यसिद्धेरप्रतीतस्य तस्य निषेधस्य कर्तुमशक्यत्वात्। नन्वन्यथाख्यातित्वस्य प्रतियोगिनो यत्र कुत्रापि प्रसिद्धिरभ्युपगम्यत एवेति चेत्, तर्हि यत्रैव प्रसिद्धिस्तस्यैवाऽयथार्थत्वेनोभयवादिसिद्धत्वात् पर्यवसितं विवादेनेत्याशङ्कोत्तराभ्यामाह—

शब्दार्थे विवाद इति चेत्, तर्हि तादृशवाक्यार्थे पुरोवर्त्तिज्ञानस्यान्यथाख्यातित्वे प्रतिषेध्यस्यान्यथा-

ख्यातित्वस्य प्रतीतिः कथं, तथा चोभयवादिसिद्धत्वात् न विवादावसरः। अथान्यथात्वं व्यधिकरणप्रकारत्वं ख्यातौ निषिध्यते तच्चेच्छादौ प्रतीतम्, न च निषेधाधिकरणे निषेध्यप्रतीतिरङ्गं, मानाभावात्, शुक्त्यादौ रजतत्वादिप्रकारकज्ञानाभावे कथं तत्र रजतार्थिप्रवृत्तिरिति चेत्, रजतादिगोचरादेव प्रमुष्टतत्तांशकाद्रजतमित्यादिस्मरणादिति चेत्, न, अन्यज्ञानादन्यत्र प्रवृत्त्यसम्भवात्, अन्यथाऽतिप्रसङ्गात्।

शब्दार्थे विवाद इति, वाक्यार्थे इति, अस्यान्यथाख्यातित्वे इत्यनेनान्वयः, कथमिति, अत्र यदि तस्य क्वचित्सत्त्वं न स्यादिति शेषः, तथा चेति तस्य क्वचित्सत्त्वाभ्युपगमे चेत्यर्थः। ज्ञानस्य कस्यचिदयथार्थत्वे तद्दृष्टान्तेन ज्ञानान्तरेऽपि ज्ञानत्वहेतुनाऽयथार्थत्वस्य शून्यवादिना व्यवस्थापयितुं शक्यत्वान्न कस्यचिद्वस्तुनो व्यवस्थितिस्स्यात् तद्भयात् परतः प्रामाण्यापत्तिभयाच्च ज्ञानमात्रस्य यथार्थत्वं प्रभाकरैस्स्वीक्रियते, इच्छायां प्रयत्ने च नोक्तभयः, तयोर्वस्त्वसाधकत्वादिति तत्र प्रसिद्धस्यायथार्थत्वस्यान्यथात्वरूपस्य ज्ञाने निषेध इति न विवादाभाव इत्याशयेनाशङ्कते अथेति, अन्यथात्वमिति, अस्यैव स्वरूपोपवर्णनमाह व्यधिकरणप्रकारत्वमिति विशेष्यत्वाऽसमानाधिकरणो यः प्रकारस्तस्य भावस्तत्त्वम्, विशेष्यताविशिष्टप्रकारताकत्वमिति पर्यवसितोऽर्थः। वैशिष्ट्यञ्च स्वनिरूपितत्वस्वाश्रयाऽवृत्तिवृत्तित्वोभयसम्बन्धेन, इदं रजतमिति ज्ञानद्वयम्, इदमिति प्रत्यक्षं रजतमिति च स्मरणम्, न च तत्तोल्लेखाभावात्कथं तत्स्मरणमिति वाच्यम्, दोषवशात्तत्तायाः प्रमोषस्योपगमात्, तदेव च स्मरणं प्रवर्त्तकमिति प्रभाकर आह—रजतादिगोचरादेवेति, प्रवृत्त्यसम्भवादिति सामान्यतो विषयतासम्बन्धेन प्रवृत्तिम्प्रति विषयतासम्बन्धेन ज्ञानस्य कारणत्वं विशेषतश्चोपादानत्वाख्यविषयतासम्बन्धेन प्रवृत्तिं प्रति विशेष्यत्वाख्यविषयतासम्बन्धेन ज्ञानस्य कारणत्वमिति रजतस्मरणाच्छुक्तौ

प्रवृत्त्यसम्भवादित्यर्थः। ननूक्तकार्यकारणभावानुरोधाद्रजतसरणमिव यं शुक्त्यादिकं पुरोवर्तिनमुद्दिश्य प्रवृत्तिस्तद्विषयकज्ञानमपि प्रवृत्तौ नियामकमित्याशङ्क्य निषेधति—

न च प्रवृत्तिविषयस्य ज्ञानं नियामकं, तत्र रजतादिभेदग्रहेऽपि प्रवृत्त्यापत्तेः, न च प्रवृत्तिविषयज्ञानसहितो भेदाग्रहस्तथा, स्वतन्त्रोपस्थितस्येष्टस्य भेदाग्रहः प्रवृत्तिनियामक इति यावदिति वाच्यम्, यतो भेदाग्रह इति यत्र क्वचित् सतो भेदस्य प्रवृत्तिविषयेऽग्रहो वा, तत्रागृह्यमाणस्तन्निष्ठभेदो वा,

न चेति, निषेधे हेतुमाह तत्रेति, तत्र शुक्त्यादौ, प्रवृत्तिकारणीभूतोक्तज्ञानद्वयस्य सत्त्वादिति भावः। तथा प्रवृत्तिनियामकः, यत्र क्वचित्सत इति भेदस्य प्रवृत्तिविषय एव न सत्त्वनियम इति प्रवृत्तिविषये तद्भिन्ने वा विद्यमानस्येत्यर्थः, भेदग्रहाभावरूपो भेदाग्रह एव मुख्यवृत्त्याऽऽवश्यकः नतु प्रवृत्तिविषये इष्टभेदोपीत्यभ्युपगमे यत्र प्रवृत्तिस्तत्रापि निवृत्तिप्रसङ्गः, तत्कारणे अभेदाग्रहेऽपि ग्रहाभावरूपस्याग्रहस्यैव प्राधान्यं न त्वभेदस्येति तस्याऽभेदग्रहरूपप्रतियोगिनोऽसत्त्वेन विद्यमानत्वादित्याशयेनाद्यपक्षं निराकरोति—

आद्येऽग्रहप्राधान्ये भेदाविवक्षायां निवृत्तावतिप्रसङ्गः, तद्धेतोरभेदाग्रहस्यापि विद्यमानत्वात्। नासौ निवर्त्तकोऽपि तु भेदग्रह इति चेत्, न, रजत एव नेदं रजतमिति कृत्वा न निवर्त्तेत, भेदग्रहस्य तत्कारणस्याभावात्, भावे वा विपरीतख्यातिरभेदे भेदप्रत्ययात्, तस्मात् प्रवर्त्तकवन्निवर्त्तकोऽप्यग्रह एव तेषामभ्युपगन्तुमुचितः। तथा च स दोषस्तदवस्थ एव। द्वितीये भेदः प्रधानमङ्गमग्रहस्तदा सत्यरजतज्ञानाद्रजते न प्रवर्त्तेत, इदमंशरजतांशयोर्भेदाभावात्, अथोपस्थिते धर्मिणि स्वतन्त्रोपस्थितयोरिष्टानिष्टयोर्भेदाभेदाग्रहौ प्रवृत्तिनि-

वृत्तिहेतू इति चेत्, रजतयो रङ्गरजतयोर्वा इमे रजतारजते इति ग्रहादेकत्र युगपत्प्रवृत्तिनिवृत्त्यापत्तिः।

आद्य इति, असौ इष्टाऽभेदाग्रहः, भेदग्रह इष्टभेदज्ञानम्, भावे वा विपरीतख्यातिरिति, तत्राप्यभ्युपगता स्यादिति हृदयम्, इदमित्याकारकधर्मिविषयकप्रत्यक्षोपस्थितिगोचरे प्रवृत्तिविषये धर्मिज्ञानातिरिक्ता येष्टोपस्थितिस्तद्विषयस्येष्टस्य भेदाग्रहः प्रवृत्तिहेतुः, एवमुपस्थितिगोचरे निवृत्तिविषये निवृत्तिविषयविषयकज्ञानातिरिक्ता याऽनिष्टोपस्थितिस्तद्विषयस्यानिष्टस्याऽभेदाग्रहः निवृत्तिहेतुरिति प्रवृत्तिकाले न निवृत्तिप्रसङ्गदोषः, अनिष्टोपस्थितेरभावादित्याशङ्कते अथोपस्थित इति, युगपत्प्रवृत्तिनिवृत्त्यापत्तिरिति, यद्यपि रजतेऽरजताऽभेदग्रहोऽन्यथाख्यातिमतेऽस्त्येव तथाप्युपस्थिते रजतेऽन्यथाख्यातिभयात्पृथगुपस्थितस्यारजतस्याऽभेदग्रहः प्रभाकरमते नास्तीति भवत्येव प्रवृत्तिकाले निवृत्तिप्रसङ्ग इति भावः। यद्व्यक्तिसाकाङ्क्षेष्टस्य रजतस्योपस्थितिस्तस्यां व्यक्तौ प्रवृत्तिः, नतु निवृत्तिः, तद्व्यक्तिसाकाङ्क्षाया अनिष्टाऽरजतव्यक्त्युपस्थितेरभावात्, यद्व्यक्तिसाकाङ्क्षाऽनिष्टस्यारजतस्योपस्थितिस्तस्यां निवृत्तिः, नतु प्रवृत्तिः, तद्व्यक्तिसाकाङ्क्षाया इष्टरजतोपस्थितेरभावात्, आकाङ्क्षा च भवताप्युपेया, यद्वशाद् विशेष्यतया रजतव्यक्त्योरुपस्थितौ विशेषणतया रजताऽरजतयोरुपस्थितावेकस्य रजतस्य रजतव्यक्तौ विशेषणत्वं, अरजतस्य च रजतान्तरे, नान्यत्रेत्याशङ्कते—

अथ यद्धर्मिसाकाङ्क्षेष्टस्योपस्थितिस्तत्र प्रवर्त्तते, यद्धर्मिसाकाङ्क्षा चानिष्टस्य सा तत्र निवर्त्तते, आकाङ्क्षा चोपस्थितिवृत्तिधर्मान्तरं, यद्वशादुपस्थितस्य विशेषणस्योपस्थितेषु विशेष्येषु क्वचिदेव भवतां विशिष्टबुद्धिरिति चेत्, न, अतिरिक्ताकांक्षायां मानाभावात्, यथायथं व्याप्यपरामर्शादिरन्ततो भवतामाकांक्षानियामक-

त्वाभिमतादेव विशिष्टबुद्ध्युत्पादनियमसम्भवात्,

अथ यद्धर्मिसाकाङ्क्षेति, रजतत्वव्याप्यवदिदं इदं चारजतत्वव्याप्यवदिति समूहालंबनपरामर्शाद्यत्रेमे रजताऽरजते इत्यनुमितिस्तत्र यद्रजतव्यक्तौ रजतत्वव्याप्यवत्तापरामर्शस्तद्रजतव्यक्तौ रजतत्वप्रकारिका प्रमात्मिका यद्रजतव्यक्तावरजतत्वव्याप्यवत्तापरामर्शस्तद्रजतव्यक्तावरजतत्वप्रकारिका भ्रमात्मिकानुमितिरित्येवमाकाङ्क्षाया अभावेपि विशिष्टबुद्धौ प्रतिनियतविशेषणविशेष्यतया भानसंभवः, प्रत्यक्षस्थले परामर्शाऽभावेपि तस्य तेनैव सममाकाङ्क्षा नान्येन सहेत्यत्र यन्नियामकं तदेव तद्विशिष्टबुद्धौ नियामकमिति तत एवोपस्थितत्वाऽविशेषेपि कस्मिँश्चिदेव विशेष्ये कस्यचिदेव विशेषणस्य विशिष्टबुद्धिरिति नियमस्सम्भवतीति नोपस्थितिवृत्तिधर्मान्तररूपाकाङ्क्षाऽभ्युपगन्तव्येत्याह यथा यथमिति। प्रभाकरानुयायी शङ्कते—

यथा भेदाग्रहात् प्रवृत्तौ अभेदाग्रहान्निवृत्तिरपि प्रसञ्जिता तथा भेदाग्रहादभेदप्रतीतौ अभेदाग्रहाद्भेदप्रतीतिरपि प्रसज्येतेति चेत्, न, न केवलं भेदाग्रहोऽभेदधीहेतुः, किन्तु सामग्रीविशेष इत्यभ्युपगमात्। न चैवं कदाचित्पुरुषत्वादिग्रहेऽपि स्थाणुत्वारोपप्रसङ्गः; तत्त्वेऽपरिस्फुरतीति तु नियमात्। न च क्वचिद्भेदाभेदावुभावपि तत्त्वं, यत एकत्रैव भेदाभेदप्रतीतिप्रसङ्गस्स्यादित्येषा दिग्।

यथा भेदाग्रहादिति, भेदप्रतीतिरपि प्रसज्येतेति तथा च प्रवृत्तिवन्निवृत्तिरपि स्यादिति भावः। रजते रङ्गाऽभेदबुद्धौ भेदाग्रहमात्रं न कारणं किन्तु तत्सहितदोषविशेषादिघटितसामग्रीविशेष एव, एवं रजते रङ्गभेदग्रहे नाऽभेदाऽग्रहमात्रं कारणं किन्तु तत्सहितगुणविशेषघटितसामग्रीविशेष एव, तथा चैकत्र गुणदोषयोरभावेन तद्घटितसामग्रीद्वयाभावेन नाभेदप्रतीतिकाले भेद-

प्रतीतिप्रसङ्गः, येन युगपत्प्रवृत्तिनिवृत्ती स्यातामिति नैयायिकः प्रतिविधत्ते न केवलमिति, नच पुरुषे पुरुषत्वाग्रहदशायां दूरत्वादिदोषविशेषाद् यथा पुरुषे स्थाणुरयमिति स्थाण्वभेदभ्रमबुद्धिस्तथा पुरुषे पुरुषत्वग्रहदशायामपि सा किन्न स्यादिति वाच्यम्, तत्त्वनिश्चयस्यातत्त्वारोपबुद्धौ प्रतिबन्धकत्वेन तदभावः कारणमिति तत्त्वमसाधारणधर्मलक्षणं पुरुषे पुरुषत्वरूपं तच्च स्थाणुभेदात्मकमिति तन्निश्चयस्य प्रतिबन्धकस्य सत्त्वे कथं स्थाण्वभेदप्रतीतिः पुरुषे स्यादित्याह न चैवमिति, न च क्वचिदिति भेदस्य वैधर्म्यलक्षणत्वात् पुरुषे स्थाणुभेदः पुरुषत्वं,स्थाण्वभेदः पुरुषत्वाभावः स्थाणुत्वं वा, विरोधिस्वभावत्वात् तदुभयं नैकस्मिन् पुरुषे तत्त्वरूपम् येनैकत्रोभयप्रतीतिस्स्यादित्यर्थः ।

नापि सर्वस्यायथार्थत्वाद्विभागः, तद्ग्राहकस्य यथार्थत्वायथार्थत्वाभ्यामुत्तरविरोधात् । तस्मात् किञ्चित् प्रमाणमप्रमाणं च किञ्चिदिति विभाग एव वस्तुगतिः। न चासौ प्रतीतिमवधूय व्यवहारगोचरः, कथंता तु निरूप्यते केन प्रकारेण प्रामाण्यविशिष्टप्रतीतिरिति तु विचार्यत इत्यर्थः, स्वतः परतो वेति,

सर्वस्य सर्वज्ञानस्य, विभाग इति तथ्यातथ्यविभाग इत्यर्थः। अनुपपन्न इत्यनुषज्यते, निषेधे हेतुमाह–तद्ग्राहकस्येति अयथार्थत्वग्राहकस्य सर्वं ज्ञानमयथार्थमिति ज्ञानस्येत्यर्थः। उत्तरविरोधादिति सर्वज्ञानमयथार्थमिति ज्ञानस्य यथार्थत्वे सर्वान्तर्गतं तदिति सर्वज्ञानमयथार्थमित्यसङ्गतं स्यात्, अयथार्थत्वे च तद्विशेष्यीभूतस्य सर्वज्ञानस्य यथार्थत्वप्रसक्त्योक्तमसङ्गतं स्यादिति भावः। उपसंहरति तस्मादिति, तथा च न सत्त्वासत्त्वाभ्यां नित्यसंदेहादपि बाह्यार्थलोप इति भावः। प्रसङ्गाज्ज्ञानस्य यत्स्वप्रकाशत्वं प्रामाण्यस्य च स्वतो ग्राह्यत्वं मीमांसकाद्यभिमतं तस्य प्रतिक्षेपार्थमवतरणिकामाह नैयायिकः नचासाविति,असौ,किञ्चित् प्रमाणमप्रमाणं

च किञ्चिदिति विभागः, अवधूय, अतिक्रम्य, शब्दात्मकव्यवहारे व्यवहर्त्तव्यज्ञानस्य कारणत्वेनेदं ज्ञानं प्रमाणमिदं ज्ञानमप्रमाणमिति व्यवहारार्थं प्रामाण्यस्याऽप्रामाण्यस्य च प्रतीतिरङ्गीकरणीयैवेति भावः, प्रामाण्यविशिष्टप्रतीतिरिति इदं ज्ञानं प्रमाणमित्याकारकं प्रामाण्यप्रकारकज्ञानविशेष्यकज्ञानमित्यर्थः, स्वत इति स्वतस्त्वञ्च स्वाश्रयग्राहकयावत्सामग्रीग्राह्यत्वं तच्च भाट्टादिमतत्रयेऽपि समानम्, तथाहि भट्टमते ज्ञाततात्वलिङ्गकज्ञानजन्यत्वसाध्यकानुमितिलक्षणा प्रभाकरमते स्वप्रकाशज्ञानलक्षणा मुरारिमिश्रमतेऽतिरिक्तानुव्यवसायलक्षणोक्तसामग्री, तया ज्ञानत्ववत्प्रामाण्यमपि गृह्यत इति। तन्मतं स्वत इति विकल्प्य दूषयति—

आद्येऽपि स्वयं, स्वग्राहकेण वेति, तत्र न प्रथमः। स्वसंवेदनस्यासिद्धेः धर्म्यग्रहे विशिष्टग्रहानुपपत्तेरिति भावः। ज्ञानं स्वप्रकाशं प्रकाशत्वात् प्रदीपवदिति चेत्, प्रकाशत्वं यदि तैजसत्वादिकं, तदा स्वरूपासिद्धिः। अथ ज्ञानत्वं, तदाऽसाधारण्यं, शब्दाभेदेऽपि हेतोरर्थस्य भेदात्। न च तच्छब्दवाच्यत्वमेव हेतुः, अप्रयोजकत्वात्, अन्यथा गोशब्दवाच्यत्वेन वाण्यादीनामपि पशुत्वाद्यापत्तेः।

आद्येऽपीति, स्वयमिति अनेन प्रभाकरमतग्रहणम्, तन्मतं चैवम्, अयं घट इत्याद्याकारकस्य व्यवसायस्य घटत्वेन घटमहं जानामीत्याद्याकारानुव्यवसायरूपत्वेन सर्वं व्यवसायज्ञानमनुव्यवसायरूपमिति स्वविषयकत्वेन ज्ञानमात्रस्य स्वसंवेदनरूपत्वात् तदात्मकेन ज्ञानेन ज्ञाने गृह्यमाणे तन्निष्ठज्ञानत्वादिधर्मवत्तन्निष्ठप्रामाण्यस्यापि ग्रहणं बाधकाभावादिति, स्वग्राहकेण वेति अनेन कुमारिलभट्टमतस्य मुरारिमिश्रमतस्य च ग्रहणम्, कुमारिलभट्टमतं चैवम्, ज्ञानमतीन्द्रियं तज्जन्या ज्ञातता च प्रत्यक्षेति तल्लिङ्गकानुमित्या ज्ञानं तद्गतं प्रामाण्यञ्च गृह्यते, अनुमितिश्चेत्थम् इयं ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानजन्या घटवृत्तिघटत्वप्रकारकज्ञात-

तात्वात्, या यद्वृत्तिर्यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानसाध्या, यथा पटे पटत्वप्रकारिका ज्ञाततेति, मुरारिमिश्रमत-
श्चैवम्, अयं घट इत्यादिज्ञानं नातीन्द्रियम्, तदव्यवहितोत्तरक्षणोपजायमानतद्विषयकानुव्यवसायेन गृह्यमाणत्वात्, तथाहि
घटोऽयमित्याद्याकारं प्रत्यक्षज्ञानं घटमहं जानामीत्याद्याकारानुव्यवसायेन पर्वतो वह्निमानित्याद्यनुमितिः पर्वते वह्निमनुमिनोमीत्या-
द्यनुव्यवसायेन घटादिशाब्दबोधादिरपि घटं शाब्दयामीत्याद्यनुव्यवसायेन च गृह्यते, तद्गतप्रामाण्यमपि तदनुव्यवसायेनैव गृह्यत
इति, एवमुपमित्यादिरपि, स्वेन ज्ञानेन स्वस्य ग्रहणवत् स्वगतप्रामाण्यग्रहणं तदा स्यात् यदि स्वेनैव स्वस्य प्रकाशस्स्यात्, अन्यथा
प्रामाण्याश्रयस्य धर्मिणो ज्ञानस्य स्वेन ग्रहणाऽभावेप्रामाण्यस्यापि ग्रहणं न स्यात्, धर्मिज्ञानाभावे धर्मज्ञानस्याप्यसम्भवात्, न च
स्वेनैव स्वस्यप्रकाशस्सम्भवति तत्र प्रमाणाभावादित्याशयेनाह स्वसंवेदनस्याऽसिद्धेरिति, स्वसंवेदनाऽसिद्ध्या स्वेन ज्ञानेन स्व-
स्याग्रहणे प्रामाण्यप्रकारेणापि कथं न ग्रहणमित्यतस्तदुक्तेर्भावार्थमाह धर्म्यग्रह इति ज्ञानरूपविशेष्यस्याऽग्रह इत्यर्थः, विशिष्ट-
ग्रहेति प्रामाण्यप्रकारकज्ञानविशेष्यकग्रहेत्यर्थः । असाधारण्यमिति ज्ञानत्वहेतोर्ज्ञानरूपपक्षमात्रवृत्तित्वेन सपक्षविपक्षव्यावृत्त-
त्वादसाधारण्यमिति भावः। अत्र प्रदीपे ज्ञानत्वहेत्वभावाद् दृष्टान्तासिद्धिरपि ज्ञेया, न च ज्ञानप्रदीपोभयस्यापि प्रकाशरूपैकशब्देन
व्यवह्रियमाणत्वादुभयसाधारणं प्रकाशत्वमेव हेतूक्रियत इत्यपि वक्तुं शक्यम्, यतो नात्र हेतुः शब्दात्मा व्यधिकरणत्वात्, किन्त्व-
र्थात्मा, स च भिन्न एव, तत्र चोक्त एव दोष इत्याह शब्दाऽभेदेऽपीति, अप्रयोजकत्वादिति, प्रकाशशब्दवाच्यत्वहेतुरस्तु स्वप्र-
काशत्वसाध्यं मास्त्वित्याकारकव्यभिचारशङ्कानिवर्तकतर्काभावादितिभावः। पशुत्वापत्तेरिति तथा च वाणीकीरणपृथिव्यादिः
पशुः गोपदवाच्यत्वात् गोवत्, पृथिवीकीरणादिकं वाण्याद्यात्मकं गोपदवाच्यत्वात् वाणीवदित्याद्यनुमानमपि प्रमाणं स्यादिति

भावः । विकल्प्य हेतुं दूषयित्वा साध्यं दूषयितुं विकल्पयति—

स्वप्रकाशत्वं च न स्वविषयप्रकाशजनकत्वं, सिद्धसाधनात् । नापि स्वात्मकप्रकाशविषयत्वं, दृष्टान्तस्य साध्यविकलत्वात् । नापि सजातीयान्तरानपेक्षव्यवहारगोचरत्वं, प्रदीपव्यवहारस्यापि प्रदीपेतरसदादिजातीयज्ञानजातीयापेक्षत्वात्, तेजोजातीयान्तरानपेक्षव्यवहारगोचरत्वस्य च ज्ञानेऽगतत्वात्, ज्ञानव्यवहारस्यापीष्टसाधनतादिज्ञानसापेक्षत्वाच्च । अथास्मदादिज्ञानं स्वविषयकं ज्ञानत्वात् योगिप्रत्यक्षवत्, योगितत्प्रत्यक्षस्वप्रत्यक्षत्वानामुभयवादिसिद्धत्वात् । चैत्रज्ञानं वा तथा ज्ञानत्वात् भवतामीश्वरज्ञानवत्, अस्माकं मैत्रस्यैव ज्ञानवत्, उभयसिद्धस्य दृष्टान्तवत्त्वस्यातन्त्रत्वादिति चेत्,

स्वप्रकाशत्वं चेति, सिद्धसाधनादिति विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्येन सम्बन्धेन विषयस्य कारणत्वेन व्यवसायस्य व्यवसायविषयकानुव्यवसायात्मकप्रत्यक्षरूपप्रकाशं प्रति जनकत्वेन प्रतिवादिनं नैयायिकं प्रति सिद्धसाधनं,वादिनो मीमांसकस्य चार्थान्तरमिति भावः । सजातीयान्तरेति अस्य स्वभिन्नस्वसजातीयेत्यर्थः किं वा स्वसजातीयभिन्नजातीयेत्यर्थः। नाद्यः, तत्र साजात्यं यदि सत्त्वेन प्रमेयत्वेन वा तदा तद्रूपेण प्रदीपभिन्नं प्रदीपसजातीयं प्रदीपज्ञानमपीति व्यवहारं प्रति व्यवहर्त्तव्यज्ञानस्य कारणत्वेन तदपेक्षकप्रदीपव्यवहारविषयत्वात् प्रदीपदृष्टान्तस्योक्तसाध्यविकलत्वेन दृष्टान्तासिद्धिस्स्यादित्याह प्रदीपव्यवहारस्यापीति, प्रदीपेतरसदादिजातीयेति अस्यापेक्षत्वादित्यनेनान्वयः । नापि द्वितीयः, तत्र साजात्यं पूर्ववत्सत्त्वादिना न सम्भवति, तद्रूपेण सर्वस्यैव स्वसजातीयत्वेन सजातीयान्तराप्रसिद्धेः, किन्त्ववान्तरजात्यैव, तत्रावान्तरजातिर्यदि तेजस्त्वं, तदा

तेन रूपेण प्रदीपजातीयं तेजोन्तरमेव तद्भिन्नज्ञानजातीयप्रदीपज्ञानापेक्षव्यवहारगोचरत्वात्प्रदीपदृष्टान्तस्योक्तसाध्यविकलत्वेन दृष्टान्तासिद्धिस्स्यादित्याशयेनाह ज्ञानजातीयापेक्षत्वादिति। अथाद्यपक्ष एवाद्रियते, न च सत्त्वादिना साजात्यं विवक्षितं, किन्तु तेजस्त्वादिनाऽवान्तरसामान्येनैवेति नोक्तदोष इत्युच्यते तदापि स्वत्वं न पक्षदृष्टान्तोभयानुगतमिति पक्षे साध्यसङ्क्रमनार्थं स्वपदेन यदि ज्ञानं साजात्यं च ज्ञानत्वेन तदा तद्घटितसाध्यं न दृष्टान्ते इति दृष्टान्तासिद्धिरेव, यदि च दृष्टान्ते साध्यसङ्क्रमनार्थं तेजस्तदा तद्घटितसाध्यं ज्ञानरूपपक्षे बाधितमित्याह तेजोजातीयेति, ननु बुद्धिस्थत्वेन रूपेण स्वत्वमनुगतमेवाभ्युपगम्यते इति पक्षे यदा साध्यसङ्क्रमनं तदा स्वपदेन ज्ञानस्योपादानं, यदा च दृष्टान्ते तत्तदा तेजस इति नोक्तदोष इत्युक्तौ दोषान्तरमाह ज्ञानव्यवहारस्यापीति, व्यवहारं प्रति व्यवहर्त्तव्यज्ञानस्येवेष्टसाधनत्वादिज्ञानस्यापि कारणत्वेन स्वपदग्राह्यं यज्ज्ञानं तद्भिन्नं ज्ञानत्वेन तज्जातीयमिष्टसाधनताज्ञानं तदपेक्षव्यवहारगोचरत्वस्यैव तज्ज्ञानपक्षे सत्त्वेनोक्तसाध्यस्य बाध एवेतिभावः। योगिनस्तत्प्रत्यक्षस्य च तत्र स्वविषयकप्रत्यक्षत्वस्य चासिद्ध्या दृष्टान्तासिद्धिर्नेत्यावेदयितुमाह योगीति, तथा स्वविषयकम्, ननु भवन्मते नेश्वर ज्ञानं सिद्धम्, अस्मन्मते च मैत्रज्ञानं स्वविषयकं न सिद्धमित्युभयमतसिद्धत्वाभावान्न दृष्टान्तत्वं तयोरित्यत आह उभयसिद्धस्येति, नैयायिकस्समाधत्ते—

न, अप्रयोजकत्वात्, इन्द्रियप्रत्यासत्तिमन्तरेण प्रत्यक्षत्वासम्भवात्, स्वत्वस्याननुगतत्वाच्चेति। न च घटं जानामीत्यादिकमध्यक्षमेव स्वसंवेदनं विनानुपपद्यमानमत्र प्रमाणं, यदि हि नयनादिसन्निकर्षादुपजायमानं घटं जानामीत्याद्याकारं घटज्ञानं घटज्ञानान्तराग्राहकं स्वात्मानं न गृह्णीयात् न गृह्णीयादेवात्मनो घटज्ञा-

नत्वमिति। घटज्ञानतज्ज्ञानयोरभेदस्यासिद्धत्वेन सन्दिग्धभेदत्वात्।

नेति, तत्र हेतुमाह अप्रयोजकत्वादिति, व्यभिचारशङ्कानिवर्त्तकतर्काभावादित्यर्थः। सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमिति भवदीयमेव प्रत्यक्षलक्षणम्, तथा च प्रत्यक्षे इन्द्रियप्रत्यासत्तेः प्रयोजकत्वेन पूर्वं स्वप्रकाश्यत्वेनाभिमतस्यायं घट इत्यादिव्यवसायज्ञानस्याभावेन तस्येन्द्रियेण सह प्रत्यासत्त्यभावान्न तद्रूपस्वविषयकप्रकाशात्मकप्रत्यक्षं सम्भवतीत्याह इन्द्रियप्रत्यासत्तिमन्तरेणेति, स्वसंवेदनेऽध्यक्षमेव प्रमाणमित्याशङ्क्य प्रतिक्षिपति न चेति,अस्य घटज्ञानत्वमितीत्युत्तरेण सम्बन्धः। अत्र स्वसंवेदने, कथं स्वसंवेदनं विना घटमहं जानामीत्याद्याकाराध्यक्षमनुपपन्नमित्यत आह यदि हीति, निषेधे हेतुमाह घटज्ञानतज्ज्ञानयोरिति, असिद्धत्वेनेति अद्यापि प्रमाणान्तराऽप्रदर्शनेन सिद्धत्वाभावेनेत्यर्थः। संदिग्धभेदत्वादिति, नन्वेवं तर्हि घटज्ञानतज्ज्ञानयोरयं घटः घटमहं जानामीत्याकारकयोः कथं न क्रमिकत्वानुभव चेत्, शतपत्रसूचीभेदन्यायेन जानीहि। स्वनिष्ठप्रत्यक्षनिरूपितविषयताकत्वपर्यवसायिस्वविषयकत्वाभावेनाप्रत्यक्षो नियमेन प्रत्यक्षविषयो न उपलम्भः ज्ञानं यस्य तन्मते नार्थदृष्टिर्नार्थोपलम्भस्सिद्ध्यति, यतो ज्ञानान्तरेण ज्ञानान्तरस्योपलम्भेन तत्साधनेऽनवस्थाप्रसक्तिस्स्यादित्यनवस्थातर्कसहकृतात् ज्ञानात्मिका क्रिया न स्वसजातीयक्रियाकर्म क्रियात्वात् छिदावदित्यनुमानात्स्वप्रकाशत्वसिद्धेस्संदिग्धभेदो न दोष इत्याशङ्कते—

अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिद्ध्यति, परेण परवेदनेऽनवस्थानात्, न क्रिया सजातीयक्रियाकर्मतामश्नुते छिदावदिति तर्कपुरस्कारान्नैष दोष इति चेत्, न, उपलम्भापरपर्यायाया दृष्टेर्हि सिद्धिर्निष्पत्तिर्वा स्यात् प्रतीतिर्वा, आद्येऽनागतोपलम्भवेदनप्रसङ्गः, न चाविद्यमानेनाविद्यमानस्य वेदनमिति, द्वितीये तु

सिद्धसाधनं, नह्यनुपलब्धउपलब्धो भवति, न चैवं सत्यर्थोऽपि नोपलभ्येत, न ह्युपलम्भप्रतीतिरर्थवेदनमपि तूपलम्भनिष्पत्तिः।

अप्रत्यक्षोपलम्भस्येति, अर्थसिद्धौ स्वरूपतोऽर्थज्ञानमुपयुज्यते, नतु ज्ञातं, मानाभावादित्याशयेन नैयायिकस्समाधत्ते नेति, दृष्टेः अर्थदृष्टिरित्यत्र दृष्टिशब्दवाच्यायाः, यदुपलम्भस्य नियमेन प्रत्यक्षं तस्यैव निष्पत्तिरित्यभ्युपगमेऽनागतो योऽर्थोपलम्भस्तत्प्रत्यक्षस्यार्थोपलम्भनिष्पत्तौ कारणत्वमायातमित्यर्थोपलम्भनिष्पत्तेः पूर्वमेव तस्य नियमेन सत्त्वप्रसङ्ग इत्याशयेनाह आद्य इति, ननु भावी य उपलम्भस्तस्य प्रत्यक्षमपि भाव्येव, भाविना प्रत्यक्षेण भाविन उपलम्भस्य वेदनं ततः पूर्वं कथं न स्यादित्याशङ्कयामाह नचाऽविद्यमानेनेति, नचाऽविद्यमानेन प्रत्यक्षेणाऽविद्यमानस्योपलम्भस्य वेदनं सम्भवति पूर्वं द्वयोरप्यसत्त्वादित्यर्थः। द्वितीयेत्विति, अर्थोपलम्भस्याऽप्रत्यक्षेऽर्थोपलब्धिर्नप्रतीयेतेत्यऽर्थके द्वितीयपक्षे त्वित्यर्थः,सिद्धसाधनमिति स्वसिद्धान्तेन सह न विरोधः, नैयायिकेनापि तथाभ्युपगमादितिभावः। तत्र हेतुमाह—न ह्यनुपलब्ध उपलब्धो भवतीति, हि यतः, न्यायमतेप्यनुपलब्धः उपलब्ध्यविषयः अर्थोपलम्भः उपलब्धः उपलब्धिविषयो न भवतीत्यर्थः। अत्र न ह्यनुपलब्धोपलम्भ उपलब्धीभवतीति वौद्धाधिकारे पाठः, नच घटाद्यात्मकार्थज्ञानस्याप्रत्यक्षे घटाद्यात्मकार्थोपि न ज्ञायेते वाच्यम्, अर्थज्ञानतज्ज्ञानयोर्भेदेनार्थज्ञानज्ञानाभावेपि निष्पत्स्यतएवार्थज्ञानं, तेन च स्वरूपसता स्यादेवार्थसिद्धिरित्याशयेनाह न चैवं सत्यर्थोपीति, स्वप्रकाशवादी शङ्कते—

उपलम्भाद्दृष्टाद्युपलम्भनिष्पत्तिरित्येव व्यवहारः कुत इति चेत्, माभूत्, नह्यव्यवहारादेव निष्पन्नस्य वस्तुनो निवृत्तिः, तथा च तन्निबन्धनोऽर्थव्यवहारो दुर्वार इति, न चानवस्था, विषयान्तरसञ्चारादिना प्रति-

बन्धाद्रूपादिवदनुद्भूतत्वाभ्युपगमाद्वा, ज्ञानस्यावश्यवेद्यत्वानभ्युपगमादनिश्चयवत्, अन्यथा त्वनिश्चितनिश्चयस्यार्थनिश्चयोऽपि न सिध्येत्, न चासौ स्वात्मन्यपि निश्चय इति, तदिदं वधूमाषमापनदृष्टान्तमनुहरति,

उपलम्भादृष्टाविति, कुत इति व्यवहारं प्रति व्यवहर्त्तव्यविषयकज्ञानस्य कारणस्याभावादितिभावः । अर्थज्ञानज्ञानाभावेऽर्थज्ञानव्यवहारो माभूत्, व्यवहर्त्तव्यो योऽर्थस्तज्ज्ञानस्य कारणस्य सद्भावादर्थव्यवहारस्तु स्यादेवेत्याशयेन समाधत्ते–माभूदिति । तथा चेति अर्थज्ञानव्यवहाराऽभावमात्रेणार्थज्ञानस्य निष्पन्नस्य निवृत्त्यभावे चेत्यर्थः, तदिति निष्पन्नार्थज्ञानेत्यर्थः । परेण परवेदनाभ्युपगमपक्षेपि नानवस्था, यतस्तज्ज्ञानधाराभ्युपगमे ज्ञानयौगपद्यानभ्युपगमाद्विषयान्तरप्रत्यक्षज्ञानं न भवेत्, भवति चातोबहिरिन्द्रियजन्यविषयान्तरप्रत्यक्षजनकसामग्रेव मानसज्ञानधाराप्रतिबन्धिका, तस्याः प्रतिबन्धकत्वानभ्युपगमेपि वा लाघवात् कस्यचिद्रूपस्येव कस्यचिज्ज्ञानस्यानुद्भूततयैवोत्पत्त्यभ्युपगमात्तदनुव्यवसायरूपप्रत्यक्षाभावेन ज्ञानधाराया विश्रान्तिः, सर्वेषामुद्भूतत्वेपि वा ज्ञानमवश्यवेद्यमेवेत्यनभ्युपगमादित्याह न चानवस्थेति, अवश्यवेद्यत्वानभ्युपगममेव दृष्टान्तेन द्रढयति–अनिश्चयवदिति, अन्यत्र निश्चयवदिति पाठः, अर्थनिश्चयः स्वविषयकनिश्चयाभावेन स्वांशे निश्चयत्वेन रूपेणानिश्चितोपि स्वरूपसत्त्यैवार्थसिद्धावुपयोगी नतु तन्निश्चयोपि तद्वदित्यर्थः । तदनभ्युपगमे दण्डमाह अन्यथेति, स्वात्मन्यपीति स्वांशेपीत्यर्थः । तथा सति क्वचिदपि निश्चयत्वसंशयो न स्यात्, न च तथाभ्युपगम्यते भवतेतिभावः। मीमांसकमुपहसति तदिदमिति, एतदेव भावयति–

यथा वधूर्माषमापनव्यग्रा स्वगुह्यं न संवृणोति तथेदमपि, यथा संशयादिव्यावृत्तेन निश्चयत्वेनानिश्चितोऽपि निश्चयो निश्चयकार्यं करोति ताद्रूप्यस्य यदाकदाचित् ज्ञानान्तरसिद्धतया वास्तवत्वात्, तथोपलम्भोऽपि तथा-

त्वेनागृहीतः स्वकार्यं कुर्यादेवेत्युत्तानार्थः। छिदावदिति तु दृष्टान्तमात्रं, ज्ञानं न ज्ञानान्तरकर्म तज्जातीयक्रियात्वात्, या यज्जातीयक्रिया नासौ तज्जातीयक्रियाकर्म यथा च्छिदा च्छिदान्तरस्येति तु न्यायविप्लवः।

यथेति, ताद्रूप्यस्य निश्चयत्वस्य, तथात्वेन उपलम्भत्वेन, स्वकार्यम् अर्थग्रहणरूपम्, दृष्टान्तमात्रमिति, तथाचाऽप्रमाणत्वान्न प्रकृतसाधनोपयोगीति भावः। तज्जातीयेति ज्ञानान्तरजातीयेत्यर्थः, न्यायविप्लवः न्यायाभासः, तत्र हेतुभूतं बाधदोषमाह—

ज्ञाने ज्ञानान्तरकर्मत्वाभावज्ञानस्य ज्ञानान्तरस्य विषयताया अवर्जनीयत्वात्। किञ्च छिदावत् सर्वथा सजातीयाकर्मत्वे साध्ये बाधः, पुरुषान्तरज्ञानस्य पुरुषान्तरज्ञानवेद्यत्वात्, स्वयमपि स्मृत्यादिगोचरत्वाच्च। स्वकर्मत्वे साध्ये दृष्टान्तस्य साध्यविकलतया हेतोर्विरुद्धत्वमिति। अथ व्यवहारस्य व्यवहर्त्तव्यज्ञानसाध्यत्वाद्व्यवहारानुरोधात् तदेव ज्ञानं तद्विषयकं कल्प्यते, ज्ञानान्तरकल्पने गौरवात्, तदेव च जानामीत्याद्याकारं, तच्च बाह्ये यथायथं प्रत्यक्षादिरूपमात्मनि च प्रत्यक्षमेव।

ज्ञाने इति, ज्ञानविशेष्यकज्ञानान्तरकर्मत्वाभावप्रकारकानुमित्यात्मकज्ञानस्य पक्षीभूतज्ञानव्यतिरिक्तस्य विषयत्वलक्षणकर्मतायाः पक्षीभूतज्ञाने सत्त्वादितिभावः। छिदा न कस्याश्चिच्छिदायाः कर्म तथा ज्ञानं न कस्यचिदपि ज्ञानस्य कर्म, तथा च ज्ञानत्वेन स्वसंजातीयज्ञानान्तरस्यापि न कर्मेतिपर्यवसितोर्थ इति साधनं यद्यभिमतं तदापि बाधदोष इत्याह किञ्चेति, बाधदोषे हेतुमाह—पुरुषान्तरज्ञानस्येति चैत्रमैत्रयोर्मध्ये मैत्रवर्त्तिज्ञानस्येत्यर्थः, पुरुषान्तरज्ञानवेद्यत्वादिति, चैत्रवर्त्तिना वक्तृत्वचेष्टावत्त्वादि लिङ्गज्ञानोत्तरजायमानेनायं ज्ञानवानित्याकारानुमित्यात्मकज्ञानेन विषयीकरणादित्यर्थः। ननु ज्ञानं स्वसमानाधिकरणज्ञानान्तर-

कर्म नेति विवक्षणान्नोक्तदोषः,पुरुषान्तरज्ञानस्य पुरुषान्तरज्ञानाऽसमानाधिकरणत्वादिति चेत् ,तथापि स्वीयानुभवात्मकज्ञानस्य कालान्तरभाविना स्वीयस्मृत्याद्यात्मकेन समानाधिकरणेन ज्ञानेन विपयीकरणाद् बाध एवेत्याशयेनाह स्वयमपि स्मृत्यादिगोचरत्वाच्चेति, स्वस्य स्वमेव कर्मेति साधने छिदायां स्वात्मकछिदाकर्मत्वाभावेन साध्यविकलो दृष्टान्तः, तत्र च विद्यमानस्य हेतोर्विरोधः, यत्र यत्र क्रियात्वं तत्र तत्र स्वकर्मत्वं नास्तीत्येवं साध्याभावेन सह तस्य व्याप्तेरित्याशयेनाह स्वकर्मत्व इति, यथायथं यथा सम्भवम्, प्रत्यक्षादिरूपमिति घटादिबाह्यार्थेन सहेन्द्रियसन्निकर्षो यदा तदा तद्घटितप्रत्यक्षसामग्रीबलोपजातं ज्ञानं ज्ञानानपेक्षत्वाद् घटादिबाह्यांशे प्रत्यक्षं, ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणसङ्गतेः, यदा च वह्न्यादिविधेयेन सह धूमादिलिङ्गस्य व्याप्तिज्ञानं तदा तद्घटितपक्षधर्मताज्ञानादिसामग्रीबलोपजातं ज्ञानमनुमित्यात्मकं वह्न्यादिविधेयांशे परोक्षं, परामर्शादिज्ञानापेक्षत्वात्, एवमुपमितिशाब्दादिज्ञानमपि बाह्यविषयांशे परोक्षमेव, प्रत्यक्षात्मकतत्सादृश्यज्ञानतत्पदजन्यतत्पदार्थोपस्थित्यादिज्ञानापेक्षकत्वादित्यर्थः। आत्मनि प्रमातरि, स्वात्मनि ज्ञानांशे, प्रत्यक्षमेवेति ज्ञानानपेक्षत्वात्, अत्रैवकारस्येतरव्यावर्त्तकत्वाद् ज्ञानमात्रं स्वांशे परोक्षं न, ज्ञानानपेक्षत्वादितिभावः। अत्र तटस्थः पृच्छति—

अथास्तु मनोयोगजन्यत्वादात्मनि तत्प्रत्यक्षं, स्वात्मनि तु कथं, मनःसंयुक्तात्मसमवायेन जन्यत्वादिति चेत्, न, प्रत्यक्षविषयत्वाभिमतसमवेतनिरपेक्षस्य तस्य प्रत्यासत्तित्वेऽतीतानागतज्ञानग्रहणप्रसङ्गादिति चेत्, तद्विषयत्वे ज्ञानानपेक्षत्वात्, यज्ज्ञानं यद्विषयत्वे ज्ञानानपेक्षं तस्य तत्रैव साक्षात्त्वात्, स्वविषयत्वं च ज्ञानस्य ज्ञानत्वमिव स्वाभाविकमिति नोत्पादकसामग्रीनियम्यम्, आगन्तुकस्यैव तथात्वात्,

अथास्त्विति, मनोयोगेति आत्ममनस्संयोगेत्यर्थः। तत् अर्थज्ञानम्, स्वात्मनि अर्थज्ञानांशे, अर्थज्ञानरूपविषयस्य स्वोत्पत्तेः पूर्वमभावेपि समवायस्य नित्यत्वेन मनस्संयुक्तात्मसमवायस्य पूर्वं सद्भावात्तस्य सन्निकर्षविधया तत्प्रत्यक्षे कारणत्वात्स्वसंवेदनं भविष्यत्येवेति परस्य प्रश्नोत्तरमाशङ्कते मनस्संयुक्तेति, प्रत्यक्षविषयत्वेनाभिमतस्य समवेतस्य ज्ञानस्य पूर्वमभावेन तत्कालावच्छेदेन तदवृत्तेरपि मनस्संयुक्तात्मसमवायस्य सन्निकर्षस्य कारणत्वे व्यवहितपूर्वोत्तरक्षणभाविज्ञानस्यापि ग्रहणप्रसङ्ग इति नोक्तोत्तरं युक्तियुक्तमित्याशयेन तटस्थस्समाधत्ते, न, प्रत्यक्षेति, अथास्त्वित्यादिशङ्कां गुरुः प्रतिविधत्ते तद्विषयत्वे इति, ज्ञानमात्रस्य स्ववृत्तिज्ञानीयविषयतायां ज्ञानानपेक्षत्वात् स्वांशे प्रत्यक्षत्वमेवेति स्वविषयकज्ञानं प्रत्यक्षमेव ज्ञानाऽकारणकं ज्ञानं प्रत्यक्षमिति प्रत्यक्षलक्षणसङ्गतेरिति भावः, तदेव विवृणोति—यज्ज्ञानमिति, स्वविषयत्वं ज्ञानत्वमिव सर्वज्ञानानुगतत्वेन स्वाभाविकं, यच्चानुगतं तदनुगतकारणप्रयोज्यम्, अनुगतकारणं चात्र ज्ञानसामान्योत्पादकसामग्र्येवेति न तत्तदरिक्तसामग्रीप्रयोज्यं, कादाचित्कस्यैव तथात्वादित्याशयेनाह स्वविषयत्वं चेति, आगन्तुकस्यैव कादाचित्कस्यैव, तथात्वात् ज्ञानसामान्योत्पादकसामग्र्यतिरिक्तसामग्रीनियम्यत्वात्।

तादृशं तत्तद्विषयत्वं तु न तवानुगतकारणनियम्यम्, अनुमित्यादिसाधारणतत्तद्विषयत्वे तदभावात्, अस्माकं तु सम्भवेदपि एकशक्तिमत्त्वेन हेतुत्वोपगमादिति। अत्राहुः—प्रत्यक्षत्वं हि न ज्ञानानपेक्षविषयताशालित्वं, तदप्रतिसन्धानेऽपि साक्षात्करोमीति प्रत्ययात्, परन्तु जातिः, जन्ये च ज्ञाने तन्नियामकमिन्द्रियसन्निकर्षजन्यत्वमेव, जातेश्च नांशिकत्वमतो नानुमित्यादेरात्मनि च प्रत्यक्षत्वम्, अत एव प्रत्यभिज्ञापि न ग्रहण-

स्मरणात्मिकेति। नापि स्वग्राहकेण, विवेचनानुपपत्तेः, प्रमाणमेवेत्यवधारणात्मनो विवेचनस्य विना विशेषदर्शनमनुपपत्तेरित्यर्थः।

तादृशम् आगन्तुकम्, तत्तद्विषयत्वं घटपटादिनियतविषयत्वं, तच नैयायिकस्य, तत्र हेतुमाह अनुमित्यादीति, तदभावादिति घटादितत्तद्विषयत्वस्य प्रत्यक्षे इन्द्रियसन्निकर्षाऽपेक्षत्वम्, अनुमित्यादौ परामर्शाद्यपेक्षत्वमिति तत्तत्सामग्र्यभावे तत्र तत्र तत्तद्विषयत्वाभावेन तत्तद्विषयत्वस्य तत्तत्सामग्रीनियम्यत्वात्तत्रानुगतकारणनियम्यत्वाऽभावादित्यर्थः। अस्माकं त्विति मीमांसकमते तु घटादिविषयत्वमनुगतकारणप्रयोज्यं स्यादपि, तन्मते घटविषयकप्रत्यक्षपरोक्षज्ञानमात्रे यद् घटविषयकत्वं तदवच्छिन्नज्ञानानुकूलशक्तिमत्त्वेन कारणत्वस्येन्द्रियपरामर्शादौ सम्भवादित्यर्थः, नन्वेवं तर्हि घटविषयकत्वसाम्यात्प्रत्यक्षेप्यनुमितित्वप्रसङ्ग इति चेत्स्यादेव यदि प्रत्यक्षत्वानुमितित्वाद्यवच्छिन्नानुकूलशक्तिमत्त्वेन कारणत्वमिन्द्रियपरामर्शादौ स्यात्, न चैवम्, प्रत्यक्षत्वावच्छिन्नाऽनुकूलशक्तिस्त्विन्द्रियेष्वेव अनुमितित्वाद्यवच्छिन्नानुकूलशक्तिः परामर्शादावेवेत्येवमभ्युपगमादिति भावः। अत्राहुरिति नैयायिका इति शेषः, तन्नियामकं प्रत्यक्षत्वजातिनियामकम्, नांशिकत्वमिति ननु जातेरांशिकत्वाभ्युपगमे को दोष इति चेत्, अर्थांशावच्छेदेन प्रत्यक्षत्वाभाववत्यामनुमितावनुमितित्वस्य तदभाववति घटप्रत्यक्षे च प्रत्यक्षत्वस्यानुमितौ विषयांशेऽनुमितित्वं स्वांशे च प्रत्यक्षत्वमिति तयोस्सामानाधिकरण्यमित्येवं साङ्कर्यमेवेति प्रतीहि, प्रत्यभिज्ञापि प्रत्यक्षत्वस्मरणत्वयोस्साङ्कर्येण न तदुभयात्मिका, किन्त्विदमंशे चक्षुरादिसंयोगलक्षणलौकिकसन्निकर्षेण तत्तांशे च चक्षुरादिसंयुक्तमनस्संयुक्तात्मसमवेतस्मरणविषयत्वलक्षणालौकिकसन्निकर्षेण जन्यत्वात् प्रत्यक्षरूपैवेत्याह अत एवेति। एतावताप्रबन्धेन स्वयं

स्वग्राहकेण वेति विकल्पद्वयमध्यादाद्यविकल्पं प्रतिक्षिप्य प्रभाकरमतं निरस्तम्, अधुना भट्टमुरारिमिश्रमतनिरसनाय द्वितीयविकल्पं प्रतिक्षिपति—नापि स्वग्राहकेणेति, प्रामाण्यविशिष्टप्रतीतिरित्यनुषञ्जनीयम्, विवेचनानुपपत्तेरिति, संवादिप्रवृत्तिजनकत्वादिलिङ्गज्ञानरूपविशेषदर्शनं विना प्रामाण्याश्रयज्ञानग्राहकमात्रेणेदं ज्ञानं प्रमाणमेवेति निश्चयानुपपत्तेरित्यर्थः। तदेवाह प्रमाणमेवेति, घटज्ञानस्य स्वग्राहकेण ग्रहणे तद्गतं सामान्यतः प्रामाण्यं गृह्यत एव प्रामाण्यग्रहविषयत्वरूपविशेषदर्शनात्तु प्रमाणमेवेत्यवधारणात्मकविवेचनं स्यादेवेत्याशङ्कते—

अथ प्रामाण्यग्रहविषयत्वरूपविशेषदर्शनात् तद्भविष्यति, मैवम्, अप्रमाणेऽपि प्रामाण्याभिमानात्, यद्यप्रमायां न प्रामाण्यग्रहस्तदाऽप्रामाण्यसंशय इव प्रामाण्यनिश्चयेऽपि भ्रमान्निष्कम्पा प्रवृत्तिर्न स्यात्, प्रामाण्यग्रहेण भ्रमासंस्पर्शात्, ततो यदि प्रामाण्यमापाततः स्फुरेदपि तथापि नियमहेतोरभावात् प्रमाणमेवेदमिति निश्चयः कुतः, स च मृग्यते पारलौकिकव्यवहाराङ्गत्वात्,

अथेति, शुक्तौ यदिदं रजतमिति भ्रमात्मकज्ञानं तद्विशेष्यकप्रामाण्यप्रकारकमिदं रजतमितिज्ञानं प्रमाणमित्याकारकं भ्रमात्मकज्ञानमपि प्रामाण्यग्रहरूपमिति तद्विषयत्वस्येदं रजतमिति भ्रमात्मकज्ञाने सत्त्वेन तत्र च प्रामाण्याभावेन तस्य प्रामाण्यव्याप्यत्वाभावान्न विशेषदर्शनत्वमित्याशयेनोत्तरयति मैवमिति, भ्रमे इदं प्रमाणमिति प्रामाण्यग्रहाभावेन प्रामाण्यग्रहविषयत्वस्य प्रमायामेव सत्त्वेन प्रामाण्यव्याप्यस्य तस्य दर्शनात्प्रामाण्यनिश्चयो भविष्यत्येवेति यदि ब्रूयात्तदा भ्रमज्ञाने इदं ज्ञानं प्रमा न वेति प्रामाण्यसंशयाद्यथा न निष्कम्पप्रवृत्तिस्तथा भ्रमे इदं ज्ञानं प्रमेति भ्रमात्मकप्रामाण्यनिश्चयात्तत्कालेऽपि निष्कम्पप्रवृत्तिर्न स्यात्, भ्रमविशेष्यक-

प्रामाण्यप्रकारकभ्रमात्मकग्रहणानभ्युपगमात्, दृश्यते च ततस्सेति तदन्यथानुपपत्त्या भ्रमे प्रामाण्यग्रहोऽभ्युपगन्तव्य एव, अतः प्रामाण्यग्रहविषयत्वस्य भ्रमवृत्तित्वान्न विशेषत्वमित्यतो यथा कथञ्चिद् ज्ञानग्राहकसामग्र्या भ्रमे प्रमायां वा प्रामाण्यग्रहेपि इदं ज्ञानं प्रमैवेति निश्चयो नियामकाभावात्कुत इत्याशयेनाह यच्चप्रमायां नेति, अथ प्रामाण्यज्ञानान्नातिरिक्तः प्रामाण्यनिश्चयः, प्रामाण्यज्ञानं ज्ञानग्राहकसामग्र्यैव जातं, केवलमप्रामाण्यशङ्कानिवर्त्तने सति तन्निश्चयव्यपदेश्यं भवति, अतः प्रमाणान्तरस्याप्रामाण्यशङ्कानिवर्त्तनमेव फलमिति चेत्, मैवम्, यतः प्रमाणान्तरं किं पूर्वज्ञाने प्रामाण्यनिश्चयं कृत्वैवाऽप्रामाण्यशङ्कानिवर्त्तकं, किं वाऽन्यथा, आद्ये प्रामाण्यनिश्चयस्यानायासेनैव परतस्त्वं सिद्धम्, प्रमाणान्तरेण तत्करणात्, द्वितीयस्तु न सम्भवत्येव, निश्चयमन्तरेण शङ्काया अनुच्छेदादित्याशङ्कोत्तराभ्यामाह—

शङ्कानिवर्त्तनेन तदप्रत्यूहं निश्चितमेव, तत्प्रामाण्यविपरीतकोटिशङ्काशून्यतत्प्रामाण्यज्ञानस्यैव तन्निश्चयत्वादिति चेत्, तन्निवृत्तिरेव कुतः, प्रमाणान्तरादिति चेत्, तदपि निश्चयफलमन्यथा वा, निश्चयफलं प्रामाण्यनिश्चयस्य जनकम्, अन्यथा तदजनकम्, अन्यथात्वे न शङ्काविच्छेदो निश्चयसाध्यत्वात् तस्य, निश्चयफलत्वे तु यो मृग्यते नासौ स्वत इति। स्फुरणमात्रमपि तावदस्तु स्वत इति चेत्, किन्तेन विना विपरीतशङ्कानिरासं, प्रामाण्यज्ञानमात्रस्य निष्कम्पप्रवृत्त्यक्षमत्वादित्यर्थः।

शङ्कानिवर्त्तनेनेति। तस्य शङ्काविच्छेदस्य, निश्चयफलत्वे प्रमाणान्तरस्य तत्प्रामाण्यनिश्चयजनकत्वे, यः प्रामाण्यनिश्चयः, असौ प्रामाण्यनिश्चयः, ज्ञानग्राहकसामग्र्या प्रामाण्यनिश्चयाभावेपि निश्चयसंशयसाधारणं प्रामाण्यज्ञानं भवत्येव, तावन्मात्रं ताव-

दस्तु स्वतः, मास्तु प्रामाण्यनिश्चयः स्वतः, तावतापि नस्समीहितसिद्धिस्स्यादेवेत्याशयेन मीमांसकः शङ्कते—स्फुरणमात्रमपीति, नापि स्वग्राहकेणेत्यादिप्रबन्धेन भट्टमुरारिमिश्रोभयमतसाधारणखण्डनं कृतम्, अधुना भट्टमतं प्रतिक्षेप्तुमुपदर्शयति घटो ज्ञात-इत्यारभ्य भाक्षा इत्यन्तेन, घटांशे संयोगलक्षणलौकिकप्रत्यासत्त्या ज्ञानांशे च स्वसंयुक्तमनस्संयुक्तात्मसमवेतघटमहं जानामी-त्याकारकज्ञानलक्षणालौकिकप्रत्यासत्त्योपजायमानं विषयतासम्बन्धेन ज्ञानप्रकारकं घटविशेष्यकं घटो ज्ञात इतिचाक्षुषज्ञानमिति नैयायिकमते उक्तज्ञानं घटेन सह घटज्ञानस्य विषयत्वसम्बन्धरूपवैशिष्ट्यमवगाहते, तद्वन्न मीमांसकमते तत्तथा, तन्मते अलौकिक-प्रत्यासत्तेः प्रत्यक्षजनकत्वानभ्युपगमात्, किन्तु ज्ञातताप्रकारकं घटविशेष्यकं चाक्षुषज्ञानमिति नोक्तज्ञानमुक्तवैशिष्ट्यमवगाहते इत्याशयेनाह—

घटो ज्ञात इति प्रत्यक्षं न ज्ञानस्य वैशिष्ट्यमवगाहते, नयनादेरात्मगुणाग्राहकत्वान्मनसश्च बहिरस्वात-न्त्र्यात्, अतीन्द्रियत्वाच्च ज्ञानस्य, परन्त्वतिरिक्ताया एव ज्ञाततायाः, सा च विशेषणप्रकारिका विशेष्यवृत्ति-रूपं घटत्वेन ज्ञात इत्यनुभवात्, जन्यते च समानप्रकारेण स्वाश्रयविशेष्यकेण ज्ञानेन, तया चानुमीयमानं ज्ञानं तज्जन्यत्वेनैव सिद्ध्यति, तथाहि—इयं ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानजन्या घटनिष्ठघटत्वप्रकारक-ज्ञातताजन्यत्वात्, यन्निष्ठा यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानजन्या, यथा पटनिष्ठा पटत्वप्रका-रिका ज्ञातता पटविशेष्यकपटत्वप्रकारकज्ञानजन्येति सामान्यतः, विशेषतो वा यथा घटान्तरे घटत्वप्रका-रिका ज्ञाततेति ; अवगाहते चेन्द्रियसन्निकर्षादिवशात् प्राथमिकमिव ज्ञाततावगाह्यपि प्रत्यक्षं धर्मिणो विशे-

पणवत्ताम्, अत एवायं घटो घटत्वेन ज्ञात इत्यनुभवः।

घटो ज्ञात इति प्रत्यक्षमित्यादि, ननु नयनस्य ज्ञानादौ स्वसंयुक्तात्मसमवायलक्षणलौकिकसन्निकर्षस्यैव सद्भावेन कथं तत्तद्ग्राहकमिति चेत्, मैवम्, संयुक्ते योग्यत्वं विशेषणीयम्, अन्यथा परमाणौ चक्षुस्संयोगदशायां तत्समवेतद्रव्यत्वादेरपि प्रत्यक्षं स्यादिति चक्षुरिन्द्रियाऽयोग्यत्वेनात्मनो ज्ञानादौ लौकिकसन्निकर्षाऽभावादेवेति भावः। नापि घटो ज्ञात इति मानसज्ञानं ज्ञानवैशिष्ट्याऽवगाहि, भवन्मते मनसस्स्वसंयुक्तसमवायप्रत्यासत्त्या ज्ञानरूपविशेषणग्राहकत्वेपि संयोगप्रत्यासत्त्या घटरूपविशेष्यस्य ग्राहकत्वाभावादित्याशयेनाह मनसश्चेति, हेत्वन्तरमप्याह अतीन्द्रियत्वाच्चेति, तथा च ज्ञानमपि न मनोरूपेन्द्रियग्राह्यमिति न मानसमिति भावः। तर्ह्युक्तप्रत्यक्षे घटे कस्य वैशिष्ट्यमवभासते इत्यपेक्षायां स्वमतेनाह परन्त्वतिरिक्ताया इति, वैशिष्ट्यमवगाहते घटो ज्ञात इति प्रत्यक्षमित्यनुषञ्जनीयम्, विशेषणप्रकारिका स्वाश्रये घटे विशेषणं यद्घटत्वं तत्प्रकारिका, विशेष्यवृत्तिः घटवृत्तिः, समानप्रकारेण यत्प्रकारिका ज्ञातता तत्प्रकारेण, स्वाश्रयविशेष्यकेण यदाश्रया ज्ञातता तद्विशेष्यकेण, तया ज्ञाततया, सामान्यत इति सामान्यव्याप्तिरित्यर्थः। विशेषत इति, विशेषव्याप्तिरित्यर्थः, सा चात्र या घटनिष्ठा घटत्वप्रकारिका ज्ञातता सा घटविशेष्यकघटत्वप्रकारकज्ञानजन्येत्याकारा ज्ञेया, तत्र दृष्टान्तमाह यथा घटान्तरे इत्यादि, धर्मिणः घटस्य, विशेषणवत्ताम् घटत्ववत्ताम्, अत एव घटे घटत्ववत्त्वस्य ज्ञाततायां घटत्वप्रकारकत्वस्य चाऽवगाहनादेव, येन कारणेन प्राथमिकज्ञाने घटत्ववत्त्वस्य भानं तेनैव ज्ञातताप्रत्यक्षेपि भानादेव च, एवमग्रेऽपि, अयं घट इति अनेन घटे घटत्ववत्त्वमवगाहते घटत्वेनेति अनेन ज्ञाततायां घटत्वप्रकारकत्वमवगाहत इति सूचितम्, तथाच घटत्ववद्घटवृत्तित्वे सति घटत्वप्रकारकज्ञाततात्ववि-

पर्यकभ्रमात्मकप्रत्यक्षानुभवरूपलिङ्गज्ञानेन घटत्ववद्घटविशेष्यकघटत्वप्रकारकज्ञानजन्यत्वमनुमीयते तया चानुमित्या घटत्ववद्घटविशेष्यकत्वे सति घटत्वप्रकारकत्वलक्षणप्रामाण्यप्रकारेणैव घटज्ञानं विपयीक्रियत इति सा प्रामाण्यमादायैव पर्यवस्यतीति स्वग्राहकेणैव प्रामाण्यग्रह इति सिद्धम्, यत्रापि पटे घटोऽयमिति प्राथमिकज्ञानस्य पटे घटत्वसम्बन्धावगाहित्वेन भ्रमत्वमिव तेन ज्ञानेन पटे घटज्ञाततायामुत्पन्नायां सत्याम् तद्विपयकस्य पटे घटो घटत्वेन ज्ञात इत्याकारकस्य द्वितीयप्रत्यक्षस्य पटात्मके धर्मिणि घटत्वरूपासद्विशेपणसम्बन्धावगाहित्वेनैव भ्रमत्वमिति घटत्वप्रकारकघटवृत्तिज्ञाततात्वलिङ्गभ्रमात्मकप्रत्यक्षेण पटवृत्तिघटत्वप्रकारकज्ञाततापक्षे घटत्ववद्विशेष्यकघटत्वप्रकारकत्वरूपेण घटज्ञानजन्यत्वमनुमीयते तत्रापि तयानुमित्या घटज्ञानं घटत्वाभाववति पटे घटत्वसम्बन्धावगाहकत्वेनाऽप्रमाणमपि घटत्ववद्विशेष्यकत्वे सति घटत्वप्रकारकत्वलक्षणप्रामाण्यप्रकारेणैव दोपवशाद्विपयीक्रियत इति सा भ्रमात्मकघटज्ञानविशेष्यिकोक्तप्रामाण्यप्रकारिकेति भ्रमात्मकघटज्ञानरूपधर्मिग्राहिकया तयैव प्रामाण्यं गृहीतमित्यतो न प्रामाण्यग्रहे कश्चिदपि स्वाश्रयग्राहकसामग्र्यतिरिक्तसामग्र्यपेक्षेत्याशयेनाह—

अत एव चाप्रमापि प्रमेत्येव गृह्यते, दोषवशात् प्राथमिकस्येव चरमस्यापि प्रत्यक्षस्य धर्मिण्यसद्विशेषणवैशिष्ट्यावगाहित्वेन लिङ्गभ्रमादिति भाट्टाः। तदसत्, ज्ञानातिरिक्तायां ज्ञाततायां मानाभावात्, अयं मया ज्ञात इत्यत्र कर्त्तुरिव क्रियाया अप्युपनयबलेनैव भानसम्भवात्। अन्यथाख्यातिवादिनामुपनीतभानस्यावश्यकत्वाच्च। अत एवायमिष्ट इत्यादिरनुभवः। नहीष्टतापि पदार्थान्तरं परैः स्वीक्रियते। न वा ज्ञानमतीन्द्रियं, मानाभावात्।

अत एव चाऽप्रमापीति, गृह्यत इति अत्र हेतुर्लिङ्गभ्रमादिति तत्र च हेतुर्दोषवशादिति, अयं मया ज्ञात इत्यत्र ज्ञाधात्वर्थस्य सविषयकत्वेन ज्ञाधातूत्तरकर्मार्थकक्तप्रत्ययेन क्रियाजन्यफलशालित्वरूपं कर्मत्वं न बोध्यते, येन ज्ञाधात्वर्थज्ञानलक्षणक्रियाजन्यफलरूपाया ज्ञाततायाः प्रकारतया कल्पनं स्यात्, किन्तु विषयत्वरूपमेव, तत्र प्रत्ययार्थस्य प्रकारत्ववादिमते ज्ञानविषयत्वं प्रकारः, संसर्गतावादिमते विषयतासंसर्गेण ज्ञानं प्रकारः, तस्य च चक्षुस्संयुक्तमनस्संयुक्तात्मसमवेतघटमहं ज्ञानामीत्यनुव्यवसायज्ञानलक्षणाऽलौकिकप्रत्यासत्त्या भानं, तयैव च प्रत्यासत्त्याऽऽत्मनोपि भानमिति घटांशे लौकिकं ज्ञानांशे आत्मांशे चालौकिकं चाक्षुषज्ञानमिति, ज्ञाततायामतिरिक्तायां प्रमाणाभावात्कुतस्तयाऽतीन्द्रियत्वेनाभ्युपगतं ज्ञानमनुमीयेत, येन तयाऽनुमीयमानं ज्ञानं प्रमात्वेनैव सिद्ध्यतीति भवतां वचः शोभेतेत्याशयेन भाट्टमतं नैयायिको निराकरोति तदसदिति, अन्यथाख्यातिवादिनामिति, विशिष्टज्ञानं संवादिप्रवृत्तिं प्रतीव विसंवादिप्रवृत्तिं प्रति न कारणं, येनान्यथाख्यातिरभ्युपगता स्यात्, किन्तु तत्रालौकिकसन्निकर्षानभ्युपगमात्पृथमेव ज्ञानद्वयमभ्युपगन्तव्यमिति तां प्रत्युपस्थितेष्टभेदाग्रह एव कारणमित्येवं संवादिविसंवादिप्रवृत्तिरूपकार्यभेदेन कार्यकारणभावद्वयं प्रभाकरेणाभ्युपगतं तदपेक्षया लाघवात्प्रवृत्तित्वरूपसामान्यधर्मावच्छिन्नं प्रति विशिष्टज्ञानत्वेन विशिष्टज्ञानस्य कारणत्वं प्रकल्प्यैकमेव कार्यकारणभावकल्पनं वरमिति विसंवादिप्रवृत्तेरपि तत्कार्यतावच्छेदकावलीढतया तत्पूर्वं विशिष्टज्ञानस्याभ्युपगमनीयत्वेनान्यथाख्यातिर्निराबाधैवेत्याशयिनौ भट्टमुरारिमिश्रावन्यथाख्यातिवादिनाविति तन्मतेपि रङ्गे रजतार्थिप्रवृत्तिः पुरोवर्त्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानजन्या प्रवृत्तित्वात् रजते रजतत्वप्रकारकप्रवृत्तिवदित्यनुमानेन रङ्गे रजतत्वप्रकारकप्रवृत्तिहेतुतयाऽभ्युपगते रङ्गविशेष्यकरजतत्वप्रकारकप्रत्यक्षे रङ्गस्य पुरोवर्त्तित्वेन संयोगलक्षणप्रत्यासत्त्या भानसम्भवेऽपि रजतत्वस्य तत्राऽविद्यमानत्वेन चक्षुस्संयु-

क्तसमवायरूपलौकिकप्रत्यासत्त्या भानं न सम्भवतीति स्मरणलक्षणालौकिकप्रत्यासत्त्यैव भानमङ्गीकर्त्तव्यम्, तद्वत्प्रकृतेप्युपनीत-भानमङ्गीकार्यमित्याशयः। अत एवायमिति, चाक्षुषप्रत्यक्षे ज्ञानादेर्ज्ञानलक्षणप्रत्यासत्त्या भानोपगमादेवेदमिच्छामीति इदं साक्षात्करोमीति च इदमनुमीनोमीति च इदमुपलभे इत्याद्यनुव्यवसायलक्षणप्रत्यासत्त्याऽयमिष्टः अयं साक्षात्कृतः अयमनुमितः अयमुपलब्ध इत्यादिरनुभवः प्रमाणकोटिमाटीकते नान्यथेति भावः। इष्ट इत्यादिरिति, अत्रादिपदेन साक्षात्कृतः अनुमित उपलब्ध इत्यादेरुपग्रहः। नन्वयमिष्ट इत्यत्रापीच्छा न विशेषणं किन्त्विष्टतैव, एवमनुमिततादिरेव यथासम्भवं भासत इत्यत आह नहीष्टतापीति, परैः भाट्टैः, अत्रातीतानागतघटादिज्ञाने जाते घटो ज्ञात इति प्रतीतिर्भवति तत्र धर्मिणो घटस्य तदानीमसत्त्वेन ज्ञाततायाः उत्पत्त्यसम्भवेन नोक्तप्रतीतिविषयत्वं तस्या इति ज्ञानस्य विशेषणतया भानमावश्यकमिति ध्येयम्। अतीन्द्रियत्वाच्च ज्ञानस्येति यदुक्तं तदुपक्षिपति नवेति, यथेच्छा प्रत्यक्षसिद्धा तथा ज्ञानमपीत्यत्रानुभवप्रमाणमाह—

घटमिच्छामीतिवत् घटं जानामीति प्रत्यक्षस्य सर्वानुभवसिद्धत्वात् इत्यन्यत्र विस्तरः। सामान्यतो व्याप्तिः यत्तदर्थयोरनुगतयोरभावेनासम्भविनी, विशेषतो व्याप्तिश्च रूपादिपदार्थप्रमाया दुरवधारणेति। अनुव्यवसायेन व्यवसाये गृह्यमाणे तदुपनीतं यथोपस्थितमेव विशेष्यं विशेष्यत्वेन भासते, विशेषणं च प्रकारत्वेन, तत्र विशेषणीभूय उपस्थिते विशिष्टे विशेषणपरित्यागे हेत्वभावात्, विशेष्यत्वप्रकारत्वयोः पूर्वानुपस्थितयोरेव प्रकारतयोभयत्रादिसिद्धत्वात्।

घटमिच्छामीतिवदिति, अन्यथेच्छाया अपि ज्ञानस्येवातीन्द्रियत्वं स्यात्, विनिगमकाभावादिति भावः, सामान्यतो व्याप्तिः,

या यन्निष्ठा यत्प्रकारिका ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानजन्येत्याकारा पूर्वप्रदर्शिता व्याप्तिः, रूपादीनां तत्तद्व्यक्तिवर्त्तिनामन्यत्राभावेन प्रकृततद्रूपवदितरतद्रूपवतोऽभावेन दृष्टान्तस्योपदर्शयितुमशक्यत्वादियं तद्रूपवद्वृत्तितद्रूपप्रकारकज्ञातता तद्रूपवद्विशेष्यकतद्रूपप्रकारकज्ञानजन्या तद्रूपवद्वृत्तितद्रूपप्रकारकज्ञाततात्वात् या तद्रूपवद्वृत्तितद्रूपप्रकारकज्ञातता सा तद्रूपवद्विशेष्यकतद्रूपप्रकारकज्ञानजन्येति विशेषव्याप्तौ दृष्टान्तोऽसम्भवादित्याशयेनाह विशेषत इति, घटत्वेनेत्यत्र तृतीयाविभक्त्यर्थः प्रकारत्वं तस्य घटमिति द्वितीयाविभक्त्यर्थे विशेष्यत्वे नान्वयः, विभक्त्यर्थे विभक्त्यर्थस्यान्वयाऽयोगात्, किन्तु निरूपकत्वसम्बन्धेनोभयोर्जानामीत्यत्र ज्ञाधात्वर्थे ज्ञानेऽन्वयः, अथवाऽत्र द्वितीयाविभक्त्यर्थः विशेष्यतानिरूपितविशेष्यिता, प्रकृत्यर्थस्य तदेकदेशे विशेष्यत्वे आधेयत्वसम्बन्धेनान्वयः, तृतीयार्थः प्रकारतानिरूपितप्रकारिता तदेकदेशे प्रकारत्वे प्रकृत्यर्थस्याधेयत्वसम्बन्धेनान्वयः, तयोश्च स्वरूपसम्बन्धेन ज्ञाधात्वर्थे ज्ञानेऽन्वयः, अथवा यद्विषयत्वयोर्निरूप्यनिरूपकभावस्तद्विषयित्वयोरवच्छेद्यावच्छेदकभाव इति नियमात् प्रकारत्वविशेष्यत्वाख्यविषयत्वयोर्निरूप्यनिरूपकभावात्तन्निरूपितप्रकारित्वविशेष्यित्वाख्यविषयित्वयोरवच्छेद्यावच्छेदकभावेन भानं, घटपदस्य घटत्वविशिष्टार्थकत्वेन सम्बन्धलक्षणघटत्ववत्त्वस्य घटे भानं, तथा च निरूपकत्वसम्बन्धेन घटत्ववद्घटनिष्ठविशेष्यताविशिष्टत्वे सति तादृशविशेष्यतानिरूपितविशेष्यिताशालित्वे सति वा निरूपकत्वसम्बन्धेन घटत्वनिष्ठप्रकारताविशिष्टत्वप्रकारकेण घटत्वनिष्ठप्रकारतानिरूपितप्रकारिताप्रकारकेण वा ज्ञानविशेष्यकेण घटत्वेन घटमहं जानामीत्याकारकानुव्यवसायेनायं घट इति व्यवसायात्मकज्ञाने गृह्यमाणे तद्गतं प्रामाण्यमपि तेनैव गृह्यते, अथवा घटत्ववद्घटनिष्ठविशेष्यतानिरूपितविशेष्यित्वावच्छेद्या या घटत्वनिष्ठप्रकारतानिरूपितप्रकारिता तत्प्रकारकेण ज्ञानविशेष्यकेणानुव्यवसायेन पदाद्यनुसन्धाननियन्त्रितविषयताकशाब्दबोधसमानशीलतायां सत्यां

प्रामाण्यं गृह्यते, अन्यथा तु घटत्ववद्घटनिष्ठविशेष्यतानिरूपितघटत्वनिष्ठप्रकारतानिरूपकत्वप्रकारकेण ज्ञानविशेष्यकेणानुव्यवसायेन प्रामाण्यं गृह्यते इति मुरारिमिश्रमतं प्रतिक्षेप्तुमुपदर्शयति अनुव्यवसायेनेति, तदुपनीतम्, अयं घट इत्यादिव्यवसायोपनीतम्, एतच्च विशेष्यमित्यनेन विशेषणमित्यनेन चान्वयि, विशेष्यम् घटादि, विशेषणम् घटत्वादि, तत्र अनुव्यवसाये व्यवसायांशे, विशिष्टे घटत्वादिविशिष्टे घटादौ, विशेषणपरित्यागे इति, एतेन घटघटत्वयोस्सम्बन्धोऽपि भासतेऽनुव्यवसाय इति सूचितम्, ननु घटत्वस्य विशेषणस्य भाने तत्सम्बन्धस्य भानावश्यम्भावाद् घटत्ववतो घटत्वस्य च व्यवसाये भानात्तल्लक्षणप्रत्यासत्त्याऽस्त्वनुव्यवसाये भानं, घटत्ववन्निष्ठं यद्विशेष्यत्वं घटत्वनिष्ठं च यत्प्रकारत्वं तयोर्व्यवसायेनानुपस्थितेः कथं भानमित्याशङ्कायामाह—विशेष्यत्वप्रकारत्वयोरिति, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वेनानुपस्थितभानाऽनुपगमे नैयायिकमतेऽपि इमं घटत्वेन जानामीत्यनुव्यवसाये इदंलक्षणविशेष्यघटत्वप्रकारयोः प्रागुपस्थितत्वेन भानेऽपीदन्त्वावच्छिन्नविशेष्यत्वघटत्वनिष्ठप्रकारत्वयोः प्रकारविधया भानं कथं स्यात्, पूर्वमनुपस्थितेः, तस्मादुक्तनियमस्य सङ्कोचेनानुपस्थितयोरपि विशेष्यत्वप्रकारत्वयोर्भानमनुव्यवसाये प्रकारविधया यथा भवताऽभ्युपगतं तथैवास्मन्मते तयोर्भानमुपपद्यत एवेति मुरारिमिश्राशयः। तत्र लौकिकानुभवसंवादमाह—

अत एवेमं घटत्वेन पर्वतं वह्निमत्त्वेन जानामीत्यादिकोऽनुभवो लोकानां, तथा च तद्वदेव घटं घटत्वेन जानामीत्यनुव्यवसायात् घटविशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वादिकं प्रामाण्यं तेन गृह्यत इति मिश्राः। अत्र वदन्ति—अनभ्यासदशायामनुव्यवसायानन्तरं प्रामाण्यसन्देहस्य सर्वानुभवसिद्धत्वान्निश्चिते सन्देहस्य सर्वथैवानुपपत्तेः, तद्धर्मविशिष्टविशेष्यकत्वावच्छेदेन तत्प्रकारकत्वमनुव्यवसायेन न गृह्यत इत्येव कल्प्यते,

अनन्यगतिकत्वात्, गृह्यते तु विशेष्यतावच्छेदकविशिष्टविशेष्यकत्वावच्छेदेन विशेषणप्रकारकत्वम्,
अत एवेति, ननु इमं घटत्वेन जानामि घटत्वेन घटं जानामीत्यनयोः को भेद इति चेत्, उच्यते, इमं घटत्वेन जानामीत्यत्रेदमः इदन्त्वेन भानं नतु घटत्वेनेति तत्र घटत्वसम्बन्धस्याऽभानान्न प्रामाण्यग्रहः, घटत्वेन घटं जानामीत्यत्र घटस्य घटत्वेन भानमिति तत्र घटत्वसम्बन्धभानात्प्रामाण्यग्रह इति जानीहि, अयं भावः, इदन्त्ववन्निष्ठविशेष्यतानिरूपितविशेष्यित्वावच्छेद्यघटत्वनिष्ठप्रकारतानिरूपितप्रकारिताप्रकारेण ज्ञानस्येमं घटत्वेन जानामीत्यनुव्यवसाये भानेपि घटत्ववन्निष्ठविशेष्यतानिरूपितविशेष्यित्वावच्छेद्यघटत्वनिष्ठप्रकारतानिरूपितप्रकारिताप्रकारेण ज्ञानस्य न भानं, तदेव च प्रामाण्यग्रहप्रयोजकम्, तद्रूपेण भानं तु घटत्वेन घटं जानामीत्यनुव्यवसाय एवेति तेनैव प्रामाण्यग्रहः, नतु पूर्वोक्तेनेति। घटमहं जानामीत्यनुव्यवसायानन्तरं घटज्ञानं प्रमा नवेति संशयान्यथानुपपत्त्या घटत्वविशिष्टघटनिष्ठविशेष्यताकत्वावच्छिन्नघटत्वनिष्ठप्रकारताकत्वलक्षणं प्रामाण्यमनुव्यवसायेन न गृह्यते, अत एव घटत्वेन घटं जानामीत्यनुव्यवसायो न भवति, गृह्यते चेदन्त्वविशिष्टनिष्ठविशेष्यताकत्वावच्छेद्यघटत्वनिष्ठप्रकारताकत्वं, तच्च न प्रामाण्यरूपम्, अत एवेमं घटत्वेन जानामीत्यनुव्यवसायो भवतीत्याशयेन समाधत्ते—अत्र वदन्तीति, परतः प्रामाण्यवादिन इति शेषः। अनभ्यासदशायामिति, अत्र अनभ्यासदशापन्नज्ञानगतप्रामाण्यं नानुव्यवसायग्राह्यम्, तदनन्तरं ज्ञानविशेष्यकसंशयप्रकारत्वयोग्यत्वात्, अप्रामाण्यवदित्यनुमानं पर्यवस्यति, तत्राभ्यासदशापन्नज्ञानगतप्रामाण्ये पक्षान्तर्गते भागासिद्धिस्स्यादिति तन्निवृत्तये अनभ्यासदशापन्नेति विशेषणम्, अनुव्यवसायानन्तरमित्यनेन ज्ञानलक्षणधर्मिज्ञानस्य प्रामाण्यसंशयं प्रति कारणत्वेन नानुव्यवसायात्प्राक् तत्संशय इति ज्ञापितम्, सर्वथैवानुपपत्तेरिति, तद्धर्मिविशेष्यकतदभावप्रकारकबुद्धित्वावच्छिन्नं प्रति तद्धर्मिविशेष्य-

कतत्प्रकारकनिश्चयस्य प्रतिबन्धकत्वेन प्रामाण्यनिश्चयसत्त्वे तत्तदभावप्रकारकसंशयज्ञानानुपपत्तिस्स्यादिति भावः। यद्यपि ज्ञाने प्रामाण्यनिश्चयो ज्ञानत्वरूपधर्मितावच्छेदकसामानाधिकरण्येन जायते, संशयस्तु ज्ञानत्वरूपधर्मितावच्छेदकसामानाधिकरण्येन प्रामाण्याभावस्य धर्मितावच्छेदकावच्छेदेन प्रामाण्यस्य चावगाहीति तयोः प्रतिबध्यप्रतिबन्धकभावाऽभावेन संशयानुपपत्तिर्न स्यात्, सामानाधिकरण्येन तद्धर्मिकतत्प्रकारकनिश्चयस्यावच्छेदकावच्छेदेन तद्धर्मिकतदभावप्रकारकसंशयम्प्रति प्रतिबन्धकस्य अवच्छेदकावच्छेदेन तद्धर्मिकतत्प्रकारकनिश्चयस्यापि च सामानाधिकरण्येनावच्छेदकावच्छेदेन वा तद्धर्मिकतदभावप्रकारकसंशयप्रतिबन्धकस्य प्रकृतेऽभावात्, तथापि विषयतासम्बन्धेन प्रवृत्तिं प्रति विषयतासम्बन्धेन ज्ञानत्वावच्छिन्नं कारणम्, तदपि प्रामाण्यसंशयास्कंदितं न, किन्तु तन्निश्चयविशिष्टमित्यभ्युपगतं मीमांसकैः, तथा च प्रवृत्त्युपयुक्तस्य ज्ञानत्वरूपधर्मितावच्छेदकावच्छेदेन प्रामाण्यग्रहस्य स्वतस्त्वे संशयानुपपत्तिर्दूषणं बोध्यम्, नच यैव ज्ञानग्राहकसामग्री सैव ज्ञानत्वस्येव प्रामाण्यस्यापि ग्राहिकेति प्रामाण्यग्राहकसामग्रीसत्त्वात्कथं तदग्रह इति वाच्यं, तत्राग्रिमसंशयानुरोधेन संशयजनकदोषस्यैव प्रामाण्यनिश्चयप्रतिबन्धकत्वकल्पनादिति ध्येयम्। अत्रैवानुभवानुरोधस्संवादकतयोपदर्शयति—

तेनेमं घटत्वेन जानामीत्यनुभवो न विरुध्यते, प्रमुष्टतत्तांशकस्य च स्मरणस्य घटं स्मरामि घटत्वेन वा स्मरामीत्यादिकोऽनुभवो, न तु घटं घटत्वेन स्मरामीत्यादिकः, तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोरनुपस्थितयोः प्रकारत्वायोगात्, सम्बन्धविधयैवानुव्यवसायेन ग्रहात्, तेन तत्प्रकारकः प्रामाण्यसन्देहो न विरुध्यत इति। तदिदमाह—न च तदपि, अननुसंहितोपाधेरुपहितप्रत्यक्षायोगात्। न च विषयोपधानमात्रं प्रामाण्यं, तदाभा-

ससाधारण्यात्,

तेनेममिति, तेन इदन्त्वविशिष्टविशेष्यकत्वस्य भानोपगमेन, अन्यथेममित्युल्लेखो न स्यादिति भावः। दोषादिवशात् प्रमुष्टतत्ताकं यत्र घट इति स्मरणं तत्र तदनुव्यवसाये नेदन्त्वादिवन्निष्ठविशेष्यताकत्वावच्छिन्नघटत्वनिष्ठप्रकारताकत्वं भासते, उक्तस्मरणस्य निरवच्छिन्नविशेष्यताकतयेदन्त्वादेर्विशेष्यतावच्छेदकस्याऽसम्भवेन तद्घटितस्याप्यऽसम्भवादिति विशेषणवद्विशेष्यताकत्वावच्छिन्नविशेषणप्रकारताकत्वस्य भानमेवाऽङ्गीकार्यं, तथा च तद्दृष्टान्तेनानुभवानुव्यवसायेपि तथाऽङ्गीकर्त्तव्यमित्यनुव्यवसायेन प्रामाण्यं गृह्यत एवेति तन्मतखण्डनार्थमाह प्रमुष्टतत्तांशकस्येति, घटं स्मरामीति, घटं स्मरामीत्यनुव्यवसाये स्मृत्यंशे प्रकारवाचितृतीयान्तपदसमभिव्याहाराऽभावतो द्वितीयाया विषयत्वार्थकत्वेन घटत्ववद्विषयकत्वस्य घटत्वेन स्मरामीत्यनुव्यवसाये च तृतीयायाः प्रकारत्वार्थकत्वेन घटत्वनिष्ठप्रकारताकत्वस्य भानं, न तु घटत्ववद्विशेष्यताकत्वावच्छेद्यघटत्वप्रकारताकत्वस्य, तथा च न तद्दृष्टान्तेनानुव्यवसाये प्रामाण्यग्राहकत्वस्य सिद्धिरिति भावः। पूर्वमनुव्यवसाये घटत्ववन्निष्ठविशेष्यताकत्वघटत्वनिष्ठप्रकारताकत्वयोर्भानं नाङ्गीकृतम्, अधुना विशिष्टबुद्धौ संसर्गज्ञानस्याऽकारणत्वेनानुपस्थितयोरपि तयोस्संसर्गविधया भानं सम्भवति, नतु प्रकारविधया, तज्ज्ञानस्य तत्र कारणत्वात्तस्य च पूर्वमभावादिति तत्पक्षमाश्रित्याह तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोरिति, तेन अनुव्यवसाये तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोस्संसर्गविधया भानेन, तत्प्रकारकः तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वप्रकारकः, न विरुद्ध्यते इति तदभावप्रकारकबुद्धित्वेन तत्प्रकारकसंशयं प्रति तत्प्रकारकस्यैव निश्चयस्य प्रतिबन्धकत्वात्, तस्य चात्राभावादिति भावः। उक्तार्थं संवदति तदिदमाहेति, नच तदपीति, अत्र स्फुरणमात्रमपि तावदस्तु स्वत इति चेत्, किं तेनेत्यनन्तरं नच

तदपीति ग्रन्थः, तथाच तत्पदेन स्फुरणमात्रपरामर्शात्प्रामाण्यस्य चानुषङ्गात्प्रामाण्यस्फुरणमात्रमपि न चेत्यर्थः। तत्र हेतुमाह अननुसंहितेति, अज्ञातविशेषणस्य पुरुषस्य विशिष्टबुद्ध्यभावात् प्रकृते प्रकारकत्वविशेष्यकत्वयोः पूर्वमज्ञातत्वेन न तद्विशिष्टानुव्यवसायप्रत्यक्षमित्यर्थः, उपहितप्रत्यक्षाऽयोगादिति—अत्र उपहितप्रत्ययायोगादिति पाठान्तरम्, नच विशेष्यविषयकत्वमात्रं प्रामाण्यं, येनानुव्यवसाये तज्ज्ञाने तज्ज्ञानं स्यादित्याह न चेति, निषेधे हेतुमाह तदाभासेति, विशेष्यविषयकत्वस्य प्रमाणाभासेऽपि सत्तयाऽतिप्रसक्तत्वेन प्रामाण्यरूपत्वाऽयोगादित्यर्थः। ननु तर्हि तत् किंरूपमित्याशङ्कायामाह—

अपि त्वनुभवस्य सतो भूतार्थोपधानं, न चार्थानुसन्धानेऽपि तस्य भूतत्वमनुसन्धीयते, आरोपितत्वव्यावर्त्तकविशेषानुसन्धानात्, अनुसंहितस्यारोपितत्वसाधारण्यात्, क्वचिद्विशेषोऽप्यनुसन्धीयत इति चेत्, न क्वापि प्राथमिकेन, अन्यथाऽनभ्यासदशायां तत्रापि सन्देहो न स्यात्, अभ्यासदशापन्ने त्वनुसन्धानं व्याप्तिग्रहजनितसंस्कारसमुद्भवप्रभवस्मरणबलेन भवत् प्रमाणान्तरशरीरे प्रविशतीति परत एवावशिष्यते, तत्राप्यनवस्थेति चेत्, न तावदसौ दृष्टान्तद्वारिका, प्रागेव तन्निश्चयात्,

अपि त्वनुभवस्येति, भूतार्थोपधानं यथार्थावगाहित्वं, तद्वन्निष्ठविशेष्यताकत्वे सति तन्निष्ठप्रकारताकत्वमिति यावत्, अत्र भूतार्थानुसन्धानमिति पाठान्तरम्, ननु रङ्गत्वेन रजतावगाहिनि रजतत्वेन च रङ्गावगाहिनि इमे रङ्गरजते इत्याकारकसमूहालम्बनभ्रमेऽपि रङ्गविशेष्यकत्वरङ्गत्वप्रकारकत्वयोः रजतविशेष्यकत्वरजतत्वप्रकारकत्वयोश्च सत्त्वेन तद्वद्विशेष्यकतत्प्रकारकानुभवत्वलक्षणप्रामाण्यमतिव्याप्तमिति चेत्, मैवम्, तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकानुभवत्वं प्रामाण्यमित्यर्थविवक्षणात्,

नचाऽननुगम इति वाच्यम्, प्रकारताविशिष्टप्रकारताकानुभवत्वे पर्यवसानात्, वैशिष्ट्यञ्च स्वतादात्म्यस्वविशिष्टनिरूपकतानिरूपिताधिकरणतावन्निष्ठविशेष्यतानिरूपितत्वोभयसम्बन्धेन, वैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वानवच्छेदकानवच्छिन्नत्वस्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन, स्ववृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन ग्राह्यम्, तत्र सामानाधिकरण्यसम्बन्धनिवेशाद्वह्नित्वनिष्ठप्रकारताविशिष्टघटत्वनिष्ठनिरूपकतामादाय घटे वह्नित्वप्रकारकज्ञाने नातिव्याप्तिः, स्वावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशात्समवायसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारताविशिष्टकालिकसम्बन्धावच्छिन्नवह्नित्वनिष्ठनिरूपकतामादाय तादृशनिरूपकताकाधिकरणतावति घटे वह्नित्वप्रकारकज्ञाने नातिव्याप्तिः, स्वानवच्छेदकानवच्छिन्नत्वनिवेशान्निरवच्छिन्नवह्नित्वनिष्ठप्रकारताविशिष्टसावच्छिन्नवह्नित्वनिष्ठनिरूपकतामादाय वह्नित्वत्वेन वह्नित्वविषयकज्ञानविशेष्यकविषयतासम्बन्धावच्छिन्ननिरवच्छिन्नवह्नित्वनिष्ठप्रकारताकज्ञाने नातिव्याप्तिः, स्ववृत्तित्वनिवेशाद्वह्नित्वत्वावच्छिन्नवह्नित्वनिष्ठप्रकारताविशिष्टनिरवच्छिन्नवह्नित्वनिष्ठनिरूपकतामादाय निरवच्छिन्नवह्नित्वनिष्ठविषयताकज्ञानविशेष्यके विषयतासंसर्गेण वह्नित्वत्वेन वह्नित्वप्रकारकज्ञाने नातिव्याप्तिः, स्वानवच्छेदकानवच्छिन्नत्वस्यापि साक्षात्परंपरासाधारणनिरूपित्वमङ्गीकृत्य स्वसामानाधिकरण्यस्वावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकतानिरूपितत्वसम्बन्धावच्छिन्नस्वाभाववत्त्वरूपत्वेन निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितवह्निनिष्ठप्रकारताविशिष्टसावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितवह्निनिष्ठनिरूपकतामादाय वह्नित्वत्वावच्छिन्नवह्नित्वनिष्ठावच्छेदकताकवह्निनिष्ठप्रकारताकज्ञानविशेष्यकविषयत्वसम्बन्धावच्छिन्ननिरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताकवह्निनिष्ठप्रकारकताज्ञाने नातिव्याप्तिः, सावच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितवह्निनिष्ठनिरूपकतायां निरवच्छिन्नवह्नित्वनिष्ठावच्छेदकतानिरूपितवह्निनिष्ठप्रकारताया उक्तो-

भयसम्बन्धेन स्वनिरूपितनिरवच्छिन्नवह्नित्वनिष्ठावच्छेदकताविशिष्टान्यवह्नित्वत्वनिष्ठावच्छेदकतानिरूपितत्वसम्बन्धेन सत्त्वेन तत्स-म्बन्धावच्छिन्नस्वाभाववत्त्वस्याभावात्, नन्वेवं तर्हि निरवच्छिन्नवह्नित्वनिष्ठप्रकारताया अवच्छेदकत्वाऽप्रसिद्ध्या स्वनिरूपितावच्छेद-कताविशिष्टान्यावच्छेदकतानिरूपितत्वस्य व्यधिकरणसम्बन्धत्वेन तत्सम्बन्धावच्छिन्नस्वाभाववत्त्वस्य केवलान्वयित्वेन तस्य साव-च्छिन्नवह्नित्वनिष्ठनिरूपकतायामपि सत्त्वात्तत्र तेन सम्बन्धेनोक्तप्रकारताया अपि सत्तया तादृशनिरूपकतामादय वह्नित्वत्वेन वह्नि-त्वप्रकारकज्ञानविशेष्यके निरवच्छिन्न वह्नित्वप्रकारकज्ञानेऽतिव्याप्तिस्तदवस्थैवेति चेत्, मैवम्, तस्य स्वनिरूपितावच्छेदकतावत्त्वसम्ब-न्धावच्छिन्नस्वाभाववदवच्छेदकत्वाऽनिरूपितत्वे एव पर्यवसानात्, तथा च स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धस्य निरवच्छिन्नवह्नि-त्वनिष्ठप्रकारताया व्यधिकरणत्वेन तेन सम्बन्धेन तदभावस्य वह्नित्वत्वनिष्ठावच्छेदकतायां सत्त्वेन तन्निरूपितत्वमेव वह्नित्वनिष्ठनि-रूपकतायां वर्त्तत इत्युक्तसम्बन्धाभावान्न सावच्छिन्ननिरूपकता निरवच्छिन्नप्रकारताविशिष्टेति नातिव्याप्तिरित्यलं पल्लवितेन, तस्य विशेष्यरूपार्थस्य, भूतत्वं यथार्थत्वम्, विशेष्यगताऽसाधारणधर्मरूपमिति यावत्, नन्वर्थवत्तदप्यनुसन्धीयतामतआह आरोपित-त्वेति, प्रकारगतं यदारोपितत्वं तद्व्यावर्त्तकस्य विशेषस्य पूर्वं ज्ञानाभावादित्यर्थः। भ्रमीयविशेष्ये विशेषणमारोपितं, तस्य विशेष्य-तावच्छेदकसामानाधिकरण्याभावात्, प्रमीयविशेष्ये चानारोपितम्, उक्तवैपरीत्यात्, विशेषणवत्त्वेन वाऽनारोपितं विशेष्यं तत्र तस्य सत्त्वात्, ततश्चेदं नारोपितमिति ज्ञानं यदा स्यात् तदा स्याद्यथार्थत्वग्रहः, तच्च विशेषदर्शनमन्तरा न, विशेषदर्शनं च नास्तीति न यथार्थत्वानुसन्धानमितिभावः । नच ज्ञायमानमिदन्त्वमेव विशेषः, तस्यारोपितानारोपितोभयवृत्तित्वादित्याह अनुसंहितस्येति, आरोपितत्वसाधारण्यात् विशेषणवत्त्वेनारोपितं यद्विशेष्यं तत्त्वस्यापि सामानाधिकरण्यात्, अनुसंहितस्य चारोपसाधारण्यादि-

त्यपि पाठः । प्राथमिकेनेति ज्ञानेनेतिशेषः, संदेहः प्रामाण्यसंदेहः, यदि ज्ञानस्य प्रामाण्यं येनैवानुव्यवसायेन ज्ञानं गृह्यते तेनैव गृह्यते इति स्वतो ग्राह्यं स्यात्तदा प्रामाण्यसन्देहो नं स्यादिति तदन्यथानुपपत्त्याऽनभ्यासदशोत्पन्ने ज्ञानेऽनुव्यवसायेन यथार्थानुसंधानलक्षणप्रामाण्यग्रहो मास्तु अभ्यासदशापन्ने ज्ञाने तु स स्यादेव, तदुत्तरं प्रामाण्यसंदेहस्यैवाभावादित्याशङ्कायामाह—अभ्यासदशापन्न इति, प्रमाणान्तरशरीरें प्रविशतीति अनुमानरूपं भवतीत्यर्थः, तथाच तत्रापि नानुव्यवसायेन यथार्थत्वानुसंधानं, किन्तु प्रमाणान्तरेणैवेति, एतावता प्रबन्धेन न स्वयं स्वग्राहकेण वा प्रामाण्यविशिष्टप्रतीतिरिति सिद्धं मीमांसकमतेऽप्रामाण्यनिष्टङ्कनम्, कथन्ता तु निरूप्यते स्वतः परतो वेतीति विकल्पद्वयं प्राकृतं तत्र मीमांसकमतावलम्ब्याद्यविकल्पनिरासे न्यायमतावलम्बिद्वितीयविकल्प एवाऽवशिष्यते इत्याशयेनाह परत एवावशिष्यत इति, मीमांसकश्शङ्कते तत्रापीति, अनवस्थेयं दृष्टान्तद्वारिका फलद्वारिका धर्मिलिङ्गद्वारिका वाऽऽपाद्यते, तत्र नाद्येत्याह न तावदसाविति, असौ अनवस्था, निषेधे हेतुमाह—प्रागेवेति प्रकृतज्ञानधर्मिकप्रामाण्यानुमानात्पूर्वमेवेत्यर्थः । तन्निश्चयात्, दृष्टान्तगतप्रामाण्यनिश्चयात् । एतदेव विवृणोति—

अयमर्थः—इदं प्रमाणं यथार्थं वा एतज्जातीयत्वात् गुणवत्कारणजन्यत्वाद्वा सम्प्रतिपन्नवदित्यनुमानप्रामाण्यावगमे दृष्टान्तीभूतज्ञानप्रामाण्यावगमेऽप्यनुमानान्तरापेक्षा स्यात्, तत्रापि दृष्टान्तेऽनुमानान्तरापेक्षेत्येवं दृष्टान्तद्वारिकाऽनवस्था वाच्या, सा चानुमानप्रवृत्तेः प्रागेव दृष्टान्तीभूतज्ञानप्रामाण्यनिश्चयान्नावतरति, प्रागतन्निश्चये च प्रवृत्तिसामर्थ्येनार्थस्य भूतत्वमवगम्य तदुपाधिकस्य प्रामाण्यस्य ज्ञानग्राहकेणैव प्रतीतेरिति । तदुक्तं—प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणमिति ।

अयमर्थ इति, अनुमानप्रामाण्यावगमे अनुमानेन प्रामाण्यावगमे, प्रवृत्तिसामर्थ्येनेति प्रवृत्तिसामर्थ्यम् अर्थप्राप्तिनिबन्धनत्वम् तेनेत्यर्थः। अर्थस्य भूतत्वमवगम्येति, अनुमानप्रयोगश्चात्र अयं घटत्ववान् घटत्वप्रकारकसंवादिप्रवृत्तिविशेष्यत्वात् घटत्वप्रकारकसंवादिप्रवृत्तिजनकज्ञानविशेष्यत्वाद्वा यो यो यत्प्रकारकसंवादिप्रवृत्तेस्तज्जनकज्ञानस्य वा विशेष्यः स स तद्वान् यथा जलत्वप्रकारकसंवादिप्रवृत्तेस्तज्जनकज्ञानस्य वा विशेष्यं जलम्, यन्नैवं तन्नैवम्, यथा घटत्वप्रकारकविसंवादिप्रवृत्तेस्तज्जनकज्ञानस्य वा विशेष्यः पटादिरित्यादिरूपो बोध्यः। तदुपाधिकस्य भूतार्थोपाधिकस्य, तदुक्तमिति, न्यायभाष्ये इति शेषः। प्रमाणतोऽर्थप्रतिपत्ताविति प्रत्यक्षाद्यन्यतमप्रमाणेन जलज्ञाने सति जलविषयकप्रवृत्तौ सत्यां जललाभे सति प्रवृत्तिस्संवादिनीत्यवगतिः, ततश्च प्राथमिके जलज्ञाने संवादिप्रवृत्तिजनकत्वज्ञाने सति पूर्वोत्पन्नं जलज्ञानं यथार्थं संवादिप्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं, यथा मरुमरीचौ जलज्ञानमित्यनुमानेन प्रामाण्यमनुमीयत इत्यर्थः। नापि द्वितीयेत्याह—

अनुमानफलीभूतानुमितिप्रामाण्यावगमेऽप्यनुमानान्तरापेक्षेत्येवं फलद्वारिका तु सा स्यात्, यद्यवश्यज्ञेयं प्रामाण्यमभ्युपेयेत। अज्ञातप्रामाण्येन कथं परप्रामाण्यवेदनमिति चेत्, यथा विषयसंवेदनं, धर्मिणि विपरीतकोट्यनुल्लेखिज्ञानं निश्चयः, स चाप्रामाण्यग्रहानाक्रान्तस्तत्तत्कार्यमर्जयति, क्वचिच्चाप्रामाण्यशङ्कोत्सारकत्वेन प्रामाण्यनिश्चय उपयुज्यते, न तु तेन विना तस्य स्वविषयत्वमेवापैति, तथात्रापि भावनीयम्। अन्यथा प्रामाण्यनिश्चयस्यापि तथात्वार्थं प्रामाण्यनिश्चयानुसरणेऽनवस्थाप्रसङ्गादिति भावः।

अनुमानफलीभूतेति, यद्यवश्यज्ञेयमिति यद्यवश्यनिश्चेयमिति पाठान्तरम्, यथा विषयसंवेदनमिति, अस्यैव भावा-

र्थमाह धर्मिणीति, अत्र सप्तम्याः विशेष्यत्वार्थकत्वेन तस्य च निरूपकत्वसम्बन्धेन ज्ञानेऽन्वयान्निरूपकत्वसम्बन्धेनेदन्त्वावच्छिन्नविशेष्यताविशिष्टं तादृशविशेष्यतानिरूपकं वेत्यर्थः, विपरीतकोट्यनुल्लेखिज्ञानमिति यत्प्रकारको निश्चयस्तद्विपरीतकोटिस्तदभावस्तदनुल्लेखि तदप्रकारकं ज्ञानमित्यर्थः। इदन्त्वावच्छिन्नघटविशेष्यकं घटत्वाभावाऽप्रकारकत्वे सति घटत्वप्रकारकं ज्ञानं घटनिश्चयः, एवं पटादिनिश्चयोपि ज्ञेयः, स चेदं ज्ञानं प्रमेति प्रामाण्यग्रहे सत्यसति वा स्वविषयसिद्धिप्रवृत्त्यादिकार्यकारी इदं ज्ञानमप्रमेत्यप्रामाण्यग्रहे च सति न भवतीति तत्राप्रामाण्यग्रहाभाव एवापेक्षित इत्याशयेनाह स चेति, ननु तर्हि किमर्थं प्रामाण्यनिश्चयगवेषणमिति चेत्, जाताया अप्रामाण्यशङ्काया निवृत्त्यर्थमित्याह क्वचिच्चेति, तेन विना, प्रामाण्यनिश्चयेन विना। तस्य विषयसंवेदनात्मकनिश्चयस्य, तथाऽत्राऽपीति इदं ज्ञानं प्रमाणमित्यनुमितिरप्यप्रामाण्यग्रहानास्कन्दितैवार्थज्ञाननिष्ठप्रामाण्यात्मकस्वविषयनिश्चायिका, नतु तत्रानुमानान्तरेण प्रामाण्यनिश्चयोऽप्यपेक्षितः, येनानवस्था स्यादित्यर्थः। तथानभ्युपगमे दोषमाह—अन्यथेति, तथात्वार्थं प्रामाण्यनिश्चयत्वार्थम्। पक्षस्य हेतोश्च निश्चयाऽभावेऽनुमितिर्नोत्पद्यते इति तदर्थं तन्निश्चयोऽप्यपेक्षणीयः, सच प्रामाण्यनिश्चयमन्तरेण न स्वकार्यकारीति तदर्थं प्रामाण्यनिश्चयोऽप्यपेक्षणीयः, स चानुमानान्तरादेव, अनुमानान्तरमपि प्रामाण्यसंशयास्कन्दितं न स्वविषयनिश्चायकमिति तत्रापि प्रामाण्यनिश्चयोऽपेक्षणीयः, सोप्यनुमानान्तरादेवेत्येतं धर्मिद्वारिका लिङ्गद्वारिका चानवस्था तृतीयकल्पसङ्गृहीता स्यादितिशङ्कते—

अस्तु तर्हि धर्मिलिङ्गद्वारिका, ताभ्यामनिश्चिताभ्यामननुमानात्, तन्निश्चयस्य प्रामाण्यनिश्चयमन्तरेणानुत्पत्तेरप्रामाण्यशङ्काकलङ्कितत्वात्, न, द्वैताभावात्, यत्र हि लिङ्गज्ञाने धर्मिज्ञाने च तथ्यातथ्यभावेन द्वैतमु-

पलभ्यते, तत्र तथात्वानिश्चये लिङ्गाभासशङ्काऽऽक्रान्ततया न निश्चीयते, यत्र तु तज्ज्ञानं तदेकनियतं, तत्र तावतैव लिङ्गनिश्चयः, तदाभासशङ्कानुत्थानात्, एककोटिनियतो ह्यनुभवो निश्चयः।

अस्तु तर्हीति, द्वैताभावादिति अनुमितौ हि पक्षज्ञानं लिङ्गज्ञानं च कारणमितीदं जलज्ञानं प्रमात्मकं संवादिप्रवृत्तिजनकत्वादित्यत्र जलज्ञानस्य धर्मिणो ज्ञाने समुत्पन्ने तस्य जलज्ञानत्वरूपैककोटिनियतत्वेन जलं जानामि न वेति जलज्ञानतदभावप्रकारकसंशयो जलं न जानामीति जलज्ञानाभावप्रकारकविपर्ययश्च सचेतसः पुरुषस्य न भवतः, एवं संवादिप्रवृत्त्युत्तरं संवादिप्रवृत्तिजनकत्वरूपलिङ्गज्ञाने समुत्पन्ने तस्य संवादिप्रवृत्तिजनकत्वरूपैककोटिनियतत्वेनेदं ज्ञानं संवादिप्रवृत्तिजनकं न वा न संवादिप्रवृत्तिजनकमितिसंशयविपर्ययौ न भवतः, तथा च तत्र जलज्ञानरूपपक्षस्य ज्ञानं संवादिप्रवृत्तिजनकत्वरूपहेतोश्च ज्ञानं द्वैताभावादेव विपरीतकोट्यनालम्बनत्वेन निश्चयरूपमेवेति न तत्रानुमित्युपयुक्ततया प्रामाण्यनिश्चयापेक्षेति वस्तुस्थितिः, तथानभ्युपगमे तु भट्टमतेऽपि ज्ञाततारूपलिङ्गज्ञानस्याप्रामाण्यसंशयान्न तेन लिङ्गनिश्चय इति तन्निश्चायकमन्यदेषितव्यं तदप्यप्रामाण्यसंशयान्दोलितं विषयसंशयरूपमिति न निश्चायकमिति तन्निश्चायकान्तरान्वेषणेऽनवस्था स्यादेव, प्रत्यक्षेण लिङ्गनिश्चयः, तस्य च स्वसत्त्वैव निश्चायकत्वमुभयत्र तुल्यमेवेति न तदपि विनिगमकमिति भावः। तस्यैव विवरणमाह यत्र हि लिङ्गेत्यादिना, धूमज्ञानं धूमेऽधूमे च भवतीति पर्वते प्रकृतं जायमानं ज्ञानं किं धूमत्वेन धूमविषयं किं वा धूमत्वेन धूलिपटलविषयमिति संशयस्य धूमत्वेन धूलिपटलविषयमेवेति विपर्ययस्य च यत्र सद्भावस्तत्र धूमज्ञाने प्रामाण्यनिश्चयाभावे प्रामाण्यसन्देहबलेन तद्विषयेपि संदेहसद्भावात्तस्य ज्ञानस्य निश्चयरूपत्वाभावेनानुमितिसाधकत्वं न सम्भवतीति तत्र धूमज्ञाने प्रामाण्यनिश्चय आवश्यक एव, एवं पर्वतादि-

पक्षज्ञानमपि प्रमाऽप्रमाभेदेन द्विविधं भवतीति तत्रापि क्वचित्संशये सति प्रामाण्यनिश्चय आवश्यक एव, यत्र तु लिङ्गज्ञानं पक्षज्ञानं च सत्यत्वेनैककोटिनियतमेव भवति तत्र लिङ्गांशे पक्षांशे च संशयविपर्ययाऽभावेन तज्ज्ञानेऽपि प्रामाण्यसन्देहाभावात् निश्चयत्वमेवेति न तत्र प्रामाण्यनिश्चय आवश्यकः, यथा घटज्ञानं यथार्थं संवादिप्रवृत्तिजनकत्वादित्यत्र घटज्ञानज्ञाने जाते घटज्ञानं जातं न वा न जातमेवेति संशयविपर्ययौ न कस्यापि सचेतसो भवतः, एवमेव संवादिप्रवृत्तिजनकत्वरूपलिङ्गज्ञानेऽपि ज्ञेयम्, तथा चोक्तपक्षलिङ्गज्ञानयोर्निश्चयरूपत्वादेव प्रामाण्यानुमितिसाधकत्वेन तत्र न प्रामाण्यनिश्चयापेक्षेतिभावः। लिङ्गद्वारिकाऽनवस्था नेत्युपपाद्य पक्षद्वारिकाऽपि सा नेत्युपपादनायाह—

ज्ञानतद्धर्मिग्राहिणि च ज्ञाने न द्वैतमिति व्यवस्थितिरेव, जागरसाक्षात्कारमधिकृत्य, प्रामाण्यनिश्चयस्तु तस्यापि परत एवेति न्यायसम्प्रदायः। इत एव विशेषात् तादृशस्य स्वत एवेति तात्पर्याचार्याः। विशेषदर्शनग्रस्तत्वेनाप्रामाण्यशङ्कानुदयादनुमानस्य निरस्तसमस्तविभ्रमाशङ्कस्य स्वत एव प्रामाण्यमिति टीकोक्तेरविरोध इत्यर्थः। विशेषो व्याप्यवति व्यापकज्ञानत्वं, तच्च लिङ्गोपहितलैङ्गिकभानादनुव्यवसायगम्यमिति।

ज्ञानतद्धर्मिग्राहिणीति, ज्ञानरूपो यो हेतुधर्मी तद्ग्राहिणीत्यर्थः। न द्वैतम्, न तथ्यातथ्यभावेन द्वैतम्, स्वप्नदशायां काकतालीयन्यायेन कस्यचिज्ज्ञानस्य तथ्यत्वेपि बहुधाऽतथ्यत्वादेव प्रवृत्तिनिवृत्त्योरपि विसंवादिरूपत्वादेव चाप्रामाण्यशङ्कासंवलितत्वेनार्थज्ञानात्मकस्य पक्षस्य ज्ञाने संवादिप्रवृत्तिजनकत्वात्मकस्य हेतोर्ज्ञाने च प्रामाण्यनिश्चयोऽपेक्षितव्यः, न तथा जाग्रद्दशायां, येनानवस्था स्यादित्याशयेनाह जागरसाक्षात्कारमिति, ननु सर्वं पक्षज्ञानं हेतुज्ञानं च ज्ञानत्वरूपैककोटिनियतमिति ज्ञानत्वतदभाव-

कोटिमादाय तत्र ज्ञानत्वं वर्त्तते न वेति संशयो माभूत्, न चोक्तज्ञानं प्रमात्वरूपैककोटिनियतं, कस्यचित्पक्षज्ञानस्य हेतुज्ञानस्य च प्रमात्मकत्वेन कस्यचिच्चाप्रमात्मकत्वेनानुभवादिति प्रामाण्याऽप्रामाण्यकोटिद्वयसद्भावेन तत्प्रकारकपक्षज्ञानविशेष्यकहेतुज्ञानविशेष्यकसंशयस्तु स्यादेवेत्यर्थज्ञानरूपपक्षस्य ज्ञानेऽपि संवादिप्रवृत्तिजनकत्वरूपहेतोर्ज्ञानेपि च प्रामाण्यनिश्चयोऽनुमानान्तरादेवाभ्युपगन्तव्य इति प्रामाण्यग्रहः परत एव स्यादिति चेत्, भवतु का नाम युक्तिसिद्धे नो हानिः, न चैवं तर्ह्यनवस्थेति वाच्यम्, पक्षादिज्ञानमात्रमनुमित्यङ्गं, तत्र प्रामाण्यसंशये सति तन्निश्चयः कर्त्तव्यः, नच सर्वत्र तथेति तस्यानुमित्यनङ्गत्वेन तदभावेऽप्यर्थज्ञानधर्मिकप्रामाण्यानुमितिसम्भवादित्याशयवतां प्राचाम्मतमाह प्रामाण्यनिश्चयस्त्विति, तस्यापि जागरसाक्षात्काररूपलिङ्गधर्मिज्ञानस्यापि, अपिना अनुमानफलीभूतानुमितेरुपग्रहः। इत एव विशेषादिति, द्वैताभावेनैककोटिनियतत्वविशेषादेवेत्यर्थः, तद्व्याप्यवतिधर्मिणि तत्तदभावरूपद्वैतस्य सम्भवे तद्व्याप्यवत्त्वमेव न स्यादितिभावः। तादृशस्य विशेषदर्शननियतस्य, अस्यैव फलितमाचार्योक्त्युपनिबन्धनेनाह विशेषदर्शनग्रस्तत्वेनेति, टीकोक्तेः न्यायवार्त्तिकतात्पर्यटीकोक्तेः, ननु प्रामाण्यरूपैककोटिनियतः किं लक्षणो विशेष इत्याशङ्कायामाह विशेष इति, अयम्भावः अनुमितौ लिङ्गभानपक्षे लिङ्गोपहितलैङ्गिकस्यैवानुमितौ भासमानतया वह्निव्याप्यधूमवान् पर्वतो वह्निमान् इत्येवानुमितिः, तदनुव्यवसायोऽपि वह्निव्याप्यधूमवति पर्वते वह्निमनुमिनोमीत्याकारक एव, तत्र च भासमानस्य व्याप्यवति व्यापकज्ञानत्वस्य व्यापकवति व्यापकप्रकारकत्वव्याप्यत्वाद् वह्निव्याप्यधूमवान् पर्वतो वह्निमान् इत्यनुमितिः प्रमारिमकैवेति तेन निश्चीयते, यतः पर्वते वह्निव्याप्यस्य धूमस्य सत्त्वे तद्व्यापकस्य वह्नेरवश्यं सत्त्वमिति वह्निव्याप्यधूमवति पर्वते वह्न्यभावो नास्तीत्यवधार्यते, तथा चोक्तानुमितिर्वह्निमत्येव पर्वते वह्निप्रकारिका, नतु तदभाववति तत्प्रकारिकेति तद्गत-

प्रामाण्यस्य तद्वति तत्प्रकारकत्वलक्षणस्याऽनुव्यवसायग्राह्यत्वेऽपि तस्यानुव्यवसायस्य व्याप्यवति व्यापकज्ञानत्वरूपप्रामाण्यनियतधर्मावगाहित्वेन विशेषदर्शनरूपतयाऽप्रामाण्यसंशयं प्रति प्रतिबन्धकत्वेन तदनुदयान्निरस्तसमस्तविभ्रमाशङ्केऽनुमाने प्रामाण्यनिश्चयोऽनुमानान्तरानपेक्षणात्स्वत एवेति, ननु पक्षज्ञानादौ किमिति न प्रामाण्यसंशयः, स्थाणावपि पुरुषेऽपि चोच्चैस्तरत्वं वर्त्तते, तथा चायमप्युच्चैस्तर इति साधारणधर्मरूपेण पुरोवर्त्तिधर्मिणो ज्ञाने किमयं स्थाणुर्वा पुरुषो वेति संशयः प्रादुर्भवतीति संशयं प्रति साधारणधर्मज्ञानं कारणमिति, अत्र भ्रमप्रमासाधारणधर्मस्य विरहेण किं तज्ज्ञानाभावात् उत स्थाणुत्वव्याप्यकोटरादिमत्त्वस्य पुरुषत्वव्याप्यकरादिमत्त्वस्य वा दर्शने न संशय इति संशयप्रतिबन्धकीभूतस्य विशेषदर्शनस्यात्र सद्भावादिति विकल्पयति—

ननु धर्मिज्ञानादौ कुतो न प्रामाण्यसंशयः, किं साधारणधर्मविरहादुत विशेषदर्शनात्, नाद्यः, ज्ञानत्वादेरेव सत्त्वात्, विशेषश्च प्रामाण्यं, तस्य दर्शनं चानुमितिः, सा च पक्षतादिज्ञानसापेक्षा, तत्रापि चाप्रामाण्यशङ्कानिरासस्तत्प्रामाण्यानुमितेरित्येवमनवस्था दुर्वारा, एवम्भूतमेवैककोटिनियतमित्यस्य दुर्ग्रहत्वादिति चेत्, न, नहि कोटिनिश्चय एव विपरीतशङ्काप्रतिबन्धक इति ब्रूमः, अपि तु व्याप्यादिदर्शनमपि, व्याप्तिज्ञानस्य च प्रकृतेऽनुव्यवसायधर्मिज्ञानादौ विशिष्याप्रवृत्तावपि सर्वोपसंहारेण यमुपाधिमादाय प्रवृत्तिस्तद्धर्मवत्त्वात् प्रवृत्तिः, तज्जातीयत्वं हि तत्रोपाधिः, तच्च तत्राप्यविशिष्टम्. अनुव्यवसायत्वात्,

ननु धर्मिज्ञानादाविति, ज्ञानत्वादेरिति ज्ञानत्वसविषयकत्वादिकं प्रमायां भ्रमेपि च वर्त्तते इति तस्यैव साधारणधर्मत्वेन धर्मिज्ञानादौ सत्त्वादेवेत्यर्थः। विशेषदर्शनपक्षेपि दोषमाह विशेषश्चेति, संशयैककोटेर्विशेषत्वमाश्रित्योक्तं प्रामाण्यमिति,

पक्षताद्वीति पक्षधर्मताद्वीत्यर्थः, आदिपदेन व्याप्त्यादेरुपग्रहः, तत्रापीति पक्षधर्मतादिज्ञानेऽपीत्यर्थः। एवंभूतमिति धर्मिज्ञानादि प्रामाण्यात्मकैककोटिनियतमेवोपजायत इति तत्प्रामाण्यं तद्ग्राहकसामग्र्या गृह्यत एवेत्येवं ज्ञातुमशक्यमिति कुतो न प्रामाण्यसंशय इति भावः। द्वितीयपक्ष एवाश्रीयते, तत्र विशेषोऽपि न संशयैककोटिप्रामाण्यात्मक एव, किन्तु तद्व्याप्यादिरपि, तद्दर्शनान्न प्रामाण्यसंशय इत्याशयेन समाधत्ते, न, नहीति, व्याप्यादिदर्शनमपीति, अत्र लिङ्गव्यत्यासेन विपरीतशङ्काप्रतिबन्धकमित्यनुषज्यते। प्रकृतेऽनुव्यवसायधर्मिज्ञानादौ तदनुव्यवसायव्यक्तित्वेन सहैककोटिनियतत्वस्य यद्यपि अन्यत्र सहचारादिग्रहाभावाद् व्याप्तिज्ञानं न संभवति, तथापि यद्यदनुव्यवसायजातीयं तत्तदेककोटिनियतं यथासंप्रतिपन्नोऽनुव्यवसायः, अनुव्यवसायजातीयं न प्रकृतधर्मिज्ञानमित्येवं तत्सम्भवत्येवेत्याह व्याप्तिज्ञानस्येति, अस्याऽप्रवृत्तावपीत्यनेन प्रवृत्तिरित्यनेन चान्वयः, विशिष्येति तत्तद्व्यक्तित्वादिरूपेणेत्यर्थः। यमुपाधिमादायेत्यत्रोपाधेरनुगतधर्मार्थत्वात् स क इत्याशङ्कायामाह तज्जातीयत्वं हीति, यथानुव्यवसायजातीयत्वं विषयांशे प्रामाण्यरूपैककोटिनियतं तथा धर्मिज्ञानत्वं व्याप्यवद्विशेष्यकव्यापकज्ञानत्वं च प्रामाण्यरूपैककोटिनियतमिति धर्मिज्ञाने वह्निव्याप्यधूमवत्पर्वतविशेष्यकवह्निप्रकारकानुमितौ च प्रामाण्यनिश्चयादेव न प्रामाण्यसंशय इत्याशयेनाह—

इदमुपलक्षकं धर्मिज्ञानत्वव्याप्यवद्विशेष्यकव्यापकज्ञानत्वयोर्द्वयोरपीति दीधितिकारः। धर्मिलिङ्गज्ञानयोरप्यनुव्यवसायजातीयस्यैककोटिनियतत्वेन व्याप्तिग्रहणादेककोटिनियतत्वं निश्चीयत इति नारायणः। सामान्यतः प्रमाणत्वनिश्चयेऽपि विशेषतः कथं न सन्देह इति चेत्, यथा धूमत्वावच्छेदेन वह्निव्याप्यत्वनिश्चयेऽयं धूमो वह्निव्याप्यो न वेति, यथा वा करचरणादिकं स्थाणुत्वाभावव्याप्यमिति निश्चये करचरणादिमानिति ग्रहेऽयं

स्थाणुर्न वेति न संशय इति, यथा च वाचकः शब्द इति स्वात्मनो वाचकत्वं न साक्षाद्विधत्ते, वृत्तिविरोधात्, तथापि सामान्येन यमुपाधिमधिकृत्य प्रवृत्तस्तद्वत्त्वात् शब्दशब्दो वाचको न वेति शङ्कया न परिभूयते, नाप्यनवस्थेति, एवमिहापीति,

इदमुपलक्षकमिति। इदं तज्जातीयत्वम्। यद्यदनुव्यवसायजातीयं तत्तदेककोटिनियतम्, अनुव्यवसायजातीयं च प्रकृतधर्मिज्ञानं लिङ्गज्ञानं च तस्मादेककोटिनियतमित्येवं प्रामाण्यं निश्चीयते इति नारायणमतमुपदर्शयति धर्मिलिङ्गज्ञानयोरिति, यद्यपि शब्दशब्देन घटपटादिशब्दानामेव ग्रहणं, नतु शब्द इति शब्दस्य, स्वात्मनि स्वस्य शक्तिरूपसम्बन्धविरहात्, तथापि शब्द इति शब्दः शक्तिमत्त्वावच्छिन्ने वर्त्तत इति वाचकश्शब्द इत्यस्यैतदर्थविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपितस्वीयविशेष्यतासम्बन्धेन शक्तिमान् वाचक इत्यर्थः, तथा चोक्तसम्बन्धेन शक्तिमत्त्वेन रूपेण घटपटादिशब्दानामिव शब्दशब्दस्यापि वाचकत्वं सिद्ध्यतीति शब्दशब्दो वाचको न वेति न शङ्कासमुद्भव इत्याह—यथा च वाचक इति। स्वात्मनः शब्दशब्दस्य, उपाधिमिति शक्तिमत्त्वाद्युपाधिमित्यर्थः, यदेककोटिनियतं तत्प्रमात्मकमित्यत्र व्याप्तिग्राहकतर्कानाह—

भवन्ति चात्र तर्काः यदि धर्मिज्ञानं व्यभिचरेत् तद्विषयकं न स्यादित्यर्थः, निरालम्बनमसदालम्बनं वा भवेत्, निरालम्बनमिति स्वमतेन, असदालम्बनमिति बौद्धनयेन, निषिद्धं च तत्, अत्रापादके ज्ञानत्वे सतीति द्रष्टव्यम्, तेन न घटादौ व्यभिचारः, अन्यतरत्वेनापाद्यतेत्यपि कश्चित्, यद्यनुव्यवसायो व्यभिचरेत् ज्ञानविषयको न स्यादित्यर्थः। अर्थकर्मको न स्यात्,

भवन्ति चात्रेति यदि धर्मिज्ञानं व्यभिचरेत्तदा निरालम्बनमसदालम्बनं वा भवेदिति तर्कघटकीभूतस्यापादकस्य व्यभिचरेदित्यस्यार्थमाह तद्विषयकमिति धर्मिविषयकमित्यर्थः। निरालम्बनमिति निर्विषयं भवेदित्यर्थः, स्वमतेन न्यायमतेन, ननु न्यायमते निर्विषयत्वं न क्वचित्प्रसिद्धमिति कथं ज्ञाने तदारोपयितुं शक्यमिति चेत्, घटादावेव तत्प्रसिद्धमिति जानीहि। बौद्धनयेनासत्ख्यात्यङ्गीकारान्नारोप्याऽप्रसिद्धिर्दोषावहेत्याशयेनाह असदालम्बनमिति। नचास्ति निरालंबनमसदालंबनं वा धर्मिज्ञानं, तस्मान्न व्यभिचारीत्याह निषिद्धमिति। बौद्धमते व्यभिचरेदित्यापादके ज्ञानत्वे सतीति विशेषणेन घटादावसदालम्बनत्वस्यापाद्यस्याऽभाववति धर्मिविषयकत्वाभावरूपव्यभिचारित्वस्यापादकस्य सत्त्वेऽपि न व्यभिचार इत्याह तेनेति। यदि धर्मिज्ञानं व्यभिचरेत्तदा निरालम्बनत्वासदालम्बनत्वान्यतरवत्स्यात्, नच घटादौ व्यभिचारः, अन्यतरान्तर्गतस्य निरालम्बनत्वस्य तत्र सत्त्वात् इत्येवमर्थं धर्मिज्ञानं व्यभिचरेन्निरालम्बनमसदालम्बनं वा भवेदित्यस्य कश्चिदाहेत्याह अन्यतरत्वेनेति। यद्यनुव्यवसायो व्यभिचरेत्तदाऽर्थकर्मको न स्यादिति तर्के आपादकस्यार्थमाह ज्ञानविषयक इति, आपाद्यस्यार्थमाह—

अर्थप्रकरणकर्मको न स्यादित्यर्थः। इच्छादेरप्यर्थप्रकरणतामते तु इच्छाद्यविषयकत्वेनापादकं विशेषणीयम्, यदि तज्जातीयं व्यभिचरेदव्यभिचारो न क्वचिद्व्यवतिष्ठेत, तज्जातीयं व्याप्यवति व्यापकज्ञानं गन्धवति पृथिवीत्वप्रकारकं ज्ञानं, यदि पृथिव्यां पृथिवीत्वप्रकारकं न स्यात् गन्धवति पृथिवीत्वप्रकारकं न स्यात्, यदि पृथिवीमात्रविशेष्यकं न स्यात् गन्धवन्मात्रविशेष्यकं न स्यात्, यदि पृथिवीविशेष्यकं न स्यात् गन्धवद्विशेष्यकं न स्यादित्यादीत्यर्थः।

अर्थप्रकरणेति, अर्थविषयकविषयको न स्यादित्यर्थः । इच्छादेरप्यर्थविषयकतामते तदनुव्यवसायस्य ज्ञानविषयकत्वं नास्ति अर्थविषयकेच्छाविषयकत्वं च वर्त्तत इति व्यभिचारस्स्यात्तन्निवृत्त्यर्थमाह इच्छाद्यविषयकत्वेनेति, तथा च अनुव्यवसायो यदीच्छाद्यविषयकत्वे सति ज्ञानविषयको न स्यात् अर्थविषयकविषयको न स्यादिति तर्कः पर्यवसितः, यदेककोटिनियतं तत्प्रमात्मकमेवेत्युक्तव्याप्तावेव तर्कान्तरबलमप्याह यदि तज्जातीयमित्यादि, तज्जातीयमित्यस्य फलितार्थकथनं व्याप्यवति व्यापकज्ञानमिति, तस्यैव विशेषतस्स्वरूपमाह गन्धवति पृथिवीत्वप्रकारकं ज्ञानमिति, यदि व्यभिचरेदित्यापादकस्य पर्यवसितस्वरूपमाह—यदि पृथिव्यां पृथिवीत्वप्रकारकं न स्यादिति, अव्यभिचारो न क्वचिद् व्यवतिष्ठेतेत्यस्यापाद्यस्य पर्यवसितस्वरूपमाह गन्धवति पृथिवीत्वप्रकारकं न स्यादिति, उक्तापाद्यापादकयोः प्रकारान्तरेण स्वरूपमुपदर्शयति—यदि पृथिवीमात्रविशेष्यकं न स्यादित्यादिना, अर्थ इति यदि तज्जातीयं व्यभिचरेदव्यभिचारो न क्वचिद्व्यवतिष्ठेतेत्यस्यार्थः । ननु पृथिवीत्वव्याप्यगन्धवद्विशेष्यकमपि पृथिवीविशेष्यकं मास्तु को दोष इत्यत आह—

पृथिवीत्वव्याप्यवद्विशेष्यकस्यापि पृथिव्यविशेष्यकत्वे पृथिवीप्रमामात्रलोपे पृथिव्यसिद्ध्या पृथिवीभिन्नासिद्धौ पृथिवीभिन्ने पृथिवीत्वप्रकारकत्वमप्रामाण्यमपि न सिद्ध्येत्, एवमन्यत्रापि। एतेन जागरप्रत्ययो भ्रान्तः प्रत्ययत्वात् स्वप्नप्रत्ययवदित्यनुमानेन स्वप्नजागरयोरविशेष इत्यपि निरस्तम्। यत्किञ्चिज्जागरप्रत्ययस्य भ्रमत्वे साध्ये सिद्धसाधनात्, यावतां तथात्वे चैतदनुमितिप्रामाण्याऽप्रामाण्याभ्यां व्याघातात्। तथापि कथमनयोरवस्थयोर्विभागः कर्त्तव्य इति चेत्, न, लोकसिद्धत्वात्, लोकसिद्धस्यापि लक्षणमपेक्षणीयमिति किमनयोर्लक्षणमिति चेत्,

पृथिवीत्वव्याप्येति, पृथिव्यसिद्ध्या पृथिवीभिन्नाऽसिद्धाविति, प्रतियोगिसिद्ध्यधीना भेदसिद्धिरिति पृथिव्यात्मकप्रतियोग्यऽसिद्ध्या तद्भेदासिद्धेस्तदाश्रयलक्षणपृथिवीभिन्नाऽसिद्धावित्यर्थः। घटज्ञानं प्रमा कम्बुग्रीवादिमत्त्ववद्विशेष्यकघटत्वप्रकारकज्ञानत्वादित्यत्र न व्यभिचारस्संभवति, यतः कम्बुग्रीवादिमत्त्ववद्विशेष्यकस्यापि घटत्वप्रकारकज्ञानस्य घटविशेष्यकत्वाभावे न घटस्य क्वचित्सिद्धिरिति घटासिद्धौ घटभिन्नस्याप्यसिद्धेः क्व घटत्वज्ञानमप्रमा स्यादित्याह एवमन्यत्रापीति। एतेनेति क्वचित्प्रमात्वसिद्धावेव भ्रमत्वसिद्धिसम्भवेन वक्ष्यमाणनिरासहेतुना चेत्यर्थः। जागरप्रत्ययत्वरूपेण सर्वेषां जागरप्रत्ययानां पक्षत्वे भ्रमत्वे साध्ये तत्साध्यकानुमितेः प्रामाण्ये पक्षान्तर्गतायां तस्यामेव बाधान्नावच्छेदकावच्छेदेनानुमितिः, अप्रामाण्ये तु तस्यास्सुतरां भ्रमत्वाऽसाधकत्वमित्याह याचतामिति, जागरप्रत्ययानामिति दृश्यम्, तथात्वे भ्रमत्वे साध्ये, मया स्वहस्तेन स्वशिरश्छिन्नमित्यादि ज्ञानं तत्सवं स्वप्नावस्थायां बाधितविषयकमेव, तत्र संवादस्तु काकतालीयः, जागरावस्थायां तु ज्ञानमात्रं न बाधितविषयकं किन्तु किञ्चिदेव, संवादोऽपि बहुधेत्यनयोर्लक्षणमित्युत्तरयति—

कर्त्तृकर्मकरणदेशकालप्रबन्धबाधः काकतालीयसंवादवान् स्वप्नस्य, प्रबन्धे काकतालीयः कस्यचिदेव विषयस्य बाधो जागरस्येति, एतेन बाध्यप्रबन्धोऽवस्थाविशेषः स्वप्नः, प्रबन्धबाधकादिर्बाध्यप्रबन्धान्तो जागरितमित्युक्तं भवतीत्येषा दिग्। दिगर्थस्तु स्वप्नवहनाडीमनःसंयोगजन्यं तन्नाडीसंयुक्तमनोजन्यं वा ज्ञानं स्वप्नः। स्वप्नवहत्वं तु नाडीगतो विशेषः, स्वप्नत्वं मानसत्वव्याप्यो जातिविशेषः, विनैव च स्मरणमदृष्टोद्बोधितसंस्कारसहितान्मनसस्तादृशं ज्ञानमुत्पद्यते, चाक्षुषत्वादिवदनुमितित्वादिकमपि संस्कारवशात्तत्रारोप्यते, स्वप्ने परा-

मर्शोऽपि च नानुमितिः,

कर्तृकर्मेति, स्वप्नस्येति, अत्र क्षणमित्यनुषज्यते, एवं जागरस्येत्यनन्तरमपि, प्रबन्धे कर्तृकर्मकरणदेशकालप्रबन्धे, काकतालीय इत्यस्य बाध इत्युत्तरेण सम्बन्धः, बाध्यप्रबन्ध इति बाध्यः प्रबन्धः कर्तृकर्मकरणदेशकालप्रबन्धो यस्य स तथेत्यर्थः, प्रबन्धस्य स्वप्नगतस्य बाधक आदिर्यस्यावस्थाविशेषस्य स तथेत्यर्थः । बाध्यप्रबन्धान्त इति बाध्यः प्रबन्धोऽन्ते यस्य स तथेत्यर्थः । मानसप्रत्यक्षे प्रकृते संस्कारलक्षणप्रत्यासत्तिः कारणं न तु स्मरणलक्षणप्रत्यासत्तिरित्याशयेनाह विनैव च स्मरणमिति, तादृशं मानसत्वव्याप्यजातिविशेषवत्, तत्र स्वप्नज्ञाने, आरोप्यत इति तथा च तदानीं चक्षुषा पश्यामीत्यादिवदनुमिनोमीत्यादेर्नानुपपत्तिः, स्वप्ने परामर्शेऽपीति, स्वप्नकाले मानसप्रत्यक्षरूपपरामर्शसत्त्वेऽपि नानुमितिः, तत्र हेतुमाह—

स्वप्नसामग्र्या एव प्रतिबन्धकत्वादित्यन्ये । अत्रारुचिबीजं प्रत्यक्षे उद्बोधकानां कारणत्वकल्पने स्वप्नसामग्र्या अनुमित्यादिप्रतिबन्धकत्वकल्पने च गौरवमेव । स्वप्नभिन्नं ज्ञानं जागर इत्यादिः। तस्मात् तथ्यमेव विश्वं मन्दप्रयोजनत्वात् सत्त्वरैर्मुमुक्षुभिरुपेक्षितमिति युक्तमुत्पश्यामः । तर्हि नैयायिकानां जगतः परीक्षणे कोऽयमभिनिवेशातिशय इति चेत्, सहसैव तदुपेक्षायां न्यायाभासावकाशे न्यायमार्गविप्लवो भवेत्, तथा च न्यायरुचिःप्रेक्षावान् न तत्त्वमधिगच्छेदिति भियेति ।

स्वप्नसामग्र्या एवेति, परामर्शकालोत्तरकाले जायमानस्य स्वप्नकालीनमानसप्रत्यक्षस्य सामग्र्याः प्रतिबन्धकत्वादित्यर्थः, उक्तयुक्तेस्तथ्यातथ्यविभागस्य शक्यकर्तव्यत्वेन न बाह्येष्वर्थेषु नित्यं सन्देहो युक्त इत्युपसंहरति तस्मात्तथ्यमेवेति । नन्वेवं विश्वस्य

तत्त्वत्वे किमिति शीघ्रं भवविच्छेदेच्छुभिरुपेक्षितं तदित्याशङ्कायां तत्र हेतुमाह मन्दप्रयोजनत्वादित्यादिना। अपरीक्ष्यैव विश्वस्योपेक्षायां जागरप्रत्ययो भ्रान्तः प्रत्ययत्वात् स्वप्नप्रत्ययवदित्यादिबौद्धोक्तन्यायाभासावकाशे कस्यचिदेवमपि बुद्धिस्स्यात् यच्छून्यत्वादेव जगत्परीक्षणं न कृतमिति तथाच न्यायमार्गविप्लवस्स्यात्, विश्वस्य तथ्यत्वेन परीक्षणं कृत्वैव पश्चात्तुपवत्संसारेऽसारे भोगभाजां भोगिभोगा इव भोगा ईक्षणेनेक्षिता भयप्रदाः कायेनोपभुक्ताः मधुलिप्तखड्गधारालेहनमिव कटुविपाकान्ता इति ज्ञात्वोपेक्षणे न्यायमार्गविप्लवो नेत्याशयेनोत्तरयति सहसैवेति, सहसैव परीक्षामकृत्वैव, तदुपेक्षायाम् विश्वस्योपेक्षणे, तथा च न्यायमार्गविप्लवे च। चतुर्थचरणमवतारयति—

तदेवं न्यायनयेन भग्नं बाह्यार्थभङ्गप्रयुक्तं नैरात्म्यमित्ययमपि त्वन्नयामृतबिन्दूद्गार इत्युपसंहारव्याजेन भगवन्तमुद्दिश्याह स्तुतिकारः—"नैरात्म्यमित्युपहतं नयवल्गितैस्ते" नयवल्गितैर्न्यायनययुक्तिभिः, वल्गितपदेन परदूषणमात्रावेशो न तु माध्यस्थ्यं नैयायिकानामिति सूच्यते ॥५१॥

तदेवमित्यादिना ॥५१॥

> बाह्ये ज्ञानात्मताया न किमपि गमकं बौद्ध! ते न्यायमार्गे
> नो वा दोषस्य पोपोऽवयविनि घटते नाप्यणौ बाह्यभूते॥
> तत्त्वं स्याद्वादमार्गं श्रयसि यदि तदा शोभयन् स्वस्य नीतिम्
> नूनं कीर्त्या कथायां सितपटलसितो वीक्ष्यसेऽनन्यदृष्ट्या ॥ १ ॥

इतिश्री स्वपरसमयपारावारीणविश्वातिशायिसर्वज्ञशासनसमुन्नतिसमुन्नतमतिप्रकर्षाऽखण्डप्रौढप्रभावश्रीविद्यापीठादिप्रस्थानपञ्चकसमाराधकश्रीतपोगच्छनभोनभोमणिसंविग्नशाखीयभट्टारकाऽऽचार्यश्रीविजयनेमिसूरीश्वरक्रमकजद्विरेफायमाणतत्पट्टालङ्काराप्तन्यायवाचस्पतिशास्त्रविशारदोपनामश्रीतपोगच्छाऽऽचार्यश्रीविजयदर्शनसूरिविरचितायां श्रीमहावीरस्तवकल्पलतिकाविवृतौ ॥

॥ विज्ञानवादिमतखण्डनात्मकस्तृतीयोविभागस्समाप्तः ॥

ग्रथितसकलसमयोपनिषद्भिःशब्दकल्पसहृदगहृदयङ्गमगद्यपद्यात्मकाऽनेकशतग्रन्थमहामहिमनिधानसर्वतन्त्रस्वतन्त्रन्यायविशारदन्यायाचार्यमहोपाध्यायश्रीयशोविजयगणिविरचिते न्यायवाचस्पतिशास्त्रविशारदतपोगच्छाचार्यश्रीविजयदर्शनसूरिसन्दब्धमहावीरस्तवकल्पलतिकाऽभिख्यविवृतिसमलङ्कृते

## “ न्यायखण्डखाद्यापरनामके महावीरस्तवप्रकरणे ”

॥ विज्ञानवादिमतखण्डनात्मकस्तृतीयो विभागः ॥

॥ अथ श्रीकल्पलतिकाविवृत्यलङ्कृते न्यायखण्डखाद्याऽपरनाममहावीरस्तवप्रकरणे ॥

# ॥ चतुर्थो विभागः ॥

## ॥ मङ्गलाचरणम् ॥

यत्स्याद्वादार्थमुक्ता परनयनिरता तर्कनद्धाऽपि वाणी, नोऽनेकान्तैकरूपे जगति निजपदस्थापने कापि योग्या ॥
तं श्रीवीरं नमामोऽमितनयभजनायोजनालोकनोत्थाऽनेकान्तत्वावमर्शाकलितमतिगतिप्राप्तये नीतिवादे ॥१॥
गम्भात्तत्त्वार्थसिद्धिर्व्यपगतकुनया नीतिशुद्धिप्रवीणा, स्वेष्टार्थाऽऽह्वानदक्षा सुकृतिततिमिता मानसंवादकान्ता।
तं स्याद्वादाख्यमानं निखिलविषयगं केवलालोकजातं, धीराः स्वाभीष्टसिद्ध्यै श्रयत जिनकृपालोकिता नीतिभाजः ॥२॥

तेऽपि मध्गस्यद्दृच्या शिक्षणीया इति प्रमाणावतारेण भगवानभिष्टूयते—

द्विपञ्चाशत्तमश्लोकमवतारयति, तेऽपीत्यादिना,
तेऽपि नैयायिका अपि। शिक्षणीया इति शिक्षयितुं योग्या इत्यर्थः, स्याद्वादिनेति शेषः।

स्याद्वादतस्तव तु वाह्यमथान्तरङ्गं, सल्लक्षणं शबलतां न जहाति जातु ॥
एकत्वमुल्लसति वस्तुनि येन पूर्णे, ज्ञानाग्रहादिकृतदैशिकभेद एव ॥५१॥

स्याद्वादत इत्यादि पद्यं हे भगवँस्तवेत्यादिना मूलग्रन्थकृद्व्याख्यानेनैव स्पष्टावभासं न व्याख्यानान्तरमपेक्षते ॥

हे भगवँस्तव तु मते, बाह्यं घटाद्यथ चान्तरङ्गमात्मादि वस्तु, स्याद्वादमनतिक्रम्य, जातु कदाचिदपि, सल्लक्षणं वस्तु सामान्यरूपं, शबलतां भेदाभेदनित्यानित्यत्वाद्यनन्तधर्मात्मकैकस्वरूपतां, न जहाति, पर्यायार्थद्रव्यार्थोपयोगाभ्यां समकक्षतयैव सर्वत्र भेदाभेदाद्युपलब्धेः। तदाह–येन कारणेन, पूर्णे वस्तुनि घटादावात्मादौ च, ज्ञानाग्रहादिभिः कथंचिद्विरुद्धैः कृतदैशिकभेदवत्येव एकत्वमुल्लसत्युपयोगविषयो भवति, अपेक्षाभेदेन बाधस्याबाधपर्यवसितत्वात्, प्रमाणसिद्धेऽर्थे विरोधानवकाशात् ॥५२॥

तत्र पूर्वं ग्रहणाग्रहणयोः समावेशेन भेदाभेदसिद्धिमुपदर्शयन्नाह—

त्रिपञ्चाशत्तमश्लोकमवतारयति–तत्रेत्यादिना,

> देशेन दृष्ट इह यः स मया न दृष्टो, देशेन चेति विशदव्यवहार एषः ॥
> संयोगतद्विरहवन्ननु देशभेदा–देकत्र देशिनि विरुद्धनिवेशमाह ॥५३॥

देशेनेत्यादि पद्यम्, अस्य चायमर्थः, अत्र कर्त्ता एष विशदव्यवहार इति, तस्य च स्वरूपप्रदर्शनाय देशेनेत्यादि, इह यो मया देशेन दृष्टस्स देशेन न दृष्टश्चेत्यन्वयः, आहेति क्रियापदम्, एष विशदव्यवहारः किमाहेत्याशङ्कायामाह विरुद्धनिवेशमिति, कस्मिन्नित्याकाङ्क्षायामाह एकत्र देशिनीति, एकस्मिन्नवयविनीत्यर्थः, किमपेक्ष्येत्यत आह देशभेदादिति भिन्नदेशावच्छेदेनेत्यर्थः, क इवेत्यत आह संयोगतद्विरहवदिति, ननु पादपूरणे इति ।

एकावयवसहितस्योपलम्भेऽन्यावयवसहितस्यानुपलम्भोऽवयवगतोपलम्भानुपलम्भयोरवयविनि सञ्चारादभिधीयत इति न ताभ्यां कथमपि तद्भेद इति यत् नैयायिकैरुक्तम्, तदयुक्तं, यो मया देशेन दृष्टः स एव देशेन न दृष्ट इत्युद्देश्यविधेयभावेन सोऽयमित्यत्रेवैकत्रोभयपरामर्शाद्, भावाभावत्वाभ्यां विरुद्धयोर्ग्रहणाग्रहणयोरेकत्रायोगात् परम्परासम्बन्ध एवावयविनि सञ्चारार्थ इति चेत्, तर्हि वृक्षो देशेन कपिसंयुक्तो देशेन नेत्यत्रापि परम्परासम्बन्ध एव संसर्गः स्यात्, एवं देशेनेति तत्र तृतीयार्थानुपपत्तिरिति चेत्, सा प्रकृतेऽपि तुल्या, अवच्छेदकभेदेन विरोधपरिहारोऽप्युभयत्र तुल्यः, स्कन्धशक्तस्य घटवृक्षादिपदस्य देशपरत्वेनोपपादनमपि तथा,

उद्देश्यविधेयभावेनेति यो मया देशेन दृष्ट इत्युद्देश्यत्वेन स एव देशेन न दृष्ट इति विधेयत्वेन चेत्यर्थः। सोयमित्यत्रेवेति सोयमिति प्रत्यभिज्ञाने अयमित्यस्योद्देश्यत्वेन स इत्यस्य च विधेयत्वेनेवेत्यर्थः। एकत्र अवयविनि, उभयपरामर्शादिति दृष्टत्वादृष्टत्वोभयनिश्चयादित्यर्थः, ग्रहणाग्रहणे भावाभावरूपत्वाद् घटतदभाववद्विरुद्धे इत्येकत्र तयोर्वृत्तित्वासम्भवेन यद्विशेषणे विधिनिषेधौ विशेषणमुपसङ्क्रामत इति न्यायात् साक्षात्सम्बन्धेन तत्तदवयवगतयोरेव तयोस्स्वाश्रयसमवेतत्वरूपपरम्परासम्बन्धेनावयविन्युपचारात्तत्रौपचारिक एवोक्तप्रत्यय इति नावयविभेदसाधनप्रत्यल इत्याशङ्कते—भावाभावत्वाभ्यामिति, अस्मद्गुरुचरणास्तु परम्परासम्बन्ध एवेत्याद्याशङ्काग्रन्थ इत्याहुः। वृक्षो देशेन कपिसंयुक्तो देशेन नेत्यत्रापि कपिसंयोगतदभावौ साक्षात्सम्बन्धेन तत्तद्देशे वर्त्तेते स्वाश्रयसमवेतत्वसम्बन्धेन चावयविनि प्रतीयेते इत्यपि स्यादिति गतिबन्दयोत्तरयति तर्हि वृक्ष इति, ननु वृक्षो देशेनेत्यादिप्रतीतौ परम्परासम्बन्धेन कपिसंयोगतदभावयोर्वृक्षे भानाभ्युपगमे तयोरव्याप्यवृत्तित्वं न

स्यादिति देशस्य नावच्छेदकत्वमिति देशावच्छेद्यत्ववाचकदेशेनेति तृतीयाया अनुपपत्त्या तत्र तदुल्लेखो न स्यादित्याशङ्कते एवं देशेनेति, नन्वेवं तर्हि यो मया देशेन दृष्ट इत्यादावप्येवमेव दीयतां दृष्टिरिति समाधत्ते सा प्रकृतेपीति, ननु नैकाधिकरणावृत्तित्वमात्रं विरोधलक्षणं किन्त्वेकावच्छेदकघटितमेवेत्येकस्मिन् वृक्षे भिन्नावच्छेदेन संयोगतदभावप्रतीत्यभ्युपगमे विरोधो नेत्यपि भिन्नभिन्नावयवावच्छेदेनावयविनि ग्रहणाग्रहणाभ्युपगमवादिनामस्माकं समानमेवेत्याह अवच्छेदकभेदेनेति, यो मया देशेन दृष्टो घटस्स एव देशेन न दृष्ट इत्यत्राऽवयविशक्तमपि घटपदमत्र देशपरम्, तद्ग्राहकं देशेनेति पदम्, तृतीया तु धान्येन धनवानित्यत्रेवाऽभेदार्थां, तथाचैकस्मिन् घटस्याऽवयवे दृष्टत्वमवयवान्तरे दृष्टत्वाभाव इत्येवमभ्युपेत्योक्तप्रतीतिरुपपाद्येति चेत्, तर्हि वृक्षो देशेन कपिसंयुक्तो देशेन नेति प्रतीतिरपि तथैवोपपाद्यतामित्याह स्कन्धशक्तस्येति, तथा तुल्यम्, तद्देशस्य दृष्टत्वं तदन्यदेशस्याऽदृष्टत्वमित्येवमभ्युपगमे देशद्वयबोधनाय द्विवचनं प्रयोक्तव्यं स्यादित्याह—

अधिकं च तत्र द्विवचनापत्तिदूषणम्, चकारेण गतार्थत्वात् न तदिति चेत्, तथाप्युभयत्र प्रकारताद्वयनिरूपितविशेष्यताद्वयशालिबोधाभ्युपगमे विकलादेशीयप्रथमभङ्गार्थस्तुल्य एव, स चास्माकमबाधकः, एकत्र द्वयमिति न्यायेन ज्ञातत्वाज्ञातत्वोभयप्रकारतानिरूपितैकविशेष्यताशालिबोधगतिस्तु मृग्यते, सा च विना न स्याद्वादम्,

अधिकं चेति, ननु घटो देशेन दृष्टो देशेन न चेति चकारोऽत्र दृश्यः, तथाच चकारेण देशान्तरस्य प्रतिपत्तिसम्भवान्न द्विवचनान्तेन कृत्यमित्याशङ्कते चकारेणेति, तथाऽपि घटादिपदस्य देशपरत्वमाश्रित्य चकारेण देशान्तरप्रतिपादनञ्चाश्रित्य दृष्टत्वा-

दृष्टत्वादिप्रतीतेर्विभिन्नधर्मिगतदृष्टत्वादृष्टत्वादिधर्मविषयकत्वेनोपपादनेऽपि, उभयत्र प्रकारताद्वयनिरूपितविशेष्यताद्वय-शालिबोधाऽभ्युपगमे इति, देशेन दृष्टो देशेन न चेत्यत्र दृष्टत्वनिष्ठप्रकारतानिरूपिततद्देशनिष्ठविशेष्यतानिरूपकस्यादृष्टत्वनिष्ठप्रकारतानिरूपितदेशान्तरनिष्ठविशेष्यतानिरूपकस्य च बोधस्य वृक्षो देशेन कपिसंयुक्तो देशेन न चेत्यत्र च कपिसंयोगनिष्ठप्रकारतानिरूपिततद्देशनिष्ठविशेष्यतानिरूपकस्य कपिसंयोगाभावनिष्ठप्रकारतानिरूपितदेशान्तरनिष्ठविशेष्यतानिरूपकस्य च बोधस्याभ्युपगम इत्यर्थः। विकलादेशीयप्रथमभङ्गार्थस्तुल्य एवेति–अत्र स्याद् दृष्ट एव, स्याददृष्ट एव, स्यादऽवक्तव्य एव, इति त्रयोभङ्गास्सकलादेशाः, संयुक्तास्तु चत्वारोऽन्त्या विकलादेशाः, तत्र यः प्रथमो भङ्गस्स्याद्दृष्टस्स्यादऽदृष्ट एवेति तदर्थस्तुल्यो भवतोऽस्माकं चेत्यर्थः, नयसप्तभङ्ग्या विकलादेशत्वं प्रमाणसप्तभङ्ग्यास्सकलादेशत्वमित्यादरे तु स्याद् दृष्ट एव स्याददृष्ट एवेत्यादिसप्तभङ्ग्यात्मकविकलादेशस्य यः प्रथमभङ्गस्स्याद् दृष्ट एवेति तदर्थो भवतोऽस्माकं च समान एवेत्यर्थः, स चाऽस्माकमबाधक इति विकलादेशेनापि भिन्नप्रकारतानिरूपितभिन्नविशेष्यताकबोधस्य स्वीकारादितिभावः। प्रकारताभेदेऽपि न विशेष्यताभेद इत्यस्योपोद्बलकन्यायमाह एकत्र द्वयमिति न्यायेनेति, उभयप्रकारकैकविशेष्यकानुभवकलहे त्वेकैकप्रकारकैकैकविशेष्यकानुभवेऽपि कलहप्रसङ्गेन विकल्पमात्रस्यैवोच्छेदापत्त्या निर्विकल्प एव विश्रामस्स्यादिति तन्मात्रमेव ज्ञानं स्यादित्याह—

अनुभवकलहे तु सर्वत्र निर्विकल्पके विश्रामः, न च सोऽपि सविकल्पसाधकयुक्त्या, निर्विकल्पकत्वसविकल्पकत्वाभ्यामपि सप्तभङ्गीप्रवृत्तेरेव वैनयिकप्रतीतिसिद्धत्वात्, ग्रहणाग्रहणयोरव्याप्यवृत्तित्वासिद्धेर्न संयोगतदभावप्रतियन्दिग्रहणं युक्तमिति चेत्, न, इत एवानुभवात् तत्सिद्धेर्व्याप्यवृत्तित्वाव्याप्यवृत्तित्वयो-

रपि नयभेदेन व्यापकत्वाच्च देशदेशिभावस्य तथात्वात् ।

अनुभवकलहे त्विति, प्रवृत्त्याद्यनुरोधेन सविकल्पज्ञानस्यापि स्वीकरणीयत्वेन न च निर्विकल्प एव विश्रामोऽपि युक्त इत्याह न च सोपीति, तत्र हेतुमाह सविकल्पेति, वैनयिकप्रतीतीति, गुरुसुश्रुषादिलक्षणविनयद्वारा शास्त्रजन्यप्रतीतीत्यर्थः। संयोगस्याव्याप्यवृत्तित्वानभ्युपगमे कपालद्वयसंयोगस्यापि तत्तद्देशभेदेन भावादसत्त्वं स्यात्, एवञ्च संयोगस्य परमाणुमात्रवृत्तित्वं स्यात्, तथाच घटकपालादीनामुत्पत्तिर्न स्यात् इत्याद्युक्तिः संयोगस्याऽव्याप्यवृत्तित्वसाधकत्वेऽस्त्येव, नच ग्रहणाग्रहणयोरव्याप्यवृत्तित्वे इदृशी काचिदपि युक्तिरित्यभिप्रायेणाऽऽशङ्कते ग्रहणाग्रहणयोरिति, वृक्षे शाखायां कपिसंयोगो न मूले इत्यनुभवबलेन संयोगतदभावयोरव्याप्यवृत्तित्वस्येव यो मया देशेन दृष्टः स एव देशेन न दृष्ट इत्यनुभवादेव ग्रहणाग्रहणयोरप्यव्याप्यवृत्तित्वस्य सिद्धिः, अन्यथोक्तप्रतीतेर्वृक्षवृत्तिर्यः कपिसंयोगस्शाखावृत्तेस्तदवच्छेदकत्वस्याभावो मूले इत्याद्यर्थपरतयाप्युपपत्तेस्संयोगस्याप्यऽव्याप्यवृत्तित्वं न सिद्ध्येदित्याशयेन समाधत्ते–नेति, धर्ममात्रस्य व्याप्यवृत्तित्वाभ्युपगन्तृनयमतेन ग्रहणाग्रहणयोर्व्याप्यवृत्तित्वं, न चैतन्मतेऽव्याप्यवृत्तिसंयोगाभावादवयव्युत्पत्तिर्न स्यात् इति वाच्यम्, अवयवसमुदायात्मकस्यैवावयविनस्संयोगस्य च नैरंतर्यमात्ररूपस्य परिणामवादस्य वाऽभ्युपगमेनोपपत्तेः, घटेन सह चक्षुषस्संयोगाऽभावेऽपि घटप्रत्यक्षानुकूलशक्तिमत्त्वेन तस्य घटप्रत्यक्षं प्रति कारणत्वेन घटप्रत्यक्षस्याप्युपपत्तिः, धर्ममात्रस्याव्याप्यवृत्तित्वाभ्युपगन्तृनयमतेन च ग्रहणाग्रहणयोरव्याप्यवृत्तित्वम्, उभयनयविषयताव्यापकविषयताकप्रमाणमार्गो हि जैनमार्ग इत्युभयनयमयार्हतसिद्धान्तेन व्याप्यवृत्तित्वाऽव्याप्यवृत्तित्वयोरपि वस्तुत्वव्यापकत्वमभ्युपगन्तव्यम्, नच विरोधः, तथैवानुभवात्, अव्याप्यवृत्तित्वप्रयोजकदेशदेशिभावोऽपि तदवगाहिनयतो वस्तु-

त्वञ्चात्र व्याप्यवृत्तित्वमभ्युपगन्तव्य इति नाव्याप्यवृत्तित्वक्षतिरित्याह व्याप्यवृत्तित्वाव्याप्यवृत्तित्वयोरपीति, तथात्वादिति व्यापकत्वादित्यर्थः। अहं मां न जानामीति प्रतीतावहमित्यनेन कर्तृतयाऽऽत्मनो भानम्, मामित्यनेन कर्मतयाऽऽत्मनो भानम्, कर्मत्वञ्चात्र विषयत्वलक्षणं, विषयत्वस्य च संसर्गविधया भानपक्षे तदात्मकसंसर्गेणात्मनो ज्ञाधात्वर्थे ज्ञाने प्रकारत्वपक्षे च विषयतायामात्मनो विषयत्वस्य च निरूपकत्वसम्बन्धेन ज्ञाने भानं, तस्य च स्वनिष्ठप्रतियोगिताकत्वसंसर्गेण नञ्पदवाच्येऽभावे, तस्य स्वरूपसम्बन्धेनाहम्पदवाच्ये आत्मनि, तथाचोक्तप्रतीतावहं मामित्येकवचनान्तप्रथमाद्वितीयाविभक्तिप्रकृत्यस्मच्छब्दस्यात्मपरत्वेन साऽऽत्मविषयिका चेत्कथमात्मविषयकज्ञानाभावविषयिका, तथापि तथाभ्युपगमेऽऽत्मनि ज्ञानाज्ञानोभयस्वभावत्वं विरुद्धमापद्येतेतिमीमांसकाशङ्कामहं मां न जानामीत्यत्र विशेषरूपेणेति शेषं कृत्वा शरीरभिन्नत्वव्यापकत्वादिविशेषरूपेणात्मविषयकज्ञानाऽभावोऽर्थः, तस्य चाहमित्यत्र कर्तृप्रत्ययत्वेनान्यस्य शेषकरणमशक्यमित्यात्मत्वसामान्यधर्मेणात्मविषयकज्ञानरूपार्थेन सह न विरोध इत्येवं परिहृत्याऽऽत्मत्वेन रूपेण ज्ञातोप्यात्मा न शरीरभिन्नत्वादिविशेषरूपेण ज्ञात इत्येकत्रात्मनि ज्ञातत्वाज्ञातत्वोभयसमर्थनं नैयायिकैः क्रियते यथा तथा घटपटादावपि घटत्वपृथिवीत्वद्रव्यत्वसत्त्वादिसामान्यधर्मेण रूपरसादिकतिपयपर्यायेण वा ज्ञातत्वं स्वपरानन्तपर्यायरूपाखिलविशेषधर्मेणाऽज्ञातत्वमित्येवं वस्तुमात्रे ज्ञातत्वाज्ञातत्वोभयसमर्थनेऽपि दीयतां दृष्टिरित्याह—

यथा चाहं मां न जानामीति प्रतीत्या ज्ञानाज्ञानोभयस्वभावत्वमात्मनि भाट्टैर्विरुद्धमापाद्यमानं न जानामीत्यस्य विशेषज्ञानाभावपरतया नैयायिकैर्निरस्यते, तथा घटादावपि सामान्यविशेषापेक्षया ज्ञातत्वाज्ञातत्वसमर्थनेऽपि दीयतां दृष्टिः, इत्थमेव सर्वत्र सर्वसाधारण्येनाकेवलिनं तद्व्यवस्थितेः। एवं सति कथञ्चिज्ज्ञातत्व-

सर्वथाज्ञातत्वाभावयोरविरुद्धयोरेव समावेशविधानात् न स्याद्वादप्रयोजनसिद्धिरिति चेत्, न संयोगतदभावतुल्यत्वापादनेन तत्सिद्धेः,

यथा चाहमिति, इत्थमेवेति सामान्यविशेषापेक्षया ज्ञातत्वाज्ञातत्वाभ्यामेव, सर्वत्र सर्वस्मिन् विषये, सर्वसाधारण्येन सर्वछद्मस्थप्रमातृसाधारण्येन, आकेवलिनमिति केवली तु यावन्तो घटादिधर्मास्तैस्सर्वधर्मैर्घटादिकं जानात्येवेति तद्व्यतिरेकेणाऽन्येषां जीवानां सर्वधर्मप्रकारावच्छेदेन घटादौ ज्ञातत्वाभावबोधनार्थमाकेवलिनमित्यत्र मर्यादार्थक आङ् उपात्तः, तथा च केवलिनं मर्यादीकृत्येत्यर्थः, तद्व्यवस्थितेः ज्ञातत्वाज्ञातत्वव्यवस्थितेः, कथञ्चिद् ज्ञाते सति यद्रूपेण घटो ज्ञातस्तद्रूपेण सामान्यतो वा ज्ञात एव नेति यदि कोपि ब्रूयात्तदा तं प्रति विरोधोद्भावनं सङ्गतं स्यात्, यदि च सर्वथा ज्ञात एव नेति ब्रूयात् तदा न, कथञ्चिद्ज्ञातत्वस्य सर्वथाज्ञातत्वस्याभावेन सह विरोधाभावादिति नात्राऽविरोधद्योतनार्थं स्याद्वादावकाश इत्याशङ्कते एवं सतीति, निर्विशेषितयोरेव कपिसंयोगतदभावयोरिव ज्ञातत्वतदभावयोर्विरोधोऽभ्युपगत इति तयोरविरोधद्योतनार्थमवच्छेदकभेदाभ्युपगमात्स्याद्वादप्रयोजनसिद्धिस्स्यादेवेत्युत्तरयति—

किञ्चित्प्रकारावच्छेदेन ज्ञातत्वं सर्वप्रकारावच्छेदेनाज्ञातत्वं चादाय्यैव हि ज्ञाताज्ञातत्वव्यवस्था, एकत्र छद्मस्थवृत्तिसर्वप्रकारकज्ञानविषयत्वस्य कुत्राप्यसिद्ध्या निषेद्धुमशक्यत्वात्, अनेनैवाभिप्रायेण "एको भावः सर्वथा येन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टाः" इत्यादि सङ्गीयते। एवं देशकालपुरुषाद्यपेक्षयापि ज्ञातत्वाज्ञातत्वनिमित्तो भेदः स्पष्ट एवेति भावनीयम् ॥५३॥ ज्ञायमानत्वानुप्रवेशेनापि ज्ञाताज्ञातत्वाभ्यां भेदाभेदपक्षं

॥४१५॥

समर्थयन्नाह—

किञ्चित्प्रकारेत्यादिना, ननु ज्ञातत्वरूपप्रतियोगिन्येव सर्वप्रकारावच्छिन्नार्थकसर्वथेत्यस्यान्वयं कृत्वा तदभावरूपस्यैवाज्ञातत्वस्योपादानं कथं न कृतमित्याशङ्कायामाह एकत्र छद्मस्थेति, प्रतियोगिनि ज्ञातत्वे सर्वप्रकारावच्छिन्नत्वस्यान्वये छद्मस्थज्ञानमात्रस्य क्षायोपशमिकतया तद्विषयत्वे सर्वप्रकारावच्छिन्नत्वाभावेन सर्वप्रकारावच्छिन्नज्ञानविषयत्वरूपस्य सर्वथा ज्ञातत्वस्याऽप्रसिद्ध्या तन्निषेधाऽसम्भव इति तत्परिहाराय प्रसिद्धस्यैव ज्ञातत्वस्याभाव एवावच्छेदकविधया सर्वप्रकारस्यान्वयः, तथा च ज्ञातत्वज्ञातत्वाभावयोर्भावाभावरूपत्वेन विरोधात् तत्परिहारायोभयत्रावच्छेदकभेदनिवेशेन स्याद्वादः फलवान् इत्यर्थः, अनेनैवाभिप्रायेणेति, यद्यपि छद्मस्थज्ञाने तत्तद्धर्मावच्छिन्ननिखिलपदार्थविषयत्वप्रतिबन्धकीभूतस्य कर्म्मणस्सद्भावेन न सर्वधर्मप्रकारकनिखिलपदार्थविशेष्यकज्ञानं छद्मस्थात्मनि संभवतीत्यनन्तपर्यायावगुण्ठितस्य घटादेः कतिपयधर्मेण ज्ञातत्वेऽपि तदन्यधर्मेण ज्ञातत्वाभावान्न सर्वधर्मेण ज्ञातत्वं संभवति, तथापि केवलज्ञानान्यथानुपपत्त्या तदानीं तत्प्रतिबन्धकीभूतस्य कर्मणोऽभावेन घटपटाद्यशेषपदार्थस्य स्वपरानन्तपर्यायात्मकसर्वधर्मेण सर्वज्ञस्य ज्ञानं सम्भवतीति विश्वतत्त्वस्य विश्वरूपेण ज्ञातत्वं सम्भवत्येवेत्यभिप्रायेणेत्यर्थः। भावः घटपटाद्यर्थः, सर्वथा सर्वधर्मप्रकारेण, येनेति पुरुषेणेतिशेषः, तेन दृष्टा इति एकस्यापि वस्तुनोऽनन्तपर्यायात्मकत्वेन तत्र च साक्षात् परंपरया निखिलवस्तुतत्त्वानां प्रविष्टत्वेन तज्ज्ञानाऽभावे यथावस्थिततज्ज्ञानं न भवतीति सर्वप्रकारावच्छिन्नघटाद्येकैकपदार्थविषयताकज्ञाने तदन्यपदार्थमात्रभानस्यावश्यंभावादिति भावः, एतेन "सर्वं पश्यतु वा मा वा, तत्त्वमिष्टन्तु पश्यतु। कीटसंख्यापरिज्ञानं, तस्य नः क्वोपयुज्यते ॥१॥" तस्मादनुष्ठानगतं, ज्ञानमस्य विचार्यताम्। प्रमाणं दूरदर्शी चे, देते गृध्रानुपासहे ॥२॥ इत्यपि

निरस्तम् । इत्यादिति, अत्रादिपदात् "सर्वे भावास्सर्वथा येन दृष्टाः, एको भावस्तत्त्वतस्तेन दृष्टः इत्युत्तरार्द्धस्य "जे एगं जाणइ से सव्वं जाणइ जे सव्वं जाणइ से एगं जाणइ" इत्यस्य चोपसङ्ग्रहः ॥५३॥ चतुष्पञ्चाशत्तमश्लोकमवतारयति ज्ञायमानत्वाऽनुप्रवेशेनापीति,

॥ यद्गृह्यते तदिह वस्तु गृहीतमेव, तद्गृह्यते च न च यत्तु गृहीतमास्ते ॥
इत्थं भिदामपि स किं न विदांकरोतु, यः पाठितो भवति लक्षणभङ्गजालम् ॥ ५४ ॥

यद्गृह्यते इत्यादिश्लोकस्य इह यद्वस्तु गृह्यते तद्गृहीतमेव यत्तु गृहीतमास्ते तद्गृह्यते च न च। यो लक्षणभङ्गजालं पाठितो भवति स किम् इत्थं भिदामपि न विदांकरोतु इत्यन्वयः । विस्तरार्थं तु ग्रन्थकार एवाह—

यदिह वस्तु गृह्यते तद्गृहीतमेव, गृह्यमाणत्वस्य गृहीतत्वाव्यभिचारात्, क्रियाकालनिष्ठाकालयोरभेदान्निश्चयनयमते हि चरमकारणसमवधानक्षण एव क्रियाकालः, स एव च निष्ठाकाल इति। पूर्वं तु गृह्यमाणत्वक्रियमाणत्वादिव्यवहारः कारणे कार्यारोपात्,

यदिहेत्यादिना, अथ गृह्यमाणमित्यत्रानशप्रत्ययस्य वर्त्तमानार्थकत्वेन वर्त्तमानक्रिया गृहीतमित्यत्र च क्तप्रत्ययस्य निष्ठासंज्ञकस्यातीतार्थकत्वेनातीतक्रिया भासत इति तयोर्विरोधात् कथं गृह्यमाणस्यैव गृहीतत्वं सम्भवतीत्यत आह क्रियाकालनिष्ठाकालयोरिति । व्यवहारनयमते क्रियाकालनिष्ठाकालयोर्भेदाभ्युपगमादाह–निश्चयनयमते हीति, चरमकारणसमवधानक्षण एवेति, ननु सामग्र्यास्तदुत्तरसमय एव कार्यव्याप्यत्वमिति तत्कथं संगतमिति चेत्, मैवं, यदा सामग्री तदा तदुत्तरसमय एव कार्यमिति व्याप्तावुत्तरत्वप्रवेशे गौरवात्, लाघवेन सामग्रीसमयस्यैव कार्यव्याप्यत्वोपगमौचित्यात्, उक्तं च "भूतियेंषां क्रिया

मेन कारणं तत्र चोच्यत इति, अत एव "चलमाणे चलिए जाव निज्जरमाणे निज्जिण्णे" इति सिद्धान्तसिद्धं चलमानं चलितं क्रियमाणं कृतमित्याद्यपि नानुपपन्नम्, सर्वत्र कालत्रवर्तिताविशेषरूपसिद्धत्वस्य निष्ठार्थत्वात्, तस्य चादिसमयावच्छेदेन साध्यत्वेन सममविरोधात् चिरनष्टे इदानीं नष्ट इति चिरोत्पन्ने चेदानीमुत्पन्न इति च प्रतीतिः कालवाचकं यदिदानीमिति पदं तत्समभिव्याहृतनिष्ठाप्रत्ययेनैतत्कालावच्छिन्नसाध्यत्वविशिष्टसिद्धत्वोपस्थित्यैव न भविष्यति, इत्थमेव क्रियमाणं कृतमेव, कृतं च क्रियमाणत्वेन भजनीयमिति सिद्धान्तस्तन्त्र्यते, सिद्धत्वविशिष्टसाध्यतायाः सिद्धत्वनियतत्वात्, शुद्धसिद्धतायाश्च विशिष्टसाध्यताऽनियतत्वात्, तदाह भाष्यकारः "तेणेह कज्जमाणं नियमेण कयं कयं तु भयणिज्जं। किंचिदिह कज्जमाणं उवरयकिरियं व होज्जाहि॥१॥" इति, पूर्वन्त्विति यदा ज्ञानं न जातं किन्तु तदुत्पादनाय व्यापारः क्रियते तदा तस्मिन् व्यापारे ज्ञानकार्योपचारात्तद्व्यापारविषयत्वाद् घटादौ गृह्यमाणत्वव्यवहारः चरमकारणसमवधानात्पूर्वमाद्यादिकृतिकाले क्रियते घट इति व्यवहारस्तु घटकारणीभूतयत्किञ्चित्कृत्यादौ घटकार्यारोपादिति भावः। क्रियाकालतया ज्ञानोत्पत्तिकालं निष्ठाकालतया च ज्ञानविषयसम्बन्धकालमभ्युपेत्य तयोरेकत्वमुपपादयति—

युक्तं चैतत्, यथा परेषां पिण्डोत्पत्तिकालस्तत्र घटत्वसम्बन्धकालश्चैकस्तथास्माकं ज्ञानोत्पत्तिकालो विषये तत्सम्बन्धकालश्चैक इत्यस्य सुवचत्वात्, अत एवेदानीं ज्ञात इति नान्यदा प्रतीतिः, कालवाचकपदसमभिव्याहृतनिष्ठाप्रत्ययस्य तत्कालोत्पत्त्यवच्छिन्ननिष्ठाश्रयबोधन एव सामर्थ्यात्, यत्तु गृहीतमास्ते तद्गृह्यते च न चेति भजनीयम्, उत्पत्तिकालावच्छिन्नग्रहणनिष्ठाश्रयो गृह्यत एव, शुद्धनिष्ठाश्रयस्तु न गृह्यत इत्येवं विकल्पनीयमित्यर्थः। एवं ज्ञायमानत्वज्ञातत्वभजनयापि सिद्धो घटादेर्भेदो धर्मितया चैकत्वम्,

युक्तश्चैतदिति, ज्ञानोत्पत्त्यनवच्छिन्ने काले ज्ञात इति सामान्यप्रतीतिर्भवति न त्विदानीं ज्ञात इत्यत्र किं बीजमित्याशङ्काव्यवच्छेदार्थं तत्र बीजमाह कालवाचकेति, कालवाचकं यदिदानीमित्यादिपदं तत्समभिव्याहृतो यो निष्ठाप्रत्ययो ज्ञात इत्यादिपदघटकक्तप्रत्ययस्तस्येत्यर्थः, तत्कालोत्पत्त्यवच्छिन्नेति, इदानीमित्यादिपदप्रतिपाद्यकालोत्पत्त्यवच्छिन्नेत्यर्थः। अत्र नैयायिकास्त्वेवं प्राहुः, इदानीं ज्ञातो घट इति प्रयोग एव न भवति, किन्त्विदानीं ज्ञायते तदानीं ज्ञातो वा ज्ञात इति सामान्येन वा, इदानीं ज्ञातो घट इति प्रयोगभावे तु ज्ञात इत्यत्र निष्ठायां क्तप्रत्ययस्यार्थस्यातीतत्वस्याऽविवक्षैवेति, उत्पत्तिकालावच्छिन्नग्रहणनिष्ठेति उत्पत्तिकालावच्छिन्नं यद्ग्रहणं तन्निष्ठा तदतीतत्वं तदुत्पत्तिरूपम् एतत्कालावच्छिन्नसाध्यत्वविशिष्टसिद्धत्वरूपमिति यावत्, तदाश्रयो घटो गृह्यत एव, उक्तविशिष्टनिष्ठाकाले घटज्ञानस्य विद्यमानत्वात्, उत्पत्तिकालानवच्छिन्ना या ग्रहणनिष्ठा ज्ञानोत्पत्तिकालावच्छिन्नसाध्यावस्थाविशिष्टसिद्धावस्था तदाश्रयपक्षेप्युक्ताभिप्राय एव, ज्ञानोत्पत्तिकालानवच्छिन्ना या निष्ठा शुद्धसिद्धत्वरूपा तदाश्रयस्तु घटो न गृह्यते, शुद्धनिष्ठाकाले ज्ञानस्याऽभावादित्यर्थः। धर्मितया घटादिधर्मिस्वरूपतया।

एवं व्यवहारनयाभिमते दीर्घे ग्रहोत्पत्तिकालेऽभिन्नकालानां तदुत्पत्तिनाशस्थितीनां प्रत्येकं कालत्रयस्पर्शित्रिलक्षणयोगेन सप्तविंशतिर्भङ्गाः, भिन्नकालानां च कालत्रययोगेन सप्तविंशतेस्त्रिधा गुणने एकाशीतिर्भङ्गा उत्पद्यन्ते। न चैते कल्पनामात्रनिर्मितवपुषो, निपुणं निरूपणे प्रज्ञावद्भिः सर्वेषामेवाकलनात्॥

एवं व्यवहारनयाभिमते इति, अयमाशयः, यद्यपि निश्चयनयेनैकस्मिन्नेव ज्ञानोत्पत्त्यनुकूलव्यापारान्त्यसमये ज्ञानोत्पत्तिरिति स एव ज्ञानोत्पत्तिकालः तथापि व्यवहारनयेन दीर्घः क्रियाकालः आंशिककार्यक्षणकोटिविषयोऽभ्युपगतः, तथा च तस्मिन् दीर्घे

ज्ञानोत्पत्तिकाले विवक्षितज्ञानस्य यस्मिन्नेव समये वर्त्तमानपर्यायोत्पत्तिः तस्मिन्नेव समयेऽतीतपर्यायविनाशः, विनाशपूर्वकत्वादु-
त्पत्तेः, उत्पत्तिविनाशक्रिये च निराधारे न सम्भवत इति तदाधारभूतद्रव्यस्थितिरपि तदाऽभ्युपगन्तव्येत्येवमभिन्नकालानामुत्पा-
दादित्रयाणां प्रत्येकं एकधर्मिसंसर्गितया त्रैकाल्यं तेन नयेन प्रतिपाद्यते, तथाहि कारणव्यापारस्य प्रथमसमय एव ज्ञानादिकार्यं
केनचिदंशेन यदि नोत्पद्यते तर्हि द्वितीयादिसमयेऽपि नोत्पद्येतेत्यन्त्यसमयेऽप्यनुत्पन्नं स्यादिति केन चिदंशेनाद्यसमयेऽपि ज्ञानादि-
कार्यमुत्पन्नमित्यभ्युपगन्तव्यम्, द्वितीयतृतीयादिसमयेपि चापराऽपरांशेनैव तस्योत्पत्तिरभ्युपगन्तव्या, नोत्पन्नांशेनैव, तथा सति
तस्मिन् कार्यांशे द्वितीयतृतीयादिसमयभाविव्यापाराणां व्यग्रतया तत्पूर्वापूर्वांशेन ज्ञानादिकार्योत्पत्तिर्न स्यादित्यशेषांशकार्योत्पत्तिः
कदापि न स्यादित्याद्यसमयभाविव्यापारादारभ्यान्त्यसमयभाविव्यापारं यावत्प्रबन्धेनोत्पद्यमानं १ तद्रूपतयोत्पन्नम् २, अभि-
मतकार्यतया नोत्पत्स्यते ३, तदेव च किञ्चिदंशेन स्थितं ४, स्थीयमानं ५, स्थास्यमानञ्च ६ एवं किञ्चिदंशेन विनष्टं ७ विनश्यत् ८
[illegible] ज्ञेयम्. ९ उक्तनवप्रकारेषु प्रतिप्रकारमुत्पादव्ययध्रौव्यात्मकत्रिलक्षणयोगेन सप्तविंशतिर्भङ्गा भवन्ति, एते च
एवं अभिन्नकालानां तदुत्पत्तिनाशस्थितीनां प्रत्येकं कालत्रयस्पर्शि त्रिलक्षणयोगेनेत्यस्याऽभिन्नकालानां ज्ञानोत्पत्ति-
नाशस्थितीनां प्रत्येकं कालत्रयस्य भूतभवद्भविष्यत्कालत्रयस्य संस्पर्शी यस्त्रिलक्षणस्योत्पादव्ययध्रौव्यस्य योगस्तेनेत्येवमर्थो विवक्ष्यते
तदा उद्देश्यकोटौ कालत्रयस्य प्रवेशेनावसेयाः, यदि च कालत्रयस्पर्शि यत्त्रिलक्षणमुत्पादव्ययध्रौव्याख्यं तस्य योगेनेत्येवं कालत्रय-
स्पर्शित्रिलक्षणयोगेनेत्यस्यार्थो विवक्ष्यते, तदा कालत्रयस्य विधेयकोटौ प्रवेशनेन सप्तविंशतिर्भङ्गा इत्थमवसेयाः एकस्यैव वस्तुनो
केनचित् किञ्चिदंशेनोत्पन्नता १ सैवाऽपूर्वांशेन चोत्पद्यते २ अपरांशेन चोत्पत्स्यते ३ एवमुत्पत्तिर्विनष्टा ४ विनश्यति ५ विनङ्क्ष्य-

ति च ६ स्थिता ७ तिष्ठति ८ स्थास्यति च ९ इत्येवमुत्पत्तेर्नवप्रकाराः। एवमवस्थान्तरलक्षणो नाशोऽप्यपरापरांशेनोत्पन्नः १ उत्पद्यते २ उत्पत्स्यते च ३ विनष्टः ४ विनश्यति ५ विनङ्क्ष्यति च ६ स्थितः ७ तिष्ठति ८ स्थास्यति च ९ इत्येवं विनाशस्य नव प्रकाराः, एवं स्थितिरपि उत्पन्ना १ उत्पद्यमाना २ उत्पत्स्यमाना च ३ विनष्टा ४ विनश्यमाना ५ विनङ्क्ष्यमाणा च ६ स्थिता ७ स्थीयमाना ८ स्थास्यमाना च ९ इत्येवं स्थितेरपि नवप्रकाराः, सर्वसम्मीलने सप्तविंशतिः प्रकारा इति। भिन्नकालानां च कालत्रययोगेन सप्तविंशतेस्त्रिधा गुणने एकाशीतिर्भङ्गा उत्पद्यन्ते इति यद् यदैवोत्पद्यते १ तत्तदैवोत्पन्नम् २ उत्पत्स्यते च ३ यद् यदैवोत्पन्नं ४ तत्तदैवोत्पद्यते ५ उत्पत्स्यते च ६ यद् यदैवोत्पत्स्यते ७ तत्तदैवोत्पद्यते ८ उत्पन्नं च ९ इत्येकैकं त्रैकाल्यं प्रतिपद्यते, तथा चोत्पत्तेरुत्पद्यमानादिकालत्रययोगेन नवभेदास्सञ्जाताः एवमुत्पद्यमानोत्पन्नोत्पत्स्यमानभेदाः प्रत्येकशः विगतविगच्छद्विगमिष्यद्रूपैस्स्थितस्थीयमानस्थास्यमानैश्च त्रैकाल्यं प्रतिपद्यन्ते तथाहि यद् यदैवोत्पद्यमानं तत्तदैव विगतं १ विगच्छत् २ विगमिष्यच्च ३ एवं यद् यदैवोत्पन्नं तत्तदैव विगतं ४ विगच्छत् ५ विगमिष्यच्च ६ यच्चोत्पत्स्यमानं यदा तदापि विगतं ७ विगच्छत् ८ विगमिष्यच्च ९ इत्येवमुत्पद्यमानादेर्विगतादियोगेन नवभेदाः। एवमेव यद् यदैवोत्पद्यमानं तत्तदैव स्थितं १ तिष्ठति २ स्थास्यति च ३ एवमुत्पन्नमुत्पत्स्यमानञ्च स्थिततिष्ठत्स्थास्यद्रूपैस्त्रित्रिभेदं ज्ञेयम्, उक्तप्रकारेणोत्पद्यमानादेस्स्थितादियोगेनापि नवभेदाः, सर्वसङ्कलने उत्पत्तेस्सप्तविंशतिर्भेदा ज्ञेयाः, एवंस्थितिविगमावपि कालत्रयस्पर्शित्रिलक्षणयोगेनोत्पत्तिप्रणालिकया सप्तविंशतिभेदौ ज्ञेयौ, तथाहि यद् यदैव स्थीयमानं १ तत्तदैव स्थितं २ स्थास्यति च ३ यद् यदैव स्थितं ४ तत्तदैव तिष्ठति ५ स्थास्यति च ६। यद् यदैव स्थास्यति ७ तत्तदैव स्थीयमानं ८ स्थितञ्च ९ इत्येकैकं त्रैकाल्यं प्रतिपद्यते, तथा च स्थितेस्स्थीय-

मानत्वादिकालत्रययोगेन नवभेदाः। तथा यद् यदैव स्थीयमानं तत्तदैव विगतं १ विगच्छत् २ विगमिष्यश्च ३ एवं तत्तदैवोत्पद्यमानम् ४ उत्पन्नम् ५ उत्पत्स्यमानञ्च ६ तथा यद् यदैव स्थितं तत्तदैवोक्तरूपेण षड्भेदम्, एवमेव यद् यदैव स्थास्यति तत्तदाप्युक्तरूपेण षड्भेदम्, षड्भेदस्य त्रिधा गुणनेऽष्टादशभेदाः, स्पष्टवृत्त्या ते चैवम्, स्थीयमानं विगतं १ विगच्छत् २ विगमिष्यत् ३ स्थितं विगतं ४ विगच्छत् ५ विगमिष्यत् ६ स्थास्यमानं विगतं ७ विगच्छत् ८ विगमिष्यत् ९ स्थीयमानम् उत्पद्यमानम् १० उत्पन्नम् ११ उत्पत्स्यमानं १२ स्थितम् उत्पद्यमानम् १३ उत्पन्नम् १४ उत्पत्स्यमानं १५ स्थास्यमानम् उत्पद्यमानम् १६ उत्पन्नम् १७ उत्पत्स्यमानम् १८ इत्येषामष्टादशभेदस्य पूर्वोक्तनवभेदसङ्कलने स्थितेस्सप्तविंशतिर्भेदा इति, एवमेव यद् यदैव विगच्छत् १ तत्तदैव विगतं २ विगमिष्यच्च ३ यद् यदैव विगतं ४ तत्तदैव विगच्छत् ५ विगमिष्यच्च ६ यद् यदैव विगमिष्यत् ७ तत्तदैव विगतं ८ विगच्छच्च ९ तथाच विगच्छत् विगतं विगमिष्यत् ३ विगतं विगच्छत् विगमिष्यत् ३ विगमिष्यत् विगतं विगच्छत् ३ इत्येवं नवभेदाः, विगच्छत् उत्पद्यमानम् उत्पन्नम् उत्पत्स्यमानं च ३ विगतम् उत्पद्यमानम् उत्पन्नम् उत्पत्स्यमानं च ३ विगमिष्यत् उत्पद्यमानम् उत्पन्नम् उत्पत्स्यमानं ३ चेत्येवं नवभेदाः, विगच्छत् स्थितं स्थीयमानं स्थास्यमानं, ३ विगतं स्थितं स्थीयमानं स्थास्यमानं, ३ विगमिष्यत् स्थितं स्थीयमानं स्थास्यमानं, ३ इत्येवं नवभेदाः सर्वसङ्कलने विगमस्य सप्तविंशतिर्भेदा इति सप्तविंशतेस्त्रिधा गुणने एकाशीतिर्भङ्गा उत्पद्यन्त इति भावः। ननु भवन्त्वेवं भङ्गाः कल्पनानिर्मिताः, न चैतावता सद्धर्मसाधका भवन्ति, कल्पनाया निरङ्कुशत्वेनाऽप्रमाणभूतत्वादित्याशङ्क्य परिहरति न चैन इति, निषेधे हेतुमाह निपुणमित्यादि, तथाच सर्वैरेभिर्धर्मैस्त्रिकालस्पर्शिभिरविनाभूतं द्रव्यं प्रतिपादयद्वाक्यं प्रमाणमेवेति भावः, तदिदमाह सम्मतिकारः, "उप्पज्जमाणकालं उप्पन्नंति विगयं विगच्छंतं। दवियं पण्णवयंतो तिकालविसयं विसेसेइ।१।" इति।

उक्तार्थे पूज्यपादश्रीसिद्धसेनदिवाकराणां संवादमाह—

तदिदमुक्तं सम्मतौ महावादिना—"तिण्णिवि उप्पाई अभिण्णकाला य भिण्णकाला य॥ अत्थन्तरं अणत्थंतरं च दवियाउ णायव्वा इति" ॥ इत्थं विवेचन एव हि वर्त्तमानपाकक्रियाकालेऽपि किञ्चित्पक्वं किञ्चित् पच्यते किञ्चित् पक्ष्यते इत्यादयो नियतव्यवहाराः प्रवर्त्तन्ते, प्रस्थकन्यायेन बहुभेदनैगमाश्रयणात् ततः पूर्वमपि, न चाद्यकृतिप्रागभावं चरमकृतिध्वंसं चादायानागतातीतत्वव्यवहारैकान्तोपपादनं श्रेयः॥

तदिदमुक्तमिति, "तिण्णिवि"इत्यादि, अस्याश्च व्याख्या सम्मतिटीकातः न्यायप्रभातश्चावसेया, विस्तारभयान्नेह लिख्यते, अष्टसहस्रीटीकायां तातपादैश्श्रीयशोविजयोपाध्यायैरेवोक्तभङ्गास्सङ्क्षेपेणैवमुक्ताः "स्थित्यादित्रयस्य सहवर्त्तिनः कालत्रयस्पर्शिद्रव्याऽभेदोपचारेण नवभङ्गाः, प्रत्येकं स्थूलकालकृतवर्त्तमानत्वादिशालिस्थित्यादौ सूक्ष्मकालकृतावस्थाभेदेन नवेत्येकाशीतिर्भङ्गा भावनीयाः, यत्त्वाद्यक्रियाप्रागभावं चरमक्रियाध्वंसं चादाय भविष्यत्त्वमतीतत्वञ्च वाच्यमिति न वर्त्तमानक्रियाकाले कालत्रयवाचिप्रत्ययप्रयोगसम्भव इति नैयायिकादीनां मतम्, तत्स्थूलव्यवहारैकान्ताऽभिनिवेशविजृम्भितम्, नयविशेषेणैकदा त्रैकाल्यस्पर्शस्य सर्वसम्मतत्वात्,अन्यथोत्पत्तिकाले उत्पन्नत्वप्रत्ययस्य भ्रान्तत्वापत्तेः,सामुदायिकोत्पादे स्थूलकालभाविनि एकत्विकोत्पादानां सूक्ष्मकालस्पर्शिनां त्रैकाल्यस्पर्शे तु न काचिदनुपपत्तिरित्यादि",प्रस्थकन्यायेनेति प्रस्थकन्यायश्च"प्रस्थकार्थं व्रजामीति,वने गच्छन् ब्रवीति यत्, आदिमो ह्युपचारोऽसौ, नैगमव्यवहारयोः ॥१॥ अत्र प्रस्थकशब्देन, क्रियाविष्टवनैकधीः। प्रस्थकेऽहं व्रजामीति, ह्युपचारोऽपि च स्फुटः ॥ २ ॥ छिनद्मि प्रस्थकं तक्ष्णो-म्युत्करोम्युल्लिखामि च। करोमि चेति तदनुपचाराः शुद्धताभृतः ॥३॥ तमेतावति शुद्धौ

नूनीर्गनामाननादतुः। चितं मितं तथा मेया—ऽऽदमेवाह सङ्ग्रहः॥४॥ प्रस्थकश्चर्जुसूत्रस्य, मानं मेयमिति द्वयं। न—ज्ञकर्तृगताज्ञाता—च्छ-ब्दानां सोऽतिरिच्यते" ॥५॥ इति नयोपदेशश्लोकैरवसेयः। ततः पूर्वमपीति, कारणस्य कार्यरूपत्वारोपेण वर्त्तमानपाकक्रियाका-लात्पूर्वकालेऽपि वर्त्तमानपाकक्रियानुकूलकृतिदशायां किञ्चित्पक्वमित्यादयो नियतव्यवहाराः प्रवर्त्तन्त इत्यर्थः। ननु वर्त्तमानपाक-क्रियाकाल एव किञ्चित्पक्वं किञ्चित्पच्यते किञ्चित्पक्ष्यते इत्यादयो व्यवहाराः कथं, पक्वमित्यत्र पच्धातोः भूतार्थे क्तप्रत्ययस्य निष्ठा-संज्ञकस्यार्थस्य चरमकृतिध्वंसरूपस्यातीतत्वस्य पक्ष्यत इत्यत्र पच्धातोः भविष्यदर्थे स्यतेप्रत्यय इति तदर्थस्याद्यक्रियाकृतिप्रागभाव-रूपस्यानागतत्वस्य न वर्त्तमानपाककृतिकालेऽभावादित्याशङ्क्य प्रतिक्षिपति न चेति, निषेधे हेतुमाह—

कृतिस्थाने क्रियाभिषेकत्यागे बीजाभावात्, अनन्तभेदाभेदशबलवस्तुवैचित्र्यं विना व्यवहारवैचित्र्यानु-पपत्तेः, तद्विवेकायैवोक्तभङ्गकदम्बकोपादानात्, यद्येवं तत्त्वं सर्वैः कथं न प्रतीयत इति चेत्, संमुग्धतया प्रतीयत एव, विविच्य तु वैनयिकी प्रतीतिर्गुरुचरणोपासनाधीनैव।

कृतिस्थान इति, विक्लित्यनुकूलक्रियाप्रचयस्यैव पाकरूपत्वेन तत्र या क्रिया निष्पन्ना तत्क्रियाध्वंसमेव चरमकृतिध्वंस-स्थानेऽभिषिच्य निष्ठाप्रत्ययोपपादनस्य या क्रिया वर्त्तते तामाश्रित्य वर्त्तमानप्रत्ययोपपादनस्य या च क्रिया न निष्पन्ना तत्क्रियाप्राग-भावमेवाद्यकृतिप्रागभावस्थानेऽभिषिच्य भविष्यत्प्रत्ययोपपादनस्य सम्भवे तत्त्यागे मानाभावात्। अत एव साध्यमानावस्था पूर्वा-परीभूता भूतभविष्यद्वर्त्तमानसदसदाद्यनेकावयवरूपा क्रिया आख्यातपदैराख्यायते इत्यपि साध्यक्रियालक्षणं सङ्गच्छते इति बोध्यम्। तद्विवेकायेति, अनन्तभेदाभेदशबलवस्तुवैचित्र्यविवेकायेत्यर्थः। घटपटादिवस्तुनः परस्परविरुद्धभेदाभेदादिधर्मात्मकत्वं कथ-

मित्याशङ्कानिवृत्तये निमित्तभेदप्रयोज्यभेदाभेदादिविवेचनायेतिभावः, सम्मुग्धतया प्रतीयत एवेति कालाद्यष्टप्रकारेण नास्तित्वाद्यशेषधर्माणामस्तित्वाभिन्नत्वेन तज्ज्ञाने तद्रूपेण तदन्याऽशेषधर्मतत्त्वं ज्ञायत एवेति भावः। विविच्येति स्वस्वनिमित्तापेक्षया स्वस्वासाधारणधर्मरूपेणेत्यर्थः, वैनयिकी प्रतीतिरिति विनयेन भवा शास्त्रापूर्वनिस्यन्दगोचरा प्रतीतिरित्यर्थः,यद्बुध्यते तदिहेत्यादिश्लोकोत्तरार्द्धं विवरीतुमाह—

तदाह–इत्थमुक्तप्रकारेण भिदामपि स किं न विदांकरोतु जानातु, यो लक्षणानामुत्पादव्ययध्रौव्याणां भङ्गजालमुक्तरूपं गुरुणा पाठितो भवति,एतत्तत्त्वपरिशीलनायास्मदुपज्ञाष्टसहस्र्यादावभ्यासो विधेयः॥५४॥ सामान्यतोऽपि ज्ञाताज्ञातत्वानेकान्तपरिज्ञानवान् सङ्क्षेपरुचिसम्यक्त्वधारित्वेन बहुतरविशेषजिज्ञासाशाशालित्वेन च बालस्यापि पण्डितत्वं तदपरिज्ञानवतश्चैकान्ताभिनिवेशान्मिथ्यादृष्टित्वेन तत्त्वप्राप्त्यहङ्कारेणाजिज्ञासुतया च वृद्धस्यापि बालत्वमित्युपदिशन् भगवन्तमभिष्टौति—

तत्त्वं ह्यबुद्ध्यत शिशुर्भवतः किलेदं, षड्वार्षिकोऽपि भगवन्नतिमुक्तिकर्षिः ॥
जानन्ति ये न गतवर्षशतायुषोऽपि, धिक् तेषु मोहनृपतेः परतन्त्रभावम् ॥ ५५ ॥

तदाहेति, पञ्चपञ्चाशत्तमश्लोकमवतारयति सामान्यतोऽपीति, स्वस्वनिमित्तविशेषसमाश्रयणमन्तरेणापीत्यर्थः। तत्त्वं ह्यबुद्ध्यत इति मूलं स्वयमेव ग्रन्थकारो विवृणोति—

हे भगवन् षड्वार्षिकोऽपि भवतः शिशुरतिमुक्तकर्षिः किल इदं हि तत्त्वमबुद्ध्यत, यो भगवन्तं गौतमं

भिक्षार्थं व्रजन्तमङ्गुल्या गृहीत्वा स्वगृहे नीत्वा भूयसाऽऽदरेण हृद्यैरनवद्यैरशनपानखाद्यस्वाद्यैर्मातृहस्तेन पूर्णपात्रं विधाय तेनैव सह भवतो महाकथाप्रतिपन्नस्य समीपमागत्य श्रुत्वा मनोहारिणीं सुधानिस्यन्दानुकारिणीं धर्मदेशनां गृहे गत्वा मातुरनुज्ञां याचमान इयान् शिशुः किन्त्वं तत्त्वं जानासीति मात्रा पृष्टो यदेव जानामि तदेव न जानामि यदेव न जानामि तदेव जानामीत्येतावतैव श्रवःसुधापारणेनोत्तरेण मातरं प्रतिबोध्य भवतोऽभ्यर्णे सर्वदुरितनिवर्हिणीं दीक्षां जग्राह, ये पुनर्गतं वर्षशतप्रमाणमायुर्येषां तादृशा अपि शुष्कवाद्व्यसनेनैव परिगलितायुष इत्यर्थः । इदं तत्त्वं न जानन्ति, तेषु पण्डितंमन्येषु मोहनृपतेः परतन्त्रभावं धिग्, विचित्रोऽयं मोहमहाशैलूषनर्तनप्रकारः, यत्तत्त्वं जैनशिशवोऽपि जानन्ति तन्न चतुर्दशविद्यास्थानपारदृश्वानोऽप्यनेके परतीर्थिकस्थविरा इति भावः ॥ ५४ ॥ एनामेव दिशमावृतानावृतत्वयोरप्यतिदिशन्नाह—

हे भगवन्नित्यादिना, ननापसिद्धान्तदोषः, अन्तकृद्दशाङ्गे सविस्तरोक्तत्वात्, विस्तरार्थिनोक्तसिद्धान्तोऽवलोक्यः, अन्तकृद्दशाङ्गोक्तानिमुक्तकमुनिवृत्तान्तमेव सङ्क्षेपेणोपनिबध्नाति यो भगवन्तमित्यादिना ॥५५॥ षट्पञ्चाशत्तमश्लोकमवतारयति—एनामेवेति, ग्रहणाग्रहणस्थलप्रदर्शितामित्यर्थः, दिशं प्रक्रियां,

आवृत्यनावृतिपदेऽपि समा दिगेषा, जात्यावृतौ भवति वैनयिकी कथं धीः ॥

नित्या च जातिरनयत्यपि नद्वदेव, चित्रो भवन्न तनुते भुवि कस्य चित्रम् ॥ ५६ ॥

आवृत्यनावृतिपदेऽपि आवृतानावृतत्वस्थानेऽपि, एषा ग्रहणाग्रहणस्थलप्रदर्शिता दिक्, समा तुल्यैव, ज्ञात-

त्वाज्ञातत्ववदंशभेदेनैवावयविन्यावृतानावृतत्वयोरविरोधादित्यर्थः। यदि चांशावरणेऽप्यवयवी दृश्यत एव, तत्परिमाणमपि तथा, तद्गतहस्तत्वादिजातिविशेषस्तु न दृश्यत इति मतं, तदा तत्रावयविपरिमाणे अनावृते परिमाणगतजातिविशेष आवृत इति प्राप्तम्।

आवृत्येत्यादिमूलं ग्रन्थकृट्टीकारामलङ्कृतमिति न टीकान्तरमपेक्षते, उक्तश्लोकं विवृणोति ग्रन्थकारः आवृत्यनावृतिपदेपीत्यादिना, तथेति दृश्यत एवेत्यर्थः। तद्गतेति अंशावच्छिन्नावरणवदवयविपरिमाणगतेत्यर्थः।

तथा च तद्ग्रहे आवरणसंयोगस्य स्वाश्रयसमवेतसमवेतत्वसम्बन्धेन प्रतिबन्धकत्वं वाच्यम्, एवं चावृतानावृतसमपरिमाणवंशयोरनावृतचक्षुःसंयोगादपि तच्चाक्षुषं न स्यात्, तद्वैजात्यप्रकारकप्रत्यक्षे आवरणसंयोगस्य प्रतिबन्धकत्वे त्वावृतसन्निकर्षात् तन्निर्विकल्पकापत्तिः। किं च तत्पुरुषस्यापि कालान्तरे तत्कालेऽप्यन्यपुरुषस्य तत्कालेऽपि तत्पुरुषस्य पार्श्वान्तरगतस्य तच्चाक्षुषोदयात् तत्कालीनतद्देशस्थतत्पुरुषीयतच्चाक्षुषे आवरणसंयोगस्य प्रतिबन्धकत्वं वाच्यम्, तथा च प्रतिबन्ध्याप्रसिद्धिः।

तथा च अवयविपरिमाणस्यानावृतत्वेपि तद्गतजातिविशेष्यस्याऽऽवृतत्वे च, तद्ग्रहे विषयतासम्बन्धेन अवयविपरिमाणगतजातिविशेषग्रहे, स्वाश्रयसमवेतसमवेतत्वसम्बन्धेनेति आवरणसंयोगो न केवलमवयवेन सह किन्त्ववयवसंयोगद्वाराऽवयविनाऽपि सहेति स एवात्र स्वपदेन ग्राह्यः, तथा चावयविनस्तदाश्रयत्वात्तत्समवेतसमवेतत्वं परिमाणगतजातिविशेषेप्यस्तीति न तत्रोक्तप्रतिबन्धकतावच्छेदकसम्बन्धस्याऽसत्त्वदोष इति बोध्यम्। उक्तप्रतिबध्यप्रतिबन्धकभावे च सति समपरिमाणकवंशद्वयस्थले आवृत-

वंशपरिमाणे य एव जातिविशेषः स एवानावृतवंशपरिमाणेपि, तस्यैकत्वात्, तथा चानावृतवंशपरिमाणगतजातिविशेषस्याप्युक्त-सम्बन्धेन प्रतिबन्धकत्तया तद्विषयकप्रत्यक्षमपि न स्यादित्याह एवञ्चेति, नचावृतवंशपरिमाणविशेष्यकतद्गतजातिविशेषप्रकार-कप्रत्यक्षं प्रत्येवोक्तसम्बन्धेनावरणसंयोगस्य प्रतिबन्धकत्वेनानावृतवंशपरिमाणविशेष्यकतद्गतजातिविशेषप्रकारकप्रत्यक्षस्य प्रतिब-न्धकानन्वेऽक्रान्ताक्रान्ततया तदुत्पत्तौ बाधकाभाव एवेति वाच्यम्, आवृतपरिमाणविशेष्यकतद्गतवैजात्यप्रकारकप्रत्यक्षं माभूत् तद्वै-जात्यनिर्विकल्पप्रत्यक्षं तु स्यादेव, तस्य निष्प्रकारत्वेन तं प्रत्यावरणसंयोगस्याऽप्रतिबन्धकत्वादित्याह तद्वैजात्यप्रकारकप्रत्यक्ष इति, प्रतिबन्ध्याप्रसिद्धिरिति, नहि शशशृङ्गगगनकुसुमादिकं प्रति कस्यचित्प्रतिबन्धकत्वम्भवतीति तत्कालीनतद्देशस्थतत्पु-रुषगतवैजात्यप्रकारकप्रत्यक्षस्याऽप्रसिद्ध्यैव न प्रतिबध्यत्वसम्भव इतिभावः।

अत एव विजातीयचक्षुःसंयोगस्य परिमाणगतवैजात्यप्रत्यक्षे हेतुत्वं वाच्यमिति मथुरानाथः, तदपि न, तदवच्छिन्नेऽनुगतहेत्वादिकल्पने गौरवात्, किञ्च यद्युक्तजातिरेवावृता तदार्द्धावृतेऽनावृततुल्यपरिमाणमपेक्ष्य मङ्गलगानशास्त्रजनितसंस्कारेण कथं हस्तत्वादिप्रकारिका वैनयिकी धीः, पठन्ति च–अर्द्धन्तोये कर्दमे द्वादशांश इत्यादि। अपि च यस्तिर्यगूर्ध्वमपि च हस्तमानस्तत्र तिर्यगर्द्धावृते ऊर्ध्वं हस्तत्वं न गृह्येत, तिर्यग्घस्तत्वमेव तत्रावृतमिति चेत्,

अत एवेति उक्तप्रतिबध्यप्रतिबन्धकभावस्याऽप्रसिद्धेरेवेत्यर्थः। अस्य च हेतुत्वेऽन्वयः तदवच्छिन्नेऽनुगतेति वैजात्यं तत्तत्परिमाणभेदेन भिन्नमिति तत्तत्प्रकारकप्रत्यक्षे तत्तद्विजातीयसंयोगानां तत्तद्वैजात्यरूपेण कारणत्वकल्पने गौरवादितिभावः।

अर्द्धन्तोये कर्दमे द्वादशांश इत्यादि, अत्रादिपदेन "षष्ठो भागो वालुकायां निमग्नः। सार्द्धो हस्तो दृश्यते यस्य तस्य, स्तम्भस्याशु ब्रूहि मानं विचिन्त्य" इति पदत्रयस्योपग्रहः । स्तम्भमानं हस्ताः षट् । एतेन द्वितीयचरणव्याख्यानं कृतम् । अनुमित्यादिकं प्रत्यावरणसंयोगस्याप्रतिबन्धकत्वेनार्द्धं तोय इत्यादिगणितसंस्कारवतः पुरुषस्य व्याप्तिविशेषोपस्थितिबलेन स्तम्भविशेष्यकषड्हस्तत्वविधेयकानुमित्यात्मिका प्रतीतिरिति यदि समाधानं कुर्यान्नैयायिकस्तदा दोषान्तरमाह अपि चेति, तिर्यग्हस्तत्वोर्ध्वहस्तत्वयोर्भेदमभिमन्याशङ्कते तिर्यग्घस्तत्वमेवेति, उत्तरार्द्धं सङ्गमयन् समाधत्ते—

एवं तर्हि तत्र हस्तत्वजातिद्वयं प्राप्तं, तदप्यातानवितानावच्छेदेनाङ्गुलादिना मीयमानं नाना, तदप्युत्सेधाङ्गुलात्माङ्गुलादिना तथा, तदपि तत्तदवयवावच्छेदेन चक्षुःसन्निकर्षादुपलभ्यमानवितस्तित्वादिना सङ्कीर्यमाणं बहुधा, एवं नानारूपैकचित्रजातेरनुभवानुरोधेन स्वीकारे किमपराद्धमवयविना, य आवृतानावृतत्वाद्यनन्तधर्मानुप्रवेशेन चित्रतयाऽनुभूयमानोऽपह्नूयते स्वदर्शनपक्षपातमात्रेण यौक्तिकैरपीति विभावनीयं सुधीभिः ॥५६॥ करूपाकरूपावधिकृत्याह—

एवं तर्हीति, तथा मीयमानं नाना, तत्तदवयवावच्छेदेन यदेवैकपुरुषापेक्षया हस्तपरिमाणं तदेव पुरुषान्तरापेक्षया वितस्तिपरिमाणम्, एवमर्द्धावृतस्थले उपलभ्यमानवितस्तित्वमपि तत्परिमाणगतमेव वाच्यं, तथाच तेन सह हस्तत्वजातेस्साङ्कर्यात्तिर्यग्वितस्तित्वव्याप्यं हस्तत्वमन्यत्, ऊर्ध्ववितस्तित्वव्याप्यं हस्तत्वमन्यदित्येवमेकस्मिन् परिमाणेपि नानाहस्तत्वं कल्प्यं स्यादिति भावः। नानारूपैका हस्तत्वादिजातिरित्यभ्युपगमे संविदेव भगवती नश्शरणमित्युक्तेस्तथानुभव एव प्रमाणमित्यावृतत्वानावृतत्वाद्य-

[illegible]ङ्गीकृत्यावतारयति कम्पाकम्पावपीत्यादि,

एकत्र देशाभिदयाऽनुभवेन कम्पा-कम्पावऽपि प्रकृतवस्तुनि भेदकौ स्तः ॥
धीविप्लवोपगमतश्च न चेद्विभाग-संयोगभेदपरिकल्पनया च दोषः ॥ ५७ ॥

एकत्र देशाभिदयेत्यादिश्लोकस्य प्रकृतवस्तुनि अवयविनि, कम्पाकम्पावपि आवृतानावृत्वे इव चलनाचलने अपि, भेदकौ स्तः एककालावच्छिन्नत्वसामानाधिकरण्यसम्बन्धेनाऽभेदविशिष्टभेदसाधकौ भवतः, तत्र हेतुमाह एकत्र देशाभिदयाऽनुभवेनेति, एकस्मिन् भिन्नभिन्नदेशावच्छेदेनानुभूयमानत्वादित्यर्थः। अवयवकम्पेप्यवयविनो निष्कम्पत्वमेवेत्यभ्युपगमे दोषमाह धीविप्लवेति, न चेदित्यनन्तरमित्थं स्वीक्रियते तदेतिशेषः, उक्तप्रकारेण न चेत्स्वीक्रियते तदा धीविप्लवोपगमतः विभागसंयोगभेदपरिकल्पनया च दोष इति, अवयव एव चलनक्रियास्वीकारे चलनक्रियाऽभाववत्यवयविनि चलनप्रकारकत्वेनावयवी चलतीतिबुद्धेर्भ्रमत्वस्वीकारान्निश्चलावयवावच्छेदेनाप्यवयविनि चलतीत्यारोपदोषप्रसङ्गः, परमाणुद्व्यणुकत्रसरेण्वाद्यवयवाकाशादिसंयोगविभागजन्यद्व्यणुकत्रसरेणुचतस्रेण्वाद्यवयव्याकाशादिसंयोगविभागादयः अन्तिममहावयव्याकाशादिसंयोगविभागान्ताः अनन्ताः कल्प्यास्स्युरिति दोषप्रसङ्गश्चेतिसङ्क्षेपार्थः। विस्तरार्थस्तु ग्रन्थकृतैव निव्रीयते—

प्रकृतवस्तुन्यवयविनि एकत्र देशाभिदया देशभेदेनानुभवेनानुभूयमानतया,कम्पाकम्पावऽपि भेदकौ स्तः कथंचिद् भेदसहिष्णू भवतः, न चेत् इत्थं स्वीक्रियते तदा, धीविप्लवोपगमतः चलदवयवाश्रितेऽवयविनि चलत्वबुद्धे-

श्रेमत्वस्वीकारात्, विभागसंयोगभेदानां विभागजविभागसंयोगजसंयोगानामनन्तानां परिकल्पनया च दोषः।

प्रकृतेत्यादिना, विषयतासम्बन्धेन द्रव्यसमवेताव्याप्यवृत्तिचाक्षुपत्वावच्छिन्नं प्रति केवलं चक्षुस्संयुक्तसमवायसन्निकर्षस्यैव कारणत्वे चक्षुस्संयोगानवच्छेदकावच्छेदेनापि कपिसंयोगादिचाक्षुपप्रत्यक्षं स्यादिति तद्वारणाय यद्देशावच्छेदेन चक्षुस्संयोगस्तदवच्छेदेनावयव्यनुयोगिको यस्समवायस्तत्प्रतियोगित्वस्य कारणत्वं वाच्यम्, तस्य च कर्मणोऽव्यापकत्वे निश्चलावयवावच्छेदेन शरीराद्यवयविक्रियायामभावेन चलावयवावच्छेदेन च सत्त्वेन न निश्चलावयवावच्छेदेन शरीरादौ क्रियाविषयकचाक्षुपप्रत्यक्षं, किन्तु चलावयवावच्छेदेनैव तदिति नियमोपपत्तिस्स्यादित्याह—

तथाहि—कर्मणोऽव्यापकत्वे द्रव्यसमवेताव्याप्यवृत्तिचाक्षुषत्वावच्छिन्ने चक्षुःसंयोगावच्छेदकावच्छिन्नसमवायनिरूपकत्वस्यैव सामान्यतो ग्रहेतुत्वं कॢप्तं तन्मर्यादयैव निश्चलावयवावच्छेदेन चक्षुःसंनिकर्षान्न चलत्वप्रतीतिः, किंतु चलावयवावच्छेदेनेति नियमः स्यात्, तव तु कथं न निश्चलावयवावच्छेदेनापि चलत्वारोपोऽवयविनि। यत्राश्रये चलनं गृह्यते तदवच्छेदेनैव तदारोप्यत इति फलबलेन कल्पनादिति चेत्, न, संयोगवदव्याप्यवृत्तित्वेनोपपत्तौ फलबलस्यैवासिद्धेः,

कर्मणोऽव्यापकत्वे इति, कर्मणस्सावच्छिन्नवृत्तिकत्वे इत्यर्थः। कर्मणो निरवच्छिन्नवृत्तिकत्वमभ्युपगच्छतो नैयायिकस्य मते दोपमाह तव त्विति। नैयायिकश्शङ्कते यत्रेति, यत्राश्रये यस्मिन्नवयवे, गृह्यते प्रमाणविपयीक्रियते, तदवच्छेदेनैव तद्रूपावयवावच्छेदेनैव, तदारोप्यते अवयविनि चलत्वमारोप्यते, अवयवी चलतीत्याकारोऽवयविविशेष्यकचलनप्रकारको य आरो-

पत्वाङ्गीक्रियत इति यावत् । नन्ववच्छेदकतासम्बन्धेन चलनारोपं प्रति विशेष्यतासम्बन्धेन चलनग्रहः कारणमिति यत्र यत्राव-यवे विशेष्यतासम्बन्धेन चलनग्रहस्तत्र तत्रावयवे अवच्छेदकतासम्बन्धेन चलनारोपो भवन् तत्तदवयवावच्छेदेनावयविविशेष्यक-चलनप्रकारकारोपपर्यवसायी भवतीत्युक्तकार्यकारणभावादऽभिमतफलसिद्धिरिति चेत्, तर्हि यत्र सर्वावयवावच्छेदेनावयविनि कर्म तत्र सर्वावयवावच्छेदेनावयविनि तत्प्रत्यक्षं प्रमात्मकं यद्भवति तन्न स्यात्, आरोपकारणस्य सद्भावेन तदात्मकमेव तत्स्यात्, स्याच्च विशेष्यतासम्बन्धेनागृह्यमाणं चलनं यस्मिन्नवयवे तदवच्छेदेनावयविनि चलनप्रत्यक्षं प्रमात्मकम्, आरोपकारणाभावात्, न स्याच्च तदवयवे चलनग्रहस्तदवयवावच्छेदेनावयविनि कुत्रापि चलनप्रमा, आरोपकारणसद्भावादित्याशयेनाह—

विशेष्यतासम्बन्धेन यत्र चलनग्रहस्तत्रावच्छेदकतासम्बन्धेन चलनारोप इति सामग्रीबलकल्पने चागृ-ह्यमाणचलनाश्रयावच्छेदेनैव चलनप्रमाविश्रान्तिप्रसङ्गः, स्वाश्रयवृत्तित्वसम्बन्धेन शाखायां चलनग्रहस्य वि-शेष्यतया शाखावच्छिन्नचलनप्रकारकारोपे हेतुत्वकल्पने च सर्वावयवावच्छेदेन चलनवत्यपि तत्प्रसङ्गः, शाखेतरवृत्तिचलनाभावसंवलितशाखाचलनग्रहस्य तद्धेतुत्वे च क्षुद्रक्षुद्रतरावयवावच्छिन्नशाखामात्रचलनग्र-हेऽपि तदप्रसङ्गः ।

विशेष्यतासम्बन्धेन यत्रेत्यादि, शाखायां वृक्षश्चलतीत्याकारको विशेष्यतासम्बन्धेन शाखावच्छिन्नचलनप्रकारकवृक्षात्म-कावयविविशेष्यको य आरोपः तं प्रति स्वविषयचलनाश्रयवृत्तित्वसम्बन्धेन शाखायां चलनग्रहस्य कारणत्वपक्षेप्युक्तदोषसद्भा-वेति दोषान्तरमाह सर्वावयवावच्छेदेनेति, सर्वावयवावच्छेदेन यस्मिन् वृक्षे क्रिया तत्र तत्प्रमैव भवति, तत्रापि विशेष्यतासम्ब-

न्धेन शाखावच्छिन्नचलनप्रकारकारोपस्स्यात्, स्वविषयचलनाश्रयो योऽवयवस्तन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वस्य वृक्षे सत्त्वेन तेन सम्बन्धेन तत्र शाखायां चलनग्रहस्यारोपकारणस्य सत्त्वादितिभावः। तद्धेतुत्वे विशेष्यतासम्बन्धेन शाखावच्छिन्नचलनप्रकारकवृक्षविशेष्यकारोपहेतुत्वे, तदप्रसङ्ग इति शाखावच्छिन्नचलनप्रकारकारोपो न स्यादित्यर्थः, शाखेतरक्षुद्रक्षुद्रतरावयववृत्तित्वाच्चलनस्य शाखेतरवृत्तिर्यश्चलनाभावस्तद्रूपविशेषणस्याऽभावेन तद्विशिष्टशाखाचलनग्रहस्य कारणस्याभावादितिभावः।

ज्ञायमानाभावसंवलनोक्तौ च पूर्वोक्तप्रसङ्गतादवस्थ्यं, सर्वतश्चलस्यापि सर्वभागेन चलत्वस्य दुर्ग्रहत्वात्। किञ्चैवं तुल्यन्यायेनावयववृत्तिधर्मज्ञानादवयविनि धर्मारोपो भवँस्तस्य निर्द्धर्मकत्वेन तुच्छत्वं साधयन् शून्यवादिमते भवन्तं प्रवेशयेत्। अपि च शाखायां वृक्षश्चलतीति प्रत्यये त्वया वृक्षे चलनांशे चलने शाखावच्छिन्नत्वांशे च गुरुतरं भ्रमत्वद्वयं कल्पनीयम्,

पूर्वोक्तप्रसङ्गतादवस्थ्यमिति, यत्र क्षुद्रक्षुद्रतरावयवचलनं तत्रापि शाखेतरवृत्तियत्किञ्चिच्चलनं तु ज्ञायमानमेवेति नोक्तदोषनिवृत्तिरिति तन्निवृत्तये ज्ञानमानं यच्छाखेतरवृत्तियावच्चलनं तदभावविशिष्टशाखाचलनग्रहस्य कारणत्वं वाच्यं, तथाच सर्वतश्चलनवत्यपि वृक्षे शाखेतरवृत्तियावच्चलनं न ज्ञायमानमिति ज्ञायमानत्वविशिष्टतदभावसंवलनमस्तीति सर्वावयवावच्छेदेन चलनवत्यपि चलनारोपप्रसङ्ग इत्यर्थः। चलनांश इति वृक्षे चलनं नाभ्युपगतं नैयायिकेन किन्तु शाखायामेवेति चलनाभाववति वृक्षे चलनप्रकारकत्वेन भ्रमत्वमितिभावः। शाखावच्छिन्नत्वांशे इति शाखावृत्तिचलनं न शाखावच्छिन्नं वृक्षवृत्तिचलनं तु नाभ्युपगतमेव येन शाखावच्छिन्नं स्यात्, कदाचिदभ्युपगतं स्यात्तदापि व्याप्यवृत्तितयैवाभ्युपगतं स्यादिति तन्न शाखावच्छिन्नमिति शाखा-

वच्छिन्नत्वाभाववति चलने शाखावच्छिन्नत्वप्रकारकत्वेन भ्रमत्वमितिभावः। गुरुतरमिति तद्द्वयघटितप्रमात्वापेक्षया तदभाववत्त्व-घटितं भ्रमत्वं गुरुतरमित्याशयः।

यथा नु शाखावच्छेदेन चलनवति तथा चलनप्रकारकत्वमेकमेव प्रमात्वं लघुतरमित्यपि निरूपणीयं सूक्ष्मेक्षिणा। अपि च चलाचलाश्रयस्य चलतया (चलाचलतया) प्रतीतौ चलाचलजलचन्द्रवद्द्वैतप्रत्ययोऽपि स्यादेव। गृह्यमाणविच्छेदाश्रयद्वयवृत्तित्वग्रहणादुभयमध्यवृत्तिव्यवधायकग्रहणाद्वा दोषाद्भेदप्रत्ययः, स चात्र नास्तीति दीधितिकारोक्तरीत्या न प्रसङ्ग इति चेत्, न, वीचीवदेवावयवयोर्वैधर्म्येणैव भेदरूपविच्छेदग्रहात्। चलाचलशाखयोरपि मध्यवर्तिनः स्कन्धस्य व्यवधायकस्य ग्रहणाच,

यथा यदवयवावच्छेदेनावयविनि चलनस्य वृत्तित्वमभ्युपगच्छता शाखादिना, तथा शाखावच्छिन्नेत्यर्थः। यत्र सत्यचलाविच्छेदविषयौ तथापि चलाचलाश्रयस्य चलाचलतया प्रतीतौ चलाचलजलचन्द्रवद् द्वैतप्रत्ययोऽपि स्यादिति चेत्, स्यादेव, चलाश्रयविच्छेदत्वादित्यनुक्तं तत्प्रतिक्षिपति—अपि चेत्यादिना, चलाचलाश्रयस्येति, चलश्चाचलश्च चलाचलौ तावाश्रयौ यस्यावयविनः स तथा तस्येत्यर्थः, तत्र—उक्तदोषश्च, अत्र—अवयविनि, वैधर्म्येण—चलत्वाचलत्वरूपवैधर्म्येण, अथात्र वैधर्म्यप्रयोज्यभेदरूपो वैधर्म्यलक्षणभेदरूपो वा विच्छेदो न विवक्षितः, येन गृह्यमाणतदाश्रयेऽवयवद्वयेऽवयविनो वृत्तित्वग्रहणाद्भेदप्रत्ययस्यात्, किन्तु पृथग्भूतत्वलक्षण एव विच्छेदो विवक्षितः, स चावयवयोर्नास्ति, व्यवधायकमपि तदेव भवति यदेव व्यवहितयोः विभक्तदेशत्वम्, स्कन्धस्तु न चलाचलशाखाद्वयाद्विभक्तदेशस्थ इति न तेन तयोर्भेदप्रत्यय इत्याशयेनाशङ्कते—

अपृथग्भूतयोर्न विच्छेदोऽपृथग्भूतस्य च न व्यवधायकत्वमिति चेत्, आयातोऽसि मार्गेण, एवं ह्यपृथग्भूतत्वेनैव मिथोऽवयवयोस्ताभ्यामवयविनश्च प्रविभक्तप्रदेशत्वाभावरूपोऽभेदो भेदश्चान्यत्वं त्वदुक्तरीत्यैवेति भेदाभेदवादस्यैव साम्राज्यात्। अपि च नोदनाभिघातादिना यदावयवे कर्मोत्पद्यते तदावयविन्यपि सन्निहितत्वात् कुतो नोत्पद्यत इत्यत्र कर्मत्वावच्छिन्नं प्रत्यवयवित्वेन प्रतिबन्धकत्वं वाच्यम्, तथा च कर्मणः परमाणुमात्रगतत्वापत्तिः, अवयविकर्मसामग्र्या यावदवयवकर्मसामग्रीनियतत्वकल्पने च रूपादावपि तथात्वं स्यात्,

अपृथग्भूतयोरिति, ताभ्याम्–अवयवाभ्याम्, परमाणुमात्रगतत्वापत्तिरिति घटापेक्षया कपालस्यावयवत्वं कपालिकापेक्षया चावयवित्वमित्येवं पूर्वोत्तरापेक्षयोभयरूपत्वमाद्व्यणुकमिति द्व्यणुकादीनामवयवित्वेन समवायेन कर्मत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन प्रतिबन्धकत्वात्कर्मवत्त्वं न स्यात्, परमाणोस्त्वन्त्यावयवतयैव सिद्धत्वेनाप्रतिबन्धकत्वात्तन्मात्रवृत्तित्वं कर्मणस्स्यात्, तथाच परमाणौ महत्त्वाभावेन विषयतासम्बन्धेन कर्मचाक्षुषादिप्रत्यक्षं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन महत्त्वस्य कारणस्य कर्मण्यऽभावेन चक्षुरादिना तत्प्रत्यक्षं न स्यादित्यतीन्द्रियत्वं तस्य स्यादितिभावः। नन्ववयविकर्मसामग्री यावदवयवकर्मसामग्रीनियतेति यत्किञ्चिदवयवकर्मकाले व्यापकाभावेन व्याप्याभावादेव नावयविकर्मेति नोक्तप्रतिबध्यप्रतिबन्धकभावकल्पनमिति नोक्तदोष इत्यत आह अवयविकर्मसामग्र्या इति, रूपादावपि तथात्वं स्यादिति अवयविरूपसामग्र्या यावदवयवरूपसामग्रीनियतत्वं स्यादित्यर्थः। तथाच चित्ररूपोत्पत्तिर्न स्यात् यावदवयवे समानजातीयरूपाभावात्, अथवाऽवयवरूपादीनां प्रथममेवोत्पन्नत्वेनावयविरूपोत्पत्त्यव्यवहितपूर्वक्षणेऽवयवरूपोत्पादकसामग्र्यभावेनावयविन्यपाकजनीलादिरूपमपि नोत्पद्येत, यद्यपि पाकजस्थले पिठरपाकवादिमते यदैवावयवरूपोत्पाद-

कत्वाभावात्तदवयविरूपोत्पादकसामग्र्यपि, द्वयोरपि तेजस्संयोगादिना समकालमेवोत्पत्तेरिति नोक्तदोषस्तथापि पीलुपाकवादिमते शरावस्थायां तेजस्संयोगादिनोत्पन्नेन रूपेण द्व्यणुकादौ रूपोत्पत्तिरभ्युपगतेति तत्राप्युक्तदोषस्स्यादेवेतिभावः। दूषणान्तरमाह—

तत्त्वस्य दुर्ग्रहत्वेन न च कश्चिदवयविचालनार्थं प्रवर्तेत, अवयवावयविभावस्याव्यवस्थितत्वाच्च न किञ्चिद्विजातीयमवयविकर्मास्ति यदवच्छिन्ने विलक्षणसामग्रीनियमः कल्प्येतेत्यवयवकर्मसामग्र्या अवर्जनीयसन्निधित्वादवयविकर्म जननीयमिति न चलाचलयस्याचलत्वं नाम। किञ्च यद्यवयवकर्मापेक्ष्यकरूप एवावयवी, तत्रावयवसंयोगविभागाभ्यामाकाशादिदेशाभ्यां न संयुज्येत न विभज्येतेति परमाण्वादिसंयोगविभागजन्या द्व्यणुकाकाशादिसंयोगविभागादयो घटाकाशादिसंयोगविभागान्ता अनन्ताः संयोगजसंयोगा विभागजविभागाश्च कल्पनीयाः,

तत्त्वस्येति, यावदवयवकर्मसामग्रीनियतावयविकर्मसामग्रीत्वस्येत्यर्थः। अवयवावयविभावस्याऽव्यवस्थितत्वाच्च न किञ्चिद्विजातीयमवयविकर्मास्तीति द्व्यणुकान्तमवयवमात्रं स्वावयवाऽपेक्षयाऽवयविरूपं, स्वजन्यावयव्यपेक्षया चाऽवयवरूपमित्युभयरूपं, तथा चावयवे वर्त्तमानं कर्म अवयवकर्मापि भवति अवयविकर्मापि भवतीति तत्र वैजात्याभावेऽवयवकर्मभ्यो न किञ्चिद्विजातीयमवयविकर्मास्तीत्यर्थः, यदवच्छिन्ने अवयविकर्मगतवैजात्यावच्छिन्ने, न संयुज्येत न विभज्येतेति—संयोगादिकारणस्य कर्मण आकाशेऽवयविन्यपि चाभावादितिभावः।

पुनरुत्पत्तिवारणाय च तत्र न संयोगजसंयोगत्वावच्छिन्ने तत्त्वेन प्रतिबन्धकत्वं कल्पयितुं शक्यम्, आ-

काशादावेकतत्सत्त्वे एवापरतदुत्पादादिति तत्संयोगादौ तत्संयोगत्वादिना प्रतिबन्धकत्वं वाच्यमिति महागौरवम् । अपि चैवं उत्पन्नव्यक्त्युत्पादप्रसङ्गस्य प्रागभावनियमेनैव वारणात् त्वदुक्तप्रत्यासत्तेरतन्त्रत्वात् स्वध्वंसत्वतादात्म्यसम्बन्धाभ्यां सत्त्वेनैव कार्यकारणभावाभ्युपगमस्य लाघवेनोचितत्वात् अनायासेन त्रिलक्षणं जगत् सिद्ध्येदिति कृतमेकान्तपक्षपातेन । अधिकं मदुपज्ञाष्टसहस्र्याम् ॥५८॥ रक्तारक्तत्वे अधिकृत्याह—

पुनरुत्पत्तिवारणायेति, अवयविन आकाशादिना संयोगस्यावयविकर्मजन्यत्वाभ्युपगमपक्षेऽवयविकर्मणस्संयोगात्मकतत्फलोत्पत्त्यनन्तरमेव विनाशेन तद्घटितसामग्र्यभावेन नोत्पन्नसंयोगस्य पुनरुत्पत्त्यापादनं सम्भवति, अवयवसंयोगजन्यत्वपक्षे चावयवाकाशसंयोगस्यावयविन आकाशेन सह संयोगोत्पत्तावपि तदवस्थत्वेन तेन कारणेनोत्पन्नसंयोगस्य पुनरुत्पादस्स्यादेव, न चावयवसंयोगजन्याकाशावयविसंयोगं प्रत्यवयवसंयोगजन्याकाशावयविसंयोगस्त्वेन प्रतिबन्धक इति नोक्तदोष इति वाच्यम्, एवं सति हस्ताकाशसंयोगेन शरीराकाशसंयोगे उत्पन्ने सति तद्रूपप्रतिबन्धकसत्त्वात् पादाकाशसंयोगेन शरीराकाशसंयोगो न स्यात्, तथा च तत्तदवयवसंयोगजन्यतत्तदवयविसंयोगं प्रति तत्तदवयविसंयोगव्यक्तीनां तत्तत्संयोगव्यक्तित्वेन प्रतिबन्धकत्वं वाच्यम्, तथाच य एवावयविसंयोग उत्पन्नस्स एव स्वोत्पत्तौ प्रतिबन्धक इति पर्यवसितमिति व्यक्तिभेदेनानन्तप्रतिबध्यप्रतिबन्धकभावकल्पने महागौरवमितिभावः । यदि च तत्तत्कार्योत्पत्तौ तत्तत्कार्यप्रागभावस्यापि कारणत्वेनावयविसंयोगोत्पत्तौ सत्यां तत्प्रागभावस्य विनाशेन स्वप्रतियोगिकप्रागभावरूपकारणविरहेण न पुनस्स्वोत्पत्तिरिति विभाव्यते, तदा प्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्यसम्बन्धेन जन्यसत्त्वेन कारणत्वकल्पनापेक्षया लाघवेन स्वध्वंसत्वसम्बन्धेन सत्त्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन सत्त्वा-

तस्मिन्नंशे कारणत्वमुचितम्, तथा चोत्पत्त्यनन्तरमाविनाशं सत्त्वावच्छिन्नस्य स्वात्मककारणस्य सद्भावेन प्रतिक्षणं विनाशस्य, विनाशोऽपि च न सर्वथा किन्तु पूर्वावस्थारूपपूर्वपर्यायस्यैव, स च तदानीं वर्त्तमानावस्थारूपवर्त्तमानपर्यायरूपेणोत्पादे सत्येव सङ्गच्छत इत्युत्पादस्य च, तौ च धर्मरूपत्वान्निराश्रितौ न भवत इति तदाश्रयेऽनुगामिद्रव्ये ध्रौव्यस्य चाभ्युपगमनीयत्वेनानायासेन वस्तुमात्रं प्रतिक्षणमुत्पादव्ययध्रौव्यात्मकत्रिलक्षणयोग्येन सिद्ध्येदिति कृतमेकान्तपक्षपातेनेत्यभिप्रायेणाह अपि चैवमिति, त्वदुक्तेति नैयायिकोक्तेत्यर्थः, प्रत्यासत्तेः प्रतियोगित्वसम्बन्धस्य, लाघवेनेति विभिन्नकार्यकारणभावावच्छेदकधर्मापेक्षया लाघवेनेत्यर्थः॥५७॥

अथ पञ्चाशत्तमश्लोकावतरणिकामाह रक्तारक्तत्वे इति,

न व्याप्यते यदि भिदाऽनुभवाश्रयत्वा-देकत्र रक्तिमविपर्यययोर्विरोधः ॥
सर्वत्र तत्क्व चलताप्रतिबन्धसिद्धि-र्दुर्वादिकुम्भिमदमर्दनसिंहनादः ॥५८॥

न व्याप्यते यदीत्यादिश्लोकस्य "यदि रक्तिमविपर्यययोरेकत्रानुभवाश्रयत्वाद्विरोधो भिदा न व्याप्यते इति पूर्वार्द्धेऽन्वयः, तदेतत्पद्यव्याख्यानपरार्द्धेऽन्वयो यथाश्रुत एव, तदर्थं तु ग्रन्थकारस्स्वयमेवोन्मुद्रयिष्यति, सप्तचत्वारिंशत्तमश्लोकटीकायां रक्तारक्तविरोधोऽस्ति नेति बौद्धमतमाशङ्क्य तत्र यन्नैयायिकेन तत्समाधानं कृतं तदत्रोद्धृत्य प्रतिक्षिपति—

रागिद्रव्यावच्छिन्ने पटादौ रक्तत्वं नास्त्येव, एकदेशे तत्प्रतीतिस्तु भ्रान्ता, प्रादेशिकभ्रममूलरागिद्रव्यसंयोगासंयोगविरोधस्तु प्रकारभेदादेव परिहरणीयः। एवमपि विरोधेऽभ्युपगम्यमाने संयोगतदभावयोर्विरोधस्य भेदेन व्याप्त्यसिद्धिः, तयोरसिद्धौ कयोर्भेदेन व्याप्तिः, सिद्धौ च धर्मिग्राहकप्रमाणेन तदविरुद्धताया

अपि सिद्धेः कयोर्विरोध इति यदुक्तं नैयायिकैः, तदयुक्तं, यतो यद्येवमेकत्र रक्तिमविपर्यययोर्विरोधोऽनुभवाश्रयत्वाद्भिदा भेदेन न व्याप्यते, तदा विरोधभेदव्याप्त्योः द्रव्यत्वगुणत्वविशिष्टसत्त्वयोरिव कथञ्चिदेव व्यवस्थितौ सर्वत्र तयोर्विरोधाविरोधयोर्भेदाभेदयोश्च शबलताप्रतिबन्धस्य पानकरसन्यायेन मिश्रतानियमस्य सिद्धिः।

रागिद्रव्यार्द्धलिप्त इत्यादिना, एतच्च प्रागेव व्याख्यातम्, अनुभवाश्रयत्वादिति–विषयतासम्बन्धेनेतिशेषः। भेदेन न व्याप्यत इति, एकस्मिन् द्रव्ये रक्तत्वारक्तत्वयोरवच्छेदकभेदेनैव वृत्तेरेकावच्छेदेनैकाधिकरणावृत्तित्वात्मकविरोधो न व्याहन्यत इति विरुद्धयो रक्तिमतद्विपर्यययोरेकत्र विद्यमानत्वेपि न ताभ्यां विरुद्धाभ्यां भेद इति साधारणानैकान्तिकत्वाद् रक्तिमतद्विपर्ययरूपविरुद्धधर्मवत्त्वस्य न भेदेन सह व्याप्तिः, यद्वा ययोरक्तिमतद्विपर्यययोर्विरोधस्तयोर्भेद इति न व्याप्तिरित्यर्थः। पूर्वार्द्धं व्याख्यायोत्तरार्द्धव्याख्यानायाऽध्याहृततदाशब्दस्य पर्यवसितार्थमाह तदा विरोधेत्यादिना व्यवस्थितावित्यन्तेन, द्रव्यत्वगुणत्वविशिष्टसत्त्वयोरिवेति–अत्र वैशिष्ट्यं स्वसामानाधिकरण्यसम्बन्धेन, तद्घटकं निरूपकत्वं वृत्तित्वञ्च समवायसम्बन्धावच्छिन्नं ग्राह्यम्, तथाच द्रव्यवृत्तित्वविशिष्टसत्त्वगुणवृत्तित्वविशिष्टसत्त्वयोरिवेत्यर्थः, यत्र द्रव्यवृत्तित्वविशिष्टसत्त्वं न तत्र गुणवृत्तित्वविशिष्टसत्त्वं तद्वृत्तित्वविशिष्टस्य तत्रैव सत्त्वमिति नियमात्, एकाधिकरणाऽवृत्तित्वादेव च विशिष्टसत्त्वत्वरूपेण विशिष्टसत्त्वयोस्तयोर्विरोधः विशिष्टस्वरूपतया भेदश्च, अत एव द्रव्यं गुणाद्भिन्नं द्रव्यवृत्तित्वविशिष्टसत्त्वात् यन्नैवं तन्नैवं यथा रूपादि, गुणो द्रव्याद्भिन्नो गुणवृत्तित्वविशिष्टसत्त्वात् यन्नैवं तन्नैवं यथा घटादि, यद्वृत्तित्वविशिष्टं यत् तेन तस्यान्यतो भेद इति सामान्यव्याप्तिः, यथा घटवृत्तित्वविशिष्टद्रव्यत्वेन घटस्य पटादितो भेदः। द्रव्यगुणौ भिन्नौ तत्तद्विशिष्टसत्त्वरूपविरुद्धधर्माध्यासात् यौ यौ विरुद्धधर्माध्यासवन्तौ

नौ तौ भिन्नौ यथा घटपटावित्याद्यनुमानात्तदाश्रययो र्भेदः, विशिष्टस्य शुद्धानतिरिक्तत्वेन निर्विशेषितसत्त्वत्वरूपेणाऽविरोधोऽभेद-
स्तद्वदित्यर्थः। दृष्टान्तमुपन्यस्य दार्ष्टान्तिकमुपदर्शयितुमाह सर्वत्रेति, तच्छबलताप्रतिबन्धसिद्धिरितिमूलसार्थमाह तयोरित्या-
दिना. पानकरसन्यायेनेति शुण्ठीमरिचखण्डाद्येकैकवस्तुपूर्वस्वरूपत्यागप्रयुक्तैकीभावेन जात्यन्तरमापन्ने पानकरसद्रव्ये न केवलं
माधुर्यं न वा कटुकत्वादिकं, तत्कार्यानुपलब्धेः, किन्तु जात्यन्तररूपमव्याप्यवृत्तितयाऽन्योन्यानुविद्धं माधुर्यकटुकत्वादिकं, तथै-
वानुभवात्, कार्यान्तराऽनुभवादिति न्यायेनेत्यर्थः। मिश्रतानियमस्य सामानाधिकरण्यनियमस्य,

इत्थमेव सत्ता सत्त्वपयत्या इत्यादिनोक्तस्य सत्तालक्षणस्य घटमानत्वात्, सर्वत्र संयोगतदभावसाधर्म्यं
येनरूपदार्थसाधर्म्यं चेत्यत्र न पानकरसस्थानीयानुभवस्यैव विनिगमकत्वात्, क्वचित् तत्साधर्म्यस्यानुद्भूत-
त्वेनाप्रत्यक्षत्वेऽप्यनुमानात् प्रतीतेः, प्रतिनियतव्यवहारस्य चांशविवेकेनैव सिद्धिरियान् मरिचभाग इयान्
लवणभाग इति पानकरसेऽपि तथादर्शनात्। इयमेव दुर्वादिकुम्भिमदमर्दने सिंहनादः, स्याद्वादोत्थापनेनैका-
न्तपक्षविध्वंसनात् ॥८८॥ तद्देशतेतरत्वे चित्रेतरत्वे चाधिकृत्याह—

इत्थमेवेति, विरोधभेदव्याप्योस्सर्वत्र स्वविरोधिधर्मसामानाधिकरण्यनियमेनैवेत्यर्थः। इतरपदार्थसाधर्म्यमिति इतरोः
व्याप्यवृत्तितया परास्युपगतः पदार्थः तत्साधर्म्यं तद्वन्निव्याप्यवृत्तित्वधर्मवत्त्वमित्यर्थः, विनिगमकत्वादिति तथाच संयोगतदभा-
वयोरपि सर्वधर्माणामव्याप्यवृत्तित्वधर्मवत्त्वलक्षणं साधर्म्यमेवाभ्युपगन्तव्यमिति भावः। नन्वेवं तर्हि संयोगतद्भावसाधर्म्यं किमिति
सर्वत्र प्रत्यक्षेण नानुभूयत इत्यत आह क्वचिदिति, अनुमानादिति, भेदः एककालावच्छिन्नस्वात्यन्ताभावसमानाधिकरणः तथै-

वानुभूयमानत्वात् संयोगात्यन्ताभाववत्, नीलघटौ एककालावच्छिन्नस्वसामानाधिकरण्यसंसर्गेण भेदविशिष्टाऽभेदवन्तौ नीलो घट इति सामानाधिकरण्यप्रतीत्यन्यथानुपपत्तेरित्याद्यनुमानादित्यर्थः। प्रतिनियतव्यवहारस्य—भिन्न इति अभिन्न इति वैकैकधर्मविषयकव्यवहारस्य, अंशविवेकेन, यद्यन्निमित्तापेक्षया यो यो धर्मस्तत्तदवच्छेदेन, इयमेव—तच्छबलताप्रतिबन्धसिद्धिरेव ॥५८॥

एकोनषष्ठितमश्लोकावतरणिकामाह—तद्देशतेतरत्वे इति,

तद्देशतेतरपदेऽपि समा दिगेषा, चित्रेतरत्वविषयेऽप्ययमेव पन्थाः॥
द्रव्यैकतावदविगीततया प्रतीतेः, क्षेत्रैकतापि न च विभ्रमभाजनं स्यात् ॥ ५९ ॥

तद्देशतेतरपदेऽप्येषा दिक् समा, चित्रेतरत्वविषयेऽप्ययमेव पन्थाः, द्रव्यैकतावदविगीततया प्रतीतेः क्षेत्रैकतापि विभ्रमभाजनं न च स्यादित्यन्वयः। विस्तरार्थं तु ग्रन्थकार एवाह—

तद्देशत्वातद्देशत्वस्थानेऽप्येषा दिक् समा, तद्देशत्वातद्देशत्वप्रयुक्तेन कथंचिद्भेदेन संवलितस्यैव स्थिरस्यैकस्यानुभवात्, एकान्तैकस्वरूपस्य स्वप्नेऽप्यप्रतीतेः, कार्त्स्न्यैकदेशवृत्तिविकल्पस्यापि ज्ञाने परमाणावयविनि च सुप्रसरत्वात्, तार्किकवेदिकाविटङ्कनिष्टङ्किताऽभ्युपगमस्य चौरभ्रातृग्रन्थिच्छेतृचरितानुकारित्वात्, वृत्तेः कार्त्स्न्यैकदेशविकल्पानतिक्रमे वृत्तिमतः सुतरां तदनतिक्रमात्, तृतीयप्रकारस्पृहयालुताया मुक्ताकणगणग्रासस्पृहातुल्यत्वात्। कार्त्स्न्यैकदेशघटितसमुदायातिरिक्तं तृतीयं स्वरूपमस्त्येवेति चेत्, न, वृत्त्यनुप्रवेशो तदनतिक्रमात्, वृत्तेर्देशकार्त्स्न्यभेदाववच्छिन्नत्वानवच्छिन्नत्वे एवेति चेत्, वृत्तिमत्यपि तदन्य-

तदगतिभिःस्यताम्, एकान्ते तन्निर्वाहे च स्याद्वादपथः पुरस्क्रियताम्,

तत्त्वान्तरत्वेत्यादिना, वृत्तेः सम्बन्धस्य, वृत्तिमतः सम्बन्धप्रतियोगिनः, तदनतिक्रमात् कात्स्न्र्यैकदेशविकल्पानतिक्रमात्, उक्तं च-परेणापि "वृत्तेरव्याप्यवृत्तित्वे वृत्तिमतो व्याप्यवृत्तित्वस्यात्यन्तमसम्भावितत्वात्" इति, तृतीयप्रकारेति ज्ञानस्यावयविनां निरंशत्वेन स्वरूपतो वृत्तित्वलक्षणप्रकारेत्यर्थः। वस्तुनस्स्वरूपं निरंशत्वेनाखण्डमिति तस्य समुदायरूपत्वाभावात्समुदायतदेकदेशविषयप्रयुक्तकात्स्न्र्यैकदेशविकल्पो न सम्भवतीति स्वरूपतो वृत्तिरित्येवं तृतीयप्रकारोऽस्त्येवेत्याशङ्क्य निषेधति कात्स्न्र्यैकदेशघटितेति, निषेधे हेतुमाह वृत्त्यनुप्रवेशे तदनतिरेकादिति, स्वरूपतो वृत्तिरित्यत्र स्वरूपस्य वृत्तिघटकत्वे वृत्तेः कात्स्न्र्यैकदेशान्यतरत्वेन तत्रापि तत्त्वस्यावर्जनीयत्वादित्यर्थः। वृत्तेरेकदेशकात्स्न्र्यभेदौ सावच्छिन्ननिरवच्छिन्नत्वलक्षणौ, तौ च गुणिमति न सम्भवत इति तृतीयप्रकारोऽस्त्येवेत्याशयेनाऽऽशङ्कते वृत्तेरिति,

नन्वेवं गतिः परमाणुप्रक्रमे दीधितिकृता, स्वरूपनिबन्धनं संयोगित्वं नांशमपेक्षते, युगपदनेकमूर्त्तसंयोगित्वं नानादिगवच्छेदेनाविरुद्धमिति, इयमेव ज्ञानस्याकारवृत्तित्वेऽवयविनोऽवयववृत्तित्वेऽविशिष्टेति चेत्, कोऽयमस्याभिप्रायः, किं संयोगित्वं संयोगसामान्यं स्वरूपनिबन्धनमित्यंशानपेक्षमनवच्छिन्नं, युगपदनेकमूर्त्तसंयोगित्वं चैककालावच्छिन्नानेकमूर्त्तसंयोगाः, ते पररूपनिबन्धनत्वात् नानादिगवच्छिन्ना इति, अयुक्तोऽयं, यावद्विशेषातिरिक्तसंयोगसामान्यस्य त्वयानभ्युपगमात्, कथंचिदभ्युपगमे च स्याद्वादकक्षाप्रवेशात्।

परमाणुप्रक्रम इति, "षट्केन युगपद्योगात् परमाणोः षडंशता। दिग्देशभेदतश्छायावृतिभ्यां चास्य सांशता" ।१। इति,

यो बौद्धस्याक्षेपस्तत्प्रतिविधाने इत्यर्थः, तदानीं दीधितिकृता यदुक्तं तत्स्मारयति स्वरूपनिबन्धनं संयोगित्वमित्यादि, संयोगित्वं संयोगसामान्यवत्त्वम्, तच्च परमाणौ स्वरूपत एव न किञ्चिद्देशावच्छेदेनेति स्वीयदेशरूपमंशं नापेक्षते, परमाणौ युगपत्तत्तन्मूर्त्तसंयोगित्वं तु तत्तन्मूर्त्तागमननिबन्धनं तत्तद्दिगऽवच्छेदेनैव, नतु स्वावयवावच्छेदेन, येन परमाणोर्युगपत्परमाणुषट्कयोगात् षडंशता स्यादितिभावः। ते पररूपनिबन्धनत्वात् नानादिगवच्छिन्ना इति, एककालावच्छिन्नानेकमूर्त्तसंयोगानां तत्तद्दिग्वर्त्तितत्तन्मूर्त्तागमननिबन्धनत्वेन दिगन्तरीयतत्तन्मूर्त्तानां तत्तद्दिक्षु समागमे सति तत्तन्मूर्त्तसंयोगास्तत्तद्दिगवच्छिन्ना इत्यर्थः, संयोगित्वं संयोगसामान्यं न सम्भवतीत्युपदर्श्य तस्य स्वरूपनिबन्धनत्वमपि न सम्भवतीत्युपदर्शयति—

न च संयोगस्य गुणरूपस्य तव मते परमाणुस्वरूपप्रविष्टत्वरूपं स्वरूपनिबन्धनत्वं सङ्गच्छते, संयोगाधारतायास्तत्स्वरूपत्वे च तस्या अपि विशिष्टाविशिष्टभेदेन भेदात्सिद्धः परमाणोरपि पर्यायतो भेदः ॥ अपि च स्ववृत्तिधर्मावच्छेदकत्वमपि निश्चयनयेन स्वापृथग्भूतस्यैव वक्तव्यम्, सम्बन्धान्तरेण तत्त्वोपगमेऽनेकावच्छेदककल्पने गौरवात्, बाधतारतम्यविश्रान्त्यभावप्रसङ्गात्, तच्च द्रव्यार्थतानियतप्रत्यासत्तिसम्भवे गगनादौ देशप्रदेशतामादाय तदसम्भवे च पर्यायतामादाय विश्राम्यति।

न च संयोगस्येत्यादिना, ननु संयोगित्वं न गुणरूपं संयोगसामान्यं, किन्तु संयोगाऽधिकरणत्वम्, अधिकरणत्वञ्चाधिकरणस्वरूपमेवेति परमाणौ संयोगाऽधिकरणत्वस्य तत्स्वरूपत्वेन तस्य स्वरूपनिबन्धनत्वं स्यादेवेत्यतआह संयोगाधारतायाः इति, तत्स्वरूपत्वे परमाणुस्वरूपत्वे, तत्तत्संयोगाधिकरणत्वातिरिक्ते संयोगसामान्याधिकरणत्वे मानाभावात्तत्तत्संयोगरूपनिरूपकभेदेन

तत्तन्निरूपकनिरूपितत्वविशिष्टानां तत्तत्संयोगाधिकरणत्वानामपि भेदेन तदात्मकविशिष्टरूपेण परमाणोरपि भेदः, स्वस्वरूपाऽऽत्म-
कानि विशिष्टरूपेणाभेदश्चेत्यत्राप्यनेकान्त एव विजयत इत्याशयेनाह तस्या अपीति, निश्चयनयेन हि सर्वं स्वप्रतिष्ठितमेवेति तादात्म्य-
सम्बन्धेन सर्वेषां स्वाधिकरणत्वेन तदधिकरणस्यैव तन्निष्ठधर्मावच्छेदकत्वमितिन्यायेन स्वस्यैव स्वनिष्ठधर्मावच्छेदकत्वम्, एवञ्च परमा-
णौ न एककालावच्छिन्नानेकमूर्त्तसंयोगास्तदधिकरणत्वस्य दिशामभावेन तदवच्छेदकत्वाऽसम्भवाद् युगपदनेकमूर्त्तसंयोगित्वं चानेक-
दिगवच्छेदेनाविरुद्धमित्युक्तं न सङ्गतमित्याशयेनाह अपि चेति, न चातिरिक्तदिशामपि तादात्म्यातिरिक्तेन दिक्कृतविशेषणतास-
म्बन्धेनोक्तसंयोगाधिकरणत्वादवच्छेदकत्वं स्यादेवेति वाच्यम्, तादात्म्यातिरिक्तेन तेन तेन सम्बन्धेनानेकेषां पदार्थानामधिकर-
णत्वेन स्वनिष्ठधर्मावच्छेदकत्वकल्पने गौरवं स्यादित्याशयेनाह सम्बन्धान्तरेणेति, नन्विदं गौरवं प्रामाणिकत्वादेव न दोषास्प-
दमित्यत आह बाधतारतम्येति, यदि च प्रतिनियतशाखामूलादीनामेव तत्तद्धर्मावच्छेदकत्वमास्थीयते तदा तेषां प्रतिनियमात्त-
दवच्छेदेन तद्धर्मवत्ताबुद्धिं प्रति तत्तदवच्छेदेन तत्तद्धर्माभाववत्तानिश्चयः प्रतिबन्धक इति कतिपयस्थूलावच्छेदकव्यवस्थया कति-
पयतदवान्तरसूक्ष्मावच्छेदकव्यवस्थया च बाधतारतम्यविश्रान्तिर्भवति, अवच्छेदकानां प्रतिनियमाभावे च बाधप्रतिनियमाभावत-
स्तत्तारतम्यविश्रान्त्यभावः स्यादतो नोक्तगौरवस्य प्रामाणिकत्वमित्याशयः । स्वाऽपृथग्भूतस्याऽवच्छेदकत्वञ्चैकस्मिन्नेवाकाशे देश-
प्रदेशकल्पनया प्रदेशात्मके आकाशे देशात्मकस्याकाशस्य द्रव्यार्थतानियतकथञ्चित्तादात्म्यलक्षणया प्रत्यासत्त्या वृत्तित्वमाश्रित्य,
पर्यायनयाश्रयणे चैकस्याप्याकाशस्य तत्तदवगाहकपदार्थभेदप्रयुक्ततत्तत्पदार्थावच्छिन्नाकाशभेदस्यावश्यकत्वेन तत्तत्पदार्थावच्छिन्न
आकाशे तत्तत्पदार्थावच्छिन्नाकाशस्य वृत्तित्वञ्चाश्रित्य निर्वाह्यमित्याशयेनाह तच्च द्रव्यार्थतेति। ननु द्रव्यार्थिकनयेनाकाशस्या-

सङ्ख्येयप्रदेशात्मकतया तत्र सांशत्वमिव न परमाणोरपि तत्त्वमभ्युपगतं, निष्प्रदेशत्वात्तस्य; येन तद्वत् तस्मिन्नपि देशप्रदेशकल्पनया तत्रापि द्रव्यार्थतानियतकथञ्चित्तादात्म्यलक्षणप्रत्यासत्तिसम्भवस्स्यादित्याशङ्कायामाह तदसम्भवे चेति, परमाणौ द्रव्यप्रदेशाभावेन निरंशत्वेऽपि पर्यायलक्षणभावप्रदेशापेक्षया सांशत्वमस्त्येव, अत एव "से भावपरमाणु चउव्विहे पन्नत्ते तंजहा रूवमन्ते रसमन्ते गन्धमन्ते फासमन्ते" इत्युक्तं सङ्गच्छते, तथाच परमाणावपि रूपादिपर्यायतासम्भवेन तामुपादाय स्वस्मिन् स्ववृत्तितया स्वाऽपृथग्भूतस्य स्ववृत्तिधर्मावच्छेदकत्वं परिभावनीयम्। जन्यद्रव्याणां व्यावर्त्तकत्वेन दिगुपाधित्वं, तत्त्वादेव दिग्रूपत्वं, नतु नित्यद्रव्यस्य, तद्वैपरीत्यात्, अन्यथा प्रलयदशायां परमाणूनां सत्त्वात्तदानीमपि दिग्देशविभागप्रसङ्ग इति मते परमाणावनेकजन्यद्रव्यात्मकानेकदिगवच्छेदेनानेकमूर्त्तसंयोगित्वमुपपाद्यताम्, दिगुपाधित्वं महादिग्वृत्तितायामवच्छेदकत्वलक्षणमेव, न त्वधिकरणत्वरूपं, तच्च मूर्त्तमात्रस्यैवेति प्राचां मते एकस्मिन् निरंशे परमाणौ दिगवच्छेदकत्वाद् दिग्रूपत्वेऽपि तत्र कथं तत्तन्मूर्त्तसंयोगनिष्ठावच्छेद्यतानिरूपितनानावच्छेदकत्वरूपनानादिग्रूपत्वमुपपादनीयमित्याशयेनाह—

किं चोपपाद्यतां नानादिगवच्छेदमादाय परमाणौ संयोगभेदः, मूर्त्तमात्रस्य दिगुपाधितानये एकत्र निरंशे तत्र नानादिग्रूपत्वमेव कथमुपपादनीयम्, उपाधिभेदादिति चेत्, स एव पर्यायभेद इति नाम्नि किं विवादेन, द्रव्यपर्याययोश्च सामान्यविशेषवन्नात्यन्तं भेद इति सिद्धं परमाणुनापि भिन्नाभिन्नेनैवेत्यलमतिपल्लवेन। चित्रेतरत्वविषयेऽप्ययमेव पन्थाः, निपुणं निरूपणे एकत्र नीलत्वपीतत्वादिचित्रत्वविलक्षणचित्रत्वाद्यनुभवाच्चित्रावयविनस्तद्रूपस्य च भेदाभेदपरिकरितस्यैव सिद्धेस्तद्दृष्टान्तेन सर्वावयवावच्छिन्ननीलवत्यापि तत्त्वसिद्धेः।

क्रियोपगमनामिति। आशङ्कते उपाधिभेदादिति, यद्वस्त्वपेक्षयोदयाचलसन्निहितत्वं तदपेक्षया पूर्वत्वं, यदपेक्षया ऽस्ताचलसन्निहितत्वं तदपेक्षया पश्चिमत्वं, यदपेक्षया मेरुसन्निहितत्वं तदपेक्षयोत्तरत्वं, यदपेक्षया मेरुविप्रकृष्टत्वं तदपेक्षया दक्षिणत्वमित्येवमुपाधिभेदादित्यर्थः। ननु सर्वावयवावच्छिन्ननीलरूपवत्येकमेव रूपं ननु नानेति कथं चित्रावयविदृष्टान्तेन भेदाभेदप्रतिक्षिप्तरूपसिद्धिस्स्यादित्याशङ्कायां हेतुत्रयमाह—

सर्वावयवावच्छिन्नत्वस्य तत्तदवयवावच्छिन्नसामग्रीसमाजसिद्धत्वादांशिकत्वानुभवादेकगुणकालकत्वादिविशेषाणां प्रत्ययत्वं सम्भवात्, चित्रप्रतीतेश्च क्वचिदवयवरूपभेदाग्रहप्रयुक्तत्वात्, एवं नीलपीतादिषु मिथः संसृष्टेष्वनारम्भकद्रव्येषु चित्रप्रत्ययोऽपि क्षेत्रप्रत्यासत्तिकृतैकत्वस्योद्भूतत्वादुपपादनीयः स्थौल्यातिशयप्रत्ययवत्, न नु द्रव्यान्तरोत्पादाभिमानात्, विशेषदर्शिनामपि तद्दर्शनात्। अत एवोपष्टम्भकभागेनापि न द्वैतप्रत्ययः। इत्थमेव शरीरात्मनोरप्येकक्षेत्रावगाढत्वप्रत्यासत्तिकृतैकत्वात् छेदवेदनासामानाधिकरण्यमुपपन्नम् इत्यादिरन्यत्र विस्तरः। एवंस्थितावपि क्षेत्रैकत्वप्रत्ययो भ्रमः, द्रव्यैकत्वप्रत्ययः प्रमेति वाङ्मात्रं, विपर्ययस्यापि सुवचत्वादित्याह—द्रव्यैकतावदविगीततया सर्वसांमत्येन प्रतीतेः क्षेत्रैकतापि न न विभ्रमभाजनं भ्रान्तिविषयः स्याद्विपर्ययस्यापादिति भावः॥५९॥ यत एवावृतानावृतत्वादिना भेदोऽभेदसंवलित एवोपपादितोऽत एव चलत्वाचलत्वादिनिर्णया अपि कथञ्चिदभ्युपगमेनैव निरसितुं शक्यत्वात् न स्याद्वादपूर्णताबाधका इत्युपदर्शयन्नाह—

सर्वावयवावच्छिन्नत्वस्येत्यादिना, तत्र प्रथमहेतुः सर्वावयवावच्छिन्नत्वस्य तत्तदवयवावच्छिन्न सामग्रीसमा-

जसिद्धत्वादिति, घटस्य रूपस्य चोत्पादकसामग्र्या घटस्य रूपस्य चोत्पत्तौ घटरूपं प्रति न किमपि कारणम्, अर्थसमाजसिद्धत्वात्, तद्वत् तत्तदवयवरूपादिघटितसामग्र्या तत्तदवयवावच्छिन्नावयविनि रूपोत्पत्तौ सर्वावयवावच्छिन्नावयविरूपं प्रति न किमपि कारणम्, स्वघटकतत्तदवयवावच्छिन्नरूपोत्पादकसामग्रीसमुदायसिद्धत्वात्, तथाच सर्वावयवावच्छिन्ननीलवत्यपि तत्तदवयवावच्छिन्ननीलमादायावयविनस्तद्रूपस्य च तत्तदवयवावच्छिन्नत्वमादाय भेदः स्वरूपतश्चाऽभेद इति भेदाभेदपरिकरितस्वरूपसिद्धिस्स्यादेवेतिभावः। द्वीतीयहेतुमाह आंशिकत्वानुभवादिति, सर्वावयवावच्छिन्ननीलवत्यपि तत्तदवयवमात्रदर्शनदशायां तत्तदवयवावच्छेदेन नीलरूपप्रतीत्या नीलस्य तत्तदवयवावच्छिन्नत्वानुभवादित्यर्थः। एकस्यापि नीलस्य प्रत्यवयवं पञ्चगुणहानिवृद्धिभ्यां तरतमभावेनानुभूयमानत्वान्नीलनीलतरनीलतमादिधर्मयोगेन तस्याप्यनेकस्वरूपतया न चित्रत्वानुपपत्तिरिति न चित्रावयविदृष्टान्ताऽसिद्धिरित्याशयेन तृतीयहेतुमाह एकगुणकालकत्वादिविशेषाणामिति, नीलादौ चित्रत्वेपि तदप्रतीतिश्चावयवरूपभेदग्रहस्य व्यञ्जकस्याभावादेवेति जानीहीत्याह चित्राप्रतीतेश्चेति, विशेषदर्शिनामपि न द्रव्यान्तरमुत्पन्नमिति विशेषदर्शिनामपि, तद्दर्शनात् चित्रप्रत्ययदर्शनात्। यद्यपि मानुषशरीरस्य पार्थिवत्वेन तत्रोपष्टम्भकीभूतो जलादिभागो शरीराद्भिन्नस्तथापि तत्र क्षेत्रप्रत्यासत्तिकृतैकत्वस्य ज्ञानाद्भेदप्रत्ययो न भवतीत्याशयेनाह अत एवेति, क्षेत्रप्रत्यासत्तिकृतैकत्वादेवेत्यर्थः। अत एव जलादेरपि शरीरेण सहाभेदवृत्त्या तत्र तदवयवत्वोपचारेणेदं शरीरं चातुर्भौतिकमित्यादिव्यपदेशोऽप्युपपद्यत इति भावः। उत्तरार्द्धमवतारयति—एवं स्थितावपीति क्षेत्रप्रत्यासत्तिकृतैकत्वस्य द्रव्यप्रत्यासत्तिकृतैकत्वस्य साधकयुक्तेस्तौल्येऽपीत्यर्थः ॥५९॥ षष्ठितमश्लोकमवतारयति यत एवावृतानावृतत्वादिनेति।

स्थूलाणुभेदवदभिन्नपरानपेक्ष–सद्व्यापकेतरनिषेधकशून्यवादाः ॥

एतेन तेऽभ्युपगमेन हताः कथञ्चित्, त्वच्छासनं न खलु बाधितुमुत्सहन्ते ॥६०॥

तव शासनं ह्येकत्र धर्मिणि प्रतिधर्मं विधिनिषेधकल्पनया सप्तभङ्गोपदर्शनं, तत्र च स्थूलाणुभिन्नाभिन्नसापेक्षव्यापकाव्यापकैकान्तनिषेधाः कथञ्चिदिष्टापत्तिप्रतिहताः उभयात्मकत्वं नियमयन्तः प्रकारभेदेन परिहृतविरोधाः स्याद्वादप्रसादमेवान्विच्छन्तः कथं तमेव बाधितुमुत्सहन्ते,

स्थूलाणुभेदेत्यादिश्लोकः, तत्र उत्सहन्ते इति क्रियापदं, न खलु इत्यस्यात्रान्वयः, किं कर्तुं नोत्सहन्ते–इत्यपेक्षायामाह बाधितुमिति, किं बाधितुमित्येवं तुम्प्रत्ययप्रकृत्यर्थबाधनक्रियाकर्मापेक्षायामाह त्वच्छासनमिति, के नोत्सहन्ते इति कर्त्रपेक्षायामाह स्थूलाणुभेदवदभिन्नपरानपेक्ष–सद्व्यापकेतरनिषेधकशून्यवादा इति, ते कीदृक्स्वरूपास्सन्तोः नोत्सहन्ते इत्यत आह, ते एतेन कथञ्चिदभ्युपगमेन हता इति सङ्क्षेपार्थः। विस्तरार्थस्तु ग्रन्थकृट्टीकोट्टङ्कित इति न टीकान्तरापेक्षी। निमित्तभेदेनैकत्र स्थूलत्वास्थूलत्वादिधर्मसमावेशमुपपादयति—

इष्यते हि स्थूलमप्यणववयवावच्छेदेनास्थूलं, तथाऽतीन्द्रियत्वादणुरपि स्कन्धान्तर्गतत्वेन नाणुः, प्रदेशादिव्यपदेशात् भिन्नमपि कयाचिदपेक्षयाऽभिन्नं, यथा सत्त्वेन गवाश्वमभिन्नमपि कयाचिदपेक्षया भिन्नं, तथाऽवृन्तानामनन्ताभिन्नाऽवयवी, परानपेक्षमप्याकाशादि तत्तत्संयोगित्वविभागित्वादिस्वरूपेण परापेक्षं, तादृशमपि घटादि द्रव्यत्वसत्त्वादिना परानपेक्षं, व्यापकमप्याकाशादि देशप्रदेशादिनाऽव्यापकम्, अव्यापकमपि

च घटादि पुद्गलत्वप्रमेयत्वादिना व्यापकम्, अथवा स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वमव्यापकत्वं, तदप्रतियोगित्वं च व्यापकत्वं रूपभेदेन विपर्येतीति,

इष्यते हीत्यादिना, प्रदेशप्रदेशिभावेनावयवावयविनोर्भेदोऽयुतसिद्धत्वेन चाभेद इत्याह प्रदेशादिव्यपदेशादिति। तत्र दृष्टान्तमाह यथेति। गवाश्वमिति गौश्चाश्वश्चेति विग्रहे गवाश्वादिरिति सूत्रेणैकवद्भावे कृते गवाश्वमित्यर्थः। कयाचिदपेक्षयेति गोत्वेनाश्वत्वेन चेत्यर्थः। तादृशमपि घटत्वरूपासाधारणधर्मेण स्वोत्पत्तौ परापेक्षमपि, देशप्रदेशादिनाऽव्यापकम् तत्तद्देशावच्छिन्नं तत्तत्प्रदेशावच्छिन्नं चाकाशं तत्तद्देश एव तत्तत्प्रदेश एव च वर्त्तत इत्यव्यापकम्, अव्यापकमपि च घटादि पुद्गलत्वप्रमेयत्वादिना व्यापकम् घटत्वादिरूपेण किञ्चिद्देशावृत्तित्वे सति किञ्चिद्देशवृत्तित्वलक्षणाऽव्यापकत्वशाल्यपि घटादि पुद्गलत्वप्रमेयत्वादिरूपेण तदभावशालि, पुद्गलत्वप्रमेयत्वाद्यवच्छिन्नस्य सर्वत्र सत्त्वादितिभावः। विपर्येतीति तत्तद्वह्नित्वादिना रूपेण यस्मिन्नेव वह्न्यादौ धूमादिनिरूपितमव्यापकत्वं तस्मिन्नेव वह्न्यादौ वह्नित्वादिना व्यापकत्वमपीत्यर्थः। घटस्स्थूल एव परमाणुरणुरेव व्यापकतावच्छेदकीभूतेन वह्नित्वरूपेण वह्निर्धूमव्यापक एवेति व्यवहारदशायां रूपभेदस्स्थूलत्वादिर्नियमेन घटादौ निविशमानः कथं तद्विरोधिधर्ममस्थूलत्वादिकमपेक्षत इत्याशङ्कते—

तथापि व्यवहारमुद्रायां रूपभेदो नियमेन निविशमानः स्याद्वादे कथमनियममङ्गीकुर्यादिति चेत्, विवक्षावैचित्र्यवशात्, नहि वह्निव्याप्यो धूमस्तदव्याप्यश्च रासभो विवक्षावैचित्र्यात् न परिवर्त्तेत इति दिग्, एवमन्यदप्यूह्यम् ॥६०॥ एतेनैव गुणगुणिभावभङ्गादनुपलब्धेश्च नैरात्म्यमिति पक्षद्वयं युगपन्निरसितुमाह—

एतेन ते गुणगुणित्वकृतैर्निरस्तं, नैरात्म्यमीश समयेऽनुपलब्धितश्च ॥
आत्मा यदेव भगवाननुभूतिसिद्ध, एकत्वसंवलितमूर्तिरनन्तधर्मा ॥ ३१ ॥

कथमिति, उत्तरयति विवक्षेति, तत्र दृष्टान्तमाह नहीति, एकत्रिंशत्तमश्लोकमवतारयति एतेनैवेत्यादिना, एतेन ते इत्यादि श्लोकः, ईश हे प्रभो ते तव, समये सिद्धान्ते, एतेन नैरात्म्यं निरस्तम् अप्रमाणतया ज्ञापितम्, भवद्भिर्यैरितिशेषः, नैरात्म्यमित्यत्र गुणगुणित्वकृतैरनुपलब्धितश्चेत्यस्यान्वयः, ज्ञानेच्छाद्वेषादयो गुणास्तदाश्रयो नित्य आत्मा गुणी तयोर्भावो गुणगुणित्वं तस्य कृतः भवान्, यदि क्षणिकविज्ञानातिरिक्त आत्मा स्यात्तर्ह्युपलभ्येत न चोपलभ्यत इत्यतश्च, स्वविषयकज्ञानज्ञाप्यत्वं पञ्चम्यर्थः, तथाच गुणगुणित्वकृत्यनुपलब्धिज्ञानज्ञाप्यमित्यर्थः। एतेनेत्यतिदिष्टमाह आत्मेत्यादिना, अत्र यदेव भगवानात्मा एकत्वसंवलितमूर्तिरनन्तधर्मानुभूतिसिद्ध इत्यन्वयः, निश्चयनयेनानन्तगुणनिधानत्वेनात्मनो विशेषणमाह भगवानिति, आत्मेति अतति गच्छति प्राप्नोतीत्यात्मेत्यर्थः, एकत्वसंवलितमूर्त्तिरनन्तधर्मेति पूर्वोत्तरपर्यायानुगाम्यूर्ध्वतासामान्यस्वरूपतयैकत्वेन सिद्धस्य पूर्वापरानन्तपर्यायभेदेन तद्विशिष्टस्याप्यात्मनो भेदादेकसमयावच्छिन्नस्वपरानन्तपर्यायस्वरूपतया चानन्तधर्मात्मेत्यर्थः, अनेन गुणगुणित्वकृतैर्नैरात्म्यमिति पक्षस्य निरासः कृतः, अनुभूतिसिद्ध इति योऽहं घटमद्राक्षं सोऽहं तं घटं स्पृशामीत्येकात्मानुसन्धानलक्षणप्रत्यभिज्ञाप्रमाणेन सिद्ध इत्यर्थः, अनेनानुपलब्धितश्च नैरात्म्यमिति पक्षस्य निरासः कृत इति सङ्क्षेपार्थः। एतेनेत्यादि मूलं व्याख्यानयति—

हे ईश तव समये गुणगुणित्वकृत्यनुपलब्धिज्ञानज्ञाप्यं नैरात्म्यमेतेन कृतं, यदेव भगवानात्मा, एकत्वेन

संवलितमूर्त्तिः सन्ननन्तधर्मानुभूतिसिद्धः, आत्मन्यनन्तधर्मत्वोपलम्भ एव युगपदुभयपक्षं बाधत इत्यर्थः॥ अत्र न्यायनयप्रक्रिया–अस्तु तर्हि गुणगुणिनोरभेदान्नैरात्म्यं, गुणातिरिक्तस्य गुणिनोऽभावान्नित्यात्मव्यतिरेक इत्यर्थः, किं तर्हि, क्षणिकं विज्ञानमात्मपदवाच्यं, तत्कुतो न नित्यं विज्ञानमेवात्मा,

हे ईशेत्यादिना, गुणगुणित्वहत्यनुपलब्धिज्ञानज्ञाप्यं नैरात्म्यमिति, आत्मा स्थिरतरो नास्ति यद्वा आत्मा क्षणिकज्ञानादिगुणाद्भिन्नो नास्ति गुणगुणिभावाभावात् अनुपलब्धेश्चेत्याद्यनुमानसिद्धं नैरात्म्यमित्यर्थः, उभयपक्षमिति गुणगुणित्वहतिज्ञानज्ञाप्यं नैरात्म्यमनुपलब्धिज्ञानज्ञाप्यं च नैरात्म्यमिति पक्षद्वयमित्यर्थः। आदौ बौद्धमतमुत्थापयति अस्तु तर्हीत्यादिना, तदर्थमाह गुणातिरिक्तस्येत्यादिना, तत्किमात्मा बौद्धमते नास्त्येवेत्याशयेन पृच्छति किं तर्हीति, बौद्ध आह क्षणिकमिति, नित्यविज्ञानवादी प्रश्नयति तत्कुत इति, तन्नित्यं विज्ञानमेवात्मेत्येवं कुतो नेत्यन्वयः। बौद्ध उत्तरयति—

स्वसंवेदनसंविदितेभ्यः क्षणिकनीलाद्याकारविज्ञानेभ्योऽतिरिक्ते नित्ये ज्ञाने मानाभावादिति चेत्, उच्यते, अस्ति तावदिह दर्शनस्पर्शनाभ्यामेकार्थानुसन्धानं यमहमद्राक्षन्तमहं स्पृशामीत्यनुभवात्, तदिदमेकैकविषयं वा स्यात्, समुदायविषयं वा, तदतिरिक्तविषयं वा, वस्त्वननुरोध्याकारविषयं वा, अलीकविषयं वेति, न तावदाद्यः, नहि भवति तदेव रूपं स एव स्पर्श इति। न च रूपं द्वीन्द्रियग्राह्यमन्धस्यापि नीलादिप्रत्ययप्रसङ्गात्।

स्वसंवेदनेति, नैयायिकस्समाधत्ते उच्यत इति, उक्तप्रत्यभिज्ञाने दर्शनस्पार्शनविषयाऽभेदो भासते, नच तादृशाऽभेदो रूपस्पर्शयोस्सम्भवति, दर्शनविषयस्य रूपस्य स्पार्शनविषयत्वाभावात्, स्पार्शनविषयस्य च स्पर्शस्य दर्शनविषयत्वाभावादि-

न्यायेनाह नहि भवतीति, न च रूपस्य द्वीन्द्रियग्राह्यत्वाद् यदेव रूपं दर्शनविषयं तदेव स्पार्शनविषयमित्युक्ताभेदानुसन्धाने चाक्षुषग्राह्यं रूपमेवेति वाच्यं, जात्यन्धस्यापि रूपत्वेन त्वचा नीलादिप्रत्यक्षप्रसङ्गादित्याशयेनाह न च रूपमिति, न चैकस्मिन् धर्मिणि रूपत्वं स्पर्शत्वञ्चेति धर्मद्वयं, तथा चैक एव धर्मी रूपत्वेन चक्षुषा स्पर्शत्वेन त्वचा गृह्यत इत्यन्धस्य चाक्षुषप्रत्यक्षकारणस्य चक्षुषोऽभावान्नोक्तदोष इति वाच्यम्, रूपत्वस्पर्शत्वयोर्विरुद्धत्वेनैकत्राऽसत्त्वात्, एकस्य पारमार्थिकत्वमन्यस्य च काल्पनिकत्वमित्येकतरस्य पारमार्थिकत्व तत्र सत्त्वमिति कल्पनायां प्रमाणाभावेनैकस्य काल्पनिकत्वे तत्तुल्यन्यायेनापरस्यापि काल्पनिकत्वप्रसङ्गात् धर्मिणः उभयशून्यत्वेन स्यादित्याशयेनाह—

एकमेव वस्तु नयनेन रूपत्वेन त्वचा च स्पर्शत्वेन गृह्यत इति च न युक्तम्, विरुद्धयोरेकत्र वृत्त्यसम्भवात्, एकतरस्य त्यागे च नियामकाभावाद्वस्तुन उभयरूपशून्यत्वप्रसङ्गात्, विरुद्धयोश्चैकत्र वृत्तौ धर्मिणो भेदस्यापि प्रसङ्गात्, तथापि चाभेदे भेदमात्रोच्छेदे भेदाभेदव्यवस्थानुपपत्तिः। अथ रूपस्पर्शत्वे एकत्रैव वर्त्तेते, विरोधे मानाभावात्, न चैवमेकतरग्रहेऽन्यतरग्रहापत्तिर्जातेर्योग्यव्यक्तिवृत्तित्वेनैव व्यञ्जकत्वादिति वाच्यम्, भवतां रूपादीनामिवास्माकं रूपत्वादीनां योग्यायोग्यतयैव वेदनेन प्रतिनियतेन्द्रियवेद्यत्वोपपत्तेरिति चेत्, तद्विस्मरणशालिकगुणान्तरम्,

एकमेव वस्त्विरयारभ्य प्रसङ्गादित्यन्तम्, विरुद्धयोरेकत्र वृत्तित्वे दण्डमाह विरुद्धयोरिति, एकस्मिन्नेव रूपत्वस्पर्शत्वयोरभ्युपगमे यदा चक्षुषा रूपत्वं गृह्यते तदैव चक्षुषा स्पर्शत्वमपि गृह्येत, येनेन्द्रियेण यद्वस्तु गृह्यते तेनैवेन्द्रियेण तद्गता जातिस्तद्-

भावश्च गृह्यत इति नियमादित्यन्तरा शङ्कां निषेधति न चैवमेकतरेति, यथा भवतां रूपं चक्षुरिन्द्रियस्यैव योग्यं, स्पर्शस्तु त्वगिन्द्रियस्यैव योग्य इति नियमस्तथैवास्माकमपि रूपत्वं चक्षुषो योग्यं न स्पर्शनेन्द्रियस्य, स्पर्शत्वमपि त्वचो योग्यं न चक्षुष इत्येवं तत्तदिन्द्रिययोग्यायोग्यतयैव नियम इति न रूपत्वस्य चाक्षुषप्रत्यक्षकाले स्पर्शत्वस्यापि चाक्षुषग्रहप्रसङ्ग इत्येवं निषेधे हेतुमाह भवतां रूपादीनामिति, नन्विदं कथं न द्रव्यस्य खण्डनमित्यत आह—

द्रव्यस्य घटादेरनुभवसिद्धत्वात्, न चैतदपि, पवनमणिप्रभादौ मिथोऽव्यभिचारिणोः स्पर्शत्वरूपत्वयोः पृथिव्यादौ सङ्करप्रसङ्गात्, प्रभायां स्पर्शत्वस्य योग्यानुपलम्भबाधितत्वात्, एवं नीलत्वघटत्वादीनामपि सङ्करप्रसङ्गोऽनुसन्धेयः। अपि च घटे पाकेन श्यामस्य नाशो रक्तस्य चोत्पादो दृश्यते, न च तौ जात्योरेव, कालान्तरेऽपि तयोरुपलम्भात्,

द्रव्यस्येति, नन्वेवमस्त्वान्तरालिकगुणखण्डनं तेनापि गुणगुणिभावो व्याहन्यत एवेत्यत आह न चैतदपीति, एकत्र वस्तुनि जात्यात्मकरूपत्वस्पर्शत्वयोर्वृत्तित्वं गुणखण्डनपर्यवसायि नच सम्भवतीत्यर्थः, निषेधे हेतुभूतं जातित्वबाधकं साङ्कर्यं सङ्गमयति पवनेत्यादिना, स्पर्शत्वाभाववत्यां प्रभायां रूपत्वं रूपत्वाभाववति पवने स्पर्शत्वं तयोश्च सामानाधिकरण्यं पृथिव्यामित्येवं साङ्कर्यमित्यर्थः, प्रभायां कथं स्पर्शत्वं नास्ति येन साङ्कर्यं स्यादित्यत आह प्रभायामिति। यदि घटत्ववत् नीलत्वमपि द्रव्यवृत्तमभ्युपगम्येत तदा नीलत्वाभाववति पीतघटे घटत्वं घटत्वाभाववति नीलपटे नीलत्वं तयोश्च सामानाधिकरण्यं नीलघट इत्येवं तयोस्साङ्कर्याज्जातित्वं न स्यादित्याह एवं नीलत्वेति। गुणस्य द्रव्याद् व्यतिरिक्तत्वे युक्त्यन्तरमप्याह अपि चेति, तौ नाशोत्पादौ,

रागो: श्यामरक्तरूपयोः, नन्वस्तु पाकेन घटस्यैव नाशोत्पादावित्यत आह—

नापि घटस्य, स एवायं घट इत्यभेदप्रत्यभिज्ञानात्। अवच्छेदकभेदेन च भावाभावयोरेकत्र वृत्तेर्व्यवस्था-पितत्वात्, स्पर्शो न रूपं रूपं न स्पर्श इत्यनुभवाच्चेति। नापि द्वितीयः, स ह्येकदेशतया वा, एककालतया वा, एककार्यतया वा, एककारणतया वा, न तावदुपादानतयैकदेशसम्भवः, तयोः प्रतिनियतोपादानोपादे-यत्वात्, सम्भवे वा तदेव द्रव्यमिति पर्यवसितं विवादेन, नाप्यधिकरणीभूतभूतलाद्याधारतया तत्सम्भवः, चक्षुषा ह्युपलभ्यमाने भूतले रूपविशेषे घटोऽपि चक्षुषैवोपलभ्यमानो रूपविशेषस्तदाधार इति शक्यते निश्चेतुं, द्वयोरुभयोत्तरभावेनैकज्ञानसंसर्गित्वात्,

नापि घटस्येति, नाविलक्षणत्वे। नन्वेकत्र घटे श्यामरूपतन्नाशयोः रक्तरूपप्रागभावरक्तरूपोत्पादयोरभ्युपगमः सङ्गच्छते कथं, तयोर्विरुद्धत्वादित्यत आह अवच्छेदकभेदेनेति, पूर्वोत्तरकालावच्छेदेनेत्यर्थः। रूपत्वस्पर्शत्वे समानाधिकरणे यदि स्या-ताम् तर्हि यदेव रूपं स एव स्पर्शः य एव स्पर्शस्तदेव रूपमित्यनुभवः स्यात्, न च भवति, नन्वेवं तर्हि स कीदृक् भवतीत्यपेक्षाया-माह स्पर्शो न रूपमिति, समुदायविषयं चेति द्वितीयविकल्पं निरस्यति नापि द्वितीय इति, एकदेशतया एको देशो यस्य स एकदेशस्तस्य भाव एकदेशता, तया एकदेशतयेत्यर्थः, एकदेशवृत्तितयेति भावः। एवमग्रेऽपि, एकदेशश्च द्विधोपादानाधिकरणभेदेनेति विकल्प्याद्यं निरस्यति न तावदिति, उपादानतयैकदेशाऽसम्भवे हेतुमाह तयोरिति, चोदयते उत्तररूपस्य पूर्वरूपम् उत्तरस्पर्शस्य च पूर्वस्पर्श उपादानकारणमित्येवं तत्तज्जातीयवर्तिनो रूपस्पर्शयोः प्रतिनियतोपादानोपादेयभावादित्यर्थः, सम्भवे वेति रूप-

स्पर्शयोरुपादानतयैकदेशत्वस्य सम्भवे वेत्यर्थः, तदेवेति रूपस्पर्शयोरेकमुपादानमेवेत्यर्थः, अधिकरणात्मकैकदेशविषयकद्वितीयविकल्पं निरस्यति नापीति, तत्सम्भवः एकदेशत्वसम्भवः, भूतलं द्रव्यात्मकं बौद्धैर्नाभ्युपगतमित्यत उक्तं भूतले रूपविशेष इति, घटोऽपि तन्मते गुणात्मक एवेत्यतस्तस्यापि विशेषणमाह रूपविशेष इति, तदाधारः भूतलात्मकरूपविशेष आधारो यस्य स तदाधार इत्यर्थः ।

तदधिकरणाः स्पर्शादयोऽपीति तु कस्य प्रमाणस्य विषयः, तदधिकरणा रूपात्मकभूतलाधिकरणाः, स्पर्शादय इत्यादिपदं गन्धादिसमुदायो घटादिरिति मतानुरोधेन । नहि स्पर्शादयश्चाक्षुषे चेतसि चकासति, त्वचोऽयं व्यापार इत्यपि नास्ति, ततोऽपि भूतलघटस्पर्शयोरेवाधाराधेयभावप्रतीतेः । भूतलघटस्पर्शयोरिति स्पर्शात्मकभूतलघटयोः समुदाययोरित्यर्थः, न चैको रूपस्पर्शसमुदाय आधारोऽन्यश्चाधेय इति सम्भवतीति वाच्यम्, रूपस्पर्शयोस्तन्मते वास्तवस्यैकदेशवृत्तित्वस्यासम्भवाद्वैज्ञानिकं तद्वाच्यमित्येकदेशवृत्तितायां समुदायप्रतिसन्धानं, प्रतिसंहिते च समुदाये एकदेशवृत्तित्वज्ञानमित्यन्योन्याश्रयात्, भूतलस्यापि समुदायत्वानुसन्धानं तन्मूलभूतरूपादिसमुदायानुसन्धानाधीनैकाधारतानुसन्धानाधीनं स्यात्, तस्यापि तथेत्येवमनवस्थाप्रसङ्गाच्च । अत एव नैककालतयापि, तयोरेककालतायां प्रमाणाभावात्, भावे वा रासभकरभयोरप्येककालतया समुदायप्रसङ्गः, भेदाग्रहस्य प्रकृतेप्यसम्भवात्, रूपस्पर्शयोस्तद्ग्रहादेव ॥



तदधिकरणा इत्यस्यार्थमाह—तदधिकरणा रूपात्मकभूतलाधिकरणा इति । तदधिकरणः स्पर्शोऽपीति वक्तव्ये तदधि-

रूपत्वात् स्पर्शोऽपि इति रूपगुणत्वमित्याशङ्कोद्धरणायाह स्पर्शश्च इत्यादिपदमिति। रूपात्मकभूतलाधिकरणाः स्पर्शा-
स्तु इत्यत आह नहीत्यादिना चाक्षुषप्रत्यक्षविषयत्वं निराकृत्य त्वाचप्रत्यक्षविषयत्वमपि निराकरोति त्वचोऽयमित्यादिना, ततो-
ऽपि मनोऽपि, असंभवाच्चेति, बौद्धमते रूपस्य रूपात्मक एव देशे स्पर्शस्य च स्पर्शात्मक एव देशे वृत्तित्वाभ्युपगमादिति
भावः, रूपस्पर्शयोस्समुदायत्वमेककालत्वेनेति द्वितीयपक्षखण्डनमतिदेशेनाह अत एवेति, अतिदिष्टं हेतुमाह तयोरेककालता-
भावमिति। रूपस्पर्शयोः प्रतिनियतेन्द्रियग्राह्यत्वेन यदा चक्षुषा रूपं गृह्यते न तदा त्वचा स्पर्शः, यदा च स्पर्शस्त्वचा न तदा चक्षुषा
रूपमित्येवं तयोरेककालावच्छेदेन निर्विकल्पप्रत्यक्षप्रमाणविषयत्वाभावान्नैककालवृत्तित्वमित्यर्थः। ननु सविकल्पप्रमाणस्य तत्र
भावोऽस्तीति, सविकल्पगोचरत्वेनैककालवृत्तित्वं तयोस्स्यादिति चेन्, तर्हि उष्ट्रगर्दभयोरप्येककालवृत्तितया विकल्पगोचरत्वात् समु-
दायत्वप्रसङ्गः, न चोष्ट्रगर्दभयोर्भेदग्रहस्य प्रतिबन्धकस्य सत्त्वेन न समुदायत्वमिति वाच्यम्, यतो रूपस्पर्शयोरपि भेदग्रहादेव
समुदायत्वं न स्यादित्याशयेनाह भावे चेति। एककार्यतया रूपस्पर्शयोस्समुदायत्वमिति तृतीयपक्षखण्डनमतिदिशति—

अत एव नैककार्यतयापि, उपादेयरूपस्यैकस्य कार्यस्यासम्भवात्, एकोदकाहरणलक्षणा क्रियेत्यत्रापि न
युक्तम्, रूपातिरिक्तस्योदकस्यानभ्युपगमात्, न च रूपाद्यनेकात्मकमुदकमनेकघटरूपाद्याहार्यं, मानाभावात्,
समुदायात्मकभावाश्च न समुदायस्य समुदायाहार्यत्वमिति। अत एव नैककारणतयापीति। तृतीये तु न विवादः।
नापि चतुर्थः, स हि विज्ञाननयमाश्रित्य वा स्यात्, द्विचन्द्रादिवद्विसंवादाद्वा, आद्ये रूपादिषु कः पक्षपातः,

अत एवेति, उपादेयानेकैककार्यजनकतया रूपस्पर्शयोस्समुदायत्वमित्यपि न, रूपस्पर्शोभयजन्यस्योपादेयस्यैकस्य कार्य-

स्याऽसम्भवात्, रूपस्य स्पर्शस्य च स्वसजातीयकार्यं प्रत्येवोपादानकारणत्वादित्यर्थः । नैमित्तिकस्यैकस्य कार्यस्य जनकत्वलक्षणैककार्यतया रूपस्पर्शयोस्समुदायत्वमित्यपि खण्डयति—एकोदकेति, अनभ्युपगमादिति, अत्र बौद्धैरितिशेषः, तथा चोदकाहरणक्रियापि नैकेति नैमित्तिकैककार्यतयापि न रूपस्पर्शयोस्समुदायत्वमितिभावः। एककारणतया वेति चतुर्थपक्षनिराकरणमतिदेशेनाह अत एवेति, रूपस्पर्शयोरुपादानकारणस्य निमित्तकारणस्य चैकस्याभावादेवेत्यर्थः । यमहमद्राक्षं तमहं स्पृशामीत्यनुसंधानं रूपस्पर्शातिरिक्तवस्तुविषयकमिति तृतीयपक्षं त्विष्टापत्त्या परिहरति तृतीये त्विति, न विवाद इति अतिरिक्तवस्तु अनुगतद्रव्यमेवेति द्रव्याभ्युपगमे कृतेऽस्माकं पक्ष एव सिद्ध इतिभावः। यदि विज्ञाननयाश्रयणेन यमहमद्राक्षं तमहं स्पृशामीत्यनुसन्धानं वस्त्वननुरोध्याकारविषयमिति चतुर्थपक्षाश्रयणं तदा तन्मतेन रूपादिज्ञानस्यापि वस्त्वननुरोध्याकारविषयत्वेनाभ्युपगमात्तेन रूपादिकमपि सिद्धं न स्यादिति बाह्यवादलोपस्स्यादित्याह आद्ये रूपादिष्विति । यमहमद्राक्षं तमहं स्पृशामीत्यनुसन्धानविषयीभूतोऽर्थः प्राप्यते अर्थक्रियाकारी चेत्यर्थप्रापकत्वादिलक्षणसंवादादुक्तानुसन्धानं प्रमात्मकमेवेति न तस्य वस्त्वननुरोध्याकारविषयत्वमिति द्वितीयपक्षोऽपि न युक्त इत्याह—

प्राप्तेरर्थक्रियास्थितेश्च न द्वितीयोऽपि । ते द्वे अपि रूपादीनामेवेति चेत्, न तेषां किन्तु तस्यैवेत्येव किं न स्यात्, बाधकादिति चेत्, न तावत् क्रमयौगपद्यविरोधो रक्तारक्तविरोधो वा बाधकः, निषिद्धत्वात्, क्षणिकपरमाणुरूपद्रव्यानाक्रान्तेश्च । सम्बन्धाभाव इति चेत्, असम्बद्धं तावदस्तु, कथं तद्वत्प्रतीयेतेति चेत्, तेषां तथोत्पादादिति परिहारोऽस्तु, तवैव यथा शरीरं चेतनावदिति ॥

प्राप्तेरर्थक्रियास्थितेश्चेति। ते प्राप्त्यर्थक्रियावस्थिती। तेषां रूपादीनाम्। तस्यैव द्रव्यस्यैव क्रमयौगपद्यविरोधो बाधको भवन्नपि स्थिरद्रव्यस्यैव बाधकस्स्यात् रक्तारक्तविरोधोऽप्यवयविन एव बाधकस्स्यात् न तु क्षणिकपरमाणुरूपद्रव्यस्येति तवापि तत्सिद्ध्यापत्तिरित्याह **क्षणिकपरमाणुरूपेति**। उक्तबाधकस्य क्षणिकपरमाणुरूपद्रव्येऽनाक्रान्तेश्चेत्यर्थः, द्रव्यस्य रूपादिगुणेन सह सम्बन्धाभाव एव गुणवद्द्रव्यस्य बाधक इत्याशङ्कते **सम्बन्धाभाव इति चेदिति**। सम्बन्धसामान्याभावः सम्बन्धस्य बाधक इति गुणसम्बन्धाघटितमूर्त्तिकं केवलद्रव्यस्वरूपमेवास्तु तस्याऽबाध्यत्वादित्यभ्युपगमवादेन समाधत्ते-**असम्बद्धं तावदस्त्वति**, असम्बन्धस्तावदस्त्विति पाठान्तरम्। सम्बन्धाभावः सम्बन्धस्य बाधक इति द्रव्यगुणयोरसम्बन्धस्तावदस्त्वित्यर्थः॥ मतुप्प्रत्ययार्थो हि सम्बन्धः, तस्य च सम्बन्धसामान्याभावेन बाधे तदभाने सति कथं गुणवत्तया द्रव्यं प्रतीयेतेत्याशङ्कते—**कथमित्यादिना**, यद्यपि गुणवत्तया द्रव्यप्रतीतिरेव द्रव्यगुणयोः सम्बन्धमन्तरेणानुपपद्यमाना तयोस्सम्बन्धं साधयति, प्रमाणसिद्धे च तस्मिन् बाधकप्रमाणं नावतरत्येव, तथावतार्यमाणमपि प्रमाणप्रतिहतत्वाद् बाधकाभासतयैव व्यवतिष्ठते, तथापि तादृशप्रतीतेः सविकल्पकत्वेन बौद्धैः प्रमाणतयाऽनङ्गीकारात् प्रकारान्तरेणोत्तरयति **तेषामिति**, **तेषां** द्रव्याणां रूपादीनां च, **तथोत्पादात्** रूपादिगुणवत्तया द्रव्यप्रतीतिकुर्वद्रूपात्मकतयोत्पादात्, तत्र दृष्टान्तमाह **तवैवेति**, बौद्धमते यथा शरीरे चेतनासम्बन्धाभावेपि तद्वत्तया शरीरप्रतीतिकुर्वद्रूपात्मकतया रूपस्पर्शसमुदायात्मकशरीरस्योत्पादात्तथाप्रतीतिस्तथा प्रकृतेपीत्यर्थः, बौद्धश्शङ्कते—

**रूपादिभिरेव समस्तार्थक्रियासिद्धेः किं तदतिरिक्तद्रव्यकल्पनयेति चेत्, न, तावन्मात्रेणैव समस्तार्थक्रियासिद्धेः किं रूपादिकल्पनयेत्यस्यापि वाचाटवचसोऽवकाशप्रसङ्गात्, प्रतीयमानत्वादिति चेत्, तुल्यम्,**

एतेनालीकविषयता निरस्ता। अभेदसाधनं गुणगुणिनोर्भेदबाधनमिति चेत्, तत्किं, सहोपलम्भनियम इति चेत्, न, रूपाग्रहेऽपि त्वचा शङ्खग्रहात् तदसिद्धेः। न चासावन्य एव स्पर्शात्मकः शङ्खः, दर्शनस्पर्शनाभ्यामेकार्थप्रतिसन्धानस्य प्रतिपादितत्वात्, रूपत्वस्पर्शत्वयोरैकाधिकरण्यस्य च निराकृतत्वात्।

रूपादिभिरेवेति, समाधत्ते–नेति, तावन्मात्रेणैव द्रव्यमात्रेणैव, अलीकविषयमेकार्थानुसन्धानमिति पञ्चमविकल्पखण्डनमतिदिशति–एतेनेति वस्त्वननुरोध्याकारविषयत्वखण्डनप्रकारेणैवेत्यर्थः। गुणगुणिनौ अभिन्नौ सहोपलम्भनियमादित्यनुमानमेव गुणगुणिनोर्भेदबाधकमित्याशङ्कते अभेदसाधनमिति, नाप्यसम एव सहोपलम्भनियमो हेतुरित्यग्रे वक्ष्यमाणत्वात्सहोपलम्भनियमः समाऽसमभेदेन द्विविध इति प्राक् समसहोपलम्भनियमं निराकरोति–न, रूपाऽग्रहेऽपीति, तदसिद्धेः समसहोपलम्भनियमरूपहेत्वसिद्धेः, ननु चक्षुषा रूपाग्रहकाले यस्त्वचा शङ्खो गृह्यते स स्पर्शात्मक एव यश्च त्वचा रूपाग्रहकाले चक्षुषा गृह्यते शङ्खः स रूपात्मक एवेति तयोर्भेदाच्चक्षुर्ग्राह्यशङ्खरूपयोस्त्वग्ग्राह्यशङ्खस्पर्शयोस्सहोपलम्भनियमो नासिद्ध इति सिद्धेन हेतुना नायनसहोपलम्भनियमेन चाक्षुषप्रतीतिकालीनशङ्खे रूपाभेदस्स्पार्शनसहोपलम्भनियमेन च त्वाचप्रतीतिकालीनशङ्खे स्पर्शाभेदस्सिद्ध्यत्येवेत्याशङ्क्य प्रतिक्षिपति न चेति, ननु शङ्खो गुणः रूपत्वस्पर्शत्वाश्रयत्वात् रूपस्पर्शवदित्यनुमानेन शङ्खो गुणात्मक एव सिद्ध इति तदेकार्थविषयमेव यं शङ्खमद्राक्षं तमेव शङ्खं स्पृशामीत्येकार्थानुसन्धानमित्याशङ्कां मनसि कृत्वा तां निराकरोति रूपत्वस्पर्शत्वयोरिति, साहित्यं भेदघटितमिति सहोपलम्भार्थाऽन्यथानुपपत्त्या भेद एव सिद्ध्यतीत्याशयेनाह—

तद्ग्रहे गृह्यमाणत्वस्य च विना भेदमनुपपत्तेः। सामग्रीसमाजनियमेनोपपाद्यमानस्य नायनोपलम्भ-

नियमस्य चाकिञ्चित्करत्वात्, पीतः शङ्ख इति विभ्रमादौ श्वैत्यानुपलम्भेऽपि शङ्खोपलम्भेन वस्तुतस्तस्याप्य-भावात्। तत्र शङ्खस्य रूपं गृह्यत एव, शुक्लत्वं तु न गृह्यते, दोषात्, तत्र च पीतत्वमारोप्य तादृशं वैशिष्ट्यं शङ्खे गृह्यते, जातिव्यक्त्योर्भेदसिद्धिस्तु न गुणगुणिनोरभेदसिद्धौ बाधिकेति चेत्, न, तादृशकल्पनायां माना-भावात्, आहत्यैव शङ्खे पीतिमारोपसम्भवात्,

तद्ग्रहे गृह्यमाणत्वस्येति, सहोपलम्भार्थस्येति द्रष्टव्यम्, चाक्षुषप्रतीत्या नियमेन रूपतद्वतोर्यस्सहोपलम्भस्तत्रापि नाभेदो नियामकः किन्तु द्रव्यग्राहकचक्षुस्संयोगादिघटितसामग्रीकाले रूपग्राहकचक्षुस्संयुक्तसमवायादिघटितसामग्र्या अपि सद्भावेन तदु-भयग्राहकसामग्रीसमाज एव नियामक इत्याह—सामग्रीसमाजेति। नायनेत्यादि, अत्र रूपतद्वतोरितिशेषः, अकिञ्चित्करत्वा-दित्यत्राऽभेदसाधन इतिशेषः, व्यभिचारशङ्कानिवर्त्तकतर्काभावेनाऽप्रयोजकत्वाद्धेतोरितिभावः। नायनसहोपलम्भनियमहेतुरप्यऽसिद्ध इत्युपदर्शयति पीतःशङ्ख इतीति। तद्रूपे गृह्यमाण एव तद्ग्रह इति नायनसहोपलम्भनियमहेत्वासिद्धिपरिहारमाशङ्कते तत्रेत्या-दिना। तत्र पीतःशङ्ख इति विभ्रमे, तत्र च शुक्लरूपे च। तादृशं वैशिष्ट्यम् पीतत्वारोपितशुक्लरूपवैशिष्ट्यम्। आहत्यैवे-त्यादि शुक्लरूपे पीतत्वमनारोप्य साक्षादेव शङ्खे पीतरूपारोपसम्भवादित्यर्थः। ननु शुक्लरूपे पीतत्वमनारोप्य साक्षादेवान्यदीय-पीतरूपारोपः शङ्खे कथं सम्भवति, स्वकीयशुक्लरूपाग्रहणे शङ्खस्यैव ग्रहणाऽसम्भवात्, स्वकीयरूपग्रहणे सत्येव चक्षुषा द्रव्यग्रह इति नियमादित्याशङ्कायामाह—

न च तदपि, रूपे गृह्यमाण एव चक्षुषा द्रव्यग्रहे मानाभावात्, शुक्लत्वादौ गृह्यमाण एव शुक्लादिरूपग्रह

इत्यस्यापि सुवचत्वात्, सन्दिग्धासिद्धेर्दुर्वारत्वात्, न च रूपाग्रहे नियमेनागृह्यमाणत्वेन रूपाभेदः साध्यः, रूपत्वे व्यभिचारात्, अतिरिक्तरूपत्वानभ्युपगमे तु तद्व्यक्त्यग्रहेऽगृह्यमाणत्वस्य स्वरूपासिद्धत्वात्, पीतशङ्ख-विभ्रमे भासमानो न शङ्खः, किन्तु शङ्ख इव, तैमिरिककेशवदिति चेत्,

न च तदपीति। स्वकीयरूपग्रहणे सत्येव चक्षुषा द्रव्यग्रह इत्यपि नियमो नास्तीत्यर्थः। अत्र हेतुमाह रूपे गृह्यमाण एवेति। प्रमाणमन्तरेणोक्तनियमाभ्युपगमे दण्डमाह शुक्लत्वादाविति, इत्यस्यापि सुवचत्वादिति, इति नियमस्यापि वक्तुं शक्यत्वादित्यर्थः, तथाच शुक्लरूपे पीतत्वारोपोऽपि कथं स्यादितिभावः। सन्दिग्धासिद्धेर्दुर्वारत्वादिति, तथाच सन्दिग्धासिद्धेन सहोपलम्भनियमरूपहेतुना न गुणगुणिनोरभेदसिद्धिरिति भावः। यदग्रहे नियमेन यन्न गृह्यते तत्तदभिन्नम् यथा घटस्य स्वस्वरूपम्, न गृह्यते च रूपाग्रहे नियमेन घटः, तस्मात् स तदभिन्न इति व्याप्तिबलसहकृतेन रूपाग्रहे नियमेनागृह्यमाणत्वेन हेतुना घटपक्षे रूपाभेदस्सिद्ध्यतीत्यपि न युक्तं, रूपत्वे उक्तहेतोस्सत्त्वेपि रूपाभेदरूपसाध्याभावेन व्यभिचारादित्याह न च रूपाग्रह इति, न च रूपत्वं रूपाभिन्नमेवाभ्युपगम्यत इति नोक्तव्यभिचार इति वाच्यं, सर्वेषां रूपाणामतिरिक्तानुगमकाभावेन तत्तद्व्यक्तित्वेनैव रूपस्य हेतुकोटौ प्रवेशस्स्यात्, तथाच घटत्वरूपपक्षतावच्छेदकावच्छेदेन रूपाभेदसाधने अतद्रूपवति घटान्तरे तद्रूपघटितोक्तहेतोरभावेन भागासिद्धिस्स्यात्, पक्षतावच्छेदकसामानाधिकरण्येन पक्षत्वे रूपाग्रहेपि त्वगिन्द्रियेण गृह्यमाणे पक्षीभूते घटे हेतोरसत्त्वेन स्वरूपासिद्धिस्स्यात्, न च चक्षुरिन्द्रियेण गृह्यमाणत्वस्य हेतूकरणेप्युद्धारः, पीतःशङ्ख इति विभ्रमे शङ्खगतशुक्लरूपाग्रहणेऽपि शङ्खग्रहणात्स्वरूपासिद्धेस्तादवस्थ्यादित्याशयेनाह अतिरिक्तरूपत्वानभ्युपगमे त्विति, उक्तस्वरूपासिद्धिनिवृत्तये बौद्ध आशङ्कते पीतशङ्खविभ्रम इति, समाधत्ते—

अहो गुणवद्विद्वेषः, यत्तैमिरिककेशाः करपरामर्शनियतकेशार्थक्रियाया अभावात् न सन्तीति व्यवस्थापयसि, इह तु तत्सद्भावेऽपि शुभ्रतामात्रानुपलम्भादिति। व्यापकत्वादिति चेत्, वस्तुनोर्व्याप्तिरुपलब्ध्योर्वा, वस्तुनोः श्वैत्यशङ्खयोः, उपलब्ध्योः श्वैत्यशङ्खयोरुपलब्ध्योर्वा, आद्ये वस्तुनोर्व्याप्तौ न विप्रतिपत्तिः, किन्तु व्यापकानुपलब्धिमात्रेण व्याप्यतदुपलब्धी न निवर्त्तेते,

अहो इति। इह तु पीतशङ्खविभ्रमस्थले पुनः, तत्सद्भावेपि शङ्खार्थक्रियासद्भावेऽपि। शुभ्रतामात्रानुपलम्भादिति, श्वैत्यात्मकगुणमात्राग्रहणात् शङ्खो नास्तीति व्यवस्थापयसीति वचनव्यत्यासेनानुषञ्जनीयम्, शङ्खं प्रति शुभ्रतायाश्शङ्खोपलब्धिं प्रति शुभ्रतोपलब्धेर्वा व्यापकत्वेन व्यापकानुपलब्ध्या व्याप्याभावस्सिद्ध्यतीत्यतश्शङ्खनिवृत्तौ सङ्खसदृशः पीतशङ्खविभ्रमे भासत इत्याशयेनाशङ्कते व्यापकत्वादिति चेदिति, न विप्रतिपत्तिरिति, तथाच श्वैत्यरूपव्यापकाभावे सति शङ्खरूपव्याप्यनिवृत्तिस्स्यात्, न चात्र श्वैत्यरूपव्यापकाभाव इति भावः। श्वैत्यरूपव्यापकानुपलब्ध्या शङ्खात्मकव्याप्यस्य तदुपलब्धेश्च निवृत्त्यभ्युपगमे दण्डमाह—

दहनानुपलब्धौ धूमतदुपलब्ध्योरपि निवृत्तिप्रसङ्गात्, तत्रापि वा किं न कल्पयसि धूम इवासौ, न धूम एव, पावकवत्तानुपलब्धेरिति, तस्मात् न व्यापकानुपलब्धेर्व्याप्यनिवृत्तिः, किन्तु व्यापकनिवृत्तेः, सा चात्रासिद्धेति वाच्यम्, तदेतत् तुल्यं प्रकृतेऽपि, उपलब्ध्योस्तु व्याप्तिरिहैव भग्ना, श्वैत्यानुपलम्भेऽपि शङ्खोपलम्भादित्युक्तम्। स्यादेतत्-पीत एव शङ्ख उत्पन्न इति चेत्, न, पुरुषान्तरेण श्वैतस्यैवोपलम्भादिति, नाप्यसम एव

सहोपलम्भनियमो हेतुः, तस्मिन् गृह्यमाण एव गृह्यमाणत्वं हेतुः, अस्ति च गुणिनि गृह्यमाण एव गुणस्य गृह्यमाणत्वमित्यर्थ इति वाच्यम्, अनेकान्तात्,

दहनानुपलब्धाविति। प्रकृतेऽपि पीतशङ्खविभ्रमस्थलेऽपि, सा च व्यापकनिवृत्तिश्च, अत्र–वह्न्यनुपलम्भेऽपि धूमोपलम्भस्थले, उपलब्ध्योः श्वैत्योपलब्धिशङ्खोपलब्ध्योः, द्वितीयभेदमसमसहोपलम्भनियमं निराकरोति नाप्यसम एवेति, अनेकान्तमेव विवृणोति—

अभास्वरं हि रूपं भास्वरेण सह नियमेनोपलभ्यते ततो भिन्नं चेति। देशाविच्छेदस्तथाऽभिन्नदेशत्वमभेदसाधनमित्यर्थ इति चेत्,न, असिद्धेः, गुणस्य द्रव्यवृत्तित्वात् द्रव्यस्य च जन्यस्य स्वावयववृत्तित्वादतिरिक्तस्य चावयविनः साधितत्वात्, अन्यतरसंसृष्टाकाशदेशवर्त्तित्वमेवेतरस्य देशाविच्छेद इति चेत्, न, देहदेहिभ्यामनेकान्तात्, भिन्नत्वेनाभिमतयोर्विज्ञानरूपदेहिदेहयोरपि तादृग्देशाविच्छेदाविशेषादिति नारायणः।

अभास्वरं हि रूपमिति, अभास्वरमपरप्रकाशकं भूजलगतं रूपमित्यर्थः। भास्वरेण परप्रकाशकेन आलोकादितेजसा, देशाऽविच्छेदस्य गुणगुणिनोरऽभेदसाधकत्वमाशङ्कते–देशाविच्छेद इति, तथेति अभेदसाधको हेतुरित्यर्थः, अस्यैव विवरणमाह अभिन्नेति, अत्र गुणगुणिनौ अभिन्नौ अभिन्नदेशत्वादित्यनुमाने पराभिमते पर्यवसिते हेतुस्स्वरूपासिद्ध इति समाधत्ते–न, असिद्धेरिति, देहदेहिभ्यामनेकान्तादित्यस्य नारायणाचार्यमतेन व्याख्यानमाह भिन्नत्वेनेति, तादृग्देशाऽविच्छेदाविशेषादिति, विज्ञानरूपदेहसंसृष्टाकाशदेशे विज्ञानरूपदेहिनो विज्ञानरूपदेहिसंसृष्टाकाशदेशे विज्ञानरूपदेहस्य सत्त्वेनैकस्मिन्नेवाकाशदेशे

स्याद्वादोपदर्शनम्।

॥४२९॥

ण्डखाद्यं कल्पलति कोपेतम्।
॥४२९॥

तयोर्व्यवस्थानाऽविशेषादित्यर्थः। दीधितिकारमतेन व्याख्यानमाह—

दीधितिकारस्तु परदेहविज्ञाने स्वसंवेदनेन गृह्यमाण एव परदेहग्रहणात् तत्र व्यभिचारमाह, न तयोरविच्छेदस्तदनुपलम्भेऽपि तदुपलम्भात्, विज्ञानानुसन्धानसमये देहास्फुरणादिति चेत्, तुल्यं, रूपाद्यनुपलम्भेऽपि तद्वतामुपलब्धेः। तथापि न विपर्ययः कदापीति चेत्, तुल्यं, नहि देहाद्यनुपलम्भे देह्युपलम्भवत् देह्यनुपलम्भेऽपि देहस्योपलम्भसम्भवस्तव मते, क्षणिकदेहविशेषमधिकृत्य चेदं, तेन पुरुषान्तरेण देहिनोऽनुपलम्भेऽपि न क्षतिः॥ अन्यथासिद्धिश्च हेत्वोः, यतः प्रतिपत्तिनिष्पत्तिसामग्रीसाहित्यनियमे सहोपलम्भो वा, देशाविच्छेदो वा स्यात्, नियमेन विरुद्धधर्माध्यासाद् भेदश्चेति को विरोधः॥

दीधितिकारस्त्विति, आहेत्यनेन सम्बन्धः, बौद्धश्शङ्कते न तयोरिति, तयोः देहदेहिनोः, देहानुपलम्भेऽपि विज्ञानरूपदेह्युपलम्भमेव स्पष्टयति विज्ञानेति, रूपाद्यनुपलम्भे रूपादिमतामुपलब्धावपि रूपादिमदनुपलब्धौ न रूपादेरुपलब्धिरिति शङ्कते तथापीति, अन्यथासिद्धिः अभेदात्मकसाध्यमन्तरेण सिद्धिः व्याप्यत्वाऽसिद्धिरिति यावत्। हेत्वोः सहोपलम्भदेशाऽविच्छेदयोः, प्रतिपत्तीति गुणगुणिनोः प्रतिपत्तिसामग्रीसाहित्यनियमे तयोस्सहोपलम्भो नियमेन स्यात्, गुणगुणिनोर्निष्पत्तिसामग्रीसाहित्यनियमे तयोर्नियमेन देशाऽविच्छेदो वा स्यादित्यर्थः।

अत एव देशदेशिनोर्नैरन्तर्यं देशाविच्छेद इत्यपि निरस्तम्। उपर्यधोभावापन्ननीलसन्तानद्वये व्यभिचाराच्च, धर्मविरोध एव कोऽत्रेति चेत्, तदुपलम्भेऽप्यनुपलम्भस्तन्निषेधेऽप्यनिषेध इत्यादि। ननूपलम्भानुपल-

म्भादिकं न धर्मिणः, किन्तु तद्व्यावृत्तिभेदानामिति चेत्, न, नीलमुत्पलं चलतीत्यादौ व्यावृत्तिभेदनिराकरणे पूर्वोक्तन्यायस्यैवानुसरणीयत्वात्, स च वास्तवमुत्पलत्वादिकमनादृत्यानुत्पलादिव्यावृत्तेर्दुर्वचत्वमित्यादिः । ननु यदि जातिगुणक्रियानिबन्धन एव विशिष्टव्यवहारो, न पुनरतद्व्यावृत्तिनिबन्धनो, विलीनं तर्हि कार्यत्वनित्यत्वादिविशिष्टव्यवहारेणेति चेत्,

अत एवेति—उपलम्भानुपलम्भादिविरुद्धधर्माध्यासाद्भेदोऽस्तु नैरन्तर्यलक्षणदेशाऽविच्छेदोऽप्यस्त्वित्यत्र विपक्षबाधकतर्काभावादेवेत्यर्थः, अस्य निरस्तमित्यनेनान्वयः। निरासे हेत्वन्तरमप्याह उपर्यधोभावेति, विरुद्धधर्माध्यासाद्भेदश्चेति यदुक्तं तत्र पृच्छति बौद्धः—धर्मविरोध एवेति । जातिगुणक्रियानिबन्धन एवेति घटोऽयं पटोऽयमित्यादिर्विशिष्टव्यवहारो घटत्वपटत्वादिजातिनिमित्तक एव, शुक्लोऽयं मधुरोऽयमित्यादिर्गुणनिबन्धन एव, पचति चलतीत्यादिः क्रियानिमित्तक एवेत्यर्थः, कार्यत्वादिकं न जातिरूपं, सनिरूपकत्वात्, पृथिवीत्वादिना साङ्कर्याच्च, नापि गुणादिरूपं, गुणादिवृत्तित्वादित्यतद्व्यावृत्तिरूपमेव तदिति तत्र तद्रूपनिमित्तेनापि तद्विशिष्टव्यवहार उपगम्यते, यत्र च विशेषणस्य जातिरूपत्वे न किमपि बाधकं तत्र तन्निमित्तक एव तद्विशिष्टव्यवहार इत्याशयेन समाधत्ते—

न, यत्र जात्यादेरसम्भवस्तत्र व्यावृत्त्यापि तदुपगमात्, प्रकृते तु नैवमिति, अभेदे च धर्मधर्मिणोर्दूरादूरतया ग्रहणेऽपटुपटुनी कुतः, बहुतरधर्मग्राहित्वं पटुत्वम् अल्पतरधर्मग्राहित्वं चापटुत्वं, धर्मिग्रहे तदभिन्नानां सर्वेषां धर्माणां ग्रहादसम्भवीत्यर्थः । अथ पटुत्वमपटुत्वं च विषयगतो धर्मस्तद्ग्राहितया च ग्रहणे पटु-

त्वापटुत्वव्यवहारः, एक एवार्थो नेदीयांसं प्रति पटुत्वेनोत्पद्यत इति तेन तथा गृह्यते, दवीयांसं प्रति चापटुत्वेनेति तेनापटुत्वेन गृह्यत इति चेत्, न, एकस्य द्वैरूप्यायोगात्, न चान्य एवासौ, एकदेशतया तत्त्वेन च प्रतिसन्धानात्, न च सा भ्रान्ता, भिन्नदेशस्यापि तथाभूतस्य प्रत्यासीदताप्यनुपलम्भात्।

न, यत्रेति। प्रकृते नीलमुत्पलं चलतीत्यादौ, नैवम्, न जात्यादेरसम्भवः, अतो न तादृशविशिष्टव्यवहारोऽतद्व्यावृत्तिनिबन्धनः। गुणगुणिनोरभेदे साधकं प्रमाणं निरस्य बाधकं प्रमाणमुपदर्शयति अभेदे चेति, बौद्धश्शङ्कते अथेति, नेदीयांसम् आसन्नतरवर्त्तिनम्, अत्र पुरुषमिति शेषः, दवीयांसम् दूरवर्त्तिनम्, अपटुत्वेनेति अत्रोत्पद्यत इत्यनुषज्यते, समीपस्थपुरुषापेक्षया यो वृक्षः पटुत्वेनोत्पन्नस्ततोऽन्य एव दूरवर्त्तिपुरुषापेक्षयाऽपटुत्वेन भिन्नदेशतयोत्पन्न इति यदैव समीपस्थस्य पुरुषस्य पटुतया यस्यैव वृक्षस्य ग्रहणं न तदानीमेव दूरवर्त्तिनः पुरुषस्यापटुतया तस्यैव वृक्षस्य ग्रहणं किन्तु भिन्नदेशस्थस्यान्यस्यैवेति चेत्, मैवम्, समीपवर्त्तिना पुरुषेण यद्देशस्थो वृक्षो वक्रकोटरत्वादिविशेषधर्मेण स्फुटतया प्रतीयते, तद्देशस्थस्स एव दूरस्थपुरुषान्तरेण तदानीं दूरत्वादिदोषेण सामान्यरूपेण प्रतीयत इति नान्य एवासावित्याह न चान्य एवेति। न चान्यान्य एवासाविति पाठान्तरम्, तत्त्वेन एकत्वेन, ननु पटुत्वापटुत्वाभ्यां भिन्नस्यैवार्थस्योत्पादाद्भिन्नदेशत्वमेवेति यद्देशस्थो य एव निकटवर्त्तिना पुरुषेण स्फुटो दृश्यते स एव तद्देशस्थो दूरवर्त्तिना पुरुषान्तरेण दूरत्वादिदोषेणाऽस्फुटो दृश्यते इत्येवमेकदेशतयैकत्वेन च प्रतीतिर्भ्रान्तेति चेत्, स्यादेतद्यदि समीपमागच्छतापि तेनैव पुरुषान्तरेण वा भिन्नदेशस्थत्वेनास्फुटत्वेन च प्रतीयेत, न चैवमित्याशयेनाह न च सा भ्रान्तेति, अथ दूरत्वादिदोषेणापटुतयोपलम्भो निरालम्बन एवेति चेत्, तर्ह्यपटुत्वस्यालीकरूपत्वेन कस्यचिद्वस्तुनो धर्म-

त्वाऽभावेन तस्य वृक्षादिप्रतिनियतदेशवृत्तितयोपलम्भो न स्यादित्याशयेनाह—

न च निरालम्बन एव तदुपलम्भो, वृक्षादिदेशप्रतिनियमानुपपत्तेः । अधिपतिप्रत्ययत्वात् तस्य विषयप्रतिनियमोपपत्तिः, तस्य सविकल्पकस्य, अत्र प्रत्ययशब्दः कारणपर्यायस्तेनाधिपतिप्रत्ययशब्देनालम्बनव्यतिरिक्तमिन्द्रियादि कारणमुच्यते, तच्च प्रकृते समानाकारग्रहणजनकं ग्राह्यम्, तत्त्वात् तदधीनत्वादिति केचित्, अधिपतिर्निर्विकल्पकप्रत्ययः कारणं यस्य तत्त्वादित्यन्ये, नियताकारसविकल्पकजननसामर्थ्यं निर्विकल्पकस्याधिपत्यं, तथा च तस्य सविकल्पकजनकनिर्विकल्पकस्यापि तथात्वात् सविकल्पके विषयप्रतिनियम इत्यर्थ इत्यपरे, इति चेत्, यदि निर्विकल्पकं वृक्षादिदेशमुल्लिखेत् तदा तदनुरूपो विकल्पोऽपि वृक्षादिविषयः स्यात्, न चासतो वृक्षादेरवयविनो निर्विकल्पकविषयत्वसम्भवः । अन्यविषयादविकल्पादन्यविषयसविकल्पकोत्पादे च नीलनिर्विकल्पकात् पीतसविकल्पकोत्पादप्रसङ्ग इति ।

न च निरालम्बन एवेति, निरालम्बनस्याप्यऽपटुत्वोपलम्भस्य वृक्षादिदेशप्रतिनियमोपपादनप्रकारं बौद्ध आशङ्कते—अधिपतिप्रत्ययत्वात्तस्य विषयप्रतिनियमोपपत्तिरिति, इदञ्चातिगहनविपयमिति व्याख्यातॄणां मतभेदेनास्य व्याख्यात्रयमुपदर्शयति—अत्रेत्यादिना, तदधीनत्वादिति समानाकारग्रहणजनकाधीनत्वात्, तथात्वात् नियताकारसविकल्पजननसामर्थ्यात्, निर्विकल्पे यद्भासते तदेव सविकल्पेऽपि, समानविपयत्वप्रत्यासत्त्या कार्यकारणभावादित्याशयं मनसि धृत्वा नैयायिकस्समाधत्ते—यदि निर्विकल्पकमिति, तदनुरूपः निर्विकल्पानुरूपः, यदि यद्विपयकं यन्निर्विकल्पं तेन तद्विपयक एव सवि-

कल्पो जन्यते इति कार्यकारणभावोऽभ्युपगम्येत तदा स्यादुक्तदोषः, न चैवम्, किन्तु यत्कुर्वद्रूपात्मकं यत् तेन तज्जन्यते यथा बीजेनाङ्कुरमिति सामान्यव्याप्तिबलेनान्यविषयकनिर्विकल्पोऽप्यन्यविषयकसविकल्पकुर्वद्रूपात्मक इति तेन तज्जन्यते इत्युपगमे दोषमाह नीलनिर्विकल्पकात्पीतसविकल्पकोत्पादप्रसङ्ग इतीति, सन्निकृष्टविप्रकृष्टत्वेन पट्वपटुग्रहणे देशालम्बने, नतु तत्र देश्यपि भासते, तथाच बहुतराल्पतरदेशविषयकत्वादेव तत्र पटुत्वापटुत्वे, नतु देशिगतबहुतराल्पतरधर्मविषयकत्वादित्याशङ्क्य प्रतिक्षिपति—

न च देशोऽस्त्वालम्बनं न तु वृक्षादिरिति साम्प्रतम्, देशिवद्देशस्यापि विशेषोपलब्ध्यनुपलब्धिभ्यामेव पट्वपटुग्रहणसम्भवात्। न च दवीयांसोऽपि विशेषाः स्फुरन्त्येव, निर्विकल्पकग्रहणात्, न तु निश्चीयन्ते, सविकल्पेनाग्रहणादिति वाच्यम्, नहि योगविमलाञ्जनधौतदृष्टेरन्यस्य ताराव्यूहगतयः प्रतिभान्ति इति शक्यं प्रतिपादयितुम्, अनिश्चयानुपपत्तेश्च, अनुभूतोऽर्थो न निश्चीयत इत्यत्र हेतुर्वाच्यः, वासनानुद्भव इति चेत्, न, निःशेषविशेषवन्तं धर्मिणमुपलभ्य विदूरवर्त्तिनस्तदखिलगोचरवासनोद्बोधेऽपि अनुभवव्यापारानुसारिनिश्चयाऽनुदयात्।

न चेति, निषेधे हेतुमाह—देशिवद्देशस्यापीति, तथा चैकस्मिन्नपि देशे यत्र पट्वपटुनी ग्रहणे भवतस्तत्र देशरूपविषयस्यैक्येन बहुतराल्पतरधर्मविषयकत्वमेव नियामकं वाच्यं, तथाच पट्वपटुग्रहणान्यथानुपपत्त्या सिद्धो धर्मधर्मिणोर्भेद इतिभावः। यावन्तो धर्मास्समीपस्थवृक्षादिविषयकनिर्विकल्पज्ञानेनाऽनुभूयन्ते दूरवर्त्तिनोऽपि धर्मास्तावन्त एव दूरवर्त्तिवृक्षादिविषयकनिर्विकल्पज्ञानेनाप्यनुभूयन्त एव, नतु सविकल्पेन निश्चीयन्त इति न पटुतया ग्रहणम्, समीपवृक्षादिग्रहणे सविकल्पेन तद्गता विशेषा

निश्चीयन्त इति पटुतया ग्रहणम्; तथाच न बहुतराल्पतरधर्मग्रहणे पटुपटुग्रहणनिमित्ते, किन्तु यावद्विशेषसविकल्पोत्पादानुत्पादावेवेत्याशयेनाशङ्क्य निषेधति न च दवीयांसोपीति, दवीयांसः, दूरवर्त्तिनः, अनिश्चयानुपपत्तेश्चेति, नतु निश्चीयन्ते इत्यस्यैवानुपपत्तेरित्यर्थः, एतदेव विवेचयति अनुभूत इति; इतरकारणसमवधाने उद्बुद्धवासनासत्त्वे निश्चयसत्त्वं तदभावे तदभाव इत्यन्वयव्यतिरेकबलाद् वासनोद्बोधस्य निश्चयं प्रति कारणत्वे सिद्धे तदभावस्य तदभावं प्रति प्रयोजकत्वं सिद्धं यदि स्यात्तदोक्तकार्यकारणभावमूलको यद्विशेषविषयिकोद्बुद्धवासना तद्विशेषविषयक एव निश्चय इति नियमस्सिद्ध्यतीति यद्विशेषविषयकवासनोद्बोधानुद्बोधाभ्यां तद्विशेषविषयकनिश्चयोत्पादानुत्पादौ भविष्यतः, न चैवं वासनोद्बोधस्य निश्चयहेतुत्वं सिद्धम्, अन्वयव्यभिचारादित्याशयेन समाधत्ते निश्शेषविशेषवन्तमिति, समीपवर्त्तिनः पुरुषस्य निश्चयोत्पत्तिसम्भवादाह विदूरवर्त्तिन इति, अनुभवेत्यादि एतदेव विवेचयति—

अनुभवस्य व्यापारो धर्मो निःशेषविशेषविषयत्वं तदनुसारी तद्वान्, तथापि चानुभवकल्पनया सर्वः सर्वदा सर्वं जानाति न तु निश्चिनोतीति किं न स्यात्, भ्रान्तिजनकदोषवशात् तद्विपरीतविशेषनिश्चयेऽनुभूतविशेषानिश्चय इति चेत्, अनुभववैपरीत्ये निश्चयस्य सर्वत्रानाश्वासप्रसङ्गः। ननु यत्र निश्चितेऽर्थे बाधकमनुभूयते तत्रैव निश्चयस्यानुभववैपरीत्यं कल्प्यते, न सर्वत्रेति नानाश्वासप्रसङ्गः, अन्यथा भवतामपि रजतभ्रमस्यार्थव्यभिचारात् सर्वत्रानाश्वासप्रसङ्ग इति चेत्, यत्र विपरीतस्यापि न निश्चयस्तत्र का वार्त्ता, यथा पराचीनैर्भागैरर्वाचीनानां संयोगविभागयोः। न च नियतविषयानादिवासनापरिपाकवशात् नियतविषयविकल्पो-

त्पाद इति साम्प्रतम्, अवयविजात्यादेर्वास्तवत्वव्यवस्थापनाद्विकल्पेऽनुभूयमानसाक्षात्त्वे बाधकाभावात्, सर्वानुभवसिद्धे च गुणगुणिनोर्भेदे न किञ्चिद्बाधकमिति।

अनुभवस्येत्यादिना, तद्विषयकनिश्चयाऽभावेऽपि तद्विषकानुभवोपगमे दण्डमप्याह तथापि चेति, दोषबलादुपजायमानभ्रमात्मकबाधकनिश्चयेन प्रतिबन्धान्नानुभूतविशेषनिश्चय इत्याशङ्कते भ्रान्तिजनकेति, यद्विषयकोऽनुभवस्तेन तद्विषयक एव निश्चयो जन्यत इत्यभ्युपगमे नीलानुभवादेव नीलनिश्चय उत्पन्नः नतु पीतानुभवादिति निर्णेतुं शक्यते, तथानभ्युपगमे तु न तथेति नीलनिश्चयान्नील एव निष्कम्पप्रवृत्तिर्न स्यात्, एवमन्यत्रापीत्याशयेन समाधत्ते अनुभववैपरीत्य इति, यत्र बाधकानुभवस्तत्रानुभवविषयाऽविषयकत्वं निश्चयस्य कल्प्यतां, यत्र न सः तत्र कथं नानुभूतविशेषनिश्चयः, तत्राप्यनुभवविपरीतनिश्चये नान्यत्किमपि नियामकम्, नियामकाभावेऽपि तथाऽभ्युपगमे सर्वत्रापि तथाऽभ्युपगमस्स्यादित्यनुभवमात्रस्याप्रामाण्यं स्यात्, "यत्रैव जनयेदेनां तत्रैवास्य प्रमाणतेति" सिद्धान्तात्, तथाच वस्तुव्यवस्थोच्छेदस्स्यादित्याशयेन समाधत्ते यत्र विपरीतस्यापीति। गुणगुणिनोरभेदान्नैरात्म्यमिति प्रथमपक्षनिरासे सत्यनुपलब्धितो नैरात्म्यमिति द्वितीयपक्षमाशङ्कते बौद्धः—

अस्तु तर्हि नैरात्म्यमनुपलब्धेरिति चेत्, अनुपलब्धिर्न ज्ञानमात्राभावो, नास्त्यात्मेत्येव तज्ज्ञानात्, किन्तु साक्षात्काराभावो वाच्यः, तत्र च सर्वादृष्टेः सन्देहात् स्वादृष्टेश्च व्यभिचारात्,

अस्तु तर्हीति, नैयायिकस्समाधत्ते अनुपलब्धिरिति, अनुपलब्धिर्नाम उपलब्ध्यभावः, तत्रोपलब्धिर्ज्ञानं, तथाच ज्ञानाभाव इत्यर्थः, स च द्विधा, एकस्तावद् ज्ञानत्वावच्छिन्नप्रतियोगिताको ज्ञानसामान्याभावः, द्वितीयश्च साक्षात्कारत्वरूपविशेषधर्मावच्छिन्नप्र-

तियोगिताको ज्ञानविशेषाभावः, तत्राद्यपक्षं निरस्यति न ज्ञानमात्राभाव इति, आत्मा नास्ति तद्विषयकज्ञानसामान्याभावादित्यनुमानमत्र पर्यवस्यति, तच्च न युक्तम्, हेतोस्स्वरूपासिद्धेः, तामेवोपदर्शयति नास्तीत्यादिना, नास्त्यात्मेति प्रतिज्ञाजन्यं यज्ज्ञानं तत्रापि विषयविधया<ऽऽत्मा प्रविष्ट एवेति तज्ज्ञानस्य विषयतासम्बन्धेनात्मनि सत्त्वात्पक्षे तदभावरूपहेत्वभावात्स्वरूपासिद्धो हेतुरित्यर्थः । द्वितीयपक्षमाश्रित्याह किन्तु साक्षात्काराभावो वाच्य इति ॥ तत्र च सर्वादृष्टेस्संदेहादिति, अनुमितेः प्राग् हेतुनिश्चयोऽनुमात्रैव कर्त्तव्यः, अनुमाता चाऽसर्वज्ञ इति तेनासर्वज्ञेन सकलपुरुषचेतोवृत्तिविशेषाणां ज्ञातुमशक्तेः सर्वे पुरुषाः प्रत्येकं कदापि कुत्रापि कमप्यात्मानं न साक्षात्कुर्वन्तीत्येवमात्मसाक्षात्काराभावरूपानुपलब्धिहेतुर्निश्चेतुं न शक्यः, यस्य च हेतोर्न निश्चयस्तस्मिन् विपक्षव्यावृत्तेरपि न निश्चयः, किन्तु सन्देह एवेति संदिग्धविपक्षव्यावृत्तिकादुक्तहेतोः कुतो नैरात्म्यसिद्धिः, सर्वेषामात्मसाक्षात्कारो नास्त्येवेत्येवं सर्वज्ञेन निश्चेतुं शक्यमिति तत्प्रणीतागमतोऽनुमातुरपि निश्चय इत्यभ्युपगममात्रं न निर्णायकं, किन्तु सांशयिकमेव, ततश्च हेतुसंदेहेऽपि न नैरात्म्यरूपसाध्यसिद्धिः, तत्र हेतुनिर्णयस्यैव हेतुत्वादित्यर्थः । नापि स्वसम्बन्ध्यनुपलब्धिहेतोर्नैरात्म्यसिद्धिः, यतस्तस्य तिरोहितसुसूक्ष्मादिपदार्थे सत्त्वेपि तदभावाऽसाधकत्वेन व्यभिचारादित्याह—स्वादृष्टेश्च व्यभिचारादिति, ननु स्वादर्शनं केवलं न हेतुः, किन्तु दृश्यत्वविशिष्टमेव, दृश्यत्वं च तिरोधानाभावमहत्त्वादिविशिष्ट एवेति तिरोहितादौ तदभावान्न व्यभिचार इत्याशङ्कते—

दृश्यत्वविशेषणान्नैवमिति चेत्, न, तदसिद्धेः । परोपगमसिद्धेरदोष इति चेत्, न, स्वतन्त्रसाधनत्वात्, प्रसङ्गो हि पराभ्युपगमसिद्धेन हेतुना प्रवर्त्तते, तदभ्युपगमेऽनिष्टप्रसञ्जनरूपत्वात्, नानुमानम् । तदुक्तम्—'यस्तु

हेतुः परासिद्धः स्वतः सिद्धोऽभिधीयते। भवेत् तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिया' इति। यदि च पराभ्युपगमरीत्यैव स्वतन्त्रसाधनं त्यक्त्वापसिद्धान्तभयेन परेण स्वीक्रियते तदा साधनं दूषयितुकामः परो यदि सहसैव साधनं नाभ्युपगच्छेत्, तदैव साधनमुच्छिद्येत।

दृश्यत्वेति, नैवम् न व्यभिचारः, धर्मिसिद्धावेव धर्मस्सिद्ध्यतीत्यात्मधर्मिणो भवन्मतेऽसिद्धेस्तत्र दृश्यत्वधर्मस्याप्यसिद्धिरिति तद्रूपविशेषणासिद्ध्या तद्विशिष्टस्य हेतोरसिद्धिरिति समाधत्ते तदसिद्धेरिति, उक्तानुमानं नैरात्म्यसाधकतयोपन्यस्तमिति स्वतन्त्रानुमानम्, अत्रापि हेतुर्यदि पराभ्युपगमसिद्धोऽभ्युपगतस्स्यात् तदा तदपि प्रसङ्गानुमानं स्यात्, नतु स्वतन्त्राऽनुमानम्, तत्र स्वाभ्युपगमसिद्धस्यैव हेतोः कारणत्वात्, प्रसङ्गश्चारोपरूपत्वान्न वस्तुसाधक इति नैरात्म्यसिद्धिर्न स्यादित्याशयेन समाधत्ते—न, स्वतन्त्रसाधनत्वादिति, तदभ्युपगमे पराभ्युपगमे, अनिष्टप्रसञ्जनरूपत्वादिति, प्रसङ्गस्येति शेषम्, एतद्विषये परसंवादमुपदर्शयति तदुक्तमिति, प्रतीकारः असिद्धिपरिहारः। का क्रियेति, नासिद्धिपरिहारः कर्तुं शक्य इत्यर्थः। स्वतन्त्रसाधने हेतुसिद्धौ पराभ्युपगम एव तन्त्रमित्यभ्युपगमे को दोष इत्यत आह यदि चेति, परेण वादिना, परः प्रतिवादी, उक्तानुमानं विकल्प्य दूषयति—

किञ्च येन यद् दृश्यं तदन्येन तस्यादृष्टिरसत्त्वसाधिका, तेनैव वा, नाद्यः, वाद्यदृष्टस्य प्रतिवादिबुद्ध्यादेः सत्त्वोपगमात्, द्वितीये तु येन यद् दृश्यम् तदृदृष्टेस्तत्र सत्त्वादऽसिद्धिः। एतेन योग्यानुपलब्ध्या तन्निषेध इत्यपि प्रत्युक्तम्, यथा च स्थिरस्य धर्मिणः सिद्ध्यसिद्ध्योर्बाधाश्रयासिद्धिभ्यां तत्रासत्त्वसाधनमशक्यं तथात्मन्यपीति सङ्क्षेपः। किं चासत्त्वं नात्यन्ताभावप्रतियोगित्वं, सिद्धसाधनात्, नापि सर्वकालावच्छेदेन सर्वदे-

शवृत्तेरत्यन्ताभावस्य प्रतियोगित्वं; सर्वत्र देशे सर्वस्य कालस्यावच्छेदकत्वासम्भवात्, क्वचिदप्यन्यत्राप्रसिद्धेरसत्ख्यातिनिरासात्, आत्मनि सिद्धसाधनाच्च,

किञ्चेति, स्वसाक्षात्कारयोग्यत्वलक्षणदृश्यत्वविशिष्टायाः प्रतिवादिबुद्ध्यादेः परापेक्षयाऽतीन्द्रियत्वात्परेण वादिना साक्षात्काराभावेऽपि सत्त्वोपगमेन व्यभिचारादाद्यपक्षं निरस्यति नाद्य इति, येन योगीश्वरादिनाऽऽत्मा दृश्यस्तेन तस्य दर्शनमेवास्तीति दृश्यत्वे सत्यदर्शनादिति विशिष्टहेतोरदर्शनरूपविशेष्याऽसिद्ध्याऽसिद्धिरिति द्वितीयपक्षं निरस्यति–द्वितीये त्विति, एतेनेति, येन यद्योग्यं तदन्येन तस्यानुपलब्धिस्तेनैव वा, आद्ये प्रतिवादिबुद्ध्यादौ व्यभिचारः, द्वितीये त्वसिद्धिरिति दोषेणेत्यर्थः; आत्मा नास्ति योग्यानुपलब्धेरित्यनुमानं पक्षसिद्ध्यसिद्धिप्रयोज्यबाधाश्रयासिद्धिदोषेणापि दूषयति–यथा चेत्यादिना, साध्यं विकल्प्यानुमानं दूषयति–किञ्चेत्यादिना, सिद्धसाधनादिति घटादौ समवायेनात्मा नास्तीति प्रतीतेरत्यन्ताभावप्रतियोगित्वस्यात्मन्यभ्युपगमादित्यर्थः, सर्वदेशवर्त्तिनः कस्याप्यभावस्यावच्छेदकत्वं न सर्वकालस्य, यो हि पदार्थो यस्मिन् देशे कदापि न वर्त्तते, तत्र तस्याभावो व्याप्यवृत्तिरेवेति तत्र यत्किञ्चित्कालस्यापि नावच्छेदकत्वम्, कुतः सर्वकालस्य, किन्तु यस्मिन्नधिकरणे यद्वस्तु कदाचिद्वर्त्तते कदाचिन्न वर्त्तते तत्रैव कालस्याभावावच्छेदकत्वम्, तत्र च यत्किञ्चित्कालस्यैवावच्छेदकत्वमिति सर्वकालावच्छेदेन सर्वदेशवृत्तेरत्यन्ताभावस्याऽप्रसिद्ध्या तत्प्रतियोगित्वरूपमसत्त्वमन्यत्र क्वचिदप्यसिद्ध्या न सम्भवतीत्याह नापीति, नन्वसत्ख्यात्यैव सर्वकालस्यावच्छेदकत्वं भासमानमाऽऽदायैवोक्तलक्षणमसत्त्वं भविष्यतीत्यत आह असत्ख्यातिनिरासादिति, अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिति सिद्धान्तान्नित्यद्रव्यभिन्नानामेवाश्रितत्वं साधर्म्यमित्यात्मनो नित्यद्रव्यतया क्वचिदपि वृत्तिमत्त्वाभावात्तद्रूपस्य तद-

भावाभावस्यापि तथात्वान्न स वृत्तिमदत्यन्ताभावरूपः, किन्त्वन्य एव, तदप्रतियोगित्वमात्मात्यन्ताभावे वर्त्तेत इति वृत्तिमदत्यन्ताभावाऽप्रतियोगित्वलक्षणकेवलान्वयित्वेन सर्वकालावच्छेदेन सर्वदेशवृत्तितया तस्य नैयायिकैरभ्युपगमात्तत्प्रतियोगित्वरूपमसत्त्वमात्मनि सिद्धमेवेति तत्साधने सिद्धसाधनं तदवस्थमेवेत्याह—आत्मनि सिद्धसाधनाच्चेति, यदि प्रागभावप्रतियोगित्वलक्षणं ध्वंसप्रतियोगित्वलक्षणं चाऽसत्त्वमनुपलब्धिहेतुना साध्यते, तदा पूर्वकालावच्छिन्नो यः प्रागभावस्तत्प्रतियोगित्वस्योत्तरकालावच्छिन्नो यो ध्वंसस्तत्प्रतियोगित्वस्य घटे नैयायिकैरभ्युपगमात्तत्र तत्साधने सिद्धसाधनम् , आत्मनि तत्साधने येनैव प्रमाणेनाऽऽत्मा सिद्धस्तेनैव नित्यतया सिद्धेरुक्तसाध्यं बाधितमिति हेतौ बाधदोष इत्याह—

नापि प्रागभावप्रध्वंसाभावप्रतियोगित्वं, घटादावविवादात्, आत्मनि च वीतरागजन्मादर्शनन्यायेनानादित्वसिद्ध्याऽनादेश्च भावस्य कारणाभावेन ध्वंसासम्भवेन बाधात्, साधकविरहाच्च, मेयत्वद्रव्यत्वादेरप्रयोजकत्वात्, नापि सत्ताया जातेर्विरहः, घटादाविवात्मन्यपि तत्साधकस्य प्रत्यक्षस्य सम्भवात्, तथात्वेऽपि धर्मिणोऽनपायात् ।

नापीति, ननु साधकविरहादित्ययुक्तमुक्तम् , आत्मनि प्रागभावप्रतियोगित्वलक्षणासत्त्वसाध्यस्य प्रध्वंसाभावप्रतियोगित्वलक्षणासत्त्वसाध्यस्य वा साधकस्य प्रमेयत्वद्रव्यत्वादिहेतोर्विद्यमानत्वादिति चेत् , मैवम् , व्यभिचारशङ्कानिवर्त्तकतर्काभावेनाप्रयोजकत्वादुक्तहेतोरित्याह मेयत्वद्रव्यत्वादेरिति,तत्साधकस्य सत्तासाधकस्य, प्रत्यक्षस्य आत्मा सन्नित्याकारकप्रत्यक्षस्य,तथात्वेपि धर्मिणोऽनपायादिति—सत्ताजातिविरहलक्षणासत्त्वाभ्युपगमेऽपि समवायवदात्मनस्स्वरूपसत्त्वं स्यादेवेत्यर्थः ।

अत एव न देशकालसम्बन्धविरहः, तत्साधकमानबाधितत्वात्, साधकाभावाच्च । अत एव न स्वरूपसद्विरहः, स्वरूपसिद्ध्यसिद्धिभ्यां व्याघाताच्च । अत एव न प्रमेयत्वाभावः, साध्याप्रसिद्धेश्च, नापि प्रमेयत्वव्यापकार्थक्रियाव्यतिरेकेण तदभावसाधनं, त्वया केवलव्यतिरेकिणो मानत्वानभ्युपगमेन व्याप्तेश्च पक्षधर्मतायाश्चासिद्धेः,

अत एव धर्मिणोऽनपायादेव, तत्साधकेति आत्मसाधकेत्यर्थः । साधकाभावाच्चेति देशकालसम्बन्धविरहरूपासत्त्वसाध्येन सहाविनाभूतहेतोरभावाच्चेत्यर्थः । अत एव उक्तहेतुद्वयादेव । अत एव उक्तहेतुत्रयादेव । साध्याऽप्रसिद्धेश्चेति, प्रमेयत्वस्य केवलान्वयित्वेन तद्रूपप्रतियोगिनस्सर्वत्र सत्त्वेन तदभावरूपसाध्यस्य कुत्रापि सत्त्वाभावादित्यर्थः । व्यापकाभावेन व्याप्याभावस्य सिद्धिरिति प्रमेयत्वव्यापकस्यार्थक्रियाकारित्वस्याभावेन केवलव्यतिरेकिहेतुना व्याप्यस्य प्रमेयत्वस्याऽभावसिद्धिरित्यपि न युक्तमित्याह नापीति, तत्र हेतुमाह त्वयेत्यादिना, व्यापकाभावेन व्याप्याभावसिद्धिस्तत्रैव यत्र व्यापकाभावव्याप्याभावयोर्व्याप्तिस्सिद्धा, नचात्र दृष्टान्ताभावात् सा सिद्धेत्याह व्याप्तेश्चेति, अस्यासिद्धेरित्यनेनान्वयः, पक्षधर्मताप्यनुमित्यङ्गं, नचार्थक्रियाकारित्वाभावस्य हेतोरात्मपक्षधर्मत्वं सिद्धम्, सिद्धौ वा धर्मिणस्सिद्धावेव धर्मसिद्धिरिति पूर्वमात्मधर्मिणस्सिद्धिरभ्युपगन्तव्या स्यात्, तथा च सिद्धं नस्समीहितमित्यलं विवादेन, नच पराभ्युपगमेनात्मधर्मिसिद्धिरिति वाच्यं, स्वतन्त्रानुमाने स्वाभ्युपगमेनैव पक्षसिद्धेस्तन्त्रत्वादित्याशयेनाह पक्षधर्मतायाश्चेति, आत्मा न प्रमेय इत्यनुमित्यात्मकज्ञानस्यात्मा नार्थक्रियाकारीति ज्ञानस्य वा प्रामाण्ये प्रमात्मकतादृशज्ञानविषयतया प्रमेय एवात्मेति नात्मा प्रमेय इत्यस्य व्याघातः, अप्रामाण्ये न तस्य साधकत्वमित्यात्मनो न प्रमे-

यत्वाभावरूपासत्त्वसिद्धया नैरात्म्यसिद्धिरित्याह—

**अस्य च ज्ञानस्य प्रामाण्ये व्याघातोऽप्रामाण्ये तु कुतोभिमतसिद्धिरित्यादि स्वयमूहनीयम्। अथात्मसद्भावे किं प्रमाणं, प्रत्यक्षमेव तावत्, तत्रात्मा तावत् प्रत्यक्षतो न गृह्यत इत्यवतारभाष्यं पुनरापाततो विप्रतिपन्नं प्रत्यनुमितिः, प्रत्यक्षं शरीरादिभिन्ने आत्मनि प्रमाणयितुं न शक्यत इत्येतत्परम्। अहमिति विकल्पस्य प्राणभृन्मात्रसिद्धत्वात्, न चायमवस्तुकः, सन्दिग्धवस्तुको वा, अशाब्दत्वादप्रतिक्षेपाच्च। विनापि बाधकमवस्तुकत्वे नीलादिविकल्पानामपि तथात्वप्रसङ्गः,**

अस्य चेति, यद्यप्यात्मसद्भावेऽनुमानादिगवेपणे तदप्यस्त्येव, तथापि तत्र सकलप्रमाणज्येष्ठं प्रत्यक्षमेव प्रमाणं किमन्यत्प्रमाणगवेषणेनेत्याशयेनोत्तरयति प्रत्यक्षमेव तावदिति, नन्वात्मनि प्रत्यक्षमेव प्रमाणं चेत्तर्हि न्यायभाष्यविरोधः, तत्रात्मनः प्रत्यक्षग्राह्यत्वस्य प्रतिक्षेपादित्यत आह—तत्रेति, अवतारभाष्यमिति अस्य इत्येतत्परमित्यनेनान्वयः। किमाकारं प्रत्यक्षमात्मनिर्णायकमित्यत आह—अहमितीति, अवस्तुकः अलीकविषयकः, संदिग्धवस्तुकः संदिग्धवस्तुविषयकः, निषेधे हेतुमाह—अशाब्दत्वादिति, यद्यहमिति विकल्पः शाब्दात्मकस्स्यात् स्यात्तदाऽवस्तुकः, नचायं तथा, ततो नावस्तुक इत्यर्थः। एतच्च बौद्धमताभिप्रायेणोक्तम्, तन्मत एव शाब्दत्वस्याऽवस्तुविषयकत्वनियतत्वेनाभ्युपगमात्, अप्रतिक्षेपादिति प्रतिक्षेपकप्रमाणाऽभावेन तद्विषयस्याऽबाधितत्वादित्यर्थः। तथात्वप्रसङ्ग इति, अवस्तुकत्वप्रसङ्ग इत्यर्थः। उभयत्र विकल्पत्वाऽविशेषादितिभावः।

**नापि लैङ्गिकः, अननुसंहितलिङ्गस्यापि प्रत्ययात्, न च स्मृतिरियं, अननुभूते तदनुपपत्तेः। अनादिवास-**

विषयकता, तत्र तदपेक्षत्वेऽपि तदतिरिक्तानपेक्षत्वेन साक्षादेव सवस्तुकत्वमित्यर्थः। तदाभासे प्रत्यक्षाभासे, पारम्पर्यादित्यस्य विव-
रणमाह वस्तुविषयकेत्यादिना, अहमिति विकल्पस्य वासनाजन्यत्वेऽपि नावस्तुविषयकता, तन्मूलभूतनिर्विकल्पज्ञानस्य वस्तु-
विषयकत्वेन तद्द्वारा परम्परया तस्याऽपि वस्तुविषयकत्वादितिभावः। अहं प्रत्ययो न चाक्षुषादिबाह्यप्रत्यक्षमूलकः, किन्तु मानस-
प्रत्यक्षमूलक इत्येतावताऽवस्तुकत्वाभ्युपगमेऽतिप्रसङ्गदोषमाह बुद्धिसुखादिविकल्पानामपीति, तत्र बुद्धिसुखादिविकल्पेषु,
स्वसंवेदनं स्वसंवेदनात्मकं बुद्धिसुखादिनिर्विकल्पकम्, इहापि अहमिति विकल्पेऽपि, निरुपाधिशरीरेति स्वीयेतिविशेषणवि-
निर्मुक्तकेवलशरीरेत्यर्थः। अतिप्रसङ्गादिति परकीयतनावप्यहं प्रत्ययस्स्यादित्यर्थः, उक्तातिप्रसङ्गपरिहाराय स्वसम्बन्धीत्युपाधि-
सम्बलितशरीरादिविषयकत्वं वाच्यमित्याह—

स्वसम्बन्धिनि शरीरादावहं गौर इत्यादिप्रत्ययः स्यादिति वाच्यम्, तत्र कः स्वशब्दार्थो विनातिरिक्ता-
त्मसद्भावम्। यथा भवतां स्वस्मिन् स्वात्मनि अहं जाने सुखीत्यादिका बुद्धिस्तथास्माकमपि स्वस्मिन्नेव शरीरे
सा, अनन्यत्वं हि स्वत्वं सर्वभावानां, तथा च यदा तेनैव तदनुभूयते तदा प्रत्येतुः प्रत्येतव्यादव्यतिरेकादह-
मिति स्यात्, अत एव घटादयो न कदाचिदनन्यानुभवितृका इति न कदाप्यहमास्पदं, नैयायिकानां हि सा-
मान्यतोऽहंत्वमात्मत्वमेव, स्वाश्रय एव च प्रतीतेरहमास्पदम्। तत्रास्वप्रकाशे स्वाश्रयत्वं स्वरूपसन्नियाम-
मकं, स्वप्रकाशे तु ज्ञायमानमपीति निर्गलितार्थ इति चेत्,

स्वसम्बन्धिनीति, "स्वसम्बन्धिशरीरादावयं स्यादिति वाच्यमिति" पाठान्तरम्, अयमिति अहं प्रत्यय इत्यर्थः। बौद्धश्शङ्कते

यथेति, स्वस्मिन् स्वात्मनि—स्वाऽभिन्ने ज्ञातुरात्मनि, स्वस्मिन्नेव शरीरे ज्ञातरि शरीरे, तेनैव स्वात्मनैव, तत् स्वात्मस्वरूपम्, प्रत्येतुः ज्ञातुः, प्रत्येतव्यात् ज्ञेयात्, घटादयो न स्वाऽभिन्नानुभवित्राऽनुभूयन्त इति न तेऽहन्त्वाश्रय इत्याह अत एवेति, स्वाश्रय एवेत्यत्र स्वपदेन प्रतीतेर्ग्रहणं, तथा चाहमिति प्रतीतेराश्रय एवाहन्त्वेन रूपेणाहमिति प्रतीतेर्विषय इत्यर्थः। नैयायिकस्समाधत्ते—

एवं तर्हि त्वन्मतेऽप्ययमहंप्रत्ययः शरीरादावारोप एव, ततः प्रत्येतुरन्यत्वात्। अहंप्रत्ययो हि यदि साक्षाद्विषयसमुत्थो यदि वा विषयसमुत्थाविकल्पकपृष्ठभावी, उभयथापि पूर्वभाविनं विषयमपेक्षते, न च भवतां तस्य क्षणिकस्योदिच्यप्रत्ययाश्रयत्वं, नापि तदुपादानत्वं, अत्यन्तविसदृशस्याप्रकृतेश्च भवतामनुपादानत्वात्। न च प्रतीत्याश्रयत्वोपादानत्वाभ्यामन्यत् प्रत्येतृत्वमिति, बुद्धौ मुख्य इति चेत्, सैव बुद्धिः प्रतिपत्त्री तत्पूर्वभावि बुद्ध्यन्तरं वा,

एवं तर्हीति, यस्स्वाभिन्नानुभवित्राऽनुभूयते तस्यैवाहन्त्वाश्रयत्व इत्यर्थः, ततः शरीरात्, बौद्धमते शरीरं क्षणिकमिति न तत्र स्वोत्तरक्षणभाव्यहंप्रतीत्याश्रयत्वं घटते, आश्रयत्वेनाभ्युपगतस्य पूर्वक्षणवर्त्तिनः शरीरस्य प्रत्ययकालेऽभावात्, विभिन्नकालीनयोराऽऽधाराधेयभावाभावात्, नाप्युत्तरक्षणभाव्यहंप्रतीत्युपादानत्वमपि तत्र घटते, तस्यात्यन्तवैसादृश्यात् प्रकृतिरूपत्वाभावाच्च, प्रत्येतृत्वमपि प्रतीत्याश्रयत्वप्रतीत्युपादानत्वलक्षणमेवेति तदुभयानुपपत्तौ तस्यापि तत्राऽनुपपत्तिरेवेति प्रपञ्चयति-अहं प्रत्ययो हीति, शरीरादावारोपरूपोऽपि बुद्धावहंप्रत्ययो मुख्यः, तथा चाहंप्रत्ययाश्रयत्वतदुपादानत्वाभ्यां बुद्धिरेव प्रतिपत्त्रीत्याशङ्कते बुद्धाविति,

तदपि नीलाद्याकारं स्वमात्रसाक्षिकं वा, न आद्यः, तस्याः क्रियात्वेनानुभूयमानाया भिन्नस्य तत्कर्त्तुरहं

छिनद्मीतिवदहं जानामीत्यनुभवात्, स्वस्य स्वाश्रयत्वस्वोपादानत्वयोरसम्भवादिति सम्मुखीनोऽर्थः, योगाचारनये यथा नीलादिप्रत्येतव्याकारः प्रतिपत्तेरेवाकारस्तथा प्रतिपत्त्राकारोऽपि तदात्मैव भासत इति न ततो भिन्नस्य कर्त्तुः सिद्धिरिति चेत्, सिद्धं नः समीहितं, द्वितीयपरिच्छेदे प्रत्येतव्याकारस्य प्रतिपत्तेर्भेदस्य समर्थितत्वात्, तत्तुल्यन्यायेन प्रतिपत्त्राकारस्यापि ततो भेदसिद्धेरिति भावः। द्वितीयेऽतिरिक्तात्मव्यवच्छेदेन स्वोपादानबुद्ध्यन्तरस्याहमास्पदत्वे तत्प्रतिभासने तदाकारस्यापि प्रतिभासप्रसङ्गः, आकारमन्तरेणाकारिणोरनवभासनात्, तदाकाराकारिणोरभेदात्, अस्माकं तु विषयविशिष्टस्यैवानुव्यवसाये भानादनुपपत्त्यभावात्, एतेनोत्तरविकल्पद्वयस्य प्रथमभेदो गतः, द्वितीये प्रवृत्तिसन्तानात् सालम्बनबुद्धिसन्तानलक्षणादन्य एव निरालम्बनबुद्धिसन्तानः प्रतिपत्ता य आलयविज्ञानशब्देनोच्यते, तेन न तदाकारप्रतिभासानुपपत्तिरिति चेत्,

तदपि, तत्पूर्वभाविबुद्ध्यन्तरमपि, स्वमात्रसाक्षिकमिति, अत्र मात्रपदेन नीलाद्याकारत्वप्रतिक्षेपाद् ज्ञानस्वरूपाकारमेवेत्यर्थः, तत्कर्त्तुरिति अहमिति प्रतीतिकर्त्तुरित्यर्थः, अस्यानुभवादित्यनेनान्वयः। तदात्मैव प्रतिपत्तिस्वरूप एव, ततः प्रतिपत्तेः, अहमिति बुद्धिपूर्वभाविबुद्ध्यन्तरं प्रतिपत्त्रीति पक्षे अहंपदार्थो व्यतिरिक्त आत्मा नाभ्युपगतः येनाऽहं सुखीत्यादिप्रतीतौ तद्भाने विषयभानमपेक्ष्यं न स्यात्, किन्तु पूर्वबुद्धिरेव, सा च बौद्धमते साकारैव, आकाराकारिणोश्चाभेद इति यदाकारा स्वोपादानभूता पूर्वबुद्धिः प्रतिपत्त्री तदाकारसहिताया एव तस्या उत्तरकालभाव्यहं सुखीत्यादिप्रतीतौ स्फुरणं स्यात्, पूर्वबुद्धिश्च नीलाद्याकारेति नीलाद्याकारा बुद्धिः सुखीत्युत्तरप्रतीतिस्स्यात्, न त्वहं सुखीति, नन्वेवं तर्हि न्यायमते विषयविषयिणोरभेदाभावादनुव्यवसाये केवलव्यवसायस्यैव विषय-

विनिर्मुक्तस्य भानं स्यादिति चेत्, मैवम्, व्यवसायो विषयनियन्त्रित एवेत्यनुव्यवसाये तन्नियन्त्रितस्यैव तस्य भानाभ्युपगमेन नैयायिकमतेऽनुपपत्त्यभावादित्याशयेनाह द्वितीयेऽतिरिक्तात्मव्यवच्छेदेनेति। अहमास्पदत्वे अहमित्याकारकप्रतीतिविषयत्वे, तत्प्रतिभासने, स्वोपादानबुद्ध्यन्तरस्याऽहमिति प्रतीतौ प्रतिभासने। उत्तरविकल्पद्वयस्य प्रथमभेदः तत्पूर्वभाविबुद्ध्यन्तरं वेति यो विकल्पस्तदन्तर्गतविकल्पद्वयस्य नीलाद्याकारमिति कल्पः, गतः निरस्तः। द्वितीये स्वमात्रसाक्षिकं वेति कल्पे, तदाकारप्रतिभासानुपपत्तिरिति, अत्र तदाकारप्रतिभासापत्तिरितिपाठो युज्यते, तत्सत्यासत्यत्वविभागस्स्वयमेव कर्त्तव्यः। नैयायिकस्समाधत्ते

अस्तु तर्हि प्रवृत्तिविज्ञानोपादानमनादिनिधनः प्रतिपत्ता, उपादानं परेषां सजातीयं कारणम्, अस्माकं समवायि, अनादिनिधनः समानकालीनानेकावृत्तिसर्वकालसम्बन्धव्यवच्छेदकरूपवान्, तच्च रूपं परेषां तत्सन्तानत्वमस्माकं तु तत्तदात्मत्वम्, अत एव स किं सन्तन्यमानज्ञानरूपस्तद्विपरीतो वेति चिन्ता परमवशिष्यते, निःशेषिता चासौ प्रागेव क्षणभङ्गभङ्ग इति। कः पुनरात्मस्थैर्यन्यायः,

अस्तु तर्हीति, उक्तमेव विवृणोति–उपादानमित्यादिना, परेषां बौद्धानाम्, अस्माकं नैयायिकानाम्, क्षणभङ्गभङ्ग इतीति अहमित्याकारकबुद्धिविषयत्वस्यानेकस्वरूपे आलयविज्ञानसन्तानेऽभ्युपगमापेक्षयाऽतिरिक्तात्मनि कल्पने लाघवम्, प्रागेव क्षणभङ्गपक्षनिरासश्च कृत इति न सन्तन्यमानज्ञानात्मा प्रतिपत्तेति भावः, ननु विषयतासंसर्गेण प्रतिसन्धानमात्मनि स्थिरत्वसाधकं प्रामाणिकत्वेनाऽप्रामाणिकत्वेन वा विशिष्टं हेतुः क्रियते, किं वा निर्विशेषितम्, नाद्यः, अद्याप्यात्मनि स्थिरत्वाऽसिद्धावात्मपक्षे हेतोरसिद्धत्वेन स्वरूपासिद्धत्वात्, न द्वितीयः, प्रत्यभिज्ञानेऽप्रामाणिकत्वं बाधकप्रमाणमन्तरेण न स्यादिति तेन बाधकप्रमाणेन

सिद्धो यस्स्थिरत्वाभावस्तद्रूपेण साध्याभावेन सह व्याप्तत्वाद्धेतोर्विरुद्धत्वात्। नापि तृतीयः, दीपशिखानखकेशादौ व्यभिचारित्वादिति बौद्धश्शङ्कते—

प्रतिसन्धानं, तथ्यमिदमसिद्धम्, अतथ्यं च विरुद्धम्, अभेदभ्रमस्य भेदव्याप्तत्वात्, अविशिष्टं प्रतिसन्धानसामान्यमतिप्रसक्तं ज्वालादाविति चेत्, न, हेत्वर्थानवबोधात्, नहि प्रत्यभिज्ञामात्रमत्र विवक्षितं, किं तर्हि स्मृत्यनुभवयोः कार्यकारणयोरेकसन्तानप्रतिनियमः, सोऽपि विरुद्धः, सन्तानस्य भेदनियतत्वादिति चेत्, एषोऽपि न विवक्षितः, कस्तर्हि, पूर्वापरधियामेककर्तृकतया निश्चयः, योऽहं घटमद्राक्षमस्प्राक्षं सोऽहमिदानीं तं स्मरामीति पूर्वापरधियामेकाश्रयत्वनिश्चय इत्यर्थः। नन्वयं निश्चयो निश्चेतुः पूर्वापरकालावस्थायित्वे हेतुः, पूर्वापरप्रत्ययवतोरभेदे वा, आद्ये ज्ञानमात्रस्य गमकत्वे शेषवैयर्थ्यं, परेषामसिद्धव्याप्तिकत्वं च, द्वितीये तु भ्रमसाधारणोऽयं व्यभिचारी, प्रमारूपस्त्वसिद्धः, साक्षात्कारोऽपि चौपनयिकोंऽशे लौकिकश्चानैकान्तिकः, सर्वांशे लौकिकस्त्वसिद्ध इति, मैवं, परप्रतीतिः पूर्वप्रतीत्याश्रयाश्रिता पूर्वप्रतीत्याश्रये साक्षात् क्रियमाणत्वात् पूर्वप्रतीतिवदित्यर्थात्,

तथ्येति, एकसन्तानप्रतिनियमः एकसन्तानाश्रितत्वनिश्चयः, एकाश्रयत्वनिश्चय इति स च समवायेन स्मृतिं प्रति समवायेनानुभवस्य कारणत्वमित्यभ्युपगम एवोपपद्यते, नान्यथा, तथा च यस्यैव प्रतिपत्तुर्यद्विषयकस्मृत्यनुभवौ तस्यैव तदुभयजन्यं तद्विषयाभेदविषयकं प्रतिसन्धानमित्यनायासेनात्मसिद्धिरितिभावः, अयं निश्चयः पूर्वापरधियामेककर्तृकतया निश्चयः, ज्ञानमा-

त्रस्येति, न्यायमते ज्ञानं प्रत्यात्मनस्समवायिकारणत्वेन कार्यसहभावितया हेतुत्वेन ज्ञानात्पूर्वं ज्ञानक्षणे च सत्त्वस्यावश्यकतया ज्ञानमात्रस्याप्यात्मगतपूर्वापरकालावस्थानव्याप्यत्वेनाधिकस्य तद्विशेषणतयोपादाने व्यर्थविशेषणत्वम्, ततश्च व्याप्यत्वासिद्धिः, नीलधूमादेरिवेत्याशयः । अन्यत्र सिद्धेन साध्येन सहैव हेतोर्व्याप्तिः, न चाद्याप्युक्तसाध्यं कुत्रापि सिद्धं बौद्धमते, सिद्धौ वा पर्यवसितं विवादेनेत्याह परेषामिति, परेषां बौद्धानाम्, एककर्तृकतया निश्चयो नाद्यापि प्रमात्मकस्सिद्धः, भ्रमात्मकस्तु सिद्धोऽपि नाभेदव्याप्तः, पूर्वापरप्रत्ययवतोरभेदाभावेऽपि तस्य सम्भवेन व्यभिचारादित्याह द्वितीये त्विति, इदं रजतमित्यत्र रजतत्वस्य शुक्तावसत्त्वेऽपि ज्ञानलक्षणालौकिकप्रत्यासत्त्या साक्षात्कारवत्पूर्वापरप्रत्ययवतोरभेदाभावेऽपि पूर्वापरधियामेककर्तृकत्वस्याऽसतोप्यऽलौकिकप्रत्यासत्त्या साक्षात्कारसम्भवेन व्यभिचारान्न साक्षात्कारात्मकोप्युक्तनिश्चयहेतुरभेदसाधक इत्याह साक्षात्कारोऽपीति, ननु नोक्तव्यभिचारः सर्वांशे लौकिकत्वविवक्षणात् लौकिकत्वस्य च प्रमात्वनियतत्वादित्यत आह सर्वांशे लौकिक इति, स्वरूपासिद्धिनिवृत्त्यर्थमाह—

न चेदमसिद्धं, योऽहं घटमद्राक्षं सोहं स्पृशामीति पूर्वप्रतीत्याश्रयेतरप्रत्ययग्रकत्वग्रहणात्, साक्षात्कारश्च लौकिको ग्राह्यः, योऽहं घटमद्राक्षं सोऽहं घटं स्पृशामीति प्रतिसन्धानं कर्तृभेदेऽनुपपद्यमानं पूर्वापरप्रतीत्योरेककर्तृकत्वं व्यवस्थापयति, प्रत्येतव्यादनन्यस्यैव प्रत्येतुरहमास्पदत्वात्, नहि भवति चैत्रोऽहं यमद्राक्षं मैत्रोऽहं तं स्पृशामीति पुनराकारच्छायावाही पन्थाः पूर्वकल्पस्योदक्षरत्वानुप्रेक्षी ।

न चेदमसिद्धमिति, इदम् पूर्वप्रतीत्याश्रये साक्षात्क्रियमाणत्वम् । पूर्वप्रतीत्याश्रये साक्षात्क्रियमाणत्वादित्यत्र पूर्वप्रतीत्या-

श्रयत्वमधिकरणस्वरूपं विवक्षितं, तथा च पूर्वप्रतीतेरऽतीतत्वेन तदंशे लौकिकसन्निकर्षाऽभावेपि तदाश्रयत्वस्य तदधिकरणस्वरूपस्य विद्यमानतया तदंशे लौकिकसन्निकर्षस्सम्भवति, यत्र च पूर्वप्रतीतिरन्यदृष्टस्थले प्रत्यभिज्ञातरि नास्ति तत्र पूर्वप्रतीत्याश्रयत्वे लौकिकसन्निकर्षो नास्ति, एवञ्च पूर्वप्रतीत्याश्रयत्वे उत्तरप्रतीत्यंशे च साक्षात्कारो लौकिको हेतुघटकः, तथा च विषयांशेऽलौकिकत्वेऽपि योऽहं घटमद्राक्षं सोऽहं तं स्मरामीति प्रत्यभिज्ञानस्य हेतुघटकसाक्षात्कारपदेन ग्रहणं संभवति। न चान्यकर्तृकदर्शनस्य स्वस्मिन् आरोपेण प्रत्यभिज्ञानस्थले हेतुसत्त्वं, तत्स्थले पूर्वप्रतीत्याश्रयत्वे प्रत्यभिज्ञातर्यऽविद्यमाने लौकिकसन्निकर्षप्रयोज्यविषयत्वाऽभावात्, पूर्वप्रतीत्याश्रयत्वस्यातिरिक्तत्वे पूर्वप्रतीतिसमानकालीनत्वे च प्रतियोगिन्यधिकरणपूर्वप्रतीत्याश्रयत्वाभावाभाववति साक्षात्क्रियमाणत्वादिति हेतुः कार्यः, तथा च प्रत्यभिज्ञानकाले पूर्वप्रतीत्याश्रयत्वस्याविद्यमानत्वेऽप्युक्ताभावो विद्यत एवेति तदंशेऽपि लौकिकत्वं सम्भवत्येवेत्यभिप्रायेणाह साक्षात्कारश्च लौकिको ग्राह्य इति, परप्रतीतिः पूर्वेत्यादिग्रन्थेन मूलोक्तः पूर्वापरधियामेककर्तृकतया विनिश्चयो नोपपादितः, किन्तु भावार्थमाश्रित्यात्मस्थैर्यं व्यवस्थापितमतस्तस्य पूर्वापरधियामेककर्तृकतया विनिश्चय इति मूलाक्षराननुसारित्वेनोदक्षरत्वं, योऽहं घटमद्राक्षमित्याद्युत्तरग्रन्थस्तु मूलाक्षरानुसारीति हेतोरस्योपादेयत्वमाविष्कर्तुमाह—इति पुनराकारेत्यादि, पूर्वापरधियामेककर्तृकत्वनिश्चय इति मूलाकारस्य मूलस्वरूपस्य छायावाही सदृशः, अत एव परप्रतीतिः पूर्वप्रतीत्येत्यादिकल्पस्याक्षराननुसारित्वसूचक इत्यर्थः। केचित्तु पूर्वापरप्रत्ययवन्तौ अभिन्नौ विरुद्धधर्मसंसर्गविरहिविषयकाऽभेदप्रतिसंधानादित्यत्रोक्तमूलस्य तात्पर्यमाहुरित्याह—

पूर्वापरप्रतीतिमतोरभेदप्रतिसन्धानं तयोरभेदसाधकं, विरुद्धधर्मसंसर्गविरहिविषयत्वं च विशेषणमवश्यं

त्पत्तिरेवोपादानोपादेयभावः, सा यदि साक्षाद्विवक्षिता, तदान्तरितयोः सान्तानिकयोरतथाभावादप्रतिसन्धानापत्तेः, यदि च परम्परासाधारणी, तदा शिष्याचार्यधियामपि तथाभावप्रसङ्गात्, तथा च तत्रापि कदाचित् प्रतिसन्धानापत्तेः, विवक्षादीनां व्यवधायकत्वे सान्तानिकानामपि तथात्वं केन वारणीयम्।

**व्यतिरेकिणा प्रतिसन्धानेनेति**—पूर्वापरधियौ एककर्तृके प्रतिसन्धानादित्यनुमाने ये नैककर्तृके न ते प्रतिसन्धीयेते यथा भिन्नसन्तानगते धियाविति व्यतिरेकव्याप्तिमता प्रतिसन्धानेन हेतुनेत्यर्थः। **व्यतिरेके** व्यतिरेकानुमाने। **उपादानोपादेयभावाभावस्योपाधेरिति**—उपाधेर्हि लक्षणं साध्यव्यापकत्वे सति साधनाऽव्यापकत्वम्, तत्सङ्गमनञ्चात्रैवं कर्त्तव्यम्, व्यतिरेकानुमाने साध्यं प्रतिसन्धानाऽभावः, तत्समानाधिकरणोऽभावो नोपादानोपादेयभावाभावस्य, प्रतिसन्धानाऽभाववति भिन्नसन्तानपतितज्ञाने उपादानोपादेयभावाभावस्यैव विद्यमानत्वात्, एकसन्तानपतितस्यैवोपादानोपादेयभावस्य स्वीकारात्, किन्त्वन्यस्यैव, तदप्रतियोगित्वमुपादानोपादेयभावाभावे इति तत्र साध्यव्यापकत्वम्, साधनञ्चैककर्तृकत्वाभावः, तत्समानाधिकरणोऽभाव उपादानोपादेयभावरूपो द्वितीयोऽभावः, बौद्धैरेकसन्तानपतितेषु ज्ञानेष्वेककर्तृकत्वस्यानभ्युपगमेऽप्युपादानोपादेयभावस्योपगमात्, इत्युक्ताऽभावप्रतियोगित्वमुपादानोपादेयभावाभावे इति तत्र साधनाऽव्यापकत्वमिति। एकसन्तानपतितज्ञानेष्वपि नैयायिकैरेककर्तृकत्वस्यैवाभ्युपगमेनोभयमतसाधारण्येन साधनाव्यापकत्वस्य निश्चयाभावेन सन्देहस्यैव वाच्यतयोपाधिसन्देहादुक्तव्याप्तेरपि सन्देह एव, नतु व्याप्त्यभावनिश्चय इत्यनुसन्धानेनोक्तं **सन्दिग्धव्यतिरेकित्वमिति**, सन्दिग्धव्यतिरेकव्याप्तिकत्वमित्यर्थः, प्रतिसन्धानहेतोरिति शेषः, स्थैर्यपक्षे स्थिरस्यैव द्रव्यस्योपादानत्वेन पूर्वापरधियामुपादानोपादेयभावं व्युदस्य क्षणिकत्वपक्षेऽपि तं व्युदस्यति **क्षणिकत्वेऽपीत्या-**

दिना, तदेव विवृणोति सा यदीत्यादिना, सा–उत्पत्तिः, एकजातीयत्वे सति येन साक्षाद्यदुत्पन्नं तयोरुपादानोपादेयभाव इति विवक्षायां यत्र चैत्रस्य प्राग् घटानुभवः अन्तरा ज्ञानान्तरं कालान्तरे पुनर्घटस्मृतौ प्रतिसन्धानं भवति तत्राप्यन्तरा व्यवधानाद् घटानुभवेन घटस्मृतेस्साक्षादुत्पत्त्यभावात्तयोरुपादानोपादेयभावाभावात्प्रतिसन्धानं न स्यादित्यर्थः। तथाभावप्रसङ्गादिति उपादानोपादेयभावप्रसङ्गादित्यर्थः। शिष्याचार्यधियोर्विवक्षाप्रयत्नादिना व्यवधानान्नोपादानोपादेयभाव इति चेत् तथा सति एकसन्तानान्तःपातिनामपि विवक्षादिव्यवधानसम्भवादुपादानोपादेयभावाभावप्रसत्त्या प्रतिसन्धानं न स्यादित्याह विवक्षादीनामिति। तथात्वम् व्यवधायकत्वम्, शिष्याचार्यधीषु प्रतिसन्धानप्रसङ्गपरिहारायाशङ्कते बौद्धः—

उपादानोपादेयभावमात्रं न नियामकम्, अपि तु भेदाग्रहविशिष्टः स इति चेत्, भेदाग्रहः किं पूर्वापरज्ञानयोः, उत तद्धतोः, तत्राप्यालयविज्ञानयोर्ज्ञानावच्छेदकशरीरयोर्वा, न आद्यः, प्रकृतेऽपि तदभावात्, पूर्वापरज्ञानयोर्भेदस्याकलनात्, न द्वितीयः, शिष्याचार्यस्थलेपि तत्सत्त्वात्, तृतीये व्यक्तिभेदस्याग्रहो वैजात्यस्य वा, द्वितीयेऽपि वस्तुतो वैजात्यस्य वैजात्यत्वेन वा, न आद्यः, बाल्यादिभेदेन भेदग्रहेऽपि प्रतिसन्धानात्, न द्वितीयः, भिन्नजन्मज्ञानाव्याप्तेः, स्मरणप्रतिसन्धानमधिकृत्येदं, तथा च प्राग्भवीयशरीरवैजात्यस्य चैत्रत्वादेरैहिकशरीरे ग्रहणात् पूर्वजन्मानुभूतस्येष्टसाधनतादेः स्मरणं न स्यादित्यर्थः, न तृतीयः, अनुपलब्धपितृकेण बालेनातिप्रसङ्गात्, पितुरनुपस्थित्या तद्वैजात्यस्य तत्त्वेनाग्रहात्, पितृज्ञानस्यापि परम्परया शरीरद्वारा पुत्रज्ञाननिमित्तत्वात्, एककर्तृकत्वनिश्चयरूपप्रतिसन्धानपक्षेपीदं द्रष्टव्यम्,

उपादानेति। तत्रापि तद्वतोरितिपक्षेऽपि। पूर्वापरप्रतीत्योस्सविकल्पवेद्यतया तेन तयोर्भेदस्य ग्रहणाद्भेदाग्रहस्य विशेषणस्याऽसत्त्वेन तद्विशिष्टोपादानोपादेयभावाभावादेकसन्तानपतितयोरपि तयोःप्रतिसन्धानं न स्यादित्याह प्रकृतेऽपीति। तत्सत्त्वात्—शिष्यालयविज्ञानाचार्यालयविज्ञानयोर्भेदाग्रहस्य सत्त्वात्, आलयविज्ञानं हि बौद्धमते स्वसम्वेदनसंवेद्यमेवाभ्युपगतमिति तत्र सविकल्परूपभेदग्रहाऽसम्भवात्, तथा च शिष्याचार्यधियोरपि प्रतिसन्धानं स्यात् तत्प्रयोजकस्य भेदाग्रहविशिष्टोपादानोपादेयभावस्य तत्र सत्त्वादितिभावः। भेदग्रहेपि तत्तच्छरीरव्यक्तिभेदग्रहे सत्यपि, प्रतिसन्धानात् बाल्ये योऽहं यदन्वभूवं सोऽहं तदेवेदानीं स्मरामीति प्रतिसन्धानात्, पितृशरीरवैजात्यस्य पितृशरीरवैजात्यत्वेन बालशरीरे कथमग्रहणमित्यत आह पितुरनुपस्थित्येति, पितृशरीरस्यानुपस्थित्येत्यर्थः, तद्वैजात्यस्य पितृशरीरवैजात्यस्य, तत्त्वेन पितृशरीरवैजात्यत्वेन, भेदाग्रहरूपविशेषणमुपपाद्योपादानोपादेयभावरूपविशेष्यस्योपपादनायाह पितृज्ञानस्यापीति, तथा च पितृपुत्रज्ञानयोरुपादानोपादेयभावोऽप्यस्तीति पित्रनुभूतस्य पुत्रेण प्रत्यभिज्ञानप्रसङ्ग इतिभावः, इदमिति पितृपुत्रज्ञानयोः प्रतिसन्धानप्रसञ्जनमित्यर्थः, ज्ञानावच्छेदकशरीरवैजात्यस्य वैजात्यत्वेनाग्रहो भेदाग्रह इति पक्ष एव भिन्नजन्मज्ञानाव्याप्तेरितिदोषं सङ्गमयतां मतमुपनिबध्नाति—

केचित्तु जातिस्मरणस्य प्राग्जन्मानुभूतप्रतिसन्धानं भवद्भिरभ्युपेयते तत् न स्यात् जातिस्मरणस्यानुभवस्मरणावच्छेदकशरीरयोर्वैजात्यस्य तत्त्वेन ग्रहसम्भवादित्याहुः। अन्ये तूपस्थिताच्छरीराद् भेदस्याग्रहोऽनुपस्थितादपि वा, आद्ये भिन्नेति, द्वितीयेऽनुपलब्धेतीत्याहुः, घटकपालक्षणयोर्भेदाग्रहाभावेन लक्षणाव्याप्तेश्च,

केचित्त्विति। जातिस्मरणतद्वतोर्बौद्धमतेनाऽभेदाज्जातिस्मरणस्येत्युक्तम्, अन्यमते जातिस्मरणवत इत्यर्थो ग्राह्य इति, तत्त्वेन

वैजात्यत्वेन, भिन्नेतीति भिन्नजन्मज्ञानाऽव्याप्तेरिति दोषस्योद्भावनमित्यर्थः। पूर्वभवीयशरीरमधुना नोपस्थितमित्येतद्भवीयशरीरे तद्भेदस्याग्रहो नोपस्थिताच्छरीराद्भेदस्याग्रहात्मक इति विशेषणासम्पत्त्या तद्विशिष्टाऽसम्पत्तेः प्रतिसन्धानं न स्यादिति भावः, अनुपलब्धेतीति अनुपलब्धपितृकेणापि बालेनातिप्रसङ्गादिति दोषोद्भवनमित्यर्थः। पितृशरीरस्यानुपस्थितेर्बालशरीरे तद्भेदाग्रहस्योक्तविशेषणरूपतया तद्विशिष्टोपादानोपादेयभावस्य पितृबालज्ञानयोस्सत्वेन प्रतिसन्धानं स्यादिति भावः। भेदाग्रहविशिष्टायास्तदुत्पत्तेरुपादानोपादेयभावलक्षणत्वेऽव्याप्तिदोषमप्याह घटकपालक्षणयोरिति, अत्रैकजातीयत्वे सति तदुत्पत्तिरेवोपादानोपादेयभाव इति मूललक्षणेप्युक्ताव्याप्तिर्ज्ञेया, घटकपालयोरेकजातीयत्वाभावात्। शिष्याचार्यधियां प्रतिसन्धानप्रसङ्गनिवृत्त्यर्थमाशङ्कते—

एकाधारत्वे सति कार्यकारणभाव एवोपादानोपादेयभाव इति चेत्, न, आधारस्यापि क्षणिकत्वेन भिन्नकालयोरेकदेशत्वस्य तुल्यकालयोश्च कार्यकारणभावस्याभावात्,काल्पनिकस्य चैकाधारत्वस्यातिप्रसञ्जकत्वात्, शरीरबुद्ध्याद्योरप्येकदेशताभिमानात्। एतेनाभ्रान्तसमतैकावसायः प्रकृतिविक्रिये उभौ हेतुफलस्योपादानोपादेयलक्षणमिति निरस्तम्, एतेन घटकपालाद्यव्यापकत्वेन लक्षणयोः परस्पराक्रान्ताव्यापकत्वेन वा, हेतुफलस्य कारणकार्यस्योभौ सन्ततौ अभ्रान्तया समतया साजात्येनैकावसाय एकत्वावसायः, कार्यकारणभावे सति एकत्वावसायनिमित्तं साजात्यमिति फलितं, सत्यन्तेन निरन्तरोत्पन्नयोर्घटसन्तानयोर्निमित्तमित्यन्तेन च दण्डघटयोर्निरासः।

एकाधारत्वे सतीति, एकाधारत्वं किमेकदेशवृत्तित्वरूपम्, किं वैककालवृत्तित्वरूपम्, नाद्यः, यतो ययोः पूर्वापरक्ष-

णवर्त्तिनोः कार्यकारणभावस्तयोर्नैकदेशवृत्तित्वम्, आधारस्य तव मते क्षणिकत्वेन क्षणद्वयावस्थायित्वाभावात्, न द्वितीयः, यतो ययोरेकक्षणवर्त्तिनोरेकाधारत्वं न तयोः कार्यकारणभावः, पूर्वापरक्षणवर्त्तिनोरेव तत्त्वादित्यसम्भवदोषग्रस्तमेव लक्षणं स्यादिति समाधत्ते-न, आधारस्यापीति, ननु यद्यप्याधारस्य क्षणिकत्वेनैकाधारत्वं पूर्वापरक्षणवर्त्तिनोर्न वास्तवं तथापि काल्पनिकं तु स्यादेवेति चेत्, तर्हि शरीरबुद्ध्याद्योरप्येकदेशताभिमानात्कार्यकारणभावाभिमानाच्चोपादानोपादेयभावस्स्यादित्याह काल्पनिकस्येति, एतेनेत्यादिकं विवृणोति एतेनेत्यादिना, एतेनेत्यस्यैकोऽर्थः घटकपालाद्यव्यापकत्वेनेति, घटकपालयोरभ्रान्तसमतैकावसायो नास्ति, विजातीयत्वात्, प्रकृतिविकारभावोऽपि नास्ति, अत्यन्तविसदृशसन्तान एव तदुपगमात्, तथा च लक्षणद्वयस्यापि तत्राव्याप्त्येत्यर्थः। द्वितीयोऽर्थः लक्षणयोः परस्पराक्रान्ताव्यापकत्वेन वेति, एकलक्षणविशिष्टेऽपरलक्षणाभावेनाव्याप्त्येत्यर्थः, लक्षणस्येतरभेदानुमापकतया लक्ष्यस्य पक्षरूपतया तदेकदेशे अभ्रान्तसमतैकावसायरूपैकलक्षणविशिष्टे सभागसन्ताने प्रकृतिविकारभावरूपापरलक्षणाऽभावात्, एवं प्रकृतिविकारभावरूपैकलक्षणविशिष्टे विसभागसन्ताने अभ्रान्तसमतैकावसायरूपापरलक्षणाभावादनुमाने भागासिद्धिदोष इति भावः। अभ्रान्तसमतैकावसाय इति विवृणोति—अभ्रान्ततयेत्यादि। पर्यवसितलक्षणमाह कार्यकारणभावे सतीत्यादिना। पर्यवसितोक्तलक्षणे निमित्तपर्यन्तानुधावनफलमाह—

अवसायस्य लक्षणघटकत्वे तदभावदशायामव्याप्तिरित्ययं पन्थाः। स्वरूपयोग्यताया निवेशाच्च न फलानुपधानदशायामव्याप्तिरिति गुणानन्दः। प्रकृतिविक्रिये प्रकृतिविकारभावः, इदं च विसभागे सन्ताने, सभागे चाद्यं लक्षणं, तत्र च पुञ्जात् पुञ्जोत्पत्तेरुपगमान्निरन्तरोत्पन्नयोर्नीलसन्तानयोः परस्परोपादानोपादेय-

भावप्रसङ्गो निबन्धे दर्शित एव, काष्ठस्य तु प्रकृतेर्विकृतिरङ्गार इति कुतो निश्चितं भवता, यावता वह्नेरेवायं विकारः किं न स्यात्। वह्निसम्बन्धेन काष्ठादेव तदुत्पत्तेरिति चेत्, न, काष्ठसम्बन्धेन वह्नेरेव तदुत्पत्तिरित्यपि किन्न कल्प्येत, पार्थिवं पार्थिवोपादानकमिति निश्चयादिति चेत्, एतदुपादानोपादेयभावावधारणमपि कथं, सभागेषु क्षणेषु तथा दर्शनादिति चेत्, तदपि कुतः, अभ्रान्तसमतैकावसायादिति चेत्, अथ केयं समता नाम, यदि साजात्यं सादेश्यं वा तत् प्राग् निरस्तं, शिष्याचार्यबुद्ध्योरतिप्रसङ्गेन वास्तवसादेश्याभावेन च।

अवसायस्येति। एकत्वावसायनिमित्तमित्यत्र निमित्तत्वं न फलोपधानकारणतारूपं, येनैकत्वावसायफलानुपार्जनदशायां पूर्वोक्ताव्याप्तिस्तदवस्था स्यात्, किन्तु स्वरूपयोग्यतालक्षणमित्याह—स्वरूपयोग्यताया इति, इदं प्रकृतिविकारभावरूपं द्वितीयं लक्षणम्। विसभाग इति, काष्ठादेर्भस्मादौ विजातीयकार्यसन्तान इत्यर्थः। सभागे एकजातीयसन्तानस्थले। आद्यं कार्यकारणभावे सत्येकत्वावसायनिमित्तं साजात्यमित्याकारकम्। अभ्रान्तसमतैकावसायलक्षणस्य खण्डनं ग्रन्थान्तरे कृतमस्तीति स्मारयति तत्रेत्यादिना। बौद्धश्शङ्कते वह्निसम्बन्धेनेति, तदुत्पत्तेः अङ्गारोत्पत्तेः, बुद्धित्वेन शिष्याचार्यबुद्ध्योस्साजात्यादुपादानोपादेयभावस्स्यादित्यतिप्रसङ्गस्साजात्यपक्षे, सादेश्यपक्षे तु कपालघटयोरपि वस्तुगत्यैकदेशवृत्तित्वाभावादुपादानोपादेयभावो न स्यादित्यव्याप्तिरित्यभिप्रायेणाह शिष्याचार्यबुद्ध्योरिति, शिष्याचार्यबुद्ध्योरतिप्रसङ्गनिवृत्तये समतालक्षणमाह—

एकसन्तानत्वं चेत्, तदपि तदुत्पत्तिमात्रं चेत्, निमित्तनैमित्तिकयोरपि तथाभावप्रसङ्गः, उपादानोपादेयप्रवाहश्चेत्, कथं तेनैव तद्व्यवस्थाप्येत, ज्ञानेषु तावत् प्रतिसन्धानमेवोपादानोपादेयलक्षणमिति चेत्, न,

प्रतिसन्धाननियामक उपादानोपादेयभावः, प्रतिसन्धानं च स इत्यात्माश्रयात्, तद्योग्यतेति चेत्, सैव केति चिन्त्यं, शक्तिविशेष एव सा, यद्यपि प्रतिसन्धानानुकूला शक्तिः प्रतिसन्धातर्येव, न प्रतिसन्धेये, तस्य चिरातीतत्वेनाप्रयोजकत्वात्, तथापि तस्यापि शक्तिविषयत्वमित्यनुसन्धेयानुसन्धातृभाव एवोपादानोपादेयभाव इति चेत्, स तावन्न प्रतिक्षणनियतः,

एकसन्तानत्वमिति, तथाभावप्रसङ्गः एकसन्तानत्वप्रसङ्गः, तथा च शिष्याचार्यबुद्ध्योरप्युपादानोपादेयभावप्रसङ्गेन प्रतिसन्धानप्रसङ्ग इतिभावः। स्वलक्षणे स्वस्य प्रवेशने स्वेनैव स्वस्य व्यवस्थापनं स्यात्, तथाचात्माश्रयस्स्यादित्याह कथं तेनैवेति, तद्योग्यतेति प्रतिसन्धानयोग्यतेत्यर्थः। उपादानोपादेयभावलक्षणमिति प्रकृतम्, प्रतिसन्धातरि स्मरणलक्षणोत्तरज्ञाने। तस्येति प्रतिसन्धेयस्य पूर्वज्ञानस्येत्यर्थः, अनुभवविषयकप्रतिसन्धानानुकूलशक्तिस्स्मरण इत्यनुभवस्य स्वकार्यविषयत्वाच्छक्तिविषयत्वमित्याह तस्यापि शक्तिविषयत्वमिति। यथा घटानुकूला शक्तिः कपालमात्रे, नतु तत्तत्कपालनियता, तथा प्रतिसन्धानानुकूला शक्तिरपि ज्ञानमात्रे, नतु तत्तज्ज्ञानव्यक्तिनियता, तथाच ज्ञानत्वेन सजातीययोश्शिष्याचार्यधियोरप्युपादानोपादेयभाव उक्तशक्तिमत्त्वात् स्यादित्युत्तरयति स तावन्नेति, स शक्तिविशेषः, न प्रतिक्षणनियतः न प्रतिव्यक्तिमात्रवृत्तिः, निषेधे हेतुमाह—

यथा हि तेन तत्कर्त्तव्यं तथा तादृशेन तत्कर्त्तव्यमित्यपि नियम एव, तज्जन्यजातीयकार्यमवश्यं तत्सजातीयकारणजन्यमित्यस्य सर्वसिद्धत्वात्, अन्यथा तेन तत्कर्त्तव्यमित्यपि न निश्चीयेत, क्षणस्य दुरुन्नेयत्वात्, तथा च निरीहं जगज्जायेत, प्रतिव्यक्तिकार्यकारणभावस्यानागतकार्यव्यक्तेरनुपस्थित्या ग्रहीतुमशक्यत्वात्,

सामान्येन रूपेण तदग्रहे इष्टानिष्टोपायताग्रहस्य कारणस्याभावात् क्वचिदपि प्रवृत्तिनिवृत्ती न स्यातामित्यर्थः ।

यथाहीति, तेन कारणव्यक्त्या, तत्कर्त्तव्यं तत्कार्यं कर्त्तव्यम्, तत्तत्कार्यगततत्तद्व्यक्तित्वेन तत्तत्कारणगततत्तद्व्यक्तित्वेन च यथा विशेषकार्यकारणभावस्तथा सकलकार्यमात्रवृत्तिसामान्यधर्मेण सकलकारणमात्रवृत्तिसामान्यधर्मेण च सामान्यकार्यकारणभावनियमोऽप्यवश्यमङ्गीकर्त्तव्यः, तथानभ्युपगमे दण्डमाह अन्यथेति, उक्तसामान्यनियमानभ्युपगमे इत्यर्थः । तेन तत्कर्त्तव्यमित्यपि न निश्चीयेतेति उक्तविशेषकार्यकारणभावनिश्चयोऽपि न स्यादित्यर्थः, तत्र हेतुमाह—क्षणस्य दुरन्वयत्वादिति क्षणस्य तत्तत्कारणस्य तत्तत्कार्यस्य च तत्तद्व्यक्तित्वेन रूपेणान्वयस्य कार्यकारणभावग्रहमूलभूतस्याग्रहणादित्यर्थः । क्षणस्य दुरुन्नेयत्वादित्यपि पाठान्तरम्, निरीहं जगज्जायेतेति, ननु तत्तद्धूमत्वेन तत्तद्वह्नित्वेन कार्यकारणभावनिश्चयात्प्रवृत्त्यादिभावेन कथं निरीहं जगत् स्यादिति चेत्; महानसादौ तन्निश्चयकालेऽनागतधूमवह्निव्यक्त्योरनुपस्थितेस्स्मरणलक्षणप्रत्यासत्त्या उक्तनिश्चये मानासम्भवेन कार्यकारणभावनिश्चयाभावात्तदुत्तरकाले तज्जन्यस्मरणाभावेनेष्टसाधनत्वग्रहाभावात् प्रवृत्त्याद्यभावेन जगन्निरीहं स्यादेव, एतदेव विवृणोति प्रतिव्यक्तीति, धूमत्वेन वह्नित्वेन सामान्यकार्यकारणभावाऽग्रहे धूमत्वं यदि किञ्चिद्धर्मावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकं न स्यात् तर्हि कार्यमात्रवृत्ति न स्यात् नित्यवृत्ति वा स्यात् आत्मत्ववत्, तथाच धूमार्थिनो वह्नित्वावच्छिन्ने इष्टसाधनत्वग्रहाभावात्तद्गोचरप्रवृत्तिर्नियमतो न स्यात्, एवं धूमविद्वेषिणोऽनिष्टसाधनत्वग्रहाभावात्तत्र निवृत्तिरपि न स्यात्, एवमन्यत्रापीति प्रवृत्तिनिवृत्तिशून्यमेव जगत् स्यादित्याह सामान्येन रूपेणेति। तदऽग्रहे कार्यकारणभावाग्रहे।

आकस्मिकं च कार्यस्य तज्जातीयत्वमापद्येत, तथा च कानिचिदेव कार्याणि किञ्चिज्जातीयानीति नियमो-

ऽपि नोपलभ्येत, प्रतिसन्धाने शक्तेः प्रतिव्यक्तिविश्रान्तत्वेऽप्रतिसन्धेयाऽप्रतिसन्धातृव्यक्त्योरुपादानोपादेय-भावो न स्यात्, तत्र तादृशशक्तौ मानाभावादित्यपि द्रष्टव्यम्। नापि प्रतिसन्ताननियतो, नियतव्यक्तिवृत्तित्वावच्छेदकविशेषाभावात्, नहि शिष्याचार्यनीलधियोर्मात्रयापि जातिकृतं विशेषमुपलभामहे, अदृश्यत्वादयमदोष इति चेत्, न, दृश्यसमवायिन्या जातेरदृश्यत्वानुपपत्तेः, योग्यव्यक्तिवृत्तित्वेनैव जातेर्योग्यत्वात्, उपपत्तौ वा धूमादावप्यवकाशप्रसङ्गात्, एवं यथा कारणेषु दृश्येषु ज्ञानविशेषेषु प्रतिसन्धानजनकतावच्छेदिका जातिरदृश्या, एवं कार्येष्वपि दृश्येषु धूमविशेषेषु वह्निजन्यतावच्छेदिका जातिरदृश्या स्यादिति शङ्कया धूमसामान्ये वह्निजन्यत्वाग्रहात् न तेन कार्येण कारणस्य वह्नेरनुमानं स्यात्, एवमेतदाद्यस्यैव तथाभावादिति चेत्, न, आद्योऽपि धूमो न तत्त्वेन वह्निजन्योऽपि तु तदवान्तरजात्येति शङ्काया दुर्वारत्वात्, तस्मात् कारणस्य वैजात्ये प्रमाणसिद्धे कार्यस्य सौसादृश्येऽप्यवान्तरजातिभेदः कल्प्यते, हेतुवैजात्यस्य फलवैजात्यं प्रति प्रयोजकत्वात्, अप्रयोजकत्वे तस्याकस्मिकत्वप्रसङ्गात्, कारणसाजात्येऽपि तु कार्यवैजात्यं सहकारिवैजात्ये पर्यवस्यतीति युक्तमुत्पश्यामः।

आकस्मिकमिति, कार्यनियतजातीयत्वस्यानुगतजातिरूपेण कारणत्वानियम्यत्वात् तस्य चात्रानभ्युपगमादितिभावः। नोपलभ्येतेति तथाच कार्यसामान्येन कारणसामान्यानुमानमपि न स्यादिति धूमत्वाद्यवच्छिन्नेन वह्नित्वाद्यवच्छिन्नानुमानाभावात्तदर्थिनस्तत्र प्रवृत्तिर्न स्यादिति भावः। प्रतिसन्धानानुकूलायाश्शक्तेर्ययोरनुभवस्मरणव्यक्त्योः प्रतिसन्धानं तत्तद्व्यक्तिविश्रान्तत्वे अप्रति-

सन्धेयाऽप्रतिसन्धातृव्यक्त्योरेकसन्तानीयपूर्वापरज्ञानयोरुक्तशक्त्यभावादुपादानोपादेयभावो न स्यादित्युपादानोपादेयभावस्य प्रति सन्धानानुकूलशक्त्यात्मकलक्षणेऽव्याप्तिस्स्यादित्याह—प्रतिसन्धाने शक्तेरित्यादिना। विज्ञानसन्तानं हि प्रतिपुरुषभिन्नमिति तत्तत्पुरुषीयज्ञानसन्ताननियतप्रतिसन्धानानुकूलशक्तिविशेष उपादानोपादेयभावलक्षणं,नातश्शिष्याचार्यधियोः प्रतिसन्धानप्रसङ्ग इत्यपि नेत्याह नापि प्रतिसन्ताननियत इति, निषेधे हेतुमाह—नियतव्यक्तीत्यादिना, यथा कपाल एव घटानुकूला शक्तिर्न तन्ताविव्यत्र नियामकमनुगतं कपालत्वमेव तथा देवदत्तीयप्रतिसन्धानानुकूला शक्तिर्देवदत्तीयज्ञानधारायामेव नान्यत्रेत्यत्र शक्तिपरिचायकीभूतमनुगतमवच्छेदकधर्मं न किमप्युपलभ्यते, येन तन्निरूप्या शक्तिरपि तत्तत्सन्तानगतव्यक्तिमात्रगताभ्युपगता स्यात्, नीलादिविषयकज्ञानत्वस्य ज्ञानत्वस्य च शक्तिपरिचायकीभूताऽवच्छेदकत्वे तस्य शिष्याचार्यपूर्वापरनीलज्ञानयोरपि सत्त्वात्तयोरपि प्रतिसन्धानं स्यादित्यर्थः। शिष्याचार्यनीलधियोर्वैलक्षण्यनियामिका जातिरस्त्येव, तर्हि कथं नोपलभ्यते इति चेत्, अदृश्यत्वादित्याशङ्कते अदृश्यत्वादिति, अदृश्यत्वानुपपत्तौ हेतुमाह योग्यव्यक्तीति, येनेन्द्रियेण यद्वस्तु गृह्यते तेनैव तद्गता जातिस्तदभावश्च गृह्यत इति नियमेनाश्रयस्य तदिन्द्रिययोग्यत्वे तदाश्रितत्वेनैव जातेस्तदिन्द्रिययोग्यत्वादित्यर्थः, अस्तु दृश्ये धूमे अदृश्या जातिः, ततः किं स्यादित्यत आह एवमिति। कारणेषु प्रतिसन्धानकारणेषु। धूमस्य क्षणिकत्वेन धूमसन्तानीयोत्तरोत्तरधूमं प्रति पूर्वपूर्वधूमस्यैव कारणत्वेन वह्निजन्यतावच्छेदिका जातिर्न धूमसामान्ये किन्त्वाद्यधूम एवेत्याद्यधूमेनैव वह्न्यनुमानं न धूमान्तरेणेत्याशङ्कते एवमेतदिति, आद्योऽपि धूमो न धूमत्वेन वह्निजन्यः किन्तु धूमत्वावान्तरातीन्द्रियजात्येति शङ्कायां तादृशजातेरप्रत्यक्षत्वेन तद्रूपेण व्याप्तेरग्रहादाद्येन धूमेनापि वह्न्यनुमितिस्स्यादित्युत्तरयति आद्योऽपीति, तृणारण्यादीनां वैजात्यं प्रत्यक्षसिद्धमिति

तृणजन्यवह्नेररणिजन्यवह्निना सह वह्नित्वेन साजात्येऽप्यवान्तरजातिभेदो व्यतिरेकव्यभिचारवारणाय प्रतिनियतकार्यतावच्छेदकतया कल्प्यते प्रकृते त्वनुसन्धातृरूपं यच्छिष्यगतं स्मरणं यच्चाचार्यगतं स्मरणं तत्र वैजात्यं न प्रत्यक्षं येन तत्प्रयोज्यतावच्छेदकतया कार्यवैजात्यमपि कल्प्येत, यत्र कारणसाजात्येऽपि कार्यवैजात्यमनुभूयते यथा घटकारणस्य दण्डस्य गवानयनकारणस्य च दण्डस्य दण्डत्वेन साजात्येऽपि घटगवानयनकार्यवैजात्यं, तत्र कपालगवादितत्तत्सहकारिवैजात्येन सामग्रीवैजात्यं नियामकं, न च प्रकृते कार्यवैजात्यमनुभूयते, शिष्याचार्यप्रतिसन्धानयोस्सजातीयत्वात्, तथा चाचार्यानुभूतस्य शिष्येऽनुसन्धानप्रसङ्गस्तदवस्थ एवेत्याशयेनाह तस्मादिति, अप्रयोजकत्व इति हेतुवैजात्यस्याप्रयोजकत्वे फलवैजात्यस्य कार्यतानवच्छेदकत्वं स्यात्, तथाच विजातीयकार्यस्य सत्त्वमसत्त्वं वा स्यादिति भावः। जन्मकालीनाद्यज्ञानं ज्ञानोपादानकं ज्ञानत्वात् इदानींतनज्ञानवदित्यनुमानेन पूर्वभवस्य एतद्भवीयचरमज्ञानं ज्ञानोपादानं ज्ञानत्वात् पूर्वज्ञानवदित्यनुमानेनोत्तरभवस्य सिद्धिरपि न स्यात्, यतो ज्ञानत्वावच्छिन्नं प्रति ज्ञानत्वेन ज्ञानस्य नोपापादानत्वं किन्तु ज्ञानत्वावान्तरजात्यवच्छिन्नं किञ्चिद् ज्ञानं प्रति ज्ञानत्वावान्तरजात्यवच्छिन्नस्य किञ्चिच ज्ञानं प्रत्यचेतनत्वावान्तरजात्यवच्छिन्नस्योपादानत्वम्, एवं चाद्यज्ञाने ज्ञानत्वावान्तरजात्यवच्छिन्नजन्यतावच्छेदकावान्तरजातेरनभ्युपगमेन तं प्रति किञ्चिदचेतनमेवाऽचेतनत्वावान्तरजात्योपादानम्, एवं मरणाव्यवहितप्राक्कालीनज्ञानेऽपि ज्ञानजनकतावच्छेदकावान्तरजातेरनभ्युपगमेन तन्नोत्तरज्ञानजनकमित्येवं परलोकोपि न सिद्ध्येदिति परलोकमभ्युपगच्छता न प्रमाणमन्तरेण वैजात्यमङ्गीकरणीयमित्याशयेनाह—

यदि च विनैव प्रमाणं वैजात्यमादाय कार्यकारणभावः कल्प्यते, तदा परलोकोऽपि न सिद्ध्येत्, इहैव

ज्ञानोपरमसम्भवात्, अचेतनोपादानकमपि ज्ञानमवान्तरजातीयं स्यात् अचेतनमवान्तरजातीयं भवेत् दृश्यजात्यभेदेऽपि किञ्चिदेव निमित्तं भविष्यतीति शङ्कायाः समुत्थापयितुं शक्यत्वादिति। अस्तु तर्हि प्रतिसन्धाननियमः सहकारिभेदादिति चेत्, स एवैकः कर्त्तेति गीयते,

यदि च विनैव प्रमाणमिति, स एव सहकारिविशेष एव, ज्ञानमवान्तरजातीयं ज्ञानत्वव्याप्यजातीयम्, अचेतनमवान्तरजातीयम् अचेतनत्वव्याप्यजातीयम्, नातश्शरीरादिव घटादपि ज्ञानोत्पत्तिप्रसङ्गः, नवा ज्ञानात् ज्ञानानुत्पत्तिप्रसङ्गः, बौद्धो विनिगमनाविरहमाशङ्कते—

अथैक एव कर्त्ता न तु तादृक्सहकारिपरम्परेति कुतो विशेषादिति चेत्, सम्प्रतिपन्नभिन्नकर्तृकाभ्यः शिष्याचार्यबुद्धिभ्यः प्रतिसन्धानरहिताभ्यो व्यावर्त्तमान एव प्रतिसन्धाननियमे सहकारी वक्तव्यः, स चैक एव कर्त्तेत्यतो विशेषादिति, यतः कुतश्चिदेव विशेषात् प्रतिसन्धाननियमः स्यादिति चेत्, स एव विशेषश्चिन्त्यते, स च न तत्स्वभावत्वं, पूर्वापरधियामत्यन्तभिन्नानामेकस्वभावत्वायोगात्, न तज्जातीयत्वं, शिष्याचार्यधीष्वपि प्रतिसन्धानप्रयोजकत्वादिति, तन्न तत्सहकारिपरम्पराकत्वमव्यावर्त्तकत्वादिति। तत्सहकारित्वमवशिष्यते, तच्चैकात्मकर्तृकत्वमादाय विश्राम्यतीति।

अथैक एवेति। नैयायिको विनिगमकोपदर्शनेन समाधत्ते सम्प्रतिपन्नेति, बौद्धः पुनश्शङ्कते यत इति, तत्स्वभावत्वम् प्रतिसन्धानोत्पादस्वभावत्वम्, तथा च शिष्यस्याऽऽचार्यस्य वा स्वीयज्ञानसन्तानगतपूर्वानुभवस्मरणयोः प्रतिसन्धानजननस्वभावत्वल-

क्षणप्रतिसन्धाननियामको विशेषोऽस्तीति तयोरनुसन्धेयानुसन्धातृभावादनुसन्धानं, नास्ति च शिष्याचार्यधियोर्भिन्नसन्तानगतयोरिति न तत्रानुसन्धानमिति भावः। निषेधे हेतुमाह नैयायिकः पूर्वापरधियामिति; तज्जातीयत्वम् प्रतिसन्धानप्रयोजकतावच्छेदकजातिरूपेण सजातीयत्वम्, जातिश्च ज्ञानत्वमृते नान्येति तद्रूपेण सजातीयत्वं शिष्याचार्यधियोरपीत्यत्रापि प्रतिसन्धानप्रसङ्ग इतिभावः। ययोर्नैककर्तृकत्वं न तयोः प्रतिसन्धीयमानत्वमिति व्यतिरेके कार्यकारणभावाभावस्य प्रतिसन्धीयमानत्वाभावरूपसाध्यव्यापकत्वे नैककर्तृकत्वाभावरूपसाधनाव्यापकत्वेन चोपाधित्वं, तत्प्रतियोगित्वाच्च कार्यकारणभावस्योपाधित्वं प्रतिसन्धानप्रयोजकत्वलक्षणं पराभिप्रेतमितोऽपि न सम्भवतीत्याह—

अथवा सम्भवन्नपि नायमुपाधिस्तत्र तावन्मात्रस्यानिबन्धनत्वात्, तथा हि सर्वज्ञः स्वप्रत्ययान् एककर्तृकतया प्रतिसन्धत्ते, न वा, आद्ये तत्प्रतिसन्धानादेव प्रतिसन्धातुरेकत्वं सिद्धम्, ज्ञानाद्भेदश्च, धियामस्थैर्यस्य सर्वैरेव प्रतीतेः, प्रतिसन्धातुः क्षणिकतायाः सर्वज्ञेनाप्यनाकलनात्। अथ न प्रतिसन्धत्ते, न तर्हि कार्यकारणभावमात्रनिबन्धनं प्रतिसन्धानं, न ह्यस्ति सम्भवो यदन्वयेऽपि यस्यानन्वयस्तत्तावन्मात्रनिबन्धनमिति। प्रतिसन्धत्ते न तु सत्यं तत्प्रतिसन्धानमतो न तावन्मात्रात् कर्त्रैकत्वसिद्धिरिति चेत्, तर्त्कि सर्वज्ञस्यापि विपर्ययः, आहार्यो न दोषावह इति चेत्, निबन्धनाभेदेऽपि कथमेक आहार्योऽन्यस्तु स्वरसवाहीति वाच्यम्, निबन्धनं बुद्धीनामुपादानोपादेयभावः,

अथवेति, अयं कार्यकारणभावः। तत्र प्रतिसन्धाने, तावन्मात्रस्य कार्यकारणभावमात्रस्य, स्वप्रत्ययान् स्वज्ञानानि,

सर्वज्ञस्य पूर्वापरप्रत्ययानामेककर्तृकत्वेन प्रतिसन्धाने सर्वज्ञत्वान्यथानुपपत्त्या तस्य भ्रान्तिमत्त्वाभावेन तत्प्रमात्मकमेवेति तद्विषयीभूतमेककर्तृकत्वमपि तत एव सिद्धं स्यादिति पूर्वापरप्रत्ययौ एककर्तृकौ प्रतिसन्धीयमानत्वादित्यनुमानाभावेऽपि न नः किञ्चिदपचीयत इत्याशयेनाह आद्य इति, ज्ञानाद्भेदश्चेत्यत्र सिद्ध इति लिङ्गविपरिणामेनान्वयः। अत्रैव हेतुमाह धियामस्थैर्यस्येति, न प्रतिसन्धत्ते इति पक्षे कार्यकारणभावमात्रनिमित्तं न प्रतिसन्धानं, सर्वज्ञबुद्धिषु पूर्वापरभावेन कार्यकारणभावसद्भावेऽप्येककर्तृकतया प्रतिसन्धानाभावेनान्वयव्यभिचारात्, तथा च कार्यकारणभावाभावस्य साध्याऽव्यापकत्वेन व्यतिरेकव्याप्तौ नोपाधित्वमित्याशयेनाह अथ न प्रतिसन्धत्त इति, सर्वज्ञस्य पूर्वापरस्वप्रत्ययानां भेदरूपविशेषदर्शनस्यानाहार्यभ्रमप्रतिबन्धकस्य सद्भावादेककर्तृकत्वप्रतिसन्धानमाहार्यम्, असर्वज्ञस्य तु तदभावादनाहार्यमित्याशङ्कते बौद्धः—

भेददर्शनादर्शनाभ्यामिति चेत्, न, प्रवृत्तिविज्ञानानां भेदस्यासर्वज्ञैरपि दर्शनात्, विषया एव भिन्नाः प्रतिभान्ति न बुद्धय इति चेत्, न, तासामपि भेददर्शनात्, रूपमद्राक्षं जिघ्रामि सौरभं रसमास्वादयिष्यामीत्यादिप्रत्ययानां प्रतीत्यतीतत्वाद्यवगाहित्वात्, प्रत्येतव्यगततदवगाहित्वे यमन्वभूवं तमेव पश्यामि द्रक्ष्यामि वेत्यादावनुपपत्तेः, बुद्धिमात्रेण सामान्यतो भेदाग्रहादेव विशेषतोऽभेदारोपो भविष्यतीति चेत्, एवं तर्हि पार्थिवतया वृक्षात् काष्ठं काष्ठादङ्गारः ततो भस्माप्यभेदेन प्रतिसन्धीयेत गृह्यमाणेऽपि विशेषतो भेदे, न चैवमस्ति। विसभागसन्तानोपादानमुपादानोपादेयभावस्याभेदारोपविरहस्य च स्पष्टत्वाय ।

भेददर्शनेति, असर्वज्ञानामालयविज्ञानानां स्वमात्रसाक्षिणां मास्तु भेददर्शनं प्रवृत्तिविज्ञानानां सविकल्पबुद्धिवेद्यानां तु मिथो

भेददर्शनमेवास्तीत्याहार्यमेवैककर्तृकत्वप्रतिसन्धानं तेषामपि स्यादिति समाधत्ते--न, प्रवृत्तिविज्ञानानामिति, तासामपि बुद्धीनामपि,भेददर्शनमेवोपपादयति रूपमद्राक्षमित्यादिना। प्रतीत्यतीतत्वाद्यवगाहित्वादिति प्रतीतिगतातीतत्वाद्यवगाहित्वादित्यर्थः,अत्रादिपदेन वर्त्तमानत्वानागतत्वे ग्राह्ये, नच प्रत्येतव्यं यद्रूपं सौरभं रसश्च तद्गतमेव यथाक्रममतीतत्वं वर्त्तमानत्वमनागतत्वञ्च भासते, नतु यथोक्तप्रतीतिगतं, तथा चासदादीनां न बुद्धीनां भेददर्शनमित्यभ्युपगमे दोषमाह प्रत्येतव्यगततदवगाहित्व इति, अनुपपत्तेरिति प्रत्येतव्यस्य वर्त्तमानत्वेनातीतत्वानागतत्वयोरभावेन तदवगाहित्वस्योक्तप्रत्ययानामनुपपत्तेरित्यर्थः। बुद्धित्वेन रूपेण पूर्वापरप्रत्ययानां भेदग्रहो नाऽस्तीत्येककर्त्तृकत्वेन पूर्वापरप्रत्ययानामभेदारोपो भविष्यतीत्याशङ्कते--बुद्धिमात्रेणेति, वृक्षत्वेन काष्ठत्वेन काष्ठत्वेनाङ्गारत्वेनाङ्गारत्वेन भस्मत्वेन च गृहीतभेदयोरपि वृक्षकाष्ठयोः काष्ठाङ्गारयोरङ्गारभस्मनोरुपादानोपादेयभावस्य पार्थिवत्वसामान्यधर्मेण भेदाग्रहस्य च सद्भावेनाभेदारोपतो यमेव वृक्षमन्वभूवं तदेव काष्ठं स्मरामीति य एव वृक्षस्तदेव काष्ठमिति वा, यदेव काष्ठमन्वभूवं तमेवाङ्गारं स्मरामीति यदेव काष्ठं स एवाङ्गार इति वा यमेवाङ्गारमन्वभूवं तदेव भस्म स्मरामीति य एवाङ्गारस्तदेव भस्मेति वा प्रत्यभिज्ञानापत्तिस्स्यादिति समाधत्ते--एवं तर्हीति, न चैवमिति उक्तप्रत्यभिज्ञानं नच भवतीत्यर्थः। अहमाकारस्यालयविज्ञानस्य प्रतिक्षणं भिन्नत्वेनोत्पादादनुभवस्मरणकालानुगामित्वाऽभावेन कस्याप्येकस्य तस्य यद्यपि तदुभयकर्त्तृत्वं न संभवति, तथापि प्रवृत्तिविज्ञानरूपपूर्वकालीनानुभवकर्त्रालयविज्ञानस्य प्रवृत्तिविज्ञानरूपोत्तरकालीनस्मरणकर्त्रालयविज्ञानस्य च सौसादृश्यमूलकभेदाग्रहादेव पूर्वापरधियामालयविज्ञानरूपैककर्त्तृकत्वप्रतिसन्धानमिति गूढाभिप्रायेणाशङ्कते—

स्यादेतत्--आलयभेदाग्रहात् प्रतिसन्धानमिति चेत्,न,स ह्यहमास्पदं प्रवृत्तिसन्तानादन्य एव वा स्यात्,तद-

न्तःपातिकादाचित्कानेकाहंप्रत्ययरूपो वा, न तावदाद्यः, नह्यहमहमिकया मिथः स्वतन्त्रसन्तानद्वयमनुभूयते, अनुभूयत एवालयविज्ञानं स्वमात्रसाक्षिणा स्वेनैव कदाचित्परेणाप्यहं जानामीत्याद्याकारेणेति चेत्, सत्यपि चालयविज्ञानसन्तानानुभवे प्रवृत्तिविज्ञानं किमालयविज्ञानस्यानुपादानमनुपादेयं, किं वोपादानमुपादेयं च, उतालयविज्ञानमेवोपादानं प्रवृत्तिविज्ञानं तूपादेयमेव, न तु तदन्यत् किञ्चिदुपादत्त इति, आद्ये परस्परमनुपादानोपादेयभावापन्नयोः परस्पराकलितार्थप्रतिसन्धानायोगः, अन्यथा चैत्रानुभूतस्य मैत्रेण स्मरणप्रसङ्गात्, द्वितीये प्रवृत्तिविज्ञानमालयविज्ञानप्रवृत्तिविज्ञानोभयोपादानमालयविज्ञानमपि प्रवृत्तिविज्ञानालयविज्ञानोभयोपादानम्, एवं चोपादानस्याश्रयत्वात् उभयाश्रयत्वं स्यात्, ततश्चैकस्यैवानेकाश्रयत्वाभ्युपगमे अनेकाश्रयैरवयविसंयोगादिभिः किमपराद्धं, येन ते वृत्तिविकल्पादिभिर्दूष्येरन्। तृतीये त्वालयविज्ञानोपात्तं प्रवृत्तिविज्ञानं न किञ्चिदुपादत्त इति न युक्तम्, तथात्वे निमित्ततामपि न यायात्, त्वत्पक्षे निमित्ततायाः उपादानत्वव्याप्तत्वात्,

स्यादेतत्—आलयभेदाग्रहादिति, स आलयः, हि यतः। अहमहमिकयेति पृथक्स्वरूपतयेति भावः। स्वमात्रसाक्षिणा स्वमात्रविषयकेणाहमाकारेण,नतु तदन्यत् किञ्चिदुपादत्त इति,तत्प्रवृत्तिविज्ञानं नतु कस्यचिदुपादेयस्योपादानमित्यर्थः। प्रवृत्तिविज्ञानस्यालयविज्ञानस्य च परस्परमनुपादानोपादेयभावे प्रवृत्तिविज्ञानानुभूतस्यालयविज्ञानेनालयविज्ञानानुभूतस्य च प्रवृत्तिविज्ञानेन प्रतिसंधानं न स्यादित्याह आद्य इति, एवञ्चेति उभयोरुभयं प्रत्युपादानत्वे चेत्यर्थः, उभयाश्रयत्वम् उभयनिरूपिताश्रय-

त्वम्, उभयस्येतिशेषः, आलयविज्ञानोपात्तं, आलयविज्ञानोपादेयम्, तथात्वे प्रवृत्तिविज्ञानस्य किञ्चिदपि कार्यं प्रत्युपादानत्वाभावे, उपादानत्वाऽभावेऽपि निमित्तत्वाभ्युपगमे उपादानजातीयं किञ्चित् स्वोपादेयकार्याकारित्वेऽपि किञ्चिन्नैमित्तिकं कार्यमुत्पाद्याऽर्थक्रियाकारित्वलक्षणं सत्त्वं निर्वाह्य विनश्येदिति स्वसन्तानमुच्छिद्येत, तेन स्वोपादेयकार्याऽजननात्, उपादानान्तरेणापि स्वसान्तानिकोपादेयभिन्नोपादेयकार्याजननात्, निरुपादानोपादेयकार्योत्पादाऽसम्भवाच्च, एवं सन्तानान्तरमप्युच्छिन्नं स्यादिति सर्वसन्तानोच्छेदः; उपादेयकार्याऽसम्भवे च किं प्रति निमित्तमपि स्यादित्युपादेयनैमित्तिककार्याकारित्वेनान्त्यस्याऽसत्त्वे पूर्वपूर्वस्यामूलमसत्त्वं स्यादित्येवं शून्यवादापत्तिः, तद्भिया तृतीयपक्षे प्रवृत्तिविज्ञानं प्रत्यालयविज्ञानस्यैवोपादानत्वे तदुपात्तं यत् प्रवृत्तिविज्ञानं तत् प्रवृत्तिविज्ञानं प्रति नोपादानं, किन्त्वन्यत्किञ्चिद्यादृच्छिकं प्रत्येव स्वीकर्त्तव्यं, तथाच यत्प्रवृत्तिविज्ञानमेकमालयविज्ञानेन जनितं यच्चापरं स्वसन्तानोच्छेदभयादालयविज्ञानं जनितं तत्र प्रवृत्तिविज्ञानेन विजातीयज्ञानसन्ततिरेव जननीया, आलयविज्ञानेन चैकमालयविज्ञानमन्यच्च प्रवृत्तिविज्ञानं जननीयम्, तेनापि प्रवृत्तिविज्ञानेन विजातीयज्ञानसन्ततिर्जननीया, आलयविज्ञानं पुनः पूर्ववदेव प्रवृत्तिविज्ञानमालयविज्ञानं चोपादत्ते इत्यास्थेयम्, तत्रापि तेनापि प्रवृत्तिविज्ञानेनान्या विजातीयज्ञानसन्ततिर्जननीयेत्येवं सन्तानानन्त्यप्रसङ्गः, ते च सर्वे सन्तानाः प्रत्येकं परंपरया आलयविज्ञानोपादानकत्वादालयविज्ञानसन्तानपदवाच्याः, प्रवृत्तिविज्ञानोपादानकत्वाच्च प्रवृत्तिविज्ञानसन्तानपदवाच्याः, सजातीयं चैकमालयविज्ञानसन्तानं स्वीकर्त्तव्यमित्येवमप्रामाणिकाऽनन्तसन्तानापादकोऽयं तृतीयपक्षो न युक्तः, एवमनन्तसन्तानाभ्युपगमेऽपि पूर्वापरप्रवृत्तिविज्ञानानां नैकसन्ताननैयत्यं तत एव च नोपादानोपादेयभावोऽपीति तद्रूपनियामकाऽभावात्प्रवृत्तिविज्ञाने पौर्वापर्यभावापन्नयोर्ज्ञानयोः प्रतिसन्धानानुपपत्तिस्तदवस्थैव, आल-

यविज्ञानसन्ततिस्त्वन्यैव जाता, तदभेदाग्रहस्य नियामकत्वे चैत्रानुभूतस्य मैत्रस्य प्रतिसन्धानप्रसङ्गदोपस्तदवस्थ एवेत्याशयेनाह—

अन्यथोपादानजातीयस्यापि कस्यचित् निमित्ततामात्रं स्वीकृत्य विनाशे सन्तानान्तरवर्त्तिनोऽप्रकृतेः सन्तानिकान्तरमविकारं प्रत्यनुपादानत्वात्, निरुपादनस्य कार्योत्पादस्यासम्भवात् सन्तान उच्छिद्येत, एवं सन्तानान्तरमपीति सर्वसन्तानोच्छेदः, तथा चोपादानमन्तरेण कार्यानुत्पादान्निमित्तत्वस्यासम्भवादर्थक्रियाविरहिणोऽन्त्यस्यासत्त्वे उपान्त्यादीनामप्यसत्त्वे क्व कार्यकारणभावः, कस्य वा नियामकः, प्रवृत्तिविज्ञानोपात्तमालयविज्ञानं न किञ्चिदुपादत्ते इति कस्यचिदभ्युपगमेऽप्ययं दोपस्तुल्य इति। तस्मादन्यदेव किञ्चित् यादृच्छिकमुपाददीतेत्यालयप्रवृत्तिविज्ञानव्यक्तीनां प्रत्येकमेकैकसन्तानप्रवर्त्तनेऽनन्तसन्तानप्रसङ्गः ।

अन्यथोपादानजातीयस्यापीति, अप्रकृतेः अनुपादानस्य, अविकारम् अनुपादेयम्। चक्षुर्थपक्षेऽपि तृतीयपक्षदोपसाम्यमाह प्रवृत्तिविज्ञानोपात्तेति, अन्यदेव किञ्चिदु यादृच्छिकम् उपाददीतेति मूलस्य कश्चिदु यदेवंविधाभिप्रायवर्णनं करोति, यथा प्रवृत्तिविज्ञानं न प्रवृत्तिविज्ञानमुपादत्ते, किन्तु विजातीयं, तदपि न सजातीयमुपादत्ते, न चैवं तत्सन्तानोच्छेदो, यथा प्रवृत्तिविज्ञानेन प्रवृत्तिविज्ञानस्याऽजननेऽपि आलयविज्ञानेनैव प्रवृत्तिविज्ञानान्तरजननान्न प्रवृत्तिविज्ञानसन्तान उच्छिद्यते तथा प्रवृत्तिविज्ञानोपादेयेन पदार्थान्तरेण स्वसजातीयाऽजननेऽपि अन्येनैव केनचित्पदार्थेन प्रवृत्तिविज्ञानोपादेयजातीयजननसम्भवात् तत्सन्तानानुच्छेदः, किन्तु विजातीयमेवोपादत्ते, तदपि पूर्वरीत्या विजातीयमित्येवं विजातीयसन्तानाऽनवस्थाप्रसङ्ग इति तदुपदर्शयति—

यत्तु प्रवृत्तिविज्ञानेनैकः सन्तान उपादेयस्तेन चान्यस्तेन चान्य इत्यनवस्थेत्यर्थ इति, तदसत्, प्रवृत्तिवि-

नोपात्ततदुपात्तादीनामेकसन्तानान्तःपात्युपादानत्वेनैव निर्वाहे सन्तानान्तरकल्पकाभावादिति दीधितिकारः।

यत्तु प्रवृत्तिविज्ञानेनेति, प्रवृत्तिविज्ञानस्यालयविज्ञानोपादेयत्वमेवेति नियमस्य कक्षीकारेण प्रवृत्तिविज्ञानस्य स्वसजातीयोपादानत्वासम्भवेऽन्यजातीयोपादानत्वानङ्गीकारे निमित्ततायाा अप्यभावादसत्त्वमापद्येतेत्यतः प्रवृत्तिविज्ञानस्य विजातीयोपादानत्वं स्वीक्रियते, तदुपादेयस्य विजातीयस्य सजातीयोपादानत्वाभ्युपगमेऽपि क्षत्यभावेन किमर्थं विजातीयोपादानत्वमङ्गीकार्यम्, एवं तदुपात्तस्यापि सजातीयोपादानत्वमऽभ्युपगन्तव्यमित्येकसजातीयसन्तानस्य सम्भवात्प्रोक्तसन्तानानवस्थाप्रसङ्ग इत्याशयेन दीधितिकार उक्ताभिप्रायवर्णनं प्रतिक्षिपति तदसदिति, आलयविज्ञानं प्रवृत्तिविज्ञानम् आलयविज्ञानं चोपादत्ते, तत्र प्रवृत्तिविज्ञानं विजातीयसन्तानमारभते, आलयविज्ञानं पुनरालयविज्ञानं प्रवृत्तिविज्ञानं च, प्रवृत्तिविज्ञानञ्च विजातीयकार्यम्, आलयविज्ञानं पुनरालयविज्ञानं प्रवृत्तिविज्ञानं च, तत्राप्येवमित्येवमनन्तसन्तानप्रसञ्जनमालयप्रवृत्तिविज्ञानव्यक्तीनां प्रत्येकमेकैकसन्तानप्रवर्त्तनेऽनन्तसन्तानप्रसङ्ग इति ग्रन्थेन दीधितिकृता कृतं तन्न समीचीनम्, आलयविज्ञानप्रवृत्तिविज्ञानयोर्वैजात्याभावे तत्सन्तानयोरपि न भेदः, किन्तु यदेवालयविज्ञानं तदेव प्रवृत्तिविज्ञानमित्यालयविज्ञानप्रवृत्तिविज्ञानव्यक्तीनामिति भेदेनोपादानस्यायुक्तत्वात्, किन्त्वत्रैवं वक्तव्यं, यदालयविज्ञानं तदेव प्रवृत्तिविज्ञानं तत्स्वसजातीयं विजातीयं चोपादत्ते इति न वक्तुं शक्यम्, एकस्योभयोरुपादानत्वस्यानेकाश्रयत्वापत्तिभयादसम्भवात्, किन्तु तत्सन्तानान्तरस्थमेवोपादत्ते, न चैवं सजातीयसन्तानोच्छेदः, यथा प्रवृत्तिविज्ञानं विजातीयमुपादत्ते तथा किञ्चिदेवान्यत्प्रवृत्तिविज्ञानजातीयमुपादास्यते, तथा चाद्येन प्रवृत्तिविज्ञानेनैकं विजातीयसन्तानम्, एवं द्वितीयेन प्रवृत्तिविज्ञानेन द्वितीयं विजातीयसन्तानमित्येवं यावन्ति प्रवृत्तिविज्ञानानि विजातीयानेकसन्तानाुस्यु-

ततयोत्पादितानि तावन्ति विजातीयसन्तानानि स्युः, एवमनन्तसन्तानाभ्युपगमेऽपि न प्रतिसन्धानमुपपादितं स्यात्, तन्निमित्तस्य पूर्वोत्तरविज्ञानयोरुपादानोपादेयभावस्याभावात् इत्यभिप्रायकं नारायणव्याख्यानमुपदर्शयति—

तच्चिन्त्यम् । जातिप्रतिनियमाभावे उभयोरेकार्थत्वात्, अत एवालयविज्ञानोपात्तं प्रवृत्तिविज्ञानमपि स्वसन्तानवर्त्तिज्ञानान्तरोपादानस्यैकस्यानेकाश्रयत्वप्रसङ्गेनान्यदेव सन्तानान्तरवृत्त्येव किञ्चिदुपाददीत, तथा चैकसन्तानवर्त्तिनामुपादानोपादेयभावाभावात् परस्परप्रत्याकलितार्थप्रतिसन्धानं न स्यात्, सर्वेषां सन्तानान्तरोपादानेनापूर्वानन्तसन्तानप्रवृत्तिश्च प्रसज्येतेति नारायणः । अत एवातद्व्यावृत्तिपक्षेऽप्येकैकप्रतियोगिग्रहणविनिर्मोकाभ्यामविनिगमादनन्तसन्तानप्रवृत्तिरित्यध्यात्मपरीक्षादौ वयम् । अत्र सङ्ग्रहश्लोकः "अशक्तिरनुपादाना–दन्यादानादनन्तता ॥ मिथो न प्रतिसन्धिश्च–सङ्करे नैकरूपता" इति । उपादानत्वाभावे निमित्तत्वस्याप्यभावादर्थक्रियाविरहेऽसत्त्वं स्यात्, अन्योपादाने सन्तानानन्तता, मिथ आलयप्रवृत्तिविज्ञानयोरनुपादानोपादेयभावे परस्परं परस्पराकलितार्थप्रतिसन्धानं न स्यात्, सङ्करे तयोः परस्परोपादानोपादेयभावेऽनेकसंश्रितिरेकस्यानेकोपादेयत्वमित्येतदर्थः,

तच्चिन्त्यमित्यादिना, न च पूर्वानुभवकर्तृविज्ञानस्य स्मरणकर्तृविज्ञानस्यैकजात्यभावेऽप्यतद्व्यावृत्त्या प्रतिसन्धाननियमो भविष्यतीति वाच्यम्, व्यावृत्तिप्रतियोगिनोऽतत्पदार्थस्य वस्तुभूतस्यानुगमकस्यानभ्युपगमात्, अवस्तुभूतस्य चानतद्व्यावृत्तिलक्षणस्यातत्स्वलक्षणेन सम्बन्धाभावेनाभावात्तद्भिन्नस्यानुगमकस्याभावेन विज्ञानभिन्ना ये घट-पट-चटाद्या अनन्तपदार्थाः तत्प्रत्येकव्या-

वृत्तेर्भेदेन पूर्वापरज्ञानगतैकातद्व्यावृत्तेरप्यनन्तरूपत्वात् इत्यभिप्रायेण ग्रन्थकारस्स्वमतमाह—अत एवातद्व्यावृत्तिपक्षेऽपीति, अशक्तिरनुपादानादित्यादिश्लोकार्थमुपदर्शयति उपादानत्वाभाव इत्यादिना, अत्र प्रवृत्तिविज्ञानस्येति शेषः। तथा चाशक्तिरित्यस्याऽसत्त्वमित्यर्थो व्याख्यातः। अन्योपादाने प्रवृत्तिविज्ञानस्य सन्तानान्तरवर्त्तिज्ञानोपादानत्वे। नैकरूपतेति स्थाने अनेकसंश्रितिरिति पाठान्तरम्, तदाश्रित्यार्थमाह एकस्यानेकोपादेयत्वमिति। मिथो न प्रतिसन्धिश्चेति दोषमसहमानो बौद्धश्शङ्कते—

अथालयप्रवृत्तिविज्ञानसन्तानयोः परस्परमनुपादानोपादेयभावे कीदृशं प्रतिसन्धानमनुपपन्नं, न तावत् परस्परानुभूतस्य परस्परं स्मरणम्, आलयस्यैवानुभवितृत्वात् स्मर्तृत्वाच्च, नापि स्वप्रकाशतयाऽस्याप्यविषयत्वात् पूर्वापरविज्ञानयोरेककर्तृकत्वनिश्चयः, आलयविज्ञानयोस्तादृशप्रतिसन्धानाभावात्, प्रवृत्तिविज्ञानयोश्च कार्यकारणभावादेव तदुपपत्तेरिति चेत्,

अथेति, स्मरणमिति अत्रानुपपन्नमित्यनुषज्यते, आलयविज्ञानेनानुभूतस्य प्रवृत्तिविज्ञानेन तेन चानुभूतस्यालयविज्ञानेन स्मरणमित्येवं लक्षणं प्रतिसन्धानं तयोः परस्परमनुपादानोपादेयभावेऽनुपपन्नमित्यपि प्रवृत्तिविज्ञानस्यानुभवितृस्मर्तृत्वोभयाऽभावेनालयविज्ञानस्य चोभयभावेनेष्टापत्त्या परिहरति आलयस्यैवानुभवितृत्वादिति, आलयविज्ञानव्यक्तीनां स्वप्रकाशतया पूर्वेणोत्तरस्योत्तरेण च पूर्वस्यालयविज्ञानस्यानवगाहनात् तयोरेककर्तृकत्वनिश्चयरूपं प्रतिसन्धानमनुपपन्नमित्यपि न च वाच्यम्, आलयविज्ञानयोरेककर्तृकत्वप्रतिसन्धानं भवतीत्यनभ्युपगमात्, पूर्वापरयोः प्रवृत्तिविज्ञानयोरेवोक्तप्रतिसन्धानाभ्युपगमात्, तत्र च निमित्तं पूर्वापरयोः कार्यकारणभाव एव इत्यत आह नापीति, अस्याप्यविषयत्वादिति स्थाने अन्योन्याविषयत्वादिति पाठो

युक्तः, एतदनुसारेणैवोक्तोऽर्थो ज्ञेयः। अस्याप्यविषयत्वादिति पाठे त्वयमर्थः, अस्यापि आलयविज्ञानस्यापि, अविषयत्वात् पूर्वापरविज्ञानैककर्तृकत्वाऽविषयत्वात्, निश्चय इति, अत्र लिङ्गविपरिणामेनानुपपन्न इत्यनुपज्यते, पूर्वोत्तरप्रवृत्तिविज्ञानयोरेव कार्यकारणभावे उदासीनयोः पूर्वापरालयविज्ञानयोर्भेदाग्रहाभ्युपगमो निरर्थकस्स्यादित्याशयेन पृच्छति—

आलयविज्ञाने भेदाग्रहः किमर्थं, कर्त्रोर्भेदग्रहे एककर्तृकत्वारोपासम्भवादिति चेत्, त्यज तर्हि प्रवृत्तिविज्ञानानां कार्यकारणभावग्रहम्, एवमेतत्, आलयविज्ञानानामेवोपादानोपादेयभावनियामकं सौसादृश्यमाद्रियत इति चेत्, लाघवादालयाभेद एव किमिति नाद्रियते याथार्थ्याय, स्थैर्ये बाधकादिति चेत्, न, तस्य प्रागेव निरासात्, विधिरूपं चानुगतं सादृश्यं विना स्थैर्यमसम्भवि, अतद्व्यावृत्तिरूपं चैकं तदन्तरेण दुर्निरूपम्॥

आलयविज्ञान इति, पूर्वोत्तरप्रवृत्तिविज्ञानयोः कार्यकारणभावेऽपि कर्तृत्वमालयविज्ञानस्यैवेति पूर्वप्रवृत्तिविज्ञानकर्तृ आलयविज्ञानमन्यत्, अन्यच्चोत्तरप्रवृत्तिविज्ञानकर्तृ आलयविज्ञानमिति तयोर्भेदाग्रह एवैककर्तृकत्वस्यारोपात्मको निश्चय इत्येतदर्थमालयविज्ञानयोर्भेदाग्रह उपयुज्यत इति बौद्ध उत्तरयति—कर्त्रोर्भेदग्रह इति, आलयविज्ञानयोर्भेदाग्रहवत्तयोरेव कार्यकारणभावोऽपि प्रतिसन्धाननियामकोऽस्तु किं प्रवृत्तिविज्ञानयोरजागलस्तनकल्पयोः कार्यकारणभावकल्पनयेत्याशयेनाह—त्यज तर्हीति। प्रवृत्तिविज्ञानयोः कार्यकारणभाव उपादानोपादेयभावापरपर्यायः प्रतिसन्धाननियामकस्त्यज्यत. एव, उपादीयते चालयविज्ञानयोस्सौसादृश्यं तयोरेवोपादानोपादेयभावनियामकं, स एव चोपादानोपादेयभावः प्रतिसन्धाननियामक इत्याशङ्कते बौद्धः—एवमेतदिति। भेदग्रहस्य प्रतिबन्धकत्वं, तदभावस्यैककर्तृकत्वनिश्चयं प्रति कारणत्वं, सौसादृश्यमूलकत्वं च कल्प्यं, तदपेक्षया एकेनैव सिद्धे किं द्वयक-

ल्पनयेति न्यायादेकस्यैवालयाऽभेदस्य कारणत्वकल्पनं न्याय्यं, येनैककर्त्तृकत्वनिश्चयस्य याथार्थ्यमप्युपपन्नं भवेदित्याशयेनाह ला-घवादालयाभेद इति, पूर्वोत्तरालयविज्ञानानुगतं विधिरूपं सादृश्यं स्थैर्यानभ्युपगमेऽनुपपन्नं, न चातद्व्यावृत्तिरूपं तद्भविष्यति, तस्यापि विधिनिरूप्यत्वात्, तच्च प्रागेव विवृतं द्वाविंशतितमश्लोकव्याख्यायामित्याह विधिरूपमिति, तदन्तरेण विधिरूप-सादृश्यमन्तरेण,

एतेन प्रवृत्तिविज्ञानसन्तानान्तःपातिनामहमास्पदानां भेदाग्रहादेककर्तृकत्वप्रतिसन्धानमित्यपि निरस्तम्। कादाचित्काहंप्रत्यय एवालय इति द्वितीयपक्षोऽपि न क्षोदक्षमः, यतस्तस्यापि भेदाग्रहः स्वरूपतो वा स्याद्वि-षयतो वा, आद्येऽपि पूर्वाहमिति प्रत्ययमात्राद्वा, प्रवृत्तिविज्ञानेभ्योऽपि वा, न तावदाद्यः अहमज्ञासिषमिति जानाम्यहमिति ज्ञास्याम्यहमिति त्रैकाल्योल्लेखस्य भेदनिश्चयमन्तरेणानुपपत्तेः, अतीतत्वादिविरुद्धधर्मग्रह-स्यैव भेदग्रहत्वात् ॥

एतेन लाघवादालयाऽभेदस्यैककर्त्तृकत्वप्रतिसन्धाननियामकत्वेनाऽनुगतधर्माभावात्सौसादृश्याऽभावेन तन्मूलकभेदाग्रहाऽभावे-न चेत्यर्थः ॥ न तावदाद्य इति, पूर्वादहमिति प्रत्ययमात्रादुत्तरस्याहमिति प्रत्ययस्य भेदाग्रहो न सम्भवतीत्यर्थः। अतीतत्वा-दीति अहमज्ञासिषमिति जानाम्यहमिति ज्ञास्याम्यहमिति प्रतीतिविषयीभूतेऽहमिति ज्ञानांशे यथाक्रममतीतत्वं वर्त्तमानत्वं च भवि-ष्यत्वं च भासंते, तेषां च धर्माणां विरुद्धधर्मरूपत्वेन भेदरूपतया तन्निश्चयस्य-प्रतिबन्धकस्य सत्त्वेन न भेदाग्रह इत्यर्थः। ननु नाह-मिति ज्ञानांशे त्रैकाल्योल्लेखः, त्रिष्वप्युक्तज्ञानेष्वहमहमिति प्रत्ययस्य तुल्याकारत्वादित्यहं प्रत्ययाकारेण न भेदाग्रहानुपपत्तिरिति

चेत्, तर्ह्यहमित्यालयविज्ञानविषयस्यैव प्रतिसन्धानमुचितं नतु दर्शनस्पार्शनादिप्रवृत्तिविज्ञानविषयाणां, तथा च योऽहं सोहमिति प्रतिसन्धानं स्यात्, न तु योऽहं घटमद्राक्षं सोऽहं तं स्मरामीत्याह—

कदाचिदहंप्रत्ययाकारेण भेदनिश्चयाभावोपपत्तावपि तदर्थस्यैव प्रतिसन्धिरुचितो न प्रवृत्तिज्ञानार्थानामपि, न च तेभ्योऽपि भेदाग्रह इत्युक्तमेव, नापि विषयतः, स हि स्वाकारो वा वस्त्वन्तरं वाऽलीकं वेति, नाद्यो, दूषितत्वात्, न द्वितीयो, योगाचारेणानभ्युपगमात्, योऽपि सौत्रान्तिकोऽभ्युपगच्छेत् सोऽपि विरुद्धधर्माध्यासाद्भेदमिच्छेत्, तन्निवृत्तौ तन्निवृत्तिम् । न तृतीयः, अहमिति विकल्पस्य सवस्तुकतायाः प्रागेव साधनात्, अवस्तुकत्वेऽपि न तत्र प्रकृतोपयोगिभेदाग्रहसम्भवः, सदसदारोपितासत्त्वारोपितसत्त्वव्यधिकरणाव्यपदेश्यभेदेन षड्विधस्यापि भेदस्याग्रहोऽभेदारोपौपयिकतया तत्र न सम्भवतीत्युक्तत्वादिति ।

कदाचिदहं प्रत्ययाकारेणेति, प्रवृत्तिविज्ञानेभ्योऽपि वेति पक्षं निरस्यति न चेति, तेभ्योऽपि प्रवृत्तिविज्ञानेभ्योऽपि, विषयतो वेति पक्षं निरस्यति नापि विषयत इति, स हि—अहमिति प्रत्ययविषयो यतः, स्वाकारः अहमितिप्रत्ययाकारः, तत्र अवस्तुनि, प्रकृतोपयोगीति अनुसन्धानोपयोगीत्यर्थः, स्थिरात्मसिद्धौ प्रकारान्तरमुपदर्शयति—

अथवानुभवजन्यसंस्कारस्य स्वाश्रये स्मृतिजनकत्वात् स्थिरात्मसिद्धिः । तथाहि—अनुभवः किं कालान्तरभाविनीं स्मृतिं जनयेत्, तज्जनितो वा संस्कारः। सोऽप्यतीन्द्रियः प्रत्यक्षसिद्धो, वा, अतीन्द्रियोऽपि तत्कालावस्थायी, सन्तन्यमानो वा । अध्यक्षसिद्धोऽपि तदुत्तरताहशबुद्धिधारारूपस्तद्विशेषो वा कर्तृव्युत्पत्त्या

विशेषोऽपि करणव्युत्पत्त्याऽनुभवप्रभवत्वमात्रं वा, अनुभवितृसन्तानवैजात्यं वा। तत्र न प्रथमः, अनुत्पन्नानन्वयध्वस्तयोरविशेषात्,

अथवेत्यादिना। उक्तत्वादिति द्वाविंशतितमश्लोकव्याख्यायामितिशेषः। अतीन्द्रियोऽपि तत्कालावस्थायीति, अत्र अतीन्द्रियोऽपि तावत्कालावस्थायीति पाठान्तरम्। तदुत्तरतादृशबुद्धिधारारूप इति, अनुभवोत्तरतत्समानविषयकबुद्धिधारारूप इत्यर्थः। अत्र तदुत्तरबुद्धिधारारूपः तदन्यो वा तद्विशेषो वेति पाठान्तरमेव युक्तम्, नापि दृश्योऽन्य इत्युत्तरग्रन्थस्वारस्यात्, अनुत्पन्नाऽनुभवस्येव व्यापारानुत्पादनादनन्वयध्वस्तानुभवस्यापि न स्मरणोत्पादकत्वम्, तयोस्स्मरणाऽव्यवहितपूर्वकालेऽसत्त्वाविशेषादित्याशयेन तदुत्तरतादृशबुद्धिधारारूप इति पक्षनिषेधे हेतुमाह अनुत्पन्नेत्यादिना। तदन्यो वेति पक्षं निरस्यति—

नापि दृश्योऽन्यः,तस्यानुपलब्धिबाधितत्वात्,नाप्यनुभवप्रभवत्वमात्रं विशेषः,नहि कर्मकरकरोपनीतमेव बीजं क्षितिमासाद्याङ्कुरं जनयति, न तु प्रमादपतितं, तथा नीलाद्यनुभवसन्तानः (नीलाद्यनुभवप्रभवसन्तानः) पीतानुभवेन वोपनीयतां नीलाद्यनुभवेन वेति न कश्चिद्विशेषः, एवं च नीलाद्यनुभवस्य तत्त्वेनानुभवत्वेन वा पीतस्मरणप्रयोजकत्वेऽननुभूतेऽपि पीते स्मरणं स्यात्, नियामकाभावात्, अप्रयोजकत्वे च नानुभूतेऽपीति।

नापि दृश्योऽन्य इति, तद्विशेषो वेति द्वितीयपक्षीयप्रथमपक्षं निरस्यति—नाप्यनुभवप्रभवत्वमात्रं विशेष इति, यथा बीजत्वावच्छिन्नं बीजं कर्मकरकरोपनीतत्वरूपविशेषशालि भवतु मा वा तथापि क्षित्यादिसहकारिसामग्रीं समासाद्याङ्कुरत्वावच्छिन्नं स्वकार्यमविशिष्टमेव करोति तथा नीलानुभवः पीतानुभवप्रभवत्वरूपविशेषवान् भवतु मा वा तस्य यदि नीलानुभवत्वेनानुभवत्वेन

वा पीतसरणं प्रति कारणत्वं तदा तत्कुर्यादेव, एवं चाननुभूतपीतस्यापि पुरुषस्य नीलानुभवात् पीतस्मरणप्रसङ्गः, यदि च न कारणत्वं, तदा पीतानुभवप्रभवत्वेपि न तत्कुर्यात्, तादृशविशेषस्य कारणतानवच्छेदकत्वादिति भावः। बौद्धश्शङ्कते—

अथ यथा शालिप्रभवबीजस्य शालित्वं तथा पीतस्मरणजनकपीतानुभवप्रभवस्य नीलानुभवस्यापि पीतस्मरणजनकत्वमिति चेत्, न, क्षीरपायिनो नीलात्पारावताद्धवलस्य पारावतस्य भवनाज्ञ जम्बूरसपायिनो नीलस्योत्पादेन कारणताद्रूप्यस्यातन्त्रत्वात्, गुच्छबीजयोर्वैजात्यनिबन्धनमेव च बीजगुच्छयोर्वैलक्षण्यं, न च पीतानुभवप्रभवनीलानुभवे पीतस्मरणजननियामकं किञ्चिद्वैलक्षण्यमीक्षामहे, अथान्यत्र यथा तथास्तु, प्रकृते पुनरनन्यगतिकतया तत्प्रभवत्वमेव प्रयोजकं,

अथेति, कारणधर्मस्य न सर्वत्र कार्यानुगामित्वं, यथा क्षीरपायिपारावतगतस्य नैल्यस्य तत्कार्ये धवलपारावते नानुगामित्वम्, एवं जंबूरसपायिपारावतगतस्य धावल्यस्य तत्कार्ये नीलपारावते, तथा पीतानुभवगतस्य पीतस्मरणजनकत्वधर्मस्य तत्कार्ये नीलानुभवे नानुगामित्वमिति कुतस्ततः पीतस्मरणोत्पत्तिः, अन्यथा पीतस्मरणाऽजनकत्वेनोभयवादिसंप्रतिपन्नात्परंपरया पीतानुभवजनिताद् ज्ञानान्तरादपि स्वजनकगतपीतस्मरणजनकत्वधर्मसमन्वयात् पीतस्मरणं स्यादित्याशयेन निषेधे हेतुमाह—क्षीरपायिनो नीलादित्यादि, जम्बूरसपायिन इत्यस्यानन्तरं पारावतादित्यस्य नीलस्येत्यनन्तरं पारावतस्येत्यस्य चानुकर्षः। बौद्ध आह अथेति, तत्प्रभवत्वमेव पीतानुभवप्रभवत्वमेव, नीलानुभवस्येति प्रकृतम्, प्रयोजकं पीतस्मरणजननियामकम्, पीतानुभवप्रभवत्वमात्रं यदि प्रयोजकमिति चेत्, तर्हि पीतानुभवप्रभवानुभवमात्रात्पीतस्मरणं कथं न स्यादित्यत आह—

कुतश्चिद्बीजादङ्कुरानुत्पादेन तुल्ययोगक्षेमः कुतश्चित् तत्प्रभवात् स्मृत्यनुत्पादे इति, मैवम्, तत्प्रभवत्वं हि न तज्जन्यत्वं तदुपादेयत्वं वा, अन्तरितसान्तानिके तदभावात्, नापि तत्प्रयोज्यत्वं, शिष्याचार्यस्थलेऽतिप्रसक्तेः, तत्सान्तानिकत्वे सति तदुत्तरत्वं तदिति चेत्, न, अनतिप्रसक्तसन्तानत्वनिर्वचनाशक्यतायाः प्रागेव दर्शितत्वात्, वैजात्यं तु विशेषो भवेत्,

कुतश्चिदिति, तत्प्रभवात् पीतानुभवप्रभवात्, अनुभवस्य व्यवहितत्वेन स्मरणस्य तज्जन्यत्वाभावेऽपि परंपराकारणस्यापि प्रयोजकत्वेन तत्प्रयोज्यत्वमेव विशेष इति चेत्, तर्हि शिष्यबुद्धेरप्याचार्यबुद्धेः परंपरया जन्यत्वेनाचार्यानुभूतस्य शिष्यस्यापि स्मरणं स्यादित्याह नापि तत्प्रयोज्यत्वमिति, अनुभवितृसन्तानवैजात्यपक्षं खण्डयति वैजात्यं त्वित्यादिना, पूर्वपूर्वज्ञानादुत्तरोत्तरज्ञानं यज्जायते तत्र कारणगतं ज्ञानत्वमेवानुवर्तते, नतु कारणगतं नियतविषयत्वं पूर्वसर्वज्ञानीयविषयत्वं वैजात्यं वा, तथा सति नियतैकविषयकस्य सर्वविषयकस्य वा विजातीयज्ञानसन्तानस्यैव वाऽऽपत्तिस्स्यात्, एवञ्च पीतानुभवजनितो नीलानुभवजनितो वा यतः कुतश्चिज्जनितो वा यो नीलानुभवस्तस्य न वैजात्यकृतो विशेष इति पीतानुभवप्रभवनीलानुभवत्वेन पीतानुभवप्रभवाऽनुभवत्वेन वा पीतस्मरणं प्रति कारणत्वे पीतानुभवजनितान्नीलानुभवाद् यथा पीतस्मरणं तथाऽन्यतो जनितादपि नीलानुभवात् पीतस्मरणं स्यात् वैजात्यरूपविशेषाऽभावादिति भावः। तदेव सदृष्टान्तमुपपादयति—

यथा क्षीरावसेकादम्लत्वं परिहृत्य माधुर्यमुपादायानुवर्त्तमानाऽऽमलकी कालान्तरेऽपि फले माधुर्यमुन्मीलयति, लाक्षारसावसेकाद्वा धवलिमानमपहाय रक्ततामुपादायानुवर्त्तमानं कार्पासबीजं कुसुमेषु रक्ततां, न

चैवं प्रकृते, जपाकुजमाद्युपधानसन्निधानेऽपि तद्रूपतामनादाय धवलिमानमेव सन्तन्वानस्य स्फटिकस्येव ज्ञानस्य विषयोपरागमपगमय्य चिद्रूपतामात्रेणानुवृत्तेः॥ अपगमय्येत्यन्तेन पीतादिस्मरणनियामकं वैजात्यं पीतादिविषयत्वं पीताद्याकारत्वं वेति पक्षद्वयस्य निरासः, चिन्मात्रेणेत्यनेनावान्तरजातिभेदस्य। अत एव पीतादिस्मरणकुर्वद्रूपत्वं नियामकमित्यपास्तम्, अन्वयव्यतिरेकगृहीताया अनुभवस्य स्मरणजनकताया निर्वाहाय व्यापारकल्पनाया एव न्याय्यत्वात्,

यथेत्यादिना, विषयोपरागमपगमय्येति विषयसम्बन्धं त्यक्त्वेत्यर्थः, विषयसम्बन्धो ह्यागन्तुकः, विषयसन्निधानापेक्षत्वात्तस्य, नतु चैतन्यमिव स्वाभाविकः, तथा सति सर्वज्ञानस्य सर्वविषयसम्बन्धित्वप्रसङ्ग इति भावः। पीतस्मरणाव्यवहितपूर्ववर्त्तिनि तत्सन्तानान्तःपातिनि ज्ञाने पीतस्मरणकुर्वद्रूपत्वं नियामकमिति सन्तानान्तरवर्त्तिज्ञानान्तरे उक्तनियामकाभावान्न ततः पीतस्मरणप्रसङ्ग इति बौद्धाशङ्कां निरस्यति अत एवेति, चिद्रूपतामात्रेणानुवृत्तितोऽवान्तरजातिभेदस्य निरासादेवान्वयव्यतिरेकेत्यादिवक्ष्यमाणहेतोरेव चेत्यर्थः। वक्ष्यमाणहेतुमेवाह अन्वयव्यतिरेकगृहीताया इति, अनुभवसत्त्वे समानविषयकस्मरणं तदभावे तदभाव इत्यन्वयव्यतिरेकग्रहबलाद्विषयतासम्बन्धेन स्मरणं प्रत्यनुभवस्य विषयतासम्बन्धेन कारणत्वम्, चिरध्वस्तस्य च तस्य तद्रक्षणार्थं संस्कारस्य तद्व्यापारत्वं कल्प्यम्, तथा च स्मृत्यव्यवहितपूर्वक्षणे स्मृतिकार्याधिकरणे आत्मन्यनुभवस्य स्वजन्यव्यापारवत्त्वसम्बन्धेन सत्त्वेन भवति तस्य कारणत्वनिर्वाह इति भावः॥ जातिविशेषकल्पना साधकप्रमाणाभावान्न सम्भवतीत्युपदर्श्य वाधकप्रमाणादपि तादृशवैजात्यकल्पना न सम्भवतीत्युपदर्शनायाह—

जातिविशेषस्य योग्यानुपलम्भबाधितत्वात् योग्यव्यक्तिवृत्तितयैव जातेर्योग्यत्वात्, रक्तपीतोभयस्मारकनीलानुभवे सङ्करप्रसङ्गात्, तज्जातीयं प्रति जनकत्वेन व्यक्त्यन्तरस्यैवं तज्जातीयं प्रत्यपीत्यनवस्थितजातिपरम्पराकल्पनाप्रसङ्गाच्च,

जातिविशेषस्येति, ननु योग्यानुपलम्भो योग्यस्यैव बाधकः, आश्रयस्यानुभवस्य योग्यत्वेऽपि तद्गता पीतादिस्मरणकुर्वद्रूपत्वजातिस्त्वयोग्यैवेति न तस्यास्स बाधक इत्याशङ्कायामाह योग्यव्यक्तिवृत्तितयैवेति, येनेन्द्रियेण यद्वस्तु गृह्यते तेन तद्गता जातिस्तदभावश्च गृह्यते इति नियमादाश्रयस्य योग्यत्वादयोग्यत्वाद्वा तद्गतजातेरपि तत्त्वमित्यनुभवस्याश्रयस्यैन्द्रियकत्वे तद्गताया अप्युक्तजातेरैन्द्रियकत्वमेवेति नातीन्द्रियत्वेनायोग्यत्वं कल्पयितुं शक्यमिति भावः। उक्तनियमानभ्युपगमेऽपि दण्डमाह रक्तपीतोभयेति, पीतस्मरणाव्यवहितपूर्वज्ञाने पीतस्मरणकुर्वद्रूपत्वमयोग्यमपि जातिरूपं कल्पयितुं नच शक्यम्, तस्य रक्तस्मरणकुर्वद्रूपत्वेन सह रक्तपीतोभयस्मारकनीलानुभवे साङ्कर्यात्, यत्र पूर्वं पीतानुभवः ततः कदाचिन्नीलानुभवे सति पीतस्मरणं तत्र तत्पूर्ववर्त्तिनि नीलानुभवे रक्तस्मरणकुर्वद्रूपत्वाभाववति पीतस्मरणकुर्वद्रूपत्वं, यत्र च पूर्वं रक्तानुभवः ततः कदाचिन्नीलाद्यनुभवे सति रक्तस्मरणं तत्र तत्पूर्ववर्त्तिनि नीलानुभवे पीतस्मरणकुर्वद्रूपत्वाभाववति रक्तस्मरणकुर्वद्रूपत्वं, यत्र रक्तपीतोभयानुभवात्परंपरया नीलानुभवे सति रक्तपीतोभयस्मरणं तत्र तत्पूर्ववर्त्तिनि नीलानुभवे रक्तस्मरणकुर्वद्रूपत्वं पीतस्मरणकुर्वद्रूपत्वं चेति साङ्कर्यं, यदि च समूहालम्बनस्मरणकुर्वद्रूपत्वं प्रत्येकस्मरणकुर्वद्रूपत्वाभ्यामतिरिक्तमेव स्वीक्रियते तदा सामानाधिकरण्याऽभावेन नोक्तरीत्या साङ्कर्यमतो दोषान्तरमाह तज्जातीयं प्रतीति, पीतस्मरणकुर्वद्रूपात्मकोऽव्यवहित एव नीलाद्यनुभवो भवति नत्वन्य इत्यस्योपपत्तये पीतस्मरणकुर्व-

द्रूपात्मकं प्रति पीतसरणकुर्वद्रूपात्मकव्यक्तिकुर्वद्रूपात्मकत्वेन कारणत्वम्, एवं तत्कुर्वद्रूपात्मकं प्रत्यपि तत्कुर्वद्रूपात्मकत्वेनेत्येवमनवस्थितकुर्वद्रूपत्वकल्पनाप्रसक्तिरितिभावः। उक्तदोषमन्यत्राप्यतिदिशति—

एतेनाङ्कुरकुर्वद्रूपत्वं व्याख्यातम्। पूर्वज्ञानाकारः सर्वत्रोत्तरज्ञानेऽनुवर्त्तत इति तदाकारताविगमो नास्ति, सर्वाकारत्वमेव सर्वविज्ञानानां, किन्तु कश्चिदाकारः पटुरन्ये त्वपटव इति तु स्वदर्शनश्रद्धामात्रं, यतो विरुद्धधर्माध्यासादपि न भीः, न हि स एव पटुरपटुश्चेति सम्भवति, विरोधात्, न च स्वसंविदितरूपस्यापाटवार्थं पश्यामः, निराकारपक्षेऽपि यावानर्थो बुद्धेर्विषयस्तावति स्फुटैव सा, यत्र त्वस्फुटा, नासौ तस्या विषयः, तथात्वे वा विषयेतरव्यवस्था न स्यात्, सांशे त्वर्थे युक्तमेतदिति दर्शितं प्राक्, तस्मादतीन्द्रियः संस्कारः परिशिष्यते।

एतेनेति, कश्चिदाकारः पटुरन्ये त्वपटव इतीति, तथाच य आकारः पटुस्स उपलभ्यते, ये चाकारा अपटवस्ते नोपलभ्यन्त इति नीलानुभवः पीतादिसरणनियामकपीताद्याकारोऽपि स आकारोऽपटुरिति तस्यानुपलम्भेऽपि न क्षतिरितिभावः। बौद्धमते ज्ञानस्य स्वसंविदितत्वेन पटुत्वमेव, तद्विरुद्धमपटुत्वं तत्र कीदृग्रूपमिति नोपपादयितुं शक्यमित्याह न चेति, ज्ञानस्य निराकारतापक्षेप्येकस्य ज्ञानस्य न स्फुटास्फुटोभयरूपता सम्भवतीत्याह निराकारपक्षेऽपीति, सा बुद्धिः, अस्फुटेत्यनन्तरं सेत्यनुकर्षः, अतीन्द्रियोऽपि तावत्कालावस्थायी सन्तन्यमानो वेति विकल्पद्वयान्तर्गतं द्वितीयविकल्पं निरस्यति—

स च न सन्तन्यमानः, तत्रैव स्मृत्यादिप्रसङ्गे प्रवृत्तिसन्ताने स्मृत्यादिफलानवकाशप्रसङ्गात्, तथा नाहं स्मरामीति प्रत्ययानुपपत्तेः, प्रवृत्तिविज्ञानसन्तानान्तःपतितस्यैव ज्ञानस्याहमास्पदत्वात्, एवमालयविज्ञान-

वादिमतेऽपि बोध्यम्। ननु संस्कारः परम्परया स्वोपादानके सन्ताने स्मृतिं जनयति, तादृशश्च प्रवृत्तिसन्तानोऽपीति न तत्र स्मरणानुपपत्तिरिति चेत्, न, देवदत्तवर्त्तिनीलसंस्कारसन्तानस्य पीतसंस्कारसन्तानस्य च परम्परयैकोपादानत्वात् पीतसंस्कारसन्तानेऽपि नीलस्मरणप्रसङ्गात्, एवं प्रवृत्तिसन्ताने स्मरणोत्पादकाले संस्कारसन्तानसहस्रेऽपि स्मरणसहस्रं स्मरणमित्येव च तत्प्रत्ययः स्यात्, न तु स्मरामीति, संस्कारस्यानहमास्पदत्वात्,

स चेति, अतीन्द्रियसंस्कारश्चेत्यर्थः। निषेधे हेतुमाह तत्रैवेति, अतीन्द्रियसंस्कारसन्तान एव चरमसंस्कारेण स्मृतिजनने संस्कारसन्तानपतितैव स्मृतिस्स्यादिति प्रवृत्तिविज्ञानसन्ताने स्मृत्यादिफलानुदयस्स्यात्, तथाच घटस्य स्मरणमित्येवं प्रत्ययस्स्यात्, नतु घटमहं स्मरामीत्याकारकानुव्यवसायरूपः, प्रवृत्तिविज्ञानसन्तानान्तःपतितस्यैव ज्ञानस्याहंपदवाच्यत्वेन संस्कारसन्तानान्तःपातिनोऽहंपदावाच्यत्वादिति भावः। आलयविज्ञानमेवाहमास्पदमिति पक्षेऽप्युक्तप्रत्ययानुपपत्तिरुक्तदिशावसेयेत्याह एवमालयविज्ञानेति, अथ संस्कारो येनानुभवेन जनितस्तदुपादानके सन्ताने स्मृतिजननप्रत्यल इति तेनानुभवेन यथा संस्कारसन्तानो जनितस्तथा प्रवृत्तिविज्ञानसन्तानोऽपीत्युभयस्यैकोपादानकत्वेन तदुपादानकप्रवृत्तिविज्ञानसन्तानान्तःपातिनि प्रवृत्तिविज्ञाने न स्मरणानुपपत्तिरित्याशङ्कते बौद्धः नन्विति, येनानुभवेन संस्कारो जनितस्तदुपादानकप्रवृत्तिविज्ञानसन्तानान्तःपातिनि प्रवृत्तिविज्ञाने स्मरणं स्मरामीत्यनुव्यवसायश्च यद्यप्युपपद्येतां तथापि यद्विषयकोऽनुभवस्तद्विषयके तदुपादानके संस्कारसन्तानान्तःपातिनि संस्कारेऽपि स्मृतिप्रसङ्गस्तदवस्थ एवेति दोषसद्भावेऽपि दोषान्तरप्रदर्शनेन प्रतिक्षिपति—न, देवदत्तवर्त्तीति, यथा मूलभूतेन नीलानुभवेन

नीलसंस्कारसन्तानो जन्यते तथा नीलानुभवजन्यपीतानुभवजन्यपीतसंस्कारसन्तानोऽपि पीतानुभवद्वारा नीलानुभवेनैव जन्यते एवं तदुत्तररक्तादिसंस्कारसन्तानोऽपीति तेषां सर्वेषां सन्तानानां परम्परया मूलभूतेन नीलानुभवेनैव जन्यत्वेनैकोपादानकत्वात् तदन्तःपातिनि पीतादिसंस्कारेऽपि नीलस्मरणं स्यात्, एवं च मूलभूतनीलानुभवोपादानकप्रवृत्तिविज्ञानसन्ताने यदा स्मरणं तदानीं नीलानुभवोपादानकपीतादिसंस्कारसंतानानामाश्रयभूतानां सहस्रत्वेन तत्र प्रत्येकं स्मरणापत्तौ स्मरणसहस्रमापद्येत, संस्काराणामहंपदवाच्यत्वाभावेन तत्रोत्पद्यमानस्य स्मरणस्याहं स्मरामीति प्रत्ययो न स्यात्, स्याच्च स्मरणमित्येव प्रत्यय इति भावः। येनानुभवेन साक्षात्संस्कारो जनितस्तदुपादानकविज्ञानसन्ताने स्मृतिं करोति संस्कारः, न स्वसन्ताने, अतो न स्मरणसहस्रापत्तिरित्याशङ्क्य प्रतिक्षिपति—

न चैकोपादानकविज्ञानसन्ताने स्मृतिजनकत्वम्, आचार्यीयसंस्कारेण शिष्यविज्ञाने स्मरणप्रसङ्गात्, न चाचार्यीयं ज्ञानं न शिष्यविज्ञानोपादानमिति वाच्यम्, अनुभवितृज्ञानस्याप्यनेकान्तरितस्य स्मर्तृज्ञानानुपादानत्वात्, सन्तानत्वस्यानतिप्रसक्तस्य दुर्वचत्वादित्युक्तत्वात्, संस्कारस्य स्वोपादाने स्मृतिजनकताया एव लाघवेन वक्तुमुचितत्वाच्च; तथा च स्मृतेः कालान्तरसम्बन्धात् संस्कारतदुपादानयोः स्थैर्यमयत्नसिद्धमवर्जनीयं चेति,

न चैकोपादनकेति, निषेधे हेतुमाह आचार्यीयेति, येन विज्ञानेनाचार्यीयसंस्कारसन्तानो जनितस्तेनैव विज्ञानेन शिष्यविज्ञानमपि जन्यते इति स्वोपादानविज्ञानसंतानपतिते शिष्यविज्ञाने आचार्यीयसंस्कारः स्मृतिं जनयेदित्यर्थः। शिष्यविज्ञानस्याचार्यीयविज्ञानानुपादानकत्वेन नाचार्यीयसंस्कारः शिष्यविज्ञाने स्मृतिं करोतीत्याशङ्क्य निषेधति न चेति, निषेधे हेतुमाह अनु-

भवितृज्ञानस्येति, संस्कारः स्वोपादानोपादनके स्मृतिं करोतीत्यभ्युपगमे पूर्वानुभवेन कालान्तरभाविनो विज्ञानस्याजननात् पूर्वानुभवानुपादेये कालान्तरभाविनि ज्ञाने एकसन्तानपतितेऽपि संस्कारस्स्मृतिं न जनयेत्, नचाचार्यीयविज्ञानसन्तानाच्छिष्यविज्ञानसन्तानं विजातीयमिति न तत्तदुपादानमित्यपि वक्तुं शक्यं, तत्तन्मात्रवृत्तिसन्तानत्वस्यानुगतस्य पूर्वं निरस्तत्वादिति भावः। हेत्वन्तरमप्याह संस्कारस्येत्यादि, संस्कारस्य स्वोपादानोपादानके स्मृतिजनकत्वापेक्षया स्वोपादाने स्मृतिजनकत्वस्य कल्पने लाघवमपि, तथा चानायासेनात्मसिद्धिरितिभावः।

एतेन धर्माधर्मलक्षणोऽपि संस्कारो व्याख्यातः। तथा च यो यः संस्कारः कचित् सन्तान आहितः, स तत्रैव फलदानयोग्यो नान्यत्रेत्यादि निरस्तम्, अतिरिक्तसंस्कारपक्षे हेतोर्व्यधिकरणत्वात्, स्मृतिहेतोः संस्कारान्तःपातिनः प्रवृत्तिसन्तानावृत्तित्वादित्यर्थः।

एतेनेति, यथा स्मृतिहेतुभावनासंस्कारः कालान्तरे फलजनकत्वात् स्थिररूपस्सन् तदुपादानविधया स्थिरात्मसाधकस्तथा विहितनिषिद्धक्रियाजन्यधर्माऽधर्मस्वरूपसंस्कारोऽपि कालान्तरभाविसुखदुःखादिफलजनकत्वात्पूर्वदर्शितरीत्या प्रकारान्तरानुपपत्त्याऽतीन्द्रियस्स्थिररूपस्सन् तदुपादानविधया स्थिरात्मसाधक इत्येवं प्रकारेणेत्यर्थः, व्याख्यात इति स्थिरात्मसाधकतयेतिशेषः। परोत्प्रेक्षितप्रकारान्तरमप्येतेन निरस्तमित्याह तथा चेति, अस्य निरस्तमित्यनेनान्वयः। यो यः संस्कार इति अत्र संस्कारः स्वजनकप्रवृत्तिविज्ञानसन्तान एव फलजनकः तत्सन्तान एव जायमानत्वादित्यनुमानेन स्वोपादाने प्रवृत्तिविज्ञानसन्तान एव संस्कारस्य स्मृतिफलोत्पादनसामर्थ्यं सिद्धमिति शिष्याचार्यधियां न प्रतिसंधानं, चैत्रीयसन्ताने च प्रतिसंधानमित्येवं प्रतिनियतसन्ताने स्मृत्यु-

त्पत्तिर्भविष्यतीतिभावः । उक्तानुमाने हेतुदोषमुपदर्शयति अतिरिक्तसंस्कारपक्ष इति, हेतोर्व्यधिकरणत्वादित्यस्यार्थमाह स्मृतिहेतोरित्यादिना, पूर्वरीत्याऽतिरिक्तसंस्कारव्यतिरिक्तसंस्कारस्याऽसिद्ध्या तस्य पक्षीकरणे आश्रयाऽसिद्धिः, अतिरिक्तसंस्कारस्य पक्षत्वे स्वरूपासिद्धिः, न्यायमते संस्कारस्याऽऽत्मन्येवोत्पन्नत्वात्, बौद्धमतेऽपि तस्य प्रवृत्तिविज्ञानव्यतिरिक्तस्य स्वसन्तान एव जायमानत्वेन विज्ञानसन्तानेऽनुत्पादादितिभावः ।

विशेषलक्षणस्य च स्वरूपासिद्धत्वात्, तदुत्तरबुद्धिधाराविशेषात्मकस्य जातिभेदादि यत् स्वरूपं तदसिद्धेरित्यर्थः । अविशिष्टोत्तरकार्यप्रवाहरूपस्य च मैत्रीयपीताद्यनुभवोत्तररूपादिप्रवाहेऽननुभूतपीतादिकचैत्रीयज्ञानप्रवाहे वा पीतादिस्मरणप्रसङ्गेन तदुत्तरकार्यप्रवाहमात्रस्य संस्कारतया विरुद्धत्वात् । न चातीन्द्रियोऽपि संस्कारः सौगतनये सम्भवति, ज्ञानत्वे तस्य परोक्षत्वानुपपत्तेः, अज्ञानत्वे ज्ञानोपादानकत्वायोगात्,

विशेषलक्षणस्य चेति, संस्कारस्येति दृश्यम्, विशेषलक्षणस्येत्यस्य विवरणं तदुत्तरबुद्धिधाराविशेषात्मकस्येति, स्वरूपासिद्धत्वादित्यस्य विवरणं जातिभेदादि यत्स्वरूपं तदसिद्धेरिति, अत्र जातिभेदोऽनुभवितृसन्तानवैजात्यम्, आदिपदेनानुभवप्रभवत्वम्, तदुभयस्वरूपं प्रागेव निरस्तमिति हेतुस्वरूपासिद्ध्या स्वरूपासिद्धिः, प्रागुक्ता व्यधिकरणासिद्धिस्तु पक्षे हेत्वभावप्रयुक्तेत्यनयोर्विशेष इति तत्त्वम् । अविशिष्टोत्तरकार्यप्रवाहमात्रस्य च विरुद्धत्वादित्युदयनाचार्योक्तहेतुं हेत्वादिपूरणेनोपदर्शयति अविशिष्टोत्तरेति, यदनुभवेन संस्कारो जनितस्तदुत्तरकार्यप्रवाहत्वस्य हेतूकरणे तु स्मृत्यजनके रूपादिप्रवाहे मैत्रीयपीताद्यनुभवोत्तरकालभाविनि अननुभूतपीतादिकचैत्रीयज्ञानप्रवाहे वा हेतोस्सत्त्वेनानैकान्तिकत्वं स्यादितिभावः । अतिरिक्तसंस्कारस्य पक्षत्वेऽपि

बौद्धमते आश्रयासिद्धिमाह नचातीन्द्रियोऽपीति, तस्य संस्कारस्य, परोक्षत्वानुपपत्तेरिति, ज्ञानमात्रस्य स्वसंविदितत्वादिति भावः। अज्ञानत्व इति, संस्कारस्याऽज्ञानरूपत्वे तं प्रति ज्ञानमुपादानं न स्यादिति तत्सन्ताने तदुत्पत्तिर्न स्यादित्यर्थः। अयं घटः पटोयमिदं नीलमिदं पीतमित्यादिज्ञानान्तरस्य प्रत्यक्षरूपत्वेऽपि संस्काररूपस्य विज्ञानस्य सन्तानान्तरत्वेन परोक्षत्वे तत्सन्तानान्तःपातिनस्स्मृतिसुखादेरपि परोक्षत्वप्रसङ्गः, तस्यापि सन्तानान्तरत्वेऽनियमप्रसङ्गोऽनवस्थाप्रसङ्गश्चेत्याशयेनाह—

सन्तानान्तरत्वेन ज्ञानस्यापि पारोक्ष्ये तदन्तःपातिनः स्मृतिसुखादेरपि तथाभावप्रसङ्गादिति। तदिदमुक्तरूपं पूर्वापरप्रतीत्योरेकाश्रयत्वावगाहीत्यर्थः, प्रतिसन्धानं प्रत्यभिज्ञानं स्मरणं वा निमित्तवत्तया व्याप्तम्, अनिमित्तकत्वे नियमानुपपत्तेः, तच्चानेककर्तृकत्वे भिन्नाश्रयत्वरूपे नास्तीति व्यापकानुपलब्ध्या निमित्तविरहेण विपक्षान्निवर्त्तमानं विश्राम्यति निमित्तवत्येककर्तृकत्वे, एकाश्रयत्व इत्यर्थः। तदियं व्यतिरेकप्रतिबन्धसिद्धिः। एवं सति चान्वयोऽपि नर्त्तकीभ्रूलताक्षेपादौ द्रष्टव्यः, सैव हि भ्रूलता त एव वा परमाणवः प्रतिसन्धीयमाननानाज्ञाननिमित्तत्वेनावस्थिताः,

सन्तानान्तरत्वेनेति, पूर्वापरविज्ञाने एकाश्रिते प्रतिसन्धीयमानत्वादित्यनुमानहेतुघटकेन प्रत्यभिज्ञानस्मरणान्यतरलक्षणप्रतिसन्धानेनाऽऽत्मसिद्धिमुपसंहरति तदिदमुक्तरूपमिति, अस्य प्रतिसन्धानमित्यनेन सम्बन्धः। उक्तरूपमित्यस्यान्तराऽर्थमाह पूर्वापरेत्यादिना, प्रतिसन्धानमित्यस्य स्वरूपोपवर्णनं प्रत्यभिज्ञानं स्मरणं वेति, प्रतिसन्धानात्मको हेतुः स्वव्यापककारणनिवृत्त्याऽनेककर्तृकाद्विपक्षाद्व्यावर्त्तमानस्स्वव्यापकनिमित्तवत्येककर्तृकत्वे एकाश्रयत्वरूपे विश्राम्यति, प्रतिसन्धानात्मको हेतु-

रेककर्तृकत्वेन साध्येन व्याप्यत इत्यर्थ इत्याह तच्चेति-प्रतिसन्धानञ्चेत्यर्थः। अस्य नास्तीत्यनेनान्वयः। अर्थ इति एककर्तृकत्व इत्यस्यार्थ इत्यर्थः। पूर्वापरज्ञाने एकनिमित्तके प्रतिसन्धीयमानत्वात् नर्त्तकीभ्रूलताविषयकचैत्रमैत्राद्यनेकज्ञानवत्, अत्र दृष्टान्ते भ्रूलताया विषयविधया निमित्तत्वं, पक्षे चैकस्य कर्तुस्तत्सिद्ध्यत् पक्षधर्मताबलात् सामानाधिकरण्यसम्बन्धेन कर्तृत्वविशिष्टमाश्रयत्वविशिष्टं वाऽऽदाय सिद्ध्यति, तथाहि यद्यात्मा विषयविधया निमित्तस्स्याच्चर्हि प्रतिसन्धानस्याहंमात्रविषयकत्वापत्त्या घटपटाद्युल्लेखानुपपत्तिस्स्यात्, तथा च-योऽहं सोऽहमित्याकारस्स्यात्, नतु योऽहं घटमद्राक्षं सोऽहं तं स्मरामीति, तदुल्लेखान्यथानुपपत्तिरूपव्यतिरेकलिङ्गेन विषयविधया निमित्तत्वाभावेन कर्तृविधयाऽऽश्रयविधया वा निमित्तत्वमित्यन्वयानुमानेन परंपरया कर्तृविधयाऽऽत्मनस्सिद्धिः नतु साक्षात्, पूर्वोक्तव्यतिरेकानुमानेन च कर्तृविधयैव साक्षात्सिद्धिरित्यभिलपितसिद्धिसाधनत्वाद्व्यतिरेकस्य प्रथममुपन्यासः पश्चादन्वयस्येत्यभिप्रायकं नारायणव्याख्यानमुपदर्शयति—

अत्र नानाज्ञानकर्तृतया प्रतिसन्धीयमानस्य नानाज्ञानकर्तुरात्मनः साक्षाद्व्यतिकेरेण सिद्धेरन्वये नानाज्ञाननिमित्तमात्रभूतभ्रूलतादृष्टान्तेन पक्षेऽपि नानाज्ञाननिमित्तमात्रस्यैकस्य सिद्धेः साक्षाज्ज्ञानकर्तुरात्मनः सिद्ध्यभावाद्व्यतिरेकापेक्षयान्वयस्य जघन्यत्वात् पश्चादुपन्यास इति नारायणः।

अत्र नानाज्ञानेति, एकाश्रयत्वस्य साध्यत्वे तस्य भ्रूलताविषयकचैत्रमैत्रज्ञाने दृष्टान्तेऽसिद्धिः, एकविषयकत्वस्य साध्यत्वे बाधः पूर्वापरज्ञानयोर्भिन्नविषयकत्वादिति पक्षदृष्टान्तोभयसाधारणैकधर्मिसम्बन्धित्वं साध्यं, तथा च यैव मया भ्रूलताऽवलोकिता सैव त्वयापीत्येवं चैत्रमैत्रकर्तृकज्ञानयोर्भ्रूलतारूपैकधर्मिविषय एव प्रतिसन्धानात्र दृष्टान्ताऽसिद्धिः, पक्षीभूतपूर्वापरज्ञानयोश्च चैत्ररू-

पैककर्त्राश्रितत्वेनैकधर्मिसम्बन्धित्वान्न बाध इत्यन्वयोऽप्यात्मसाधको युक्त इत्यभिप्रायेणाह दीधितिकारः—

आश्रयत्वविषयत्वसाधारणैकधर्मिसम्बन्धित्वमात्रे साध्येऽन्वयोऽपि युक्त इति दीधितिकारः। विरुद्धधर्मविरहिविषयत्वेन तु विशेषणीयमत्र प्रतिसन्धानम्, अन्यथा य एव बालस्त्वया दृष्टः स एव युवा मयेति प्रतिसन्धानेनानेकान्तात्, युवा बाल इत्यनेन दृश्यगोचरस्य प्रतिसन्धानस्य दृश्यांशे विरुद्धधर्माध्यासो दर्शितः, त्वया मयेत्यनेन द्रष्ट्रंशे द्रष्टृगोचरस्येति बोध्यम्। तदयं सङ्क्षेपः—स्थिरे तावदात्मनि सोऽहमिति प्रत्यभिज्ञानमेव प्रमाणं, बाधकविरहात्, योऽहं घटमद्राक्षं सोऽहं स्पृशामीति प्रतिसन्धानान्यथानुपपत्तेश्च प्रतिपत्तुरनन्यस्यैव प्रत्येतव्यस्याहमाश्रयत्वात्,

आश्रयत्वविषयत्वेति, पूर्वापरज्ञाने एककर्त्तृके विरुद्धधर्मविरहिविषयकप्रतिसन्धीयमानत्वादित्यनुमाने हेतौ विरुद्धधर्मविरहिविषयकत्वविशेषणोपादानात्त्वया मयेति भिन्नकर्त्तृपदवाच्ययुष्मदस्मद्रूपभिन्नकर्त्तृकज्ञानद्वयप्रतिसन्धानस्यैककर्त्तृकत्वाभाववति ज्ञाने विषयतासम्बन्धेन सत्त्वेऽपि न व्यभिचारः, एकधर्मिसम्बन्धित्वस्य साध्यत्वे बालो युवेति पदवाच्यबालयुवात्मकभिन्नविषयरूपभिन्नधर्मिसम्बन्धिज्ञानद्वयविषयकप्रतिसन्धानस्यैकधर्मिसम्बन्धित्वाभाववति ज्ञाने विषयतासम्बन्धेन सत्त्वेऽपि न व्यभिचार इत्याह विरुद्धधर्मविरहिविषयत्वेनेति, कः पुनरात्मस्थैर्यन्यायः, प्रतिसन्धानमित्यारभ्य प्रतिसन्धानेनानेकान्तादित्यन्तेन सन्दर्भेण निष्टङ्कितमर्थं निष्कृष्योपदर्शयति तदयं सङ्क्षेप इत्यादिना क्षणभङ्गभङ्गेनाश्रयवासनयोः स्थैर्ये बाधकाभावादितीत्यन्तेन। तत्र स्थिरे तावदात्मनीत्यारभ्य प्रत्येतव्यस्याहमाश्रयत्वादित्यन्तेन प्रतिसन्धानमित्यारभ्य

देयमित्यपि केचिदित्यन्तस्य निर्गलितार्थोपदर्शनम्। एषोऽपि तासामुपादानोपादेयभावेनाप्युपपद्यत इति चेदित्यारभ्य वास्तवसादेश्याऽभावेन चेत्यन्तस्य निर्गलितार्थमाह—

अथ कार्यकारणभावादनहंरूपेपि तत्राहंत्वारोपो वासनावशाच्छरीर इव तदभेदश्च स्वात्मन्यारोप्यते तत एव, एतेन पूर्वप्रतीत्याश्रये साक्षात्क्रियमाणत्वं व्याख्यातमिति चेत्, न, बाधकाभावात्, चिरान्तरितानां कार्यकारणभावे मानाभावाच्च, साक्षात्परम्परासाधारणकार्यकारणप्रवाहस्य चातिदुर्वचत्वात्, नियतं पौर्वापर्यन्तावदस्तीति चेत्, न, शिष्याचार्यधियामपि तत्सत्त्वात्, सादेश्ये सतीति चेत्, न, स्थिरस्यैकदेशस्य भवद्भिरनभ्युपगमात्, अभ्युपगमे वा स एवात्मेति सिद्धं नस्समीहितं, देहस्यापि बाल्यादिभेदेन भेदात्,

अथ कार्यकारणभावादित्यारभ्य देहस्यापि बाल्यादिभेदेन भेदादित्यन्तेन। तत्र पूर्वापरज्ञानस्वरूपे। शरीर इवेति, यथाऽनहंरूपेऽपि शरीरे वासनावशात्कृशोऽहमिति प्रत्ययात्मकोऽहन्त्वारोपस्तद्वदित्यर्थः, पूर्वप्रत्ययरूपाहमास्पदाभेदोऽहमास्पदे उत्तरज्ञाने आरोप्यते वासनावशादेवेत्याह तदभेदश्चेत्यादि, बाधकाभावादिति स्थिरात्मनीति शेषः, चिरान्तरितानां कार्यकारणभावे मानाभावाच्चेति, योऽहं घटमद्राक्षं सोऽहं घटं स्पृशामीत्यत्र घटदर्शनरूपस्य पूर्वज्ञानस्य घटस्पार्शनरूपस्योत्तरज्ञानस्य चानेकज्ञानक्षणव्यवहितस्यैवं पटानुभवपटस्मृत्यादीनां बहुज्ञानक्षणान्तरितानां कार्यकारणभावे मानाभावाच्चेत्यर्थः। कारणकोटावव्यवहितत्वमविवक्षित्वाऽऽशङ्कते नियतमिति। ननु देह एव स्थिरैकदेशरूपोऽस्त्वित्यारेकायामाह—देहस्यापीति, एकसन्तानत्वं चेत्यारभ्य तत्र न सम्भवतीत्युक्तत्वादित्यन्तस्य पूर्वोक्तग्रन्थस्य सङ्क्षेपार्थमाह—

सन्तानैक्यमेव तथास्तीति चेत्, किं सन्तानत्वं, कार्यकारणप्रवाहत्वमिति चेत्, अनतिप्रसक्तस्य तस्यैव दुर्वचत्वात्, सुषुप्तौ सन्तानविच्छेदाच्च। प्रवृत्तिविज्ञानसन्तानोच्छेदेऽप्यालयविज्ञानसन्ताना अनुवर्त्तन्त इति चेत्, जागरे स्वतन्त्रसन्तानद्वयाननुभवात्। सर्वं एवालयोऽनुभूयते स्वमात्रसाक्षिणा स्वेन केनचित् परेणापि, स चोपादानं प्रवृत्तिविज्ञानस्यापि, ज्ञानद्वयोपादानत्वाविरोधात्, अनुपादानस्यापि प्रवृत्तिविज्ञानस्य ज्ञानाद्यन्तरनिमित्तत्वात् नासत्त्वं, न वा सन्तानानन्त्यम्, आश्रयश्च प्रवृत्तिविज्ञानस्य सुखादेश्च, अत एवालय इत्युच्यते, गृह्यते चाहं जानेऽहं सुखीत्यादिना स्वोपादेयेन प्रवृत्तिविज्ञानान्तरेणेति चेत्, शिष्याचार्यधियां कुतो नैकसन्तानत्वं, सादेश्यादेर्नियामकस्य निराकृतत्वात्, वैजात्यादिति चेत्, न, सन्तानयोर्वैजात्ये मानाभावात्, अनन्तालये वैजात्ययोः कल्पनामपेक्ष्य एकालयकल्पनाया एव न्याय्यत्वात्, क्षणभङ्गस्य भग्नत्वात्,

सन्तानैक्यमेव तथास्तीति चेदित्यादिना क्षणभङ्गस्य भग्नत्वादित्यन्तेन, तथा नियामकम्, जाग्रद्दशायां प्रवृत्तिविज्ञानसन्तानस्यानुभूयमानत्वेऽप्यालयविज्ञानसन्तानस्याननुभूयमानत्वेन सुषुप्तावपि तदनुवर्त्तनाऽभावादित्याह जागर इति, सन्तानयोः शिष्याचार्यधीसन्तानयोः, सन्तन्यमानानां शिष्यालयधियामाचार्यालयधियाश्चानन्तत्वेन तासु सर्वासु वैजात्यभेदकल्पनामपेक्ष्यैकस्याचार्यालयस्य स्थिरस्यैकस्य शिष्यालयस्य च स्थिरस्य कल्पनमेव लाघवादुचितमिति स्थिरात्मसिद्धिरित्याह अनन्तालय इति, अथवानुभवजन्यसंस्कारस्येत्यारभ्य दृष्टगोचरस्येति बोध्यमित्यन्तस्य पूर्वोक्तग्रन्थस्य निर्गलितार्थमाह—

अपि चान्येनानुभूतस्यान्येन स्मरणे कुतो नातिप्रसङ्गः, एकसन्तानादेरनुभवितृप्रभवत्वस्यैव नियामक-

ताया निरासात्, एकजातीयशरीरदेशतायाश्च जन्मान्तराव्यापकत्वात्, आद्यायां प्रवृत्तौ जन्मान्तरानुभूतस्मरणस्यावश्योपेयत्वात्। अथानुभवशालिनाऽऽलयविज्ञानेन वासनाशालिविज्ञानसन्तान उपादीयते, स च न प्रवृत्तिविज्ञानरूपः, स्वप्नादिना तत्सन्तानोच्छेदेनास्मरणप्रसङ्गात्, किन्त्वालयज्ञानरूपः, तत्र केनचिदुद्भूतवासनाविशिष्टं तेन स्मरणशालिविज्ञानमुपादीयते, कदाचिदेव च स्मृत्युत्पत्तेर्वासनोद्भवस्य भवद्भिरभ्युपेयत्वात्, वासना चालयस्य नीलाविषयत्वादतदाकारत्वादनुपलम्भबाधाच्च यदि नीलादिरूपा वा वैजात्यरूपा वा न सम्भवति,तदातिरिक्तैवास्तु सन्तन्यमाना, मैवं, व्यधिकरणाया वासनायाः स्मृतिजनकत्वेऽतिप्रसङ्गात्, स्वाश्रयोपादेये जनकत्वात् न तथेति चेत्, स्वाश्रये जनकत्वमेव किमिति नानुमंस्थाः, क्षणभङ्गभङ्गेनाश्रयवासनयोः स्थैर्ये बाधकाभावादिति ।

अपि चान्येनेत्यादिना स्थैर्ये बाधकाभावादित्यन्तेन । जन्मान्तराव्यापकत्वादिति, जन्मान्तरे शरीरस्य वैजात्येन पूर्वभवशरीरापेक्षयैतद्भवशरीरस्यैकजातीयत्वाभावेनैकजातीयशरीरदेशताया अभावेऽपि स्मरणसद्भावेन व्यतिरेकव्यभिचारान्न तस्या नियामकत्वं सम्भवतीत्यर्थः। ननु जन्मान्तरे पूर्वजन्मानुभूतस्य स्तन्यपाननिष्ठेष्टसाधनत्वस्य स्मरणमेव न भवतीत्यत आह आद्यायामिति, व्यधिकरणाया इति वासना प्रवृत्तिसन्तानभिन्नसंस्कारसन्तानगता, स्मृतिस्तु प्रवृत्तिसन्तानगतेत्यतो विभिन्नाश्रयगताया इत्यर्थः, न तथा नातिप्रसङ्गः, विरुद्धधर्मविरहिविषयत्वेन तु विशेषणीयमत्र प्रतिसन्धानमित्युक्तं पूर्वं तत्र चार्वाकशङ्कामुखेन तन्मतखण्डनार्थमुपक्रमते—

न चेदं विरुद्धधर्मसंसर्गविरहविषयत्वमसिद्धम्, देहस्यैव चेतनत्वात्, तथा च पूर्वापराहंप्रत्ययास्पदयोर्भेदाग्रहादभेदप्रतिसन्धानं नानुपपन्नम्, उपपन्नश्चाहं जानामीत्यादिकः प्रत्ययः, भवतामिवास्माकमपि ज्ञानस्याज्ञानोपादेयत्वादिति वाच्यम्, मृतदेहवद्देहत्वभूतत्वमूर्त्तत्वरूपादिमत्त्वादिना जीवतोऽपि देहस्याचेतनत्वात्, न च भूतानां समुदायपर्यवसितं चैतन्यं, प्रतिदिनं तस्यान्यत्वे पूर्वपूर्वदिवसानुभूतस्यास्मरणप्रसङ्गात्, नापि प्रत्येकपर्यवसितम्, करचरणाद्यवयवविगमे तदनुभूतस्य स्मरणायोगात्, देहस्य चैतन्ये च बालस्य प्रथमप्रवृत्तिप्रसङ्गात्, इच्छाद्वेषावन्तरेण प्रयत्नानुत्पत्तेः, इष्टाभ्युपायतानुसन्धानं विनेच्छानुत्पत्तेः, इह जन्मन्यननुभूतस्य प्रतिबन्धस्यास्मृतौ प्रतिसन्धानायोगात्, जन्मान्तरानुभूते चानुभवितरि भस्मसाद्भूतेऽन्येनास्मरणात्, अनुभवादीनां प्रवृत्त्यन्तानां कार्यकारणभावस्येहैव जन्मनि निश्चितत्वात्, तदभावे तदभावस्य सुलभत्वात्, अन्यथा त्वतत्त्वप्रसङ्गात्,

न चेदमिति, शरीरस्य चेतनत्वे तस्याहारनिहारपुद्गलाधीनोपचयापचयाभ्यां प्रतिक्षणं भिन्नत्वेनानुभवितृसर्त्तृभेदात्कथं प्रतिसन्धानमित्यत आह तथा चेति, देहस्य चेतनत्वे चेत्यर्थः। यथा नैयायिकानां मते ज्ञानानात्मकेनात्मनोपादीयते ज्ञानं तथाभूतवादिनामस्माकं मतेऽपि ज्ञानानात्मना शरीरेणेत्याह भवतामिवेति, मृतदेहवदिति जीवदेहमचेतनं देहत्वाद् भूतत्वान्मूर्त्तत्वाद्रूपादिमत्त्वाद्वा मृतदेहवदिति प्रयोगोऽत्र द्रष्टव्यः, प्रयत्नानुत्पत्तेरिति प्रवृत्तिं प्रत्युपायेच्छाया निवृत्तिं प्रत्युपायद्वेषस्य कारणत्वात् तादृशेच्छां प्रति चेष्टसाधनत्वज्ञानस्य तादृशद्वेषं प्रति चानिष्टसाधनत्वज्ञानस्य कारणत्वात्तदुभयाभावेनोपायेच्छाद्वेषाभावेनाऽऽ-

दानहानफलकप्रवृत्तिनिवृत्ती न स्यातामितिभावः, प्रतिबन्धस्य तृप्त्याख्यफलेन सह स्तन्यपानस्य कार्यकारणभावात्मकाविनाभावस्य, इष्टसाधनत्वस्येति यावत्, जन्मान्तरानुभूत इति–इष्टसाधनत्व इति शेषः, अस्मरणादिति स्मरणायोगादिति पाठान्तरम्, तदभावे तदभावस्य कारणाभावे कार्याभावस्य, अतत्त्वप्रसङ्गादिति तत्त्वव्यवस्था न स्यादित्यर्थः,

अत एव नेन्द्रियाणि चेतयन्ते, दर्शनस्पर्शनाभ्यामेकार्थग्रहणाच, नहि दर्शनस्पर्शनचेतनभेदे यमेवाद्राक्षं तमेव स्पृशामीति प्रतिसन्धानं घटते, न च मनस्तथा, तस्य करणत्वेनैवानुमानादिति प्रतिबन्धसिद्धिः, परलोकात्मसिद्धिश्च, अनादिश्चासौ, वीतरागजन्मादर्शनात्, सरागजन्मदर्शनादिति सूत्रार्थः, पूर्वजन्मन्यपि प्रथमप्रवृत्त्यनुरोधेन तत्पूर्वस्य, एवं, तत्तत्पूर्वस्य जन्मनः सिद्धेरित्यर्थः । अनन्तश्च, सतोऽनादित्वात्, द्रव्यं च, समवायिकारणत्वात्, विभुश्च, नित्यद्रव्यत्वे सत्यमूर्त्तत्वात्, अमूर्त्तश्च, निष्क्रियत्वात्, निष्क्रियश्च नित्यत्वे सत्यस्मदादिप्रत्यक्षत्वात् प्रत्यक्षधर्माश्रयत्वाच्चेति, तर्काश्चात्र भवन्ति, आदिमत्त्वे प्रथमप्रवृत्त्यनुपपत्तौ सर्वथैवाप्रवृत्तिप्रसङ्गः, सान्तत्वेऽनादेः सत्त्वानुपपत्तिप्रसङ्गः, अद्रव्यत्वे निर्गुणत्वप्रसङ्गः,

अत एवेति उक्तयुक्त्येत्यर्थः, योऽहं घटमद्राक्षं सोऽहं तं स्पृशामीत्येककर्तृकघटविषयकचाक्षुषस्पार्शनाश्रयत्वस्य चक्षुरादावसंभवात्तद्व्यतिरिक्तात्मसिद्धिरित्याह दर्शनस्पर्शनाभ्यामेकार्थग्रहणाच्चेति, तथा चेतनम्, निषेधे हेतुमाह तस्येति, सुखादिप्रत्यक्षमिन्द्रियकरणकं प्रत्यक्षत्वात् रूपादिविषयकचाक्षुषादिप्रत्यक्षवदिति सामान्यानुमानेनेन्द्रियकरणकत्वं सिद्धं ततस्तच्च न बहिरिन्द्रियकरणकं तद्व्यापारविगमेऽप्युपजायमानत्वादितीतरबाधकानुमानेन बहिरिन्द्रियाकरणकत्वे सिद्धे तच्च बहिरिन्द्रियातिरि-

क्तेन्द्रियकरणकं चक्षुरादीन्द्रियाकरणकत्वे सतीन्द्रियकरणकत्वादिति परिशेषानुमानेन मनसः करणतयैव सिद्धेरितिभावः। प्रतिबन्धसिद्धिरिति एतावता प्रबन्धेन विरुद्धधर्मविरहिविषयकप्रतिसन्धानैककर्तृकत्वयोर्व्याप्तिरुपपादितेत्यर्थः, ननूक्तरीत्या व्याप्तिसिद्धावुक्तानुमानेन भवत्वेतद्भवे पूर्वापरप्रतीत्योरेककर्तृकत्वेनात्मसिद्धिः, पूर्वोत्तरभवे तु कथमित्याशङ्कायामाह अनादिश्चासाविति। नन्वात्मनोऽन्यथानुपपद्यमानसरागजन्मत्वेनैतद्भवकारणत्वेनाव्यवहितपूर्वभवस्य सिद्धावपि तत्पूर्वभवादीनां कथं सिद्धिरित्याशङ्कायामुक्तसूत्रस्यैव भावार्थमाह पूर्वजन्मन्यपीति। अनादित्वे च सिद्धे आत्मा अनन्तः सत्त्वे सत्यनादित्वात्, यन्नैवं तन्नैवं, यथा घट इत्यनुमानेनात्मनोऽनन्तत्वसिद्धिरित्याह अनन्तश्चेति, अत्र सत्त्वे सतीति विशेषणात् प्रागभावे न व्यभिचारः। आत्मा विभुः नित्यद्रव्यत्वे सत्यऽमूर्त्तत्वादिति विभुत्वसाध्यकानुमाने परमाणुषु व्यभिचारवारणायोपात्तस्याऽमूर्त्तत्वस्य विशेष्यस्य पक्षेऽसिद्धिनिवृत्त्यर्थमाह अमूर्त्तश्चेति। आत्मनि पक्षे निष्क्रियत्वहेतोरऽसिद्धिनिवृत्त्यर्थमाह निष्क्रियश्चेति, तत्र हेतुः नित्यत्वे सत्यसदादिप्रत्यक्षत्वात् नित्यत्वे सति जातिभिन्नप्रत्यक्षधर्माश्रयत्वाद्वेति, अत्र नित्यत्वे सतीति विशेषणान्न रूपधर्ममादाय घटादौ व्यभिचारः, जातिभिन्नेतिविशेषणात् पृथिवीत्वजातिमादाय न परमाणौ व्यभिचार इति॥ आत्मा अनादिरित्यनुमाने विपक्षबाधकतर्कमाह आदिमत्त्वे इति, आत्मा आदिमान् यदि स्यात्तर्हि स्तन्यपाने इष्टसाधनत्वज्ञानाभावान्न तत्रादिप्रवृत्तिस्स्यात्, तथात्वे च न कुत्रापि प्रवृत्तिस्स्यादिति निश्चेष्टं जगत्स्यादिति भावः। अनन्तत्वानुमाने तर्कमाह सान्तत्वे इति, अनादिरपि सान्तस्स्यात्तर्हि सत्ताजातिमत्त्वं न स्यात् प्रागभाववदित्यर्थः, द्रव्यत्वानुमाने तर्कमुपदर्शयति अद्रव्यत्वे इति। विभुत्वानुमानोपष्टम्भकतर्कमाह—

अविभुत्वे दहनपवनादेः क्रियानुत्पत्तिप्रसङ्गः, नानादिग्वर्त्तिदहनादिषु युगपददृष्टवदात्मसंयोगाभावात्

युगपत्क्रियानुत्पत्तिप्रसङ्ग इत्यर्थः। न च संयुक्तसंयोगात् तदुत्पत्तिः, साक्षात् क्रियाद्वारकस्य तस्याभावात्, आत्मगुणो हि प्रयत्नः स्वाश्रयसंयुक्तेन शरीरेण साक्षात् संयोगात् संदंशिकायां क्रियां संदंशिकासंयोगाच्च लोहक्रियां जनयति, निष्क्रियद्वारकजनकत्वाश्रयणे शरीरसंयुक्ताकाशसंयोगादपि तथात्वप्रसङ्गात्, तथैव चादृष्टमपि क्रियां जनयेत्, न च तत् सम्भवतीति भावः।

अविभुत्व इति। दहनपवनादावव्यापकस्यात्मनः साक्षात्संयोगाभावेऽप्यऽदृष्टस्य स्वाश्रयसंयुक्ताकाशसंयोगात्क्रियाजनकत्वमिति नोक्ततर्कस्य विभुत्वसाधनेऽनुकूलत्वमिति न च वाच्यम्, संयुक्तसंयोगस्य हि साक्षात्क्रियाद्वारकस्यैव क्रियाजनकत्वम्, अर्थात् संयुक्तसंयोगेन यस्मिन् क्रिया जननीया तस्य येन सह साक्षात् संयोगः स सक्रिय एव स्वीकरणीयः, यथा प्रयत्नवदात्मसंयुक्तसंयोगात् संदंशिकायां लोहे च क्रिया भवति, तत्र लोहस्य संदंशिकया सह साक्षात्संयोगः क्रियाजनकः, संदंशिका च सक्रियैव, संदंशिकायां च शरीरसंयोगः क्रियाजनकः, शरीरमपि सक्रियमेव, शरीरे च न संयुक्तसंयोगः क्रियाजनकः, अतो न तत्र सक्रियसंयोगोऽपेक्षितः, इत्थञ्च दहनपवनादावपि यदि परम्परासंयोगः क्रियाजनकस्स्यात् तदा तत्रापि परंपरासंयोगघटको दहनपवनादिना सह साक्षात् सक्रियपदार्थसंयोग एव क्रियाजनकस्स्वीकरणीयः, अदृष्टवदात्मसंयुक्ताकाशादीनां च न सक्रियत्वमिति न तत्संयोगस्य दहनपवनादिक्रियाकारणत्वम्, अतः साक्षादेवात्मना सह दहनपवनादेस्संयोगः क्रियाजनकोऽभ्युपेयः, स चात्मनो विभुत्वं विना न संभवतीत्याऽऽत्मनो विभुत्वसिद्धिरित्याह न च संयुक्तसंयोगादिति, निषेधे हेतुमाह साक्षादिति, तस्य संयुक्तसंयोगस्य, अदृष्टवदात्मसंयुक्तं यत्सक्रियं साक्षात्तत्संयोगस्याभावादित्यर्थः। तत्र दृष्टान्तमाह आत्मगुणो हीति, तथात्वप्रसङ्गादिति क्रियो-

त्पत्तिप्रसङ्गादित्यर्थः। तथा च या संदंशिका न शरीरसंयुक्ता तत्रापि प्रयत्नेन स्वाश्रयाऽऽत्मसंयुक्तशरीरसंयुक्ताकाशसंयोगात् क्रियोत्पत्तिस्स्यात्, नचानुभवबाधादभ्युपगन्तुं शक्यमित्याशयः। तथैव स्वाश्रयात्मसंयुक्ताकाशसंयोगादेव, अविभुवादाशङ्कते—

अथ जनयतु प्रयत्नो यथा तथा, अदृष्टं तु यथाकथंचित् परम्परया स्वाश्रयसंयोगादेव जनयति, अतिप्रसङ्गस्तु वैभवेऽपि तुल्य इति चेत्, न, लाघवेन स्वाश्रयसंयोगेन जनकताया एव कल्पनात्, अपकृष्टमहत्त्वे चात्मनोऽवयवित्वमनित्यत्वं च स्यात्, मूर्त्तत्वे नित्यस्यास्मदादिप्रत्यक्षधर्मानाधारत्वप्रसङ्गः, विशेषगुणवत आरम्भकत्वप्रसङ्गश्च, सक्रियत्वे मूर्त्तत्वप्रसङ्ग इति शास्त्रार्थसङ्ग्रहः।

अथेति, यथा तथेति, क्वचित् क्रियाद्वारकस्वाश्रयसंयुक्तसंयोगात् क्वचिच्च साक्षात्स्वाश्रयसंयोगादित्यर्थः, यथा कथञ्चिदिति, परंपराघटको येन सह साक्षात्संयोगः क्रियाजनकः स चरमसंयोगप्रतियोगिपदार्थः सक्रियो भवतु अक्रियो वा उभयथाऽपि तत्संयोगेनादृष्टं क्रियाजनकमित्यर्थः, परंपरासंयोगस्य क्रियाजनकत्वे यत्रापि क्रिया न जायते तत्राप्युक्तसम्बन्धस्य विद्यमानत्वेन क्रिया स्यादित्यतिप्रसङ्गस्तु विभुत्वपक्षेऽपि तुल्यः, स्वाश्रयसंयोगस्य मूर्त्तमात्रे सद्भावादित्याशयेनाह अतिप्रसङ्गस्त्विति, आत्मनि विभुत्वसाधकानुमाने तर्कान्तरमप्युपदर्शयति—अपकृष्टमहत्त्वे चेति, आत्मा अमूर्त्तः निष्क्रियत्वादित्यनुमाने तर्कमाह—मूर्त्तत्वे इति, आत्मा नित्यत्वे सति मूर्त्तस्स्यात् तदा जातिभिन्नास्मदादिप्रत्यक्षधर्मानाधारःस्यात्, परमाणुवत् मनोवच्चेत्यर्थः, विशेषगुणवत इति आत्मा यदि नित्यत्वविशिष्टमूर्त्तत्वे सति विशेषगुणवान् स्यात् द्रव्यारंभकस्स्यात् इत्यर्थः। आत्मनि निष्क्रियत्वानुमाने तर्कमाह सक्रियत्व इति, आत्मा सक्रियस्स्यात् मूर्त्तस्स्यादित्यर्थः, आत्मनि विभुत्वानुमानस्य बाधकानुमानं कस्यचिन्मतेनाह—

अणुरेवासौ, विज्ञानकारणसंयोगाधारत्वात्, मनोवत्, अणीयांसमणोरपीति च बाधप्रतिरोधाविति कश्चित्, तदयुक्तम्, आत्मन्यविभौ मनसोऽणुत्वासिद्धेः, तत्संयोगादेव क्रियाक्रमोपपत्तेः, आगमस्य तु महतोऽपि महीयांसमिति प्रथमपादमपहायोपन्यस्तस्याकिञ्चित्करत्वात्, संपूर्णस्य च दुर्बोधत्वपरत्वात्, तदलमनेन। स्यादेतत्-सिद्धोऽप्ययमीदृशो हेय एव, आत्मदर्शी हि तदुपकारिणि रज्यते तदपकारिणं च द्वेष्टि, रागद्वेषौ च मूलं संसारस्य, यस्तु न तं पश्येत् नासौ तदुपकारिणि रज्येत वा तदपकारिणं द्विष्याद्वा, ततो न संसरेदिति जाङ्गुलिकेन नैर्विष्यवन्मुमुक्षुणापि नैरात्म्यमेव भावनीयमिति चेत्, न,

अणुरेवेति, अनुमानेन बाधमुपदर्श्य श्रुत्या तदाह अणीयांसमिति, आत्मनोऽविभुत्वे युगपत्सर्वेन्द्रियेण सह संयोगाभावाद्येनेन्द्रियेण सह संयोगस्तेनैवेन्द्रियेण ज्ञानमिति ज्ञानक्रमोपपत्तेर्मनसोऽणुत्वमेव न स्यात् तदा कुतस्तद्दृष्टान्तस्यावकाशः, विभुत्वे तु युगपत्सर्वेणेन्द्रियेणात्मनस्संयोगाद् युगपज्ज्ञानोत्पादप्रसङ्गो मा प्रसाङ्क्षीदिति युगपज्ज्ञानानुत्पादान्यथानुपपत्त्या सिद्ध्यत्यणु मनः इत्याशयेन कस्यचिन्मतं निरस्यति तदयुक्तमिति, सम्पूर्णस्य महतोऽपि महीयांसमणीयांसमणोरपीत्यस्य, दुर्बोधत्वपरत्वात् दुर्बोधो ह्ययमात्मेत्येतावन्मात्रतात्पर्यकत्वात्। जाङ्गुलिकेन यथा सर्पदष्टमुद्दिश्य निर्विषो भवतु निर्विषो भवत्विति भावना भावनीया तथा मुमुक्षुणापि नाहं कश्चित् किमपि मम नास्ति न किञ्चिदपि वस्तु स्थिरं विश्वमेव क्षणभङ्गुरमलीकञ्चेति भावना भावनीयेत्याह जाङ्गुलिकेनेति, स्थिरस्यात्मनोऽभावे यथा मैत्रस्य सुखमभिप्रेत्य चैत्रस्य नैवं भवति मया मैत्रसुखभागिना भवितव्यमिति तथैतत्क्षणवर्तिन आत्मनस्स्वर्गाऽपवर्गक्षणवर्त्तिन आत्मनो भिन्नत्वेन तस्य मया स्वर्गाऽपवर्गसुखभागिना भवितव्यमित्यपि न स्यात्, तादृशेच्छाऽ-

भावे च मुमुक्षुत्वमेव न स्यात्, अतस्तदन्यथाऽनुपपत्त्या स्थिरात्मदर्शनमेवाङ्गीकर्त्तव्यम्, न च स्थिरात्मदर्शिनो मुमुक्षोर्विषमिश्रितान्नवत्संसारसुखमपि दुःखमिश्रितत्वाद् वस्तुगत्या दुःखरूपमेवेति दुःखहानेच्छासत्त्वे मुमुक्षुत्वव्याघात इति वाच्यम् फलेच्छाया उपायेच्छाद्वारा प्रवृत्तिं प्रति कारणतया फलेच्छाया अभावे उपायेच्छाया अप्यभावात्कारणाभावेन मोक्षरूपेष्टसाधने चित्तवृत्तिनिरोधादौ प्रवृत्तिरेव न स्यात्, तदभावे मोक्षोऽपि निरुपायः कथं स्यादिति तदन्यथानुपपत्त्या प्रवृत्तौ तादृशेच्छायास्तदुपयोगितयैवाङ्गीकर्त्तव्यत्वात्, मोक्षविरोधिविषयकेच्छाया एव मुमुक्षुत्वव्याघातकत्वात्, उक्तेच्छायास्त्वनुकूलत्वमेवैष्टव्यम्, तथाहि यो हि सांसारिकसुखं विषमिश्रितेष्टाऽन्नवद्दुःखसंभिन्नत्वेनानभिलाषुकः मोक्षसुखमेव तद्विपरीतात्मकमुपादित्सुस्स तद्धेतौ रक्तो न स्यात्तर्हीष्टसाधनत्वस्य चिकीर्षादेश्चाऽभावेनोदासीनवत् नैव तदुपादानार्थं प्रवर्त्तेत, तदननुकूले द्विष्टश्च न स्यात्, तथाच द्वेषादिकारणाऽभावेन नैव निवर्त्तेत तदभावे च न मोक्षसुखात्मकफलोत्पत्तिरिति मोक्षैकहेतूपादित्सा तद्द्वारा मोक्षसुखफलेच्छा च प्रवृत्त्यङ्गतयैवाभ्युपगन्तव्येति सा न मुमुक्षुत्वविघातिकेति सर्वमभिप्रेत्य समाधत्ते नैयायिकः—नेति, तत्र हेतुमाह—

अनात्मदर्शिनो मुमुक्षुत्वव्याघातात्, न ह्यात्मानमप्रतिसन्धाय कश्चिद् दुखं हातुमिच्छेत्, सुखं वाऽवाप्तुं, मया स्वर्गापवर्गभागिना भवितव्यमित्यभिप्रायस्य यावदभियोगमनुवृत्तेः, अभियोगः प्रवृत्तिः अननुवृत्तावभियोगनिवृत्तौ फलासिद्धेः, इयं च नैरात्म्यदृष्टिर्नास्तिक्यं द्रढयेत्, नास्ति परलोकः नास्ति कर्मफलमिति निश्चयो नास्तिक्यं, तच्चामुष्मिकभयाभावेन प्रबलविषयतृष्णां, सा च तमोऽनन्तं प्रस्रवति, न चेदेवं कुतो यावज्जीवेदित्यादयो निःशङ्कमुल्लापाः,

अनात्मदर्शिनो मुमुक्षुत्वव्याघातादिति, एतदेव प्रपञ्चयति—न ह्यात्मानमप्रतिसन्धायेति, अभियोगनिवृत्तौ प्रवृत्त्यभावे, तमः संसारमूलं मिथ्याज्ञानम्, परोक्तमिष्टापत्त्या परिहरति—

यदुक्तमुपकारिणि रज्येतापकारिणं द्विष्यादिति, तदेवमेतदिति, यो हि मोक्षमुपकारं मनुते स तद्धेतौ रक्तस्तमुपाददानस्तत्परिपन्थिनं(नं द्विष्या)द्वेषादलंप्रत्ययाद्वा परिहरन्नेव समीहितं समासादयेत्,न तु विपर्ययात् मोक्षहेतोरनुपादानादित्यर्थः। यस्तु भोगमुपकारं मनुते सोऽपि तथेत्यनुकूलमेव गृहीतं मन्दैः,अन्यत्राप्यनुरज्येतान्यत्रापि द्विष्यादिति तु न दृष्टं वैद्यकेऽपि, तथापि दुःखहेतुत्वादिन्द्रियादिवदसौ हीयतामिति चेत्, न,

यदुक्तमुपकारिणीति। तत्परिपन्थिने द्वेषादिति तत्परिपन्थिविषयकद्वेषादित्यर्थः,परिहरन्नेवेति अत्र तमिति शेषः, तत्परिपन्थिनं द्वेषादित्यपिपाठः, अत्र परिपन्थिनमित्यस्य परिहरन्नेवेत्यनेनान्वय इति तमिति न शेषः। तथेति भोगहेतौ रक्तः, तमुपाददानस्तत्परिपन्थिनं द्वेषादलं प्रत्ययाद्वा परिहरन्नेव समीहितं समासादयेत्, नतु विपर्ययादित्यर्थः। अनुकूलमेव गृहीतं मन्दैरिति, अत्र प्रतिकूलत्वेनेतिशेषः। अनुकूलमेव गृहीतं प्रतिकूलत्वेनेत्यपि बौद्धाधिकारे पाठः। उपकारिणि रज्येत अपकारिणि द्विष्यादित्यस्माकमिष्टमेव तत् मन्दैर्बौद्धैरनिष्टत्वेन गृहीतमिति भावः। अन्यत्राऽनुरज्येतेत्यादि—अन्यत्राप्यनुरज्येतान्यत्रापि द्विष्यादिति तु न दृष्टं गोवैद्यकेऽपीति पाठान्तरम्। अन्यत्र स्वेष्टस्याऽसाधने, अन्यत्र स्वेष्टाऽपरिपन्थिनि,

यादृशो दुःखहेतुस्तादृशो हेय एव, सोपाधिश्च तथा, निरुपाधिरपि हीयतामिति चेत्, न, अशक्यत्वात्, निष्प्रयोजनत्वाच्च,नहि तस्य हानं विनाशो,नित्यत्वात्, नापि वियोगो, व्यापकत्वात्,नाप्यप्रतिपत्तिः, यथा यथा

तदर्थं यत्नस्तथा तथा प्रतिपत्तेः, उपेक्षेतेति चेत्, कृतैवैतावन्तं कालमुपेक्षा, तथापि तद्धानासिद्धेः, यत्नाभावेऽप्यहं गौरोऽहं सुखीत्यादिप्रतिपत्तेः सन्तन्यमानत्वात्, तत्त्वज्ञानविरहेऽपि संसारस्यानुवर्त्तमानत्वादिति भावः।

सोपाधिश्च तथा—शरीरावच्छिन्नात्मा दुःखहेतुः। अशक्यत्वादित्यस्य हेतोरुपपादनार्थमाह न हि तस्येति, वियोग इति, विप्रयोग इत्यपि पाठः; विभाग इत्यर्थः, यथा यथात्मनोऽप्रतिपत्त्यर्थं प्रवृत्तिस्तथा तथाऽऽत्मज्ञानमेव, न ह्यात्मानमज्ञात्वा तत्प्रतिपत्तिनिषेधार्थं यत्नस्सम्भवति, अप्रसक्तस्य निषेधाऽयोगादित्याह—नाप्यऽप्रतिपत्तिरिति। आत्मविषयकज्ञाननिमित्तकयत्नाकरणलक्षणोपेक्षां कुर्यादित्याशङ्कते उपेक्षेतेति चेदिति, अद्याप्युपेक्षा कृतैव न च तथाप्यात्महानं सम्पन्नमित्युत्तरयति कृतैवेति, तदेव प्रपञ्चयति यत्नाभावेऽपीति, आत्महानं तदा स्याद्यदि यत्नाकरणे आत्मज्ञानं न स्यात्, यद्वा शरीरव्यतिरिक्ततयाऽऽत्मनो ज्ञानाभावेऽपि मुक्तिनिलयावाप्त्या संसारो नैव प्रवर्त्तेत; न चैतद्द्वयमिति भावः। निष्प्रयोजनत्वाच्चेति पूर्वोक्तद्वितीयहेतोरुपपादनायाह—

निष्प्रयोजनं चैतत्, सोपाधेर्हि त्यागो दुःखहानाय, निरुपाधेस्तु किमर्थं, पुनः सोपाधित्वशङ्कयेति चेत्, न, बीजाभावादिति, कुतः पुनरुपादेयः, तथा सति भावनाक्रमेण निःश्रेयससिद्धेः। किमस्योपादानं, विवेकः, कुतः, अनात्मनः शरीरादेः, किं पुनरत्र प्रमाणं, न्याय आम्नायश्च, न्यायश्च शरीरमेव हि तावन्मूर्धाभिषिक्तमनात्मानमात्मानं मन्यमानस्य तदुपादाय तदनुकूलत्रैलोक्यविषया तृष्णा विजृम्भते, तथा तत्प्रतिकूलविषयद्वेषः, न चैतत्केवलात्मदर्शिनः सम्भवति, निरुपाधेः पुत्रवित्तलोभाभावात्, तैरनुपकार्यत्वात्,

निष्प्रयोजनं चेति। एतत् निरुपाधेरात्मनो हानम्। कथं शरीराद्यनवच्छिन्नात्महानं निष्प्रयोजनमित्यत आह सोपाधेरिति, यावच्छरीरं तावद्दुःखं तन्नाशे तन्नाशः, अवच्छेदकतासम्बन्धेन दुःखादिकं प्रति शरीरस्य कारणत्वेन तदभावे तदभावात्, तथाच शरीरहानौ न तद्विशिष्ट आत्मेति न तत्र दुःखम्, आश्रयाभावे आश्रितानुपपत्तेरिति दुःखहानाय शरीरावच्छिन्नात्मत्यागोऽस्तु, शरीराऽविशिष्टात्मत्यागस्तु किमर्थमिति भावः। बौद्धः शङ्कते पुनरिति, दग्धे बीजे नाङ्कुरो यथा तथा कर्मबीजे दग्धे न भवाङ्कुर इति शुद्धात्मनि कर्मबीजाभावाच्छरीरोत्थानाऽभावे न तत्र पुनस्सोपाधित्वाशङ्का सम्भवतीत्याशयेन निषेधे हेतुमाह बीजाभावादितीति, हानिर्माभूत् उपादेयत्वमपि कथमिति पृच्छति कुत इति, उत्तरयति तथा सतीति, तथा सति आत्मन उपादाने सति। किं रूपमात्मन उपादानमित्यत आह विवेक इति। तदुपादाय शरीरमुपादाय,

छेदक्लेददाहशोषाद्यनुपपत्तेर्विधिनिषेधानधिकाराच्च, जन्मजातिवयोवित्तसंस्काराद्युपग्रहेण तत्प्रवृत्तेः, ततोऽनात्मग्रहो निदानं संसारस्य, मिथ्याज्ञानवत एव हि रागद्वेषाभ्यां प्रवर्त्तमानस्य विहितनिषिद्धानुष्ठानादपूर्वधर्माधर्मोपचयात् संसाराविच्छेदात्। ननु तत्त्वज्ञानवतोऽपि शरीरित्वात् बलवत्तरविषयोपनिपातात् सुखदुःखतद्भोगोत्पादात् तदधीनौ रागद्वेषौ दुर्वारौ, अलंप्रत्ययादिना न तौ, तथा च श्रुतिः—असक्तोऽद्विषँश्च भुङ्क्ते इति चेत्, अस्त्वेवं तथापि भोगेनोपात्तकर्मक्षयार्थं प्रवर्त्तमानस्य विहितनिषिद्धानुष्ठानादपूर्वधर्माधर्मोपचयो दुर्वार इति चेत्,

छेदक्लेददाहशोषाद्यनुपपत्तेरिति, आत्मनः शरीरादिभिन्नत्वेन ज्ञानात् शरीरादिधर्माणां छेदादीनां तत्राऽप्रतिसन्धा-

नादिति हेतोरिति भावः। तत्त्वज्ञानिनो विधिनिषेधानधिकारित्वेन विहितनिषिद्धक्रियाभ्यां तत्कृताभ्यां न धर्माधर्मयोरुत्पत्तिः, अधिकारसम्पत्तेरेव तयोस्सद्भावादिति नाऽनिर्मोक्षप्रसङ्ग इत्यभिप्रायेणाह विधिनिषेधेति, मनुष्यादिजन्मब्राह्मणत्वादिजातिबाला द्यवस्थाधनोपनयनादिसंस्कारादिसम्बन्धेन विधिनिषेधादिप्रवृत्तेरात्मज्ञस्य च स्वात्मनि शरीरसम्बन्धिनां तेषामऽभावनिश्चयान्न विधिनिषेधाधिकारित्वमित्याह जन्मजातीति। तत्प्रवृत्तेः विधिनिषेधप्रवृत्तेः। अनात्मनि शरीरादावात्मग्रहः संसारनिदान-मित्यत्र हेतुमाह मिथ्याज्ञानवत एवेति, अत्र परः शङ्कते नन्विति। अत्रैव समाधानमुत्प्रेक्ष्यापहस्तयति–अलं प्रत्ययादि-नेति। नैयायिकस्समाधत्ते—

अत्रापीदमेवोत्तरम्–अनात्मन्यात्मग्रहो निदानं संसारस्येति, मिथ्याज्ञानवासनासहायं हि कर्म धर्मा-धर्मजननक्षममिति। ननु मिथ्याज्ञानवासनानां धर्माधर्मजनकत्वे मानाभावः, अथ भोगेन कर्मक्षयार्थं प्रवृत्त-स्य तत्त्वज्ञानवतोऽप्यपूर्वधर्माधर्मोत्पादे मोक्षासम्भवात् श्रुतिप्रामाण्यान्यथानुपपत्त्या तत्सिद्धिरिति चेत्, न, आहत्यैव तत्त्वज्ञानस्य धर्माधर्मनाशकत्वात्, नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीति स्मृतेर्नैवमिति चेत्, न, प्रायश्चित्तेनापि दुरितनाशात्,

अत्रापीदमेवोत्तरमिति। मिथ्याज्ञानवासनासहायं हीति, तत्त्वज्ञानिनस्तु मिथ्याज्ञानाभावेन तन्मूलकरागद्वेषयो-रभावात् तन्मूलकविहितनिषिद्धविषयकप्रवृत्त्यभावादपूर्वधर्माधर्मानुत्पत्तौ पूर्वकृतकर्मणो भोगात्प्रक्षये संसारविच्छेदस्सम्भवतीति भावः। श्रुतिप्रामाण्येति तमेव विदित्वाऽतिमृत्युमेतीति न स पुनरावर्तत इत्यादिश्रुतिप्रामाण्येत्यर्थः। तत्सिद्धिः मिथ्या-

ज्ञानवासनानां धर्माधर्मजनकत्वसिद्धिः, आहत्यैवेति भोगं विनैवेत्यर्थः, नैवमिति भोगं विनैव तत्त्वज्ञानस्य धर्माधर्मनाशकत्वं नेत्यर्थः। फलमदत्त्वापि कर्म प्रायश्चित्तेन नश्यति, अन्यथा प्रायश्चित्तकरणमनर्थकं स्यात्, कृतेऽपि प्रायश्चित्ते तस्योत्तरकालं फलदानार्थमवस्थानादित्यभुक्तस्यापि कर्मणः प्रायश्चित्तेन नाशाद् भोगस्य कर्मनाशं प्रति व्यतिरेकव्यभिचाराद् भोगादेव धर्माधर्मनाश इति सामान्यतः कार्यकारणभावो न सम्भवतीति पूर्वपक्षवादी निषेधति—न, प्रायश्चित्तेनाऽपीति, न च कृतं कर्म भोगादेव नश्यति, प्रायश्चित्त तु न तन्नाशार्थं, किन्तु विहितकर्मणि पुरुषस्याधिकारसंपादनार्थं, प्रायश्चित्ते अकृते तस्य कर्मान्तरानर्हत्वात् ब्रह्मघातिवदिति शङ्कते—

न च तस्याधिकारसम्पत्तिरेव प्रयोजनम्, अधिकाराविरोधिन्यपि पातके तद्विधानात्, क्वचिच्च प्राणान्तिकस्यापि तस्य विधानाच्च। न च जन्मान्तरीयमपि पातकमधिकारं विरुणद्धि। न च प्रायश्चित्ताचरणदुःखमेव पातकफलं, नरकादेरिव तस्य तत्फलत्वाश्रवणात्, प्रायश्चित्तवैयर्थ्याच्च। तेन विनापि नरकादेरिव तस्यापि गलेपादिकया दुरितेनैव सम्पादनीयत्वात्। न खलु निवृत्तये कर्मजन्यमनिष्टं विधीयते। अपि तु कर्मणोऽनिष्टसाधनत्वं बोध्यते, विना प्रायश्चित्ताचरणदुःखं तत्तन्महारौरवादिदुःखोपभोगेनापि पापस्य विनाशप्रसङ्गाच्च।

न च तस्याधिकारेति, यस्मिन् पापे कृते अधिकारानर्हत्वं न भवति तस्मिन्नपि प्रायश्चित्तविधानात्, तस्य च प्रायश्चित्तस्याधिकाराऽसंपादकत्वेन न चेत् पापनिवृत्तिः प्रयोजनमानर्थक्यमेव स्यात्, एवमतिपातकस्य मातृगमनादेः प्राणान्तमेव प्रायश्चित्तमुपदिष्टं,न च मृतस्य कर्मार्हत्वसंपादनं संभवतीति तत्प्रायश्चित्तस्यानर्थक्यं स्यादित्याशयेन प्रतिक्षिपति अधिकाराविरोधिन्यपीति,

ननु माभूदतिपातकस्य मातृगमनादेः प्राणान्तं प्रायश्चित्तमेतद्भवीयक्रियाधिकारसंपादकं, जन्मान्तरीयक्रियाधिकारसंपादकं तु भविष्यतीति चेत्, स्यादेतत् यद्येतद्भवीयमातृगमनादिपातकं जन्मान्तरीयाधिकारानर्हत्वसंपादकं स्यात्, न चैवमित्याह न च जन्मान्तरीयमपीति, अथ कृतं कर्म भोगादेव नश्यति, न च प्रायश्चित्तेन कर्मणो भोगफलं विनापि विनाशाद्व्यभिचारः, तत्रापि कर्मफलेन प्रायश्चित्ताचरणजन्यदुःखोपभोगेनैव कर्मनाशादिति चेत्, मैवम्, ब्रह्मघातमातृगमनादिजन्यकर्मणो नरकादिदुःखोपभोगफलस्यागमोपदिष्टत्ववत्तस्यागमानुपदिष्टत्वात्, कर्मणोऽवश्यं फलदानप्रत्यलत्वेनानिच्छोरप्यतिपातकिनो नरकादिपातफलवत् प्रायश्चित्तं विनापि कर्मणो माहात्म्यादेव तदाचरणजन्यदुःखफलस्याप्यवश्यं भावित्वेन प्रायश्चित्तस्याप्यानर्थक्यप्रसङ्गाच्च इत्याह न च प्रायश्चित्ताचरणदुःखमेवेति। एतदेवोपपादयति तेन विनापीति, प्रायश्चित्तमन्तरेणापीत्यर्थः, न कलञ्जं भक्षयेदित्यादिवाक्यं कलञ्जकर्मकभक्षणं न कर्त्तव्यमित्येवं कलञ्जभक्षणनिवृत्तिबोधजनकं न, येन कलञ्जभक्षणादिकरणे तन्निवृत्तिर्माभूत् नरकादिस्तु कथमिति शङ्क्येत, किन्तु कलञ्जभक्षणमनिष्टसाधनमिति बोधजनकमेव, तथा च कृते कलञ्जभक्षणे यदि तज्जन्यमनिष्टं न स्यात्तदा तद्बोधकस्य न कलञ्जं भक्षयेदिति निषेधवाक्यस्याप्रामाण्यं स्यात्, अतोऽवश्यं कलञ्जभक्षणेनाऽनिष्टं सम्पादनीयं, तथाच प्रायश्चित्ताचरणदुःखं यदि कलञ्जभक्षणफलं स्यात् तदा प्रायश्चित्ताऽकरणेऽपि तत्स्यादेवेत्याशयेनाह न खलु निवृत्तये इति, प्रायश्चित्तकरणेऽपि तज्जन्यं यस्य दुःखं न जातं तस्य कर्मनिवृत्त्यभावेन प्रायश्चित्तं निष्फलमेव प्रसज्येत, कृतेपि प्रायश्चित्ते कर्मणस्तदवस्थानात्, तद्भोगार्थं महारौरवादिनरकपातश्च स्यादित्याह विना प्रायश्चित्तेत्यादीति। प्रायश्चित्तस्य कर्मनाशफलकत्वे श्रुत्यादिप्रमाणमाह—

तस्मादेनसः पूतो भवति तरति ब्रह्महत्यां योऽश्वमेधेन यजते—ब्रह्महत्यां व्यपोहतीत्यादिश्रुतिस्मृतिभ्यो दुरितनाशस्यैव प्रायश्चित्तफलत्वावगमाच्च । अत एव गृहदीपेष्ट्यादिवन्नैमित्तिकमेव प्रायश्चित्तमिति परास्तम्, फलान्तरकल्पनागौरवप्रसङ्गात्, कीर्त्तनकर्मनाशापारगमनादीनामपि धर्मनाशकत्वस्यागमिकत्वाच्च, स्मृतेरागमविधिबोधितनाशकानाश्यकर्मपरत्वात्, बोधयति चागमो ज्ञानस्यापि कर्मनाशकत्वं,

तस्मादित्यादिना, एनसः पापात्, एनसः पूतो भवतीत्यादिश्रुतिस्मृतिभ्योऽप्यश्वमेधादिरूपप्रायश्चित्तस्य ब्रह्मघातादिजन्यपापशुद्ध्यर्थमुक्तत्वेन प्रायश्चित्तं दुरितनाशफलकमेव, न त्वधिकारसम्पत्त्यादिफलकमिति भावः । अत एव गृहदीपेष्ट्यादि यथा गृहदाहरूपनिमित्तं प्राप्य क्रियते, तस्य तु प्रयोजनमन्यदेव, तथा प्रायश्चित्तमपि निषिद्धकर्मासाद्य क्रियते, तस्य तु प्रयोजनमन्यदेव, न तु निषिद्धकर्मजन्यपापनिवृत्तिः, तथा च निषिद्धकर्मजन्यपापस्य भोगादेव नाश इत्यपि निरस्तं, फलान्तरकल्पने गौरवेण एनसः पूतो भवतीत्यादिना प्रायश्चित्तस्य दुरितनाशफलकत्वस्योपदर्शनेन च दुरितनिवृत्तेरेव तत्फलत्वावधारणात्, किं च "कर्मनाशाजलस्पर्शात्, करतोयाविलंघनात् । गंडकीबाहुतरणाद्धर्मः क्षरति कीर्तनात् ॥१॥" इत्याद्यागमेन कर्मनाशानदीजलस्पर्शादीनां धर्मनाशकत्वस्य सिद्धत्वेन भोगं विनापि तेभ्यो धर्मस्य विनाशेन व्यतिरेकव्यभिचारस्य तदवस्थत्वादित्याह अत एव गृहेति, नाभुक्तं क्षीयत इत्यादिस्मृतेश्चागमविधिबोधिततत्त्वज्ञानप्रायश्चित्तादिरूपनाशकानाश्यप्रारब्धकर्मपरत्वमेवेति भवत्येवं तस्या अपि प्रामाण्यनिर्वाह इत्याह स्मृतेरिति, तथाच कर्म द्विविधं सञ्चितं प्रारब्धञ्च, यत्फलप्रदानोन्मुखन्न तदाद्यं, यत्तदुन्मुखं तद्द्वितीयं, तत्र प्रारब्धकर्म भोगादेव नश्यति, तदतिरिक्तं तु तत्त्वज्ञानप्रायश्चित्तादिनैवेति भावः । तत्त्वज्ञानस्य साक्षात्कर्मनाशकत्वे श्रुतिप्रमाणमाह—

तथा च श्रुतिः—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति। स्मृतिरपि 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन' इति।

तथा च श्रुतिः "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः" इत्यादि, तस्मिन् ब्रह्मणि, परावरे परेऽपरे च, दृष्टे साक्षात्कृते, अस्य परमात्मसाक्षात्कारिणः, हृदयग्रन्थिः आत्मशरीरयोरभेदसंस्कारः, भिद्यते विनश्यति, ईश्वरसाक्षात्कारे जाते तत्सामग्रीनियतसामग्रीजन्यतया जीवात्मसाक्षात्कारो भवत्येव अतस्तद्विपरीतगोचरात्मशरीराद्यभेदसंस्कारो नश्यतीति हृदयम्, छिद्यन्ते सर्वसंशया इति, ईश्वरसाक्षात्कारे सति योगजधर्मबलेन दोषविरहाद् निखिलपदार्थानां यथार्थ एव साक्षात्कारो जायते, कोऽपि ततः संशयो भवितुं नैवार्हति, कर्माणि सञ्चितादृष्टानि, क्षीयन्ते नश्यन्तीत्यर्थः, नाशकान्तरविरहेण परमात्म-साक्षात्कारेणैवादृष्टनाश इति भावः। ननु मिथ्याज्ञानेत्यादिना प्रबन्धेन कृतस्य पूर्वपक्षस्य समाधानमाह—

अत्राहुः—उक्तश्रुतिस्मृतिवचनैर्न तत्त्वज्ञानस्य कर्मक्षयजनकत्वं बोध्यते, परन्तु ज्ञानानन्तर्यं कर्मक्षयस्य, तच्च फलस्य कारणभावभोगद्वारैवोपपद्यमानं न कारणत्वव्यवस्थापकं, न च व्यभिचारेण भोगो न तत्त्वज्ञान-द्वारमिति वाच्यम्, युगपदनेकदेहसम्पादनीयभोगानां तदधीनत्वमात्रस्य विवक्षितत्वात्, जन्यजनकभावः परमस्ति न वेत्यन्यदेतत्, समानाधिकरणभोगप्रागभावासमानकालीनो भोगस्तत्त्वज्ञानजन्य इत्यपि कश्चित्,

अत्राहुरित्यादिना,उक्तश्रुतीति भिद्यते हृदयग्रन्थिरित्यादिश्रुतीत्यर्थः, स्मृतीति ज्ञानाग्निः सर्वकर्माणीत्यादिस्मृतीत्यर्थः, तच्च—कर्मक्षयनिष्ठं ज्ञानानन्तर्यञ्च, भोगस्य कर्मक्षयं प्रति कारणत्वं तु नाभुक्तं क्षीयते कर्मेत्यादिश्रुत्या प्रागेव सिद्धमिति तत्त्वज्ञा-

नस्य कारणत्वसम्पत्त्यर्थं तत्र कारणत्वं न कल्प्यमिति सूचनार्थं क्लृप्तकारणभावेति विशेषणं भोगस्य, तत्त्वज्ञानेनापि कर्मक्षयो भोगद्वारैव भवति, भोगस्य कर्मक्षयं प्रति कारणत्वस्याऽतत्त्वज्ञानकाले क्लृप्तत्वादिति भावः। नचानन्तशरीरसाध्यानां कर्मणां युगपद्भोगाऽसम्भवात्तत्त्वज्ञानिनो भोगं विनापि कर्मणां नाशो मुक्त्यन्यथानुपपत्त्या स्वीकरणीयः, तथाच व्यभिचारेण भोगस्य कारणत्वाभावेन तत्त्वज्ञानद्वारत्वं न संभवतीति वाच्यम्, एकस्मिन् भवे युगपदनेकशरीरसम्पादनेन युगपत्कर्मणां भोगसम्भवेन व्यभिचाराभावादित्याशङ्कासमाधानाभ्यामाह न च व्यभिचारेणेति, अथवा भोगस्य न तत्त्वज्ञानजन्यत्वमतत्त्वज्ञानदशायामपि भोगसद्भावादिति तज्जन्यत्वे सति तज्जन्यजनकत्वरूपव्यापारत्वस्य भोगेऽभावाद्भोगद्वारकत्वं तत्त्वज्ञानस्य न संभवतीत्याशङ्क्य निषेधति न च व्यभिचारेणेति, भोगसामान्यं प्रति व्यभिचारेऽपि युगपदनेकदेहसंपादनीयभोगत्वावच्छिन्नं प्रति व्यभिचाराभावात्तादृशभोगद्वारकत्वं तत्त्वज्ञानस्य सम्भवति, न चोक्तधर्मावच्छिन्नस्यानेककारणसाध्यत्वादर्थसमाजग्रस्तत्वेन नोक्तधर्मस्य तत्त्वज्ञानजन्यतावच्छेदकत्वमिति कथमुक्तभोगविशेषद्वारकत्वं तत्त्वज्ञानस्येति वाच्यं, जन्यत्वाभावेऽपि तत्त्वज्ञानाधीनत्वस्य जन्यप्रयोज्यसाधारणस्य तत्र सम्भवादिति निषेधे हेतुमाह युगपदनेकेति, भोगस्य कर्मक्षयं प्रति कारणत्वं तु क्लृप्तमेव, तत्त्वज्ञानस्य कारणत्वं वा भवतु प्रयोजकत्वं वा भवतु, उभयथाऽपि न किंचिदनिष्टमित्याह—जन्यजनकभाव इति। भोगविशेषस्य तत्त्वज्ञानजन्यत्वात्तयोः कार्यकारणभाव एवेति कस्यचिन्मतमुपदर्शयति समानाधिकरणेति, अत्र समानाधिकरणेत्यादिविशेषणाद् भोगस्य चरमत्वं लभ्यते, तेन चरमभोगभिन्नभोगं प्रति न तत्त्वज्ञानस्य कारणत्वं किन्त्वदृष्टादेरेवेति सूचितम्, अत्र कश्चिदित्यनेनास्वरसस्सूचितः, तद्बीजं तूक्तविशिष्टभोगत्वस्यानेकपदार्थघटिततया नीलघटत्वस्येवार्थसमाजसिद्धतया न कस्याचित्कार्यतावच्छेदकत्वमिति, नाभुक्तं क्षीयते

इत्यादिवचनविरोधानुरोधेन तत्त्वज्ञानं कायव्यूहसम्पादनद्वारा झटिति सकलकर्मभोगं निर्वाह्य तानि नाशयतीत्यत्रैव ज्ञानस्य कर्मनाशकताबोधकवाक्यानां तात्पर्यं, यथाऽग्नेरिन्धननाशद्वारैव भस्मजनकत्वात्परम्परया हेतुता तथा ज्ञानस्यापि विशिष्टभोगद्वारैव कर्मनाशकत्वात्परम्परया हेतुतेत्येतत्सूचनायैव ज्ञानस्याऽग्नित्वेन निरूपणमित्याशयेनाह—

स्मृतेरपि वह्नेः परम्परया भस्मजनकत्वात् ज्ञानस्यापि विशिष्टभोगद्वारा कर्मनाशकत्वमित्यत्र कर्मपदमुख्यत्वानुरोधात् तत्त्वज्ञानेन प्रतिबन्धाद्विहितनिषिद्धक्रियातो न धर्माधर्मोत्पाद इत्यत्र वा तात्पर्यम्, न त्वाहत्यैव ज्ञानस्य कर्मनाशकत्वे, 'आचार्यवान् पुरुषो वेद–तस्य तावदेव चिरं–यावन्न विमोक्ष्येऽथ सम्पत्स्ये' इत्यन्यथोपवर्णयितुमशक्यायाः श्रुतेर्विरोधात्, तदर्थश्च तस्यात्मसाक्षात्कारवतस्तावदेव चिरं विलम्बो यावन्न विमोक्ष्ये न विमोक्ष्यते उपात्तकर्मराशेः सकाशात् फलोपभोगेन, अथ तस्मिन् सति सम्पत्स्ये सम्पत्स्यते कैवल्येनेति, वाक्यशेषश्च भवति भोगेन त्वितरे क्षपयित्वेति।

स्मृतेरपीति, अस्य कर्मनाशकत्वमित्यत्रेत्यस्य च तात्पर्यमित्यनेनान्वयः, तत्त्वज्ञानस्य विशिष्टभोगद्वारा पूर्वकृतकर्मणो धर्माधर्मरूपस्य नाशकत्वमित्येवं रूपेऽस्मिन् पक्षे ज्ञानाग्निः सर्वकर्माणीत्यत्र कर्मपदं धर्माधर्मपरत्वाल्लाक्षणिकमिति। पक्षान्तरमाह कर्मपदमुख्यत्वानुरोधादिति, अस्मिँश्च पक्षे कर्मपदं विहितनिषिद्धक्रियाशक्तमेव, तत्र भस्मसाङ्कवनं च तत्त्वज्ञानरूपप्रतिबन्धकसद्भावाद् धर्माधर्मलक्षणकार्याऽनर्जकत्वम्, तथाच तत्त्वज्ञानकाले विहितनिषिद्धक्रियाकरणेऽपि न धर्माधर्मोत्पाद इति भावः। भोगं विनैव ज्ञानस्य कर्मनाशकत्वे श्रुतिविरोधमाह–आचार्यवानिति, तस्य उत्पन्नतत्त्वज्ञानस्य, चिरं विलम्बः कैवल्यप्रागभाव

इत्यर्थः; अथेति प्रारब्धकर्मनाशानन्तरमित्यर्थः, सम्पत्स्यते कैवल्येनेति, मुक्तो भवतीत्यर्थः। ननु मिथ्याज्ञानवासनायाः धर्माधर्मौ प्रति कारणत्वं नेति न तदुन्मूलनद्वारा तत्त्वज्ञानस्य परंपरया धर्माधर्मानुत्पादप्रयोजकत्वलक्षणं प्रतिबन्धकत्वं, किन्तु साक्षादेव धर्माधर्मौ प्रति कारणीभूताभावप्रतियोगित्वलक्षणं प्रतिबन्धकत्वमिति चेत्, मैवम्, तत्त्वज्ञानस्य प्रतिबन्धकत्वे तदभावस्य कारणत्वं कल्पनीयम्; तदपेक्षया मिथ्याज्ञानस्य शरीरेऽहंत्वबुद्धिरूपस्य भ्रमात्मकात्मज्ञानमात्रस्य वा कारणत्वे लाघवादितिशङ्कासमाधानाभ्यामाह—

अथाहत्यैव तत्त्वज्ञानं धर्माधर्मप्रतिबन्धकं, न तु मिथ्याज्ञानवासनासमुन्मूलनद्वारेति चेत्, न, शरीरभिन्नात्मसाक्षात्कारविशेषविरहमपेक्ष्य लाघवेन शरीराहंवासनाया विपरीताहंवासनाया एव वा कारणत्वादिति दिग्। तत्सुष्ठूक्तमनात्मन्यात्मग्रहो निदानं संसारस्येति, मिथ्याज्ञानं च तत्त्वज्ञानान्निवर्त्तते, तच्च श्रवणमननादिक्रमेणोत्पद्यते, कारणनिवृत्तौ च कार्यं न जायते, उत्पन्नश्च धर्माधर्मप्रचयो भोगेन क्षीयत इति न्यायानुसारिसङ्क्षेपः।

अथाहत्यैवेति, तच्च—तत्त्वज्ञानञ्च, श्रवणमननादिक्रमेणेति अत्रादिपदेन निदिध्यासनस्योपग्रहः, एतदर्थे श्रुतिश्च भवति "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः साक्षात्कर्त्तव्यश्चेति" अत्र विधिविहिततव्यप्रत्ययचतुष्टयेन मोक्षरूपेष्टफलसाधनत्वं बोध्यते, तस्य च धात्वर्थश्रवणादावन्वयः, तादृशश्रवणादेर्विषयत्वसम्बन्धेन यद्वा तादृशश्रवणादिविषयत्वस्यात्मन्येवान्वयेनात्मविषयकश्रवणादेर्मोक्षकारणत्वलाभः, यद्यपि साहित्यार्थकचकारेण समुच्चितात्मश्रवणादिचतुष्टयानां कारणत्वे प्राप्तेऽपि तेषामेकदा सत्त्वासम्भवात् मननादेर्मिथ्याज्ञानवासनानाशकत्वाऽसम्भवाच्चात्मसाक्षात्कारो मोक्षं प्रति साक्षात्कारणम्, श्रवणादिकं तद्द्वारैव, अत एव शास्त्राधीनश्र-

वणपदवाच्यात्मविषयकशाब्दबोधस्य मननपदवाच्यशास्त्रादिबोधितव्यतिरेकिलिङ्गकात्मपक्षकेतरभेदानुमितेः श्रवणादिमूलकसंस्काराधीनतत्समानविषयकध्यानोपहितेच्छाया निदिध्यासनपदवाच्याया ध्यानस्य वा सत्त्वेऽपि न मोक्षोत्पत्तिः, द्वारं विना द्वारिणः कार्याजनकत्वात्, नच श्रवणादिसत्त्वेऽप्यात्मसाक्षात्कार एव कथमिदानीं नोत्पद्यत इति वाच्यम्, तस्य चिरकालीनध्यानपरम्परासाध्यत्वात्, तदुक्तं "आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥१॥" इति, ध्यानाभ्यासरसः पौनः पुन्येन स्मरणेच्छा, ध्यानं वा, त्रिधा प्रज्ञां श्रवणमनननिदिध्यासनरूपत्रिविधज्ञानं, प्रकल्पयन् सम्पादयन्, उत्तमं योगमात्मसाक्षात्काररूपं लभत इत्यलं पल्लवितेन। कारणनिवृत्तौ मिथ्याज्ञानरूपकारणनिवृत्तौ, कार्यं धर्माधर्मलक्षणं कार्यं, तत्त्वज्ञानस्य मोक्षं प्रति हेतुत्वं न्यायप्रक्रिययोपदर्श्यागमरीत्योपदर्शयति—

आम्नायसङ्क्षेपस्त्वशरीरं वावसन्तमित्यादिरात्मज्ञानस्य देहेन्द्रियाद्युपाधिविगमे संसारनिवृत्तिं दर्शयति, "तदप्रामाण्यं प्रपञ्चमिथ्यात्वसिद्धान्तभेदतत्त्वोपदेशेष्वनृतव्याघातपुनरुक्तदोषेभ्यः" प्रपञ्चमिथ्याश्रुतीनां प्रत्यक्षादिप्रमाणान्तरविरोधादनृतत्वं, नानासिद्धान्तप्रतिपादिनीनां श्रुतीनां परस्परव्याघातः, एकस्मिन्नेव तत्त्वे पुनःपुनरुपदिश्यमाने पौनरुक्त्यम्, एभिर्हेतुभिर्नाम्नायस्य प्रामाण्यमित्येतत्सूत्रार्थ इति चेत्,

आम्नायेत्यादिना, अशरीरं वावसन्तमित्यादिरिति, अत्रादिपदेन प्रियाप्रिये न स्पृशतः इत्यस्योपग्रहः, तस्य चायमर्थः वावेति सम्बोधनम्, सन्तमात्मानम्, तथाच तत्त्वज्ञानादिना शरीररहितमात्मानं प्रियाप्रिये सुखदुःखे न स्पृशतः न सम्बध्नीत इत्यर्थः। आचार्यास्तु वावसन्तमिति यङ्लुकि सिद्धम्, छान्दसत्वान्नकारागमश्च, तथा च शरीररहितं सत् अतिशयेन वसन्तम् उत्तरावधिरा-

हित्येन वसन्तमिति यावत्, तेन संसारिणोऽपि क्षणं शरीरराहित्येन स्थितिसम्भवेऽपि न क्षतिरित्याहुः । आम्नायस्याऽप्रामाण्यमाशङ्कते तदप्रामाण्यमित्यादिना, तत्त्वोपदेशेष्वनृतेति तत्त्वोपदेशपौनःपुन्येष्वनृतेति पाठान्तरम्, प्रपञ्चमिथ्यात्वश्रुतीनां "नेह नानास्ति किञ्चन" इत्यादिश्रुतीनां, "सदेव सौम्येदमग्रआसीदि" ति श्रुतिर्जगतस्सत्त्वं "स्वप्नोपमं वै सर्व" मिति श्रुतिश्चासत्त्वं व्यवस्थापयतीति तयोर्विरोधः, एवं श्रुत्यन्तरेष्वपि ज्ञेयमित्याशयेनाह नानासिद्धान्तेति, उक्तदोषोद्धरणेनाशङ्किताऽप्रामाण्यं निरस्यति—

न, सतात्पर्यकत्वात् 'निष्प्रपञ्च आत्मा ज्ञेयो मुमुक्षुभिरित्यत्र तात्पर्यं निष्प्रपञ्चश्रुतीनां, न तु मिथ्यास्वरूपे, अद्वितीय एव स्वात्माऽपवर्गसाधनतया ज्ञेय इत्यत्र तात्पर्यमद्वैतश्रुतीनां, न तु द्वितीयानस्तित्वे, दुरूहत्वादात्मा पुनः पुनर्ज्ञेय इत्यत्र तात्पर्यं पौनःपुन्यश्रुतीनां, समनस्कस्यैवात्मनो बहिःसङ्कल्पत्यागविधाने निर्मनस्कश्रुतीनां, मोक्षदशायामानन्दस्य विशेषणस्योच्छेदेऽपि आनन्द इवात्मैवोपादेय इत्यत्रानन्दश्रुतीनां, गारुडवदनुष्ठाने तात्पर्यं प्रकृत्यादिश्रुतीनां, तन्मूलसाङ्ख्यादिदर्शनानां च, अन्यथा 'जैमिनिर्यदि वेदज्ञः कपिलो नेति का प्रमा ॥ तावुभौ यदि वेदज्ञौ व्याख्याभेदस्तु किं कृतः ॥१॥" इत्यनुत्तरं स्यात्, वेदविहितकर्मसामान्यानुष्ठानपरत्वे उभयाविरोध इत्यर्थः । प्रामाण्यं तु तस्यानादिसर्वज्ञप्रणीतत्वादिति दिग् ॥६१॥ अत्र प्रमाणपरिशोधमाह—

न, सतात्पर्यकत्वादिति, निष्प्रपञ्च इति, शरीरादिबाह्यप्रपञ्चभिन्न इत्यर्थः । अद्वितीय इति, अन्यासहकृत एवेत्यर्थः । अद्वैतश्रुतीनाम् "एकमेवाद्वितीयं ब्रह्म" इत्यादिश्रुतीनाम्, आनन्दश्रुतीनां, "नित्यविज्ञानमानन्दं ब्रह्म" इत्यादिश्रुतीनाम्, अन्यथेति, श्रुतीनां भिन्नभिन्नतात्पर्यकत्वाभावे इत्यर्थः । भिन्नतात्पर्यमाश्रित्य भिन्नव्याख्याकर्त्रोर्जैमिनिकपिलयोर्द्वयोरपि वेदवि-

हितकर्मसामान्यानुष्ठानेऽविशेषेण तात्पर्यमिति तत्र कस्यापि न विरोध इत्याह वेदविहितेति, उक्तयुक्त्याऽप्रामाण्यपरिहारेऽपि प्रामाण्यमागमस्य कुत इत्यत आह—प्रामाण्यं त्विति। द्वाषष्ठितमश्लोकावतरणिकामाह अत्रेत्यादिना, नैयायिकेन यदेकान्तस्थैर्यं बौद्धेन च यदेकान्तक्षणिकत्वमभ्युपगतं तत्र तयोर्विरोधप्रदर्शकत्वेनापरिशुद्धमेकान्तत्वांशं निरस्य निमित्तभेदेनाविरोधप्रदर्शकत्वेन परिशुद्धमनेकान्तत्वांशमिति प्रमाणपुरस्सरं तद्व्यवस्थापनार्थमाह ग्रन्थकारः—

भिन्नक्षणेष्वपि यदि क्षणता प्रकल्प्या, क्लृप्तेषु साऽस्त्विवति जगत्क्षणिकत्वसिद्धिः ॥
तद्द्रव्यता तु विजहाति कदापि नो त-त्सन्तानतामिति तवायमपक्षपातः ॥ ६२ ॥

भिन्नक्षणेष्वपीति मूलश्लोकः स्पष्टार्थः, अन्वयमात्रमुपदर्श्यते, यदि क्षणता भिन्नक्षणेष्वपि प्रकल्प्या, तदा सा क्षणता क्लृप्तेषु पदार्थेष्विति शेषः, अस्त्विवति हेतोर्जगत्क्षणिकत्वसिद्धिः, तु पुनः, तद्द्रव्यता तत्सन्तानतां कदापि नो विजहातीति हे भगवन्निति शेषः, तवायमपक्षपात इति।

यो हि दीधितिकारस्तार्किकमूर्धाभिषिक्तंमन्यः क्लृप्तपदार्थातिरिक्तं क्षणिकं क्षणं कल्पयति, तेनातिरिक्ते-ष्वनन्तक्षणेषु क्षणत्वमतिरिक्तमवश्यं कल्पनीयम्, तद्वरं धर्मीति न्यायात् क्लृप्तेषु पदार्थेष्वेव तत्त्वमभ्युपग-म्यताम्, एवं जगतः क्षणिकत्वमपि स्याद्वादेऽप्रतिषिद्धमिति सिद्धम्, विरोधस्य पर्यायत्वद्रव्यत्वाभ्यां तत्प-र्यायत्वतद्द्रव्यत्वाभ्यां वा परिहारात्, नो चेत्, क्षणेष्वपि प्रतिस्वं क्षणिकत्वं घटिकात्वमुहूर्त्तत्वदिनत्वादिना चाक्षणिकत्वमिति कथं घटेत, तद्द्रव्यता तु तत्सन्तानतां नो कदापि जहाति, अहमिति प्रतीतिसिद्धस्य तदा-

त्मत्वस्य तत्सन्तानत्वस्य वाऽखण्डोपाधिरूपस्य द्रव्यपर्यायाविनिर्भागवृत्तित्वात्, एवं च कालत्वव्यापकतावच्छेदकोभयावृत्तिधर्मवत्त्वेनैकस्यानादिनिधनत्वं तत्तदात्मत्वेन तत्तत्सन्तानत्वेन चाविशिष्टं, स च सन्तन्यमानस्तदतिरिक्तो वेति चिन्ता पुनः क्षणभङ्गभङ्गेन निःशेषितेत्यपि निरस्तम् ॥

धर्मीति न्यायादिति, धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायादित्यर्थः, तत्त्वं, क्षणत्वम् । न ह्यनुगतद्रव्यतां परित्यज्य तत्तदवस्थास्तदनात्मिका अनुभूयन्ते, नच तत्तदवस्थाविनिर्मोकेणानुगतद्रव्यमनुभूयत इति तयोरनुस्यूतत्वेन वस्तुमात्रस्य द्रव्यपर्यायोभयात्मकत्वमिति कालत्रयभाव्यऽशेषतत्तत्पर्यायाऽनुगामित्वलक्षणेन द्रव्यत्वेन स्थिरत्वं प्रतिक्षणमन्यान्यत्वलक्षणेन पर्यायत्वेन च क्षणिकत्वमित्येवं सामान्यतो द्रव्यत्वपर्यायत्वाभ्यां स्थिरत्वक्षणिकत्वयोर्विशेषतोऽपि सुवर्णादिद्रव्येणाङ्गुलीयककुण्डलादिपर्यायेण च तयोर्विरोधपरिहारमुपदर्शयति–विरोधस्येत्यादिना। तद्द्रव्यतायास्तत्सन्तानतानुस्यूतत्वे हेतुमाह अहमित्यादिना। द्रव्यपर्यायाविनिर्भागवृत्तित्वादिति द्रव्यपर्याययोरनुस्यूतत्वेन द्रव्यपर्यायोभयात्मकवस्तुवृत्तित्वादित्यर्थः । एवञ्चेति तद्द्रव्यतायास्तत्सन्तानतानुस्यूतत्वादेव चेत्यर्थः, अस्य निरस्तमित्यनेन सम्बन्धः । अनादिनिधनः समानकालीनानेकावृत्तिसर्वकालसम्बन्ध्यवच्छेदकरूपवानिति यत्पूर्वोक्तं तत्र सर्वकालसम्बन्ध्यवच्छेदकेत्यस्य पर्यवसितार्थमाश्रित्याह कालत्वव्यापकतावच्छेदकेति, अत्रोभयावृत्तित्वाऽनिवेशे स्थैर्यं नातरिसिद्ध्यति, आत्मनः क्षणिकत्वेऽपि आत्मत्वस्य कालत्वव्यापकतावच्छेदकत्वेन तद्रूपेणानादिनिधनत्वस्य कालत्वव्यापकतारूपस्य सम्भवात्, आत्मत्वस्य कालत्वव्यापकतावच्छेदकत्वञ्च क्षणिकत्वेनैकात्मव्यक्तेः कालमात्रेऽसत्त्वेपि तत्तत्काले तत्तदात्मव्यक्तेस्सत्त्वेनात्मसामान्यस्य कालत्रयवृत्तितया ज्ञेयम्, एवं युगपज्जन्यद्रव्यमात्रस्य विनाशानभ्युप-

गमपक्षे घटादीनामप्यनादिनिधनत्वं स्यात्,उभयाऽवृत्तित्वस्य निवेशे चाऽऽत्मत्वघटत्वादीनां तथात्वाभावादेकात्मव्यक्तिर्यदि कालत्रयेऽपि वर्तेत तदैवोक्तलक्षणं तत्र सङ्गच्छेत, नान्यथा, एकघटव्यक्तिस्तु न कालत्रये वर्त्तते इति नोक्तलक्षणस्य तत्रातिव्याप्तिरित्याशयेनोभयावृत्तित्वं धर्मस्य विशेषणमुपात्तम्। स च सन्तन्यमान इत्याद्युदयनाचार्येणैकपक्षावलम्बनेन यदुक्तं तदपाकरणे हेतुमाह—

क्षणाभेदेनैव क्षणिकतायाः सर्वत्र साधितत्वात् कालत्वव्यापकत्वतदभावयो रूपभेदेन सर्वत्र सम्भवादेव सर्वत्र स्याद्वादसाम्राज्यात्। कालत्वव्यापकतावच्छेदकतदनवच्छेदकधर्माभ्यामपि तदप्रतिहतमेव, नहि भावाभावयोः समावेशमेव सर्वत्र स्याद्वादोऽनुशास्ति, किन्तु व्यापकाव्यापकादिपदार्थतयोरपीति। हे भगवन्नयं तवापक्षपातःपक्षपातरहितः स्याद्वादः, तदुक्तं पारमर्षे—अणादिअं परिन्नाय इत्यादि।

क्षणाऽभेदेनैवेत्यादिना, क्षणवृत्तित्वेन क्षणिकत्वकल्पनापेक्षया लाघवेन क्षणरूपत्वेन तत्कल्पनायाः प्रमाणाऽर्हत्वेन यद्वाऽतिरिक्तान् क्षणान् अकल्प्य तत्रातिरिक्तक्षणत्वधर्मकल्पनापेक्षया धर्मीति न्यायात् क्लृप्तेषु पदार्थेष्वेव क्षणत्वकल्पनायाः प्रमाणार्हत्वेन वस्तुमात्रस्य क्षणिकत्वं, न च तन्मात्रमेव, किन्तु पूर्वापरकालानुगततयाप्यनुभूयमानत्वात् स्थिरत्वमपि, तथा चैकस्यात्मनः पूर्वापरपर्यायानुस्यूतेन तदात्मद्रव्यत्वेन तत्सन्तानत्वेन वा कालत्वव्यापकत्वस्य तत्तत्क्षणभाव्यात्मपर्यायत्वेन तदभावस्य च सद्भावेनोभयपक्षस्यैव प्रमाणार्हत्वेन तदात्मकस्याद्वादसाम्राज्यमेवेति भावः॥ ऊर्ध्वतासामान्यरूपं तदात्मत्वं यथा कालत्वव्यापकतावच्छेदकं तथा तत्तत्पर्यायविशिष्टतदात्मत्वं कालत्वव्यापकतानवच्छेदकमिति ताभ्यामपि स्याद्वादसाम्राज्यं निष्कलङ्कमेवेत्याह कालत्वव्यापकतावच्छेदकेति, ननु कालत्वव्यापकतावच्छेदकधर्मवत्त्वकालत्वव्यापकतानवच्छेदकधर्मवत्त्वादीनां भावाभावरूपत्वाभावान्नोक्तं

युक्तमित्याशङ्कायामाह नहीति, अत्र य एवात्मा पूर्वं देवत्वेनोत्पन्नः स एव पश्चान्मनुष्यपर्यायेणेति देवमनुजादिक्रमिकानेकपर्यायवृत्तित्वात्तदात्मत्वस्य कालत्वव्यापकतावच्छेदकत्वेप्युभयावृत्तित्वाऽभावेन न तद्विशेषणद्वयविशिष्टधर्मत्वमिति तदादायात्मनि कथं लक्षणं सङ्गतिमियर्तीति ग्रन्थकारो नैयायिकं पृच्छति—

कथं चोक्तलक्षणस्य तदात्मन्यप्यन्वयः, तदात्मत्वस्यापि देवमनुजादिक्रमिकोभयपर्यायवृत्तित्वात् तत्सन्तानत्वसाधारण्याय समानकालीनव्यक्तिद्वयावृत्तित्वमुभयाऽवृत्तीत्यस्यार्थः, तत्संतानत्वं हि क्रमिकसांतानिकद्वयवृत्ति न तु समानकालीनतद्द्वयवृत्तीति तथा च नोक्तदोष इति चेत्, न, कायव्यूहस्थलेऽगतेः, तत्र नरशूकरादिशरीरोपहितभेदेऽपि शुद्धतदात्मव्यक्तेरभेदान्न दोष इति चेत्,

कथं चोक्तलक्षणस्येति, बौद्धमतेऽनादिनिधनो विज्ञानसन्तान एव प्रतिपत्ता, तत्र विज्ञानसन्तानत्वं यद्यपि कालत्वव्यापकतावच्छेदकं, तथापि पूर्वोत्तरविज्ञानद्वयवृत्तित्वेन नोभयाऽवृत्तिधर्मरूपमिति न तद्धर्मवत्त्वेनानादिनिधनत्वं विज्ञानसन्तानस्य, एवं चानादिनिधनः प्रतिपत्तेत्युरीकृत्य स किं संतन्यमानज्ञानरूपस्तद्व्यतिरिक्तो वेति विकल्पद्वयोद्भावनं न सङ्गच्छते, संतन्यमानज्ञानरूपेऽनादिनिधनत्वाभावात्, अतोऽत्रोभयावृत्तित्वं समानकालीनानेकावृत्तित्वरूपमेव वाच्यम्, तथाच तदात्मत्वस्य देवमनुष्यादिक्रमिकानेकपर्यायवृत्तित्वेऽपि समानकालीनानेकावृत्तित्वात्मकोभयावृत्तित्वस्य सत्त्वात् नात्मन्युक्तलक्षणाव्याप्तिरिति नैयायिकः शङ्कते— तत्संतानत्वसाधारण्यायेति, तत्त्वज्ञानिनो यदा भोगद्वाराऽनेकभवीयकर्मक्षपणार्थमेकदाऽनेकशरीरधारिणो भवन्ति तदा तदाऽऽत्मत्वस्यापि समानकालीनतत्तदपरशरीरविशिष्टानेकात्मवृत्तित्वेनोक्तलक्षणस्याव्याप्तिरात्मनि तदवस्थैवेति समाधत्ते ग्रन्थकारः—न,

कायव्यूहस्थलेऽगतेरिति, अथ तत्तद्विशेषणभेदेन तत्तद्विशिष्टभेदो वस्तुगत्या विशेषणस्यैव, अन्यथा शिखाविनाशे तद्विशिष्टपुरुषस्यापि विनाशप्रसङ्गः। तथाच नरशूकरादिशरीरभेदेन तद्विशिष्टतत्त्वज्ञानिनो भेदेऽपि वस्तुगत्यैकत्वमेवेति समानकालीनोभयव्यक्त्यवृत्तित्वमेव तदात्मत्वस्येति तदादाय नोक्ताव्याप्तिदोष इत्याशयेनाशङ्कते नैयायिकः—तत्र नरशूकरादिशरीरोपहित भेदेऽपीति, विशिष्टस्य विशेषणविशेष्याभ्यामतिरिक्तत्वमेव, विशेषणविशेष्ययोः पृथग्ज्ञानसत्त्वेऽपि विशिष्टानुव्यवसायानुदयात्, विशिष्टप्रतीतिविषयत्वस्य च विशेषणविशेष्योभयोः कल्पनापेक्षया विशिष्ट एव कल्पनाया लघुत्वात्, अन्यथा विशेषाभावकूटविषयत्वेन सामान्याभावप्रतीतेस्तत्तदवयवसमुदायविषयत्वेन चावयविप्रतीतेरपि चरितार्थत्वं स्यादिति सामान्याभावघटाद्यवयव्यादिरपि न सिद्ध्येत्, एतेन विशिष्टप्रतीतेः प्रत्येकविशेषणविशेष्यनिरूपिताधिकरणत्वद्वयावगाहितयैवोपपत्तेर्नातिरिक्तं विशिष्टमित्यपि निरस्तम्, धूमवानिति प्रतीतिरपि सिद्धतत्तद्धूमत्वावच्छिन्नाऽधिकरणत्वविषयिकैवेति कल्पनाया अवकाशेन धूमत्वावच्छिन्नसामान्याधिकरणत्वस्याप्यसिद्धिप्रसङ्गात्, तदेवं विशिष्टं सर्वथा नातिरिक्तं, दण्डिनमानयेति प्रतीतौ दण्डपुरुषसम्बन्धमृतेऽन्यस्याप्रतिभासमानत्वात्, दण्डिनमानयेत्युक्ते च दण्डपुरुषसम्बन्धानयनाभावप्रसङ्गाच्च, नापि सर्वथाऽनतिरिक्तं, प्रत्येकं दण्डिव्यवहारप्रसङ्गात्, समुदायिनः समुदायानतिरिक्तत्वात्, अतिरिक्तत्वे वा तद्विशिष्टस्याप्यतिरिक्तत्वं स्यादित्युभयपक्ष एव साम्राज्यस्थाननिवेशीत्यभ्युपगन्तव्यं, तथाच तत्त्वज्ञानिनो नरशूकरादिविशिष्टतदात्मत्वावच्छेदेन भेदः निर्विशेषिततदात्मव्यक्तित्वावच्छेदेन चाभेद इत्यायातस्याद्वाद इत्याशयेन समाधत्ते—

आयातं तर्हि भेदाभेदस्याद्वादेन, न च तदात्मत्वं शुद्धा तद्व्यक्तिस्तत्तोपहितमात्मत्वं वेत्यत्रापि विनिगमोऽस्ति, किञ्च स्वरूपतो भासमानायास्तस्या अपि जातित्वमेव युक्तम्, व्यक्तेरभेदो बाधक इति चेत्, अत

एव न तत्तिर्यक्सामान्यं, किन्तूर्ध्वतासामान्यं, कुतोऽनयोर्विशेष इति चेत्,

आयातमित्यादिना, तत्तोपहितमात्मत्वमिति विशिष्टस्य शुद्धानतिरिक्तत्वे तत्ताविशिष्टात्मत्वस्य शुद्धात्मत्वस्वरूपत्वेन तस्य चात्मान्तरेऽपि सत्तया समानकालीनोभयवृत्तित्वादुक्तलक्षणेऽव्याप्तिस्तदवस्थैवेति भावः। तस्याः–शुद्धतदात्मव्यक्तेः, स्वाश्रयेषु तज्जातीय एवायमिति प्रत्यभिज्ञानसिद्धं प्रतिव्यक्तितुल्यपरिणतिलक्षणमतएवानेकव्यक्तिगतं तिर्यक्सामान्यं, पूर्वापरबालयुवाद्यवस्थाभेदेन भेदवति स एवायं जिनदत्तः कुण्डलाङ्गदादिषु च तदेव हेमद्रव्यमिति प्रत्यभिज्ञानसिद्धं कालत्रयभावि पूर्वापरपर्यायपरिणामिलक्षणमत एव पूर्वापरानेकव्यक्त्याधारमूर्ध्वतासामान्यमित्येवं प्रमाणलक्षणाभ्यां तिर्यक्सामान्योर्ध्वतासामान्ययोर्भेद इत्युत्तरयति–

अनेकव्यक्तिवृत्तित्वतदाधारत्वाभ्यां प्रत्यभिज्ञानविशेषनियामकतया चेति गृहाण, भेदो व्यक्तिलक्षणमपि तत्र निर्बाधं प्रतीयत इति चेत्, आयातं तर्हि सामान्यविशेषस्याद्वादेन, अपि च माभूत्तदात्मत्वं समानकालीनोभयवृत्ति; तत्त्वेन ग्रहे तु न तदात्मत्वेनानादिनिधनत्वव्यवहार इति व्यावहारिकं तदगृहीतभेदाश्रयकत्वघटितं वाच्यम्, तथा च लाघवादगृहीतभेदालयविज्ञानस्यैव तन्नियामकत्वमस्तु,

अनेकव्यक्तीति, ननु तदात्मत्वेन व्यक्त्यभेदे सत्यप्यन्यतो विभिन्नव्यक्तिलक्षणविशेषात्मकभेदोऽस्त्येव, तस्यापि प्रतीतेरित्याशङ्कापनोदायाह–आयातमिति, तदात्मत्वं नैककालीनोभयवृत्ति, अत उक्तलक्षणं तद्रूपेणात्मनि वर्त्तत इति नाव्याप्तिरिति स्वीकारेऽपि यदा समानकालीनोभयवृत्ति तदात्मत्वमिति ग्रहस्तदोक्तलक्षणग्रहासंभवान्न भवत्यनादिनिधनत्वव्यवहारः, तदर्थं धर्मे लक्षणघटकेऽगृहीतभेदाश्रयकत्वं विशेषणं देयम्, अर्थात् अगृहीतभेदाश्रयकं तदात्मत्वमनादिनिधनत्वव्यवहारप्रयोजकं, तद-

पेक्षयाऽगृहीतभेदमालयविज्ञानमनादिनिधनत्वव्यवहारप्रयोजकम्, आश्रयस्याऽनिवेशेन लाघवात्, तथाचालयविज्ञानानां भेदे सत्यपि तदग्रहादनादिनिधनत्वोपपत्तावलमात्मनोऽतिरिक्तस्य कल्पनया इत्याह अपि च माभूत्तदात्मत्वमिति । शिष्याचार्यधियां कुतो नैकसन्तानत्वं सादृश्यादेर्नियामकस्य निराकृतत्वात्, वैजात्यादिति चेत्, न, सन्तानयोर्वैजात्ये मानाभावादिति यदुक्तं प्राक् तन्निरासायाह—

अस्तु वा क्रमिकाक्रमिकानन्तगुणपर्यायजनकतावच्छेदकतयाऽऽलयविज्ञानवृत्तिवैजात्यमेव तदात्मत्वम्, अनन्तालये वैजात्ययोः कल्पनागौरवस्य फलमुखत्वेनाऽदोषत्वात् । संस्कारस्य त्वाश्रयोपादेये स्मृतिनियामकत्वकल्पनस्यापि अनुभवस्य स्वजन्यसंस्काराश्रये तन्नियामकत्वपर्यालोचनया गौरवानावहत्वात्, तस्मात् द्रव्यपर्यायोभयात्मके वस्तुनि पर्यायनयव्युत्क्रान्तार्थानां शुद्धत्वसाधने द्रव्यार्थिकनययुक्तयः, द्रव्यार्थिकनयव्युत्क्रान्तानां चार्थानां शुद्धत्वसाधने पर्यायार्थिकनययुक्तयस्तुल्यवदेवोज्जृम्भन्त इति नैकत्र क्वचन पक्षपातो विधेयः, किन्तु स्याद्वादेनोभयोपग्रह इति तत्त्वम् ॥ ६२ ॥

अस्तु वेति,अनन्तालये वैजात्यकल्पनामपेक्ष्यैकालयकल्पनाया एव न्याय्यत्वादिति यस्तत्र हेतुरुक्तस्तन्निरासायाह अनन्तालय इति; संस्कारस्य स्वोपादाने स्मृतिजनकताया एव लाघवेन प्रकृमुचितत्वाच्चेति यदुक्तं तदपाकरणायाह संस्कारस्येति, तन्नियामकत्वेति स्मृतिनियामकत्वेत्यर्थः, उक्तपद्यरहस्यमुपसंहारव्याजेनोपदर्शयति तस्मादिति ॥६२॥ त्रिषष्ठितमश्लोकावतरणिकामाह—

निरस्तोऽनादिनिधनत्वैकान्तः । एतेन द्रव्यैकान्तोऽपि निरस्त इत्याह—

न द्रव्यमेव तदसौ समवायिभावात्, पर्यायतापि किमु नात्मनि कार्यभावात् ॥
उत्पत्तिनाशनियतस्थिरतानुवर्त्ति, द्रव्यं वदन्ति भवदुक्तिविदो न जात्या ॥ ६२ ॥

निरस्त इत्यादिना, न द्रव्यमेवेति मूलम्, तत् तस्मादुक्तन्यायात्, असौ आत्मा, समवायिभावात् समवायिकारणत्वाद् द्रव्यमेवेति न, निषेधे हेतुमाह कार्यभावादात्मनि पर्यायतापि किमु न, काकुप्रश्नात् कारणभावाद् द्रव्यत्वादिवत् कार्यभावात् पर्यायताप्यात्मन्यऽस्त्येव, द्रव्यत्वाख्यजातियोगादात्मा द्रव्यमेव न पर्याय इत्याशङ्कापनोदायाह भवदुक्तिविद उत्पत्ति नाशनियतस्थिरतानुवर्त्ति द्रव्यं वदन्ति न जात्येति–स्याद्वादवादिन उत्पादव्ययव्याप्तध्रौव्यशालित्वेन द्रव्यं वदन्ति, न पुनः समवायसम्बन्धेन द्रव्यत्वजातिमत्त्वादिति सङ्क्षेपार्थः ।

तदुक्तन्यायात्, असावात्मा, समवायिभावात् समवायिकारणत्वाद् द्रव्यमेवेति न वाच्यम्, यतः कार्यभावात् अनादिपारिणामिकेन भावेन जन्मजातिवयोजराद्यनन्तकार्यापन्नतयाऽऽत्मनि किमु पर्यायताऽपि नास्ति, अपि त्वस्त्येव, एवं च तथा तथा कारणतया द्रव्यत्वं तथातथा कार्यतया पर्यायत्वमित्युभयरूपत्वमात्मनोऽविरुद्धं, न त्वेकान्तः श्रेयान्, न चेदेवं, संसारितया विनश्य स सिद्धतया नोत्पद्येत, संसारितासिद्धतयोर्नाशोत्पादौ न तावात्मन इति चेत्, एवं तर्हि मृत्पिण्डत्वघटत्वयोरेव तौ, न तु तदाश्रयस्य मृद्द्रव्यस्येत्यपि वक्तुं शक्येत, अथाशेषविशेषगुणोच्छेद एवात्मनः संसारिताविनाशः, स एव सिद्धत्वं, तदुत्पादे नात्मन उत्पाद इति चेत्, न, सम्बन्धानिरुक्तेः ।

सम्बन्धानिरुक्तेरिति, सिद्धत्वधर्मस्योत्पादेऽपि नात्मधर्मिण उत्पाद इति चेत्, तर्ह्यात्मनस्सिद्धत्वमित्यपि नैव वक्तुं शक्यं स्यात्, यतः षष्ठीसम्बन्धार्थे, सम्बन्धश्च हिमवद्विन्ध्याचलयोरिव सिद्धत्वात्मनोर्धर्मधर्मिणोरेकान्तभेदे न भवत्येवेति तदन्यथानुपपत्त्या कथञ्चिद्भेदविशिष्टोऽभेदोऽभ्युपगन्तव्य इति सिद्धत्वधर्मोत्पादे कथञ्चित्तदभिन्नात्मनोऽप्युत्पादस्सिद्ध इति भावः। उक्तस्वरूपमुक्तेरनुपादेयतामाह—

अभावस्वरूपाया मुक्तेरकाम्यत्वादपुरुषार्थत्वात्, चिदानन्दमयानन्तगुणाविर्भूतिस्वरूपाया एव तस्यास्तत्र तत्र व्यवस्थापितत्वात्, "परिणामिन्यात्मनि सति तत्तद्ध्वनिवाच्यमेतदखिलं स्यात्" इत्यादिना हरिभद्राचार्यैरात्मनः परिणामिकारणतां विना कथमप्यनुपपत्तेः षोडशकादावुद्भावितत्वाच्च,

अभावस्वरूपाया इति, अशेषविशेषगुणोच्छेदरूपत्वेन ध्वंसरूपाया इत्यर्थः। स्यादित्यादिनेति आदिपदात् "अर्थान्तरे च तत्त्वेऽविद्यादौ वस्तुसत्येव" इत्युत्तरार्द्धपरिग्रहः, अत्रत्यं तत्त्वं तट्टीकात एवावसेयम्, विस्तरभीत्या नेह वितन्यते, समवायिकारणत्वादात्मा द्रव्यमेवेति नैयायिकैर्यत्प्रागुक्तं तन्निरसनायाह—

किंच सर्वथा सत आकाशादेरिव सर्वथाऽसतश्च शशविषाणादेरिव कार्यत्वायोगादसत्कार्यवादे समवायिकारणत्वं द्रव्यलक्षणं न सम्भवति, किन्तु व्यक्ताव्यक्तात्मरूपं यत् पौर्वापर्यव्यवस्थितं तत्परिणामिकारणं द्रव्यमिति सदसत्कार्यवाद्युक्तलक्षणमेव ज्यायः, एवमतिरिक्तासमवायिकारणकल्पनप्रयुक्तगौरवाभावात्, एवं चात्मा न द्रव्यमेव, किन्तु पर्यायात्मापि, परिणामिलक्षणेनैवोभयरूपक्रोडीकरणात्।

किञ्चेति, पर्यायात्माऽपीति, अपिना द्रव्यात्मोपग्रहः, आत्मनि द्रव्यपर्यायोभयरूपत्वे हेतुमाह परिणामिलक्षणेनैवेति, केनचिद्रूपेणान्वयित्वे सति केनचिद्रूपेण व्यतिरेकित्वं परिणामः स विद्यते यस्य स परिणामी, अत एव त्यक्तात्मरूपमित्यादितल्लक्षणं पूर्वमुक्तं सङ्गच्छते, अनयोरभिन्नार्थत्वात्, तत्र सत्यन्तविशेषणपदेन द्रव्योपग्रहः, विशेष्यपदेन च पर्यायोपग्रहः इत्युक्तलक्षणेनैव द्रव्यपर्यायोभयस्वरूपसङ्ग्रहादित्यर्थः। उत्तरार्द्धं सङ्गमयितुं नैयायिकस्य शङ्कामुत्थापयति—

अथ द्रव्यत्वं न कारणताघटितं, किन्तु जातिविशेष एव, तद्योगादात्मा द्रव्यमेव,न पर्यायः,पर्यायत्वस्य गुणकर्मादिमात्रवृत्तित्वात्, तत्राह–भवदुक्तिविदः उत्पत्तिनाशनियतस्थिरतामनुवर्त्तते इत्येवंशीलं द्रव्यं वदन्ति, न तु जात्या,अतिरिक्तद्रव्यत्वसामान्ययोगेन,तत्र प्रमाणाभावात्,नहि तत्रानुगतप्रतीतिः प्रमाणम्,अतीन्द्रियस्थले तदसिद्धेः, नाप्यनुगतव्यवहारो, लौकिकानां वादिनां चैकद्रव्यव्यवहाराभावात्, न च नीलादौ नीलाद्युत्पत्तिवारणाय समवायेन जन्यसत्त्वावच्छिन्नं प्रति तादात्म्येन द्रव्यस्य हेतुत्वं कल्पनीयमिति जन्यसज्जनकतावच्छेदकतया तत्सिद्धिः,

अथेति, कारणताघटितम् समवायिकारणत्वस्वरूपम्। योग्यायोग्यसाधारण्येन द्रव्यत्वप्रतीतेरभावेनायोग्ये परमाण्वादौ द्रव्यत्वसिद्धिर्न स्यादित्याह न हि तत्रेति। ननु समवायसम्बन्धेन नीलादिकं प्रति स्वसमवायिसमवेतत्वसम्बन्धेन नीलादिकं कारणम्, एवञ्च कपालनीलादिरूपं स्वसमवायिसमवेतत्वसम्बन्धेन यथा घटे वर्त्तत इति तेन तत्र समवायेन नीलादिरूपमुत्पद्यते तथा तत् कपालनीलादिरूपेऽपि वर्त्तत इति तेन तत्रापि तदुत्पद्येतेति तद्वारणाय समवायसम्बन्धेन जन्यसत्त्वावच्छिन्नं प्रति तादा-

त्म्यसम्बन्धेन द्रव्यं कारणं स्वीकरणीयम्, एवञ्च व्यापकधर्मावच्छिन्नकारणस्य द्रव्यस्य कपालनीलादिरूपेऽभावान्न तत्र नीलादिरूपोत्पत्तिरित्युक्तकारणतावच्छेदकतया द्रव्यत्वसिद्धिरित्याशङ्क्य निरस्यति न च नीलादाविति, निषेधे हेतुमाह—

**इत एव कार्यकारणभावात् नाशजनकतावच्छेदकतया वा जन्यसत्त्वस्यापि जातित्वसिद्धौ तेन सह द्रव्यत्वस्य साङ्कर्यात्। न च कालिकविशेषणतासमवायोभयसम्बन्धस्य सत्त्वनिष्ठकार्यतावच्छेदकतावच्छेदकत्वात् न जन्यसत्त्वं जातिः, तदुभयसम्बन्धेन सत्तावत्त्वाभावादेव च न नित्येषु कार्यत्वव्यवहार इति न तदनुपपत्तिमूलस्य कार्याकार्यवृत्तेरित्यादेरादर इति वाच्यम्, तद्वदेव गुणकर्मान्यत्वसमवायोभयसम्बन्धस्य तन्निष्ठकारणतावच्छेदकतावच्छेदकत्वेनोपपत्तौ द्रव्यत्वजात्यसिद्धेः,**

इत एवेति, उक्तकार्यकारणभावे सति कारणतावच्छेदकतया यथा द्रव्यत्वजातिसिद्धिस्तथा कार्यतावच्छेदकतया जन्यसत्त्वजातिरपि सिद्ध्येत्, एवं प्रतियोगितासम्बन्धेन नाशं प्रति तादात्म्यसम्बन्धेन जन्यसत्त्वेन कारणत्वस्य ध्वंसस्य ध्वंसापत्तिवारणाय स्वीकरणीतया तदवच्छेदकतयाऽपि जन्यसत्त्वजातिः सिद्ध्येत्, तथाच तया सह साङ्कर्यान्न द्रव्यत्वं जातिरिति भावः। ननु जन्यसत्त्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन न द्रव्यत्वेन कारणत्वं,किन्तु समवायकालिकोभयसम्बन्धेन सत्त्वावच्छिन्नं यत्समवायेन तत्प्रत्येव तादात्म्यसम्बन्धेन द्रव्यस्य कारणत्वम् ,एवं प्रतियोगितासम्बन्धेन नाशत्वावच्छिन्नं प्रत्यपि समवायकालिकोभयसम्बन्धेन सत्त्वविशिष्टं यत्तत्तादात्म्यसम्बन्धेन कारणम्, उक्तोभयसम्बन्धेन सत्त्वं कार्यमात्रवृत्त्येवेति कार्याकार्यवृत्तेर्न कार्यतावच्छेदकत्वमित्यस्यापि नावकाशः,तथाच नोक्तकार्यतावच्छेदकतया कारणतावच्छेदकतया च जन्यसत्त्वसिद्धिः,यया साङ्कर्यं स्यादित्याशङ्कते-न च कालिकवि-

शेषणतेति, उक्तोभयसम्बन्धेन सत्त्वावच्छिन्ननिष्ठसमवायसम्बन्धावच्छिन्नकार्यतानिरूपितं स्वाश्रयगुणकर्मान्यत्वसमवायोभयसम्बन्धेन सत्तावतः तादात्म्यसम्बन्धेन कारणत्वमित्यभ्युपगमेन सामञ्जस्ये द्रव्यत्वजातेरप्यसिद्ध्यापत्तेरिति परिहरति तद्वदेवेति, जन्यसत्त्वजात्यसिद्धिवदेवेत्यर्थः,तन्निष्ठेति सत्त्वनिष्ठेत्यर्थः । उक्तोभयसम्बन्धेन सत्त्वावच्छिन्नं प्रति ईश्वरीयज्ञानेच्छाप्रयत्नानामुपादानत्वाख्यविशेष्यतासम्बन्धेन सविषयकत्वेन रूपेण कारणत्वम्, उपादानत्वावच्छिन्नविशेष्यता च द्रव्य एवेति न नीले नीलोत्पत्तिप्रसङ्गः। अथवा समवायसम्बन्धेन नीलं प्रति गुणकर्मभिन्नत्वविशिष्टसत्त्वे सति स्वसमवायिसमवेतत्वसम्बन्धेन नीलस्य कारणत्वं, स च सम्बन्धो द्रव्य एव वर्त्तत इत्यतोऽपि न नीलादौ नीलोत्पत्तिप्रसङ्गः, यद्वा नैकस्मात् कारणात्कार्यं किन्तु सामग्री वै जनिकेति न्यायात् सामग्रीतः, रूपोत्पत्तिसामग्र्यां रूपप्रागभावोऽपि निविष्ट इति तस्य रूपेऽभावात् नोक्तातिप्रसङ्ग इति नोक्तयुक्त्या द्रव्यत्वजातिसिद्धिरित्याशयेनाह—

अस्तु वा तवोपादानत्वावच्छिन्नविशेष्यतया सविषयकत्वेनेश्वरीयस्य हेतुतयैव निर्वाहः, भवतु वा समवेतत्वविशेष एव प्रत्यासत्तिः, स्याद्वा रूपप्रागभावाभावादेव रूपादौ रूपाद्यनुत्पत्तिरिति कुतो द्रव्यत्वजातिसिद्धिः ॥ ६३ ॥ नन्वेवं भवतामपि कथमात्मादौ द्रव्यत्वव्यवहार इत्याकाङ्क्षायामाह—

अस्तु वेति ॥६३॥ चतुष्षष्टितमश्लोकावतरणिकामाह नन्वेवमिति,

नाशोद्भवस्थितिभिरेव समाहृताभि-र्द्रव्यत्वबुद्धिरिति सम्यगदीदृशस्त्वम् ॥
एकान्तबुद्ध्यधिगते खलु तद्विधान-मात्मादिवस्तुनि विवेचकलक्षणार्थः ॥ ६४ ॥

नाशोद्भवस्थितिभिरेवेति मूलम् ,अदीदृश इति क्रियापदम् ; दृष्टवानसीत्यर्थः,भूतकालीनदर्शनक्रियानुकूलकृतिमानिति यावत्, तत्र दर्शने अयथार्थभावनिवृत्त्यर्थमाह सम्यगिति, दर्शनक्रियायाः कर्त्तारमाह त्वमिति, कर्म च द्रव्यत्वबुद्धिरितीति, कैर्द्रव्यत्वबुद्धिरित्याकाङ्क्षायामाह नाशोद्भवस्थितिभिरेव समाहृताभिरिति, तत्र समाहृताभिरित्यनेन नाशादीनि प्रत्येकं न द्रव्यत्वबुद्धिकारणं, किन्तु त्रीण्यपि समुदितान्येव, द्रव्यत्वबुद्धिकारणत्वं शक्तिलक्षणं त्रिषु समुदायत्वेन रूपेण पर्याप्तं,न तु तत्तद्धर्मरूपेण प्रत्येकपर्याप्तमिति सूचितम् , एवकारेण नैतद्भिन्नेन परकल्पितैकान्तभिन्नद्रव्यत्वजातिद्रव्येतरव्यावृत्त्यादिना द्रव्यत्वबुद्धिरिति सूचितम् ; नाशोद्भवस्थितिलक्षणप्रयोजनं किमित्याशङ्कायामुत्तरार्द्धमाह एकान्तेति, आत्मादिवस्तुनि तद्विधानं द्रव्यत्वव्यवहारनियमनं,विवेचकलक्षणार्थः-विवेचकस्येतरभेदानुमापकस्य लक्षणस्यार्थः प्रयोजनं,खलु निश्चयेन,द्वितीयश्च लक्षणस्य प्रयोजनमितरभेदानुमितिः,अत एव लक्षणस्य विवेचकेति स्वरूपोपरञ्जकं विशेषणं सार्थकम् ,तथा चात्र आत्मादिद्रव्यं द्रव्येतरभिन्नं तादृशलक्षणवत्त्वादित्यनुमानं पर्यवस्यति, तत्र पराभ्युपगमेनाश्रयासिद्धिदोषो माभूदित्यत आत्मादिवस्तुनीत्यस्य विशेषणमाह एकान्तबुद्ध्यधिगते इति; अस्य च स्वरूपोपरञ्जकविशेषणत्वान्नानुमाने उद्देश्यतावच्छेदककोटौ प्रवेश इति सङ्क्षेपार्थः ।

लक्षणवाक्यस्य हि द्वयं प्रयोजनं नियतव्यवहारसिद्धिरितरभेदज्ञापनं च, तदिह—सद् द्रव्यलक्षणम्, उत्पादव्ययध्रौव्ययुक्तं सदिति सूत्राभ्यामुत्पादव्ययध्रौव्यसमाहारस्य द्रव्यलक्षणत्वसिद्धौ बौद्धदृष्ट्या क्षणिकसन्तन्यमानज्ञानस्वरूपतया नैयायिकादिदृष्ट्या चानादिनिधनज्ञानाश्रयद्रव्यतया प्रसिद्धे आत्मनि तेन द्रव्यव्यवहारविषयत्वं नियम्यते, स्वरूपासिद्धेरनुभवसिद्धप्रकारभेदेन निरासात्,

लक्षणवाक्यस्येति, लक्षणवाक्यस्य नियतव्यवहारप्रयोजनपक्षे बौद्धदृष्ट्या सन्तन्यमानक्षणिकज्ञानस्वरूपे आत्मनि व्यवहारनयेन द्रव्यत्वं व्यवस्थाप्योत्पादव्ययध्रौव्ययुक्तत्वेन द्रव्यपदव्यवहारविषयत्वं, नैयायिकदृष्ट्या ज्ञानाश्रये स्थिरे चात्मन्यर्जुसूत्रनयेन पर्यायरूपं व्यवस्थाप्योक्तलक्षणसम्पत्त्या द्रव्यपदव्यवहारविषयत्वं नियम्यते इत्यर्थः, आत्मादि द्रव्यपदवाच्यम्, उत्पादव्ययध्रौव्यसमाहारवत्त्वादित्यनुमाने पर्यवसिते उत्पादव्ययध्रौव्यसमाहारस्य हेतोस्स्वरूपासिद्धिनिवृत्त्यर्थमाह स्वरूपासिद्धेरिति, य एव बालो मया दृष्टस्स एव युवा वृद्धो वा दृश्यते इत्यनुभवसिद्ध एव उत्पादव्ययध्रौव्यसमाहारहेतुः, यतो बालावस्थाविगममृते युवाद्यवस्थोद्भवस्यासम्भवः, उक्तोभयावस्थाऽनुस्यूतश्चात्मद्रव्यम्, अन्यथा कस्यावस्था स्यात्, ननूक्तावस्थाया एव विगम उद्भवश्च, न तु तद्वदात्मद्रव्यस्य तौ, येनोक्तत्रितयवत्त्वं तस्य स्यादिति चेत्, मैवम्, अवस्थातद्वतोः कथञ्चिदभेदादेव, तत्र विनाशः बालावस्थारूपपूर्वपर्यायेणोत्पादश्च युवाद्यवस्थारूपोत्तरपर्यायेण, ध्रौव्यञ्च पुनरुभयपर्यायानुस्यूतात्मद्रव्येण, तथा चोक्तानुभवसिद्धो यः पूर्वपर्यायादिरूपः प्रकारभेदो निमित्तभेदात्मकस्तेनोक्तहेतोस्स्वरूपासिद्धिर्नेत्यर्थः। द्रव्यव्यवहारनियामकस्योत्पादव्ययध्रौव्यसमाहारस्य सिद्धौ तन्नान्तरीयकतया यत्प्रासङ्गिकं सिद्ध्यति तदाह—

तथा चाधिकरणसिद्धान्तेनात्मनो द्रव्यपर्यायोभयरूपत्वसिद्धिः। द्रव्यत्वावच्छिन्नपक्षकेतरभेदानुमितिस्तु स्वसमये येन रूपेण तदितरत्वस्य तदितरत्वव्यापकाभावप्रतियोगित्वस्य च सिद्धिस्तद्रूपावच्छिन्नात् तद्रूपावच्छिन्नेतरभेदाभिप्रायेण बोध्या। उत्पादव्ययध्रौव्यसमुदायवत्त्वावच्छिन्नेन पर्यायत्वावच्छिन्नभेदसिद्धिर्द्रव्यत्वावच्छिन्न इति निष्कर्षः। हेतुमत्ताग्राहकस्योत्पादव्ययसापेक्षसत्ताग्राहकाशुद्धद्रव्यार्थिकस्याश्रयणान्न हेतो-

रज्ञानासिद्धिर्न वा व्याप्त्यग्रह इति तत्त्वम् ॥६४॥ नन्वेवमुक्तसूत्रद्वयस्योत्पादव्ययध्रौव्ययुक्तं द्रव्यपदशक्तिग्राहकतापरत्वं पर्यवसितं, तथा च शक्यतावच्छेदकभेदात् नानार्थत्वं, पुष्पदन्तादिपदतुल्यत्वे च नित्यं बहुवचनान्तत्वं स्यादित्याशङ्कायामाह—

तथा चेति, उत्पादव्ययध्रौव्यसमाहारेणात्मादिवस्तु द्रव्यरूपतया व्यवहर्त्तव्यमित्येवं व्यवहारनियमन इत्यर्थः। ननु लक्षणस्य नियतव्यवहारसिद्धिप्रयोजनवदितरभेदानुमितिरपि प्रयोजनम्, प्रकृते उक्तलक्षणहेतुनाऽऽत्मादिद्रव्ये द्रव्यत्वावच्छेदेनैव द्रव्येतरभेदानुमितिः कर्त्तव्या, सा च कथं सङ्गता, द्रव्यत्वावच्छिन्ने आत्मादिद्रव्ये द्रव्येतरत्वावच्छिन्नपर्यायनिष्ठतादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकभेदस्य बाधादित्यत आह द्रव्यत्वावच्छिन्नेति, स्वसमये जैनसिद्धान्ते, येन रूपेण पर्यायत्वेन रूपेण, तदितरत्वस्य द्रव्येतरत्वस्य, पर्याये इति दृश्यम्, सिद्धिरित्यनेनान्वयः, तदितरत्वव्यापकाभावप्रतियोगित्वस्य द्रव्येतरत्वव्यापकाभावप्रतियोगित्वस्य, चकाराद् येन रूपेणेत्यस्यात्रापि सम्बन्धः, तस्योत्पादव्ययध्रौव्यसमाहारत्वेन रूपेणेत्यर्थः, उत्पादव्ययध्रौव्यसमाहारहेताविति दृश्यम्, तद्रूपावच्छिन्नात् उत्पादव्ययध्रौव्यसमाहारत्वावच्छिन्नात्, तद्रूपावच्छिन्नेतरभेदाभिप्रायेणेति, द्रव्येतरस्य प्रतियोगिनः पर्यायत्वेन रूपेण प्रसिद्धिरिति तद्भेदरूपसाध्यः पर्यायत्वावच्छिन्नप्रतियोगिताकभेद एव पर्यवस्यतीति पर्यायत्वावच्छिन्नद्रव्येतरनिष्ठप्रतियोगितानिरूपकभेदसाध्याभिप्रायेणेत्यर्थः, अस्यैव पर्यवसितार्थमाह उत्पादेत्यादिना, अत्रोत्पादव्ययध्रौव्यसमाहारहेतोर्नासिद्धिर्न वा व्याप्त्यग्रह इत्याह हेतुमत्त्वेति ॥६४॥ पञ्चषष्ठितमश्लोकावतरणिकामाह नन्वेवमित्यादिना, उक्तसूत्रद्वयस्य यत्सत्तद्द्रव्यम्, उत्पादव्ययध्रौव्ययुक्तं सदिति सूत्रद्वयस्य। शक्यतावच्छेदकभेदादिति,तत्पदस्थले तत्पदस्य

वक्तृबुद्धिविषयतावच्छेदकीभूतघटत्वपटत्वमठत्वाद्यवच्छिन्ने शक्तेर्घटत्वपटत्वादिनानाधर्माणां शक्यतावच्छेदकत्वेन शक्यतावच्छेदकभेदेऽपि शक्यतावच्छेदकतावच्छेदकीभूतबुद्धिविषयतावच्छेदकत्वेन रूपेण तेषां सर्वेषां धर्माणामनुगमादैक्येन तत्पदं न नानार्थकम्, नन्वेवं बुद्धिविषयतावच्छेदकत्वस्य शक्यतावच्छेदकतावच्छेदकत्वे शाब्दबोधे तद्भानापत्तिरिति चेत्, मैवम्, बुद्धिविषयतावच्छेदकत्वस्योपलक्षणविधया शक्यतावच्छेदकतावच्छेदकत्वात्, उपलक्षणस्य च शाब्दबोधे भानानङ्गीकारात्, घटत्वपटत्वादेश्च शक्यतावच्छेदकत्वं विशेषणविधयैव, अत एव तस्य शाब्दबोधे भानम्, विशेषणत्वञ्च तत्तत्पदजन्यबोधविषयत्वेन शक्तिविषयत्वं, उपलक्षणत्वञ्च तत्तत्पदजन्यबोधविषयत्वेन शक्त्यऽविषयत्वे सति शक्तिविषयत्वमित्यनयोर्विशेषः, न च तत्पदवद्द्रव्यपदे शक्यतावच्छेदकानामुत्पादादित्रयाणां किमप्यनुगमकमस्तीति हर्यादिपदवद्द्रव्यपदमपि नानार्थकं स्यादेवेति भावः। ननु यथा पुष्पदन्तदम्पत्यादिपदं नानाधर्मावच्छिन्नविषयकैकबोधजनकैकशक्तिमत्त्वान्न नानार्थकं, तथा द्रव्यपदमपि, हर्यादिपदं तु विष्णुत्वसिंहत्वाद्यवच्छिन्नविषयकविभिन्नबोधजनकनानाशक्तिमत्त्वान्नानार्थकं, द्रव्यपदजन्यबोधं प्रत्युत्पादादिसमुदितत्रितयधर्मावच्छिन्ने शक्तिग्रहस्यैकस्य कारणत्वाद्द्रव्यपदं न नानार्थकम्, हरिपदं तु हरिपदजन्यं विष्णुबोधं प्रति विष्णुत्वावच्छिन्ने शक्तिग्रहस्य सिंहबोधं प्रति सिंहत्वावच्छिन्ने शक्तिग्रहस्य कारणत्वमित्येवं प्रत्येकधर्मवति शक्तिग्रहस्य विभिन्नस्य कारणत्वान्नानार्थकमिति तात्पर्यमिति चेत्, तर्हि पुष्पदन्तपदं चन्द्रत्वावच्छिन्नं सूर्यत्वावच्छिन्नं च बोधयत्वित्याकारिकाया एकस्या एव चन्द्रत्वसूर्यत्वधर्मद्वयावच्छिन्ने शक्तेर्नित्यं द्विवचनान्तं तद्वद्द्रव्यपदमप्युत्पादव्ययध्रौव्यावच्छिन्नं बोधयत्वित्याकारिकायास्समुदितोत्पादादित्रितयधर्मावच्छिन्ने एकशक्तेर्भावेन नित्यं बहुवचनान्तमेव स्यादित्याशयेनाह—पुष्पदन्तादिपदतुल्यत्वे चेति,

नाशोद्भवस्थितिमति क्रमशो न शक्तो, द्रव्यध्वनिस्तदिह नो पृथगर्थताभृत्।
शब्दस्वभावनियमाद्वचने न भेदः, स्वव्याप्यधर्मिगबहुत्वनिराकृतेश्च ॥ ६५ ॥

यथा पुष्पदन्तादिपदजन्यतावच्छेदकं चन्द्रत्वादिप्रकारकत्वे सति सूर्यत्वादिप्रकारकशाब्दबोधत्वमेव, कारणं च तत्र पुष्पदन्तादिपदं चन्द्रे सूर्ये च शक्तमित्याकारकः शक्तिग्रह इत्येकोच्चारणान्तर्भावेन चन्द्रत्वसूर्यत्वादिविशिष्टशक्तत्वात् तस्य क्रमेण पृथगर्थबोधकहर्यादिपदवत् न नानार्थत्वं, तथा द्रव्यपदस्याप्युत्पादनाशस्थितिप्रकारकशाब्दबोधत्वमेव कार्यतावच्छेदकं, कारणं च तत्रोत्पादनाशस्थितिमत्येव द्रव्यपदं शक्तमित्याकारकः शक्तिग्रह इति, तद्वदेव नो द्रव्यध्वनिः पृथगर्थताभृत्,

नाशोद्भवस्थितिमतीतिमूलम्, क्रमशो नाशादिप्रत्येकधर्मेण, नाशोद्भवस्थितिमति द्रव्यध्वनिर्न शक्तः, तत् तस्मात्, इह जैनसिद्धान्ते, नो पृथगर्थताभृत् न नानार्थकः, उत्पादवति द्रव्यपदं शक्तं नाशवति द्रव्यपदं शक्तं ध्रौव्यवति द्रव्यपदं शक्तमित्येवं प्रत्येकधर्मावच्छिन्ने शक्तिग्रहस्य कारणत्वे नानार्थकत्वं स्यात्, न चैवम्, उत्पादव्ययध्रौव्यरूपसमुदितत्रितयधर्मावच्छिन्ने द्रव्यपदं शक्तमित्येवमेकस्यैव शक्तिग्रहस्य कारणत्वाभ्युपगमात्, अत एव तत्कार्यतावच्छेदकमप्युत्पादव्ययध्रौव्यरूपसमुदितत्रितयधर्मप्रकारकद्रव्यविशेष्यकशाब्दबोधत्वमेव, न तूत्पादादिप्रत्येकधर्मप्रकारकद्रव्यविशेष्यकशाब्दबोधत्वमिति भावः। ननु आपः शिकता इत्यादिशब्दवत् कथं न बहुवचनाऽऽपत्तिरित्याशङ्कायां निषेधे हेतुमाह शब्दस्वभावनियमाद्वचने न भेद इति–द्रव्यपदे यदेकवचनं दृश्यते तस्मिन् भेदो दृष्टवचनातिक्रमो न, बहुवचनान्ततापत्तिर्न, तत्र हेतुः शब्दस्वभावनियमा-

दिति, शब्दस्वभावे नियमो व्याप्तिः तस्मादित्यर्थः; यद्यच्छब्दस्य यो यस्स्वभावस्स स न कदापि तं तं स्वभावं परिजहातीति व्याप्तिः, तत्र दृष्टान्तः यथाऽबादिशब्दस्य बहुवचनस्वभावः, अन्यथा निस्स्वभावत्वापत्त्या वस्तुत्वमेव न स्यात्, एकवचनस्वभावनियतं च द्रव्यपदमिति तं न कदापि परिजहातीत्येकवचननियतमेव तद्भवतीतिभावः। ननु शब्दस्वाभाव्याद्वचने भेदो मास्तु अर्थस्वाभाव्यात्तु स स्यादेवेत्याशङ्कायां निषेधे हेतुमाह स्वव्याप्यधर्मिगबहुत्वनिराकृतेश्चेति, स्वपदेन स्यादिप्रत्ययप्रकृतिद्रव्यपदवाच्यतावच्छेदकमुत्पादव्ययध्रौव्यं ग्राह्यम्, तद्व्याप्यं धर्मिगम् उत्पादव्ययध्रौव्यधर्माश्रयद्रव्यधर्मिगतं यद्बहुत्वं तन्निराकृतेः तदभावादिति सङ्क्षेपार्थः, उत्तरार्द्धमवतारयितुमाह—

बहुवचनान्तता च या तत्रापाद्यते सा किं शब्दस्वाभाव्यादर्थस्वाभाव्याद्वा, नाद्यः, आपः सिकता अप्सरस इत्यादिवद् द्रव्यपदस्याविष्टबहुवचनताया व्याकरणासिद्धत्वात्, तदाह—शब्दस्वभावनियमादेकत्रार्थे बहुवचनान्तानां शब्दानां केषांचिदेव स्वभावनियतत्वात्, वचने न भेदो दृष्टवचनातिक्रमो न, द्रव्यपदे बहुवचनान्ततापत्तिर्नेत्यर्थः। न द्वितीयः, स्वव्याप्यस्य नाशोद्भवस्थितिव्याप्यस्य, धर्मिगस्य धर्मिगतस्य, बहुत्वस्य निराकृतेः—अभावात्।

बहुवचनान्ततेति, तत्र द्रव्यपदे, आविष्टेति नियतेत्यर्थः। शब्दस्वभावनियमादित्यस्य विवरणमाह एकत्रार्थे इत्यादिना नियतत्वादित्यन्तेन, केषाञ्चिदेव अप्दारादिशब्दानामेव, वचने न भेद इत्यस्यार्थमाह दृष्टवचनातिक्रमो नेति, अस्यैव फलितार्थमाह द्रव्यपद इत्यादिना, द्वितीयपक्षनिषेधे हेतूपदर्शकं स्वव्याप्येत्यादिमूलं विवृणोति स्वव्याप्यस्येत्यादिना,

अस्यैव भावार्थमुपदर्शयति—

अयं भावः—बहुवचनेन स्वप्रकृत्यर्थतावच्छेदकव्याप्यमेव बहुत्वं बोध्यत इति, अन्यथैकत्रापि घटे घटपटकटकटाहगतं बहुत्वमादाय घटा इति प्रयोगापत्तेः, न चैकत्र द्रव्ये उत्पादव्ययध्रौव्यव्याप्यं बहुत्वमस्तीति न द्रव्यपदस्य बहुवचनान्ततेति। पुष्पदन्तादिपदे तु चन्द्रत्वसूर्यत्वादिव्याप्यद्वित्वस्य नियमतः सत्त्वात् द्विवचनान्ततैव ॥ ६५ ॥

अयं भाव इत्यादिना, प्रयोगापत्तेरिति, नन्वेवं तर्हि घटपटकटाहगतं बहुत्वमादाय घटपटकटाहा इति प्रयोगोऽपि न स्यात् उक्तबहुत्वस्योद्देश्यतावच्छेदकस्य घटत्वस्याभाववति पटे कटाहे च पटत्वस्याभाववति घटे कटाहे च कटाहत्वस्याभाववति घटे पटे च सत्त्वेन तद्व्याप्यत्वाभावादित्युक्तदोषनिवृत्तये यत्रैकधर्मस्योद्देश्यतावच्छेदकत्वं तत्रैवोद्देश्यतावच्छेदकव्याप्यं बहुत्वं बहुवचनेन बोध्यते द्विवचनेन चोद्देश्यतावच्छेदकव्याप्यं द्वित्वं बोध्यते, यत्र च नानाधर्मस्योद्देश्यतावच्छेदकत्वं तत्र केवलमेव बहुत्वं बहुवचनेन द्वित्वं च द्विवचनेन बोध्यत इत्यभ्युपगन्तव्यम्, तथा च द्रव्यपदस्थले उत्पादव्ययध्रौव्याणामुद्देश्यतावच्छेदकत्वेनाभ्युपगतानां नानाधर्मत्वेन केवलस्यैव बहुत्वस्य भानं स्यादिति स्वव्याप्यधर्मिगबहुत्वनिराकृतेरिति हेतुग्रन्थोऽसङ्गत इति चेत्, मैवम्, समनियतनानाधर्मस्योद्देश्यतावच्छेदकत्वस्थलेप्युद्देश्यतावच्छेदकव्याप्यबहुत्वस्यापि बहुवचनेन भानाभ्युपगमात्, तथा चोत्पादादित्रयाणां समनियतनानाधर्मत्वेन नोक्तदोषः, यद्वोत्पादादित्रयाणामपि द्रव्यत्वत्वेन रूपेणैकत्वेन विवक्षणादत्राप्येकधर्मस्यैवोद्देश्यतावच्छेदकत्वमिति नोक्तदोष इति भावः। चन्द्रत्वसूर्यत्वादिव्याप्यद्वित्वस्येति, अत्र चन्द्रत्वसूर्यत्वे द्वे अपि पुष्प-

दन्तपदप्रवृत्तिनिमित्तत्वेन रूपेणैकीकृते, तथाचात्राप्येकधर्मस्योद्देश्यतावच्छेदकत्वादुद्देश्यतावच्छेदकव्याप्यद्वित्वभानमुपपद्यते, नातश्चन्द्रसूर्यगतैकद्वित्वस्य चन्द्रत्वाऽभाववति सूर्ये सूर्यत्वाभाववति च चन्द्रे सत्त्वात् चन्द्रत्वव्याप्यत्वस्य सूर्यत्वव्याप्यत्वस्याभावेपि पुष्पदन्तादिपदे त्वित्यादिग्रन्थाऽसङ्गतिः, यतः पुष्पदन्तपदप्रवृत्तिनिमित्तस्य चन्द्रत्वस्य सूर्यत्वस्य च न चन्द्रत्वत्वेन सूर्यत्वत्वेन च रूपेणोद्देश्यतावच्छेदकत्वं किन्तु पुष्पदन्तपदप्रवृत्तिनिमित्तत्वेन रूपेणेति तत्प्रवृत्तिनिमित्तत्वरूपसामान्यधर्मावच्छिन्नाभाववान् न चन्द्रस्सूर्यश्च, किन्त्वऽन्य एव, तदवृत्तित्वेन द्वित्वस्य चन्द्रत्वसूर्यत्वव्याप्यत्वं भवत्येवेति भावः॥६५॥पट्षष्ठितमश्लोकावतरणिकामाह—

नन्वत्रापि प्रकृत्यर्थतावच्छेदकव्याप्यं बौद्धं बहुत्वमस्त्येव, नीलघटयोरभेदः शिवरामयोरभेद इतिवदुत्पत्तिस्थितिनाशवतामैक्यमिति व्यवहारस्य जागरूकत्वात्, तथा च द्रव्यपदान्नित्यं बहुवचनप्रसङ्गः, तत्राह—

नन्वत्रापीत्यादिना, अत्रापि द्रव्येऽपि, प्रकृत्यर्थतावच्छेदकव्याप्यमिति स्यादिप्रत्ययप्रकृतिरत्र द्रव्यपदं, तदर्थः उत्पादव्ययध्रौव्यवद्द्रव्यं, तत्त्वाऽवच्छेदकमुत्पादव्ययध्रौव्यं तद्व्याप्यमित्यर्थः ।

एकत्वसंवलितविध्यनुवादभावात्, बौद्धं बहुत्वमपि नो वचनात्ययाय ।
प्रत्येकमन्वयितयापि न तत्प्रसङ्ग-स्तात्पर्यसंघटितसन्निहिताश्रयत्वात् ॥ ६६ ॥

एकत्वसंवलितेति मूलम्, बौद्धम् अपेक्षाबुद्धिविषयत्वलक्षणं, बहुत्वमपि वचनाऽत्ययाय वचनम् एकवचनं तदत्ययः बहुवचनप्रसङ्गः तस्मै, नो, नो इति प्रतिषेधार्थकमव्ययम्, अमानोना प्रतिषेधवचना इतिवचनात्, निषेधे हेतुमाह एकत्वसंवलितविध्यनुवादभावादिति, प्रत्येकमन्वयितयाऽपि तत्प्रसङ्गो न-उत्पादादीनां प्रत्येकं उत्पादो व्ययो वा ध्रौव्यं वेत्यैकैकस्यान्व-

यितयाऽपि आश्रयेण सहान्वयादपि, तत्प्रसङ्गः, बहुवचनप्रसङ्गो न, निषेधे हेतुमाह तात्पर्यसंघटितसन्निहिताश्रयत्वादितीत्यन्वयः।

तत्तद्धर्मप्रकारकबुद्धिविषयत्वरूपं द्वित्वबहुत्वादि तत्तद्धर्मावच्छेदेन पर्याप्तम्,तेनैको द्वौ एको बहव इत्यादेर्नापत्तिः, तच्च क्वचिदेकत्वावच्छिन्ने विधीयते—यथैको घटो नीलपीतत्वाभ्यां द्विरूपो नीलपीतश्वेतत्वैर्बहुरूप इति, क्वचित् तदवच्छिन्नमनूद्यैकत्वं विधीयते—यथा नीलपीतयोर्नीलपीतश्वेतानां वैक्यमित्यत्र, एवं च बौद्धस्य बहुत्वस्य विध्यनुवादभावेनैकत्वसाकाङ्क्षत्वात् न द्रव्यपदोत्तरैकवचनानुपपत्तिः।

नापत्तिरिति, द्वित्वप्रतियोगिकपर्याप्तिसम्बन्धेनैकत्वाऽवच्छेदेन द्वित्वस्य बहुत्वप्रतियोगिकपर्याप्तिसम्बन्धेनैकत्वावच्छेदेन बहुत्वस्य च बाधादिति भावः। तच्चेति तत्तद्धर्मावच्छेदेन पर्याप्तं तत्तद्धर्मप्रकारकबुद्धिविषयत्वादिरूपं द्वित्वबहुत्वादि चेत्यर्थः, तदवच्छिन्नं—तत्तद्धर्मप्रकारकबुद्धिविषयत्वलक्षणद्वित्वबहुत्वाद्यवच्छिन्नम्, विध्यनुवादभावेन—उद्देश्यविधेयभावेन, एकत्वसाकाङ्क्षत्वादिति, यत्रैकत्वमेकवचनेन प्रतीयते तत्रैव विधेयतयोद्देश्यतया वा बहुत्वं प्रतीयते बहुत्वप्रतीत्यन्यथाऽनुपपत्त्या द्रव्यपदोत्तरमेकवचनमभ्युपगन्तव्यमेवेति भावः। ननूत्पादव्ययध्रौव्याश्रया इत्यत्रोत्पादव्ययध्रौव्याणां द्वन्द्वसमासे कृते "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमन्वेतीति" न्यायादुत्पादाद्याश्रयाणां त्रयाणां बोध इति तत्र यथा बहुवचनान्तत्वं तथा तत्समानशीलं द्रव्यपदमपीति तत्रापि बहुवचनान्तत्वमेव युक्तमिति चेत्, न, मीमांसकमते सर्वः खलु प्रधानान्वयमेवाकाङ्क्षति, वाक्ये च भावनालक्षणक्रियाया एव प्राधान्यात्तत्रैव सर्वेषां पदार्थानामन्वय इति स्थितौ नीलो घटोऽस्तीत्यादौ नीलोऽस्ति घटोऽस्तीति पृथगेवोक्तवाक्याद्-

बोधः, न तु नीलाभिन्नघटोऽस्तीत्यऽभेदसम्बन्धेन नीलविशिष्टघटोऽस्तीति वैको बोधः, एवं नीलं घटमानयेत्यादावपि नीलमानय घटमानयेति पृथगेव बोधः, न तु नीलाभिन्नघटकर्मकानयनकर्त्तेति बोधः, अभेदसंसर्गेण नीलविशिष्टघटकर्मकानयनकर्त्तेति बोधो वा, न चैवं यत्किञ्चिन्नीलस्य यत्किञ्चिद्घटस्य स्थितौ आनयने च नीलो घटोऽस्ति नीलं घटमानयेति प्रयोगापत्तिः, व्यक्तिवचनानां सन्निहितविशेषपरत्वमिति नियमेन नीलत्वावच्छिन्नवाचकस्य नीलपदस्य घटत्वावच्छिन्नवाचकस्य घटपदस्य व्यक्तिवचनत्वेन नीलपदस्य सन्निहितघटरूपविशेषपरत्वं, घटपदस्य च सन्निहितनीलरूपविशेषपरत्वमिति य एव नीलः स एव घट इत्येकत्वे सत्येव नीलो घटोऽस्ति नीलं घटमानयेत्यस्य प्रयोगस्योपपत्तिः, अर्थात् घटोऽस्तीति बोधविषयो यो घटत्वेन घटः स एव घटः नीलोऽस्तीति नीलत्वेन रूपेण बोधविषयः, तथा द्रव्यपदात् प्रत्येकमुत्पादाद्याश्रयस्य बोधेऽपि यैवोत्पादाश्रयव्यक्तिः सैव व्ययाश्रयव्यक्तिः स्थित्याश्रयव्यक्तिश्चेति स्थितौ तत्र बहुत्वस्य बाधितत्वेन द्रव्यपदस्य बहुवचनान्तत्वासम्भवादित्याशयेन पूर्वार्द्धं व्याख्यायोत्तरार्द्धं विवृणोति–

एवं द्रव्यपदस्योत्पादव्ययध्रौव्याश्रयवाचित्वे द्वन्द्वसमानशीलत्वादुत्पादादीनां प्रत्येकमाश्रयान्वयादाश्रयत्रयबोधाद्बहुत्वापत्तिरित्यपि निरस्तम्, कस्मात्, तात्पर्येण सङ्घटितं विषयीकृतं यत् सन्निहिताश्रयत्वमेकान्वयप्रतियोगित्वं ततः ।

एवं द्रव्यपदस्येति। तात्पर्येण द्रव्यपदमुत्पादव्ययध्रौव्याश्रयं द्रव्यरूपमेकमर्थं बोधयत्वित्याकारकेण वक्तुस्तात्पर्येण, एकान्वयप्रतियोगित्वं द्रव्यरूपैकार्थानुयोगिको योऽन्वयस्सम्बन्धस्तत्प्रतियोगित्वम्, उक्तमेवार्थं द्रढयति—

इदमुक्तं भवति–यथा मीमांसकमते घटो नील इत्यादौ नीलं घटमानयेत्यादौ च नीलोऽस्ति घटोस्ति नील-

मानय घटमानयेत्यन्वयबोधो, न तु नामार्थानां कारकाणां च परस्परमन्वयो, विशेषणान्वितविभक्त्यर्थानयनानुभवादिति न विशिष्टवैशिष्ट्येनान्वयो, न च नीलत्वेन घटत्वेन च घटद्वयबोधो, व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमेन नीलत्वेन घटत्वेन चैकस्यैव बोधनात्, अन्यथाऽऽरुण्याधिकरणविरोधादिति स्थितिः, तथा प्रकृतेऽप्युत्पादाद्याश्रयत्वत्रयेणैकस्यैव बोधोपपत्तिरिति ।

इदमुक्तम्भवतीत्यादिना, आरुण्याधिकरणेति, अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणातीत्यादौ सोमक्रयणे प्रत्येकमारुण्यकरणत्वादेरन्वयेप्यारुण्यादिविशिष्टा गोव्यक्तिरेकैवेत्यस्य व्यवस्थापकमधिकरणमारुण्याधिकरणं,तस्य विरोधात्—यतो, ऽरुणयाऽन्यया गवा तदन्यया पिङ्गाक्ष्या गवाऽन्यया चैकहायन्या गवा सोमक्रयणस्य तदधिकरणानभिप्रेतस्यापत्तेरित्यर्थः । प्रकृतेऽपि द्रव्यपदेऽपि । नीलं घटमानयतीत्यादौ नीलाभिन्नघटकर्मकानयनबोधो मीमांसकमते मानसबोधरूपः पार्ष्ठिकः,विशिष्टवैशिष्ट्यावगाहिबोधस्य प्रथमत एव सद्भावेन स चानुभवातीतत्वान्नाभ्युपगमार्हः, अन्यथा नीलादिविषयत्वानां घटादिविषयत्वानाञ्च साक्षात्परम्परया वा निरूप्यनिरूपकभावाऽऽनापन्नत्वाद्वाक्यभेदापत्तेरिति मनसि निधाय यथाश्रुतं मीमांसकमतं प्रतिक्षिपति—

वस्तुत उक्तमीमांसकमतमयुक्तम्, नीलं घटमानयेत्यादौ विशिष्टवैशिष्ट्यान्वयबोधस्यैव युक्तत्वात्, अन्यथा वाक्यभेदापत्तेः, नीलघटमानयति न वेति संशयापत्तेश्च ।

वस्तुत इत्यादिना, समानप्रकारकत्वेनैव संशयनिश्चययोः प्रतिबध्यप्रतिबन्धकभाव इति नीलं घटमानयतीति वाक्यजन्योक्तनिश्चयद्वयस्य भिन्नप्रकारकस्य सद्भावकालेऽपि नीलविशिष्टघटकर्मकानयनकर्तृत्वतदभावप्रकारकसंशयापत्तिस्स्यादित्याह नील-

घटमानयति न वेति संशयापत्तेश्चेति, नीलविशिष्टस्यानयनकर्मतायामन्वयादेव यत्र नीलं घटं नानयति किन्तु नीलं पटं पीतं च घटमानयति तत्र नीलं घटं नानयतीतिप्रयोगस्तेन नीलविशिष्टघटकर्मकानयनकर्तृत्वाभावबोधश्चोपपद्यते, अन्यथा नीलस्य घटस्य च प्रत्येकस्यानयनकर्मत्वेन तदभावस्य बाधादुक्तवाक्यादुक्तबोधो न स्यादित्याशयेनाह—

अत एव नीलं घटं नानयतीत्यभावविशेषबोधोऽपि सुघटः, एवं चोत्पादविशिष्टनाशविशिष्टध्रौव्यविशिष्टाश्रयताप्रकारताकैकविशेष्यताकस्योत्पादत्वाद्यवच्छिन्नप्रकारतानिरूपिताश्रयत्वावच्छिन्नैकविशेष्यताकस्य वा बोधस्य प्रकृते सम्भवात् नाश्रयत्रयबोधापत्तिरिति न्यायनयानुसारी पन्थाः ॥६६॥ उक्तमेवार्थं परदृष्टान्तेन द्रढयित्वा विशेषमाह—

अत एवेति, यदि च मीमांसकमतं न युक्तं तदा तद्रीत्याश्रयणेन द्रव्यपदस्यैकवचनान्तत्वोपपादनं दुर्घटमतो न्यायनयमाश्रित्य तदुपपादयति एवं चोत्पादेति, तत्र पूर्वकल्पे ध्रौव्यस्याश्रयतानिष्ठा या प्रकारता साक्षात्तदवच्छेदकत्वं तदवच्छेदकत्वं नाशस्य तदवच्छेदकत्वं चोत्पादस्य, अत्र विनिगमनाविरहाद्द्वयस्यैव साक्षात्प्रकारतावच्छेदकत्वमुत्पादध्रौव्ययोश्च परंपरयाऽवच्छेदकत्वम्, उत्पादस्यैव वा साक्षात्प्रकारतावच्छेदकत्वं नाशध्रौव्ययोश्च परंपरयाऽवच्छेदकत्वमित्यादिकल्पनापत्तेर्नियतबोधाऽनिर्वाहादेकत्र द्वयमिति न्यायानुसारी द्वितीयः कल्पः, अथवोत्पादत्वादिषु त्रिषूत्पादादित्रितयनिष्ठा या प्रकारता तदवच्छेदकता व्यासज्यवृत्तिः, सा चैका वा भिन्ना वा, उभयथापि प्रकारतावच्छेदकतात्वेन व्यासज्यवृत्तिरित्येवमेकप्रकारताकैकविशेष्यताकैकबोधः, एकत्र द्वयमितिरीत्या भूतलं घटवत्पटवदित्यादिवाक्यजन्यघटवन्निष्ठप्रकारतानिरूपिता सती पटवन्निष्ठप्रकारता निरूपिता या भूतलनिष्ठविशेष्यता तन्निरूप-

कत्त्वोधवन्नानाप्रकारकैकविशेष्यकवोधो वा भिन्नावच्छेदकतानिरूपिता अभिन्नावच्छेदकतानिरूपिता वा या त्रितयनिष्ठप्रकारता तन्निरूपितैकविशेष्यताकत्त्वोधो वा द्रव्यपदाद्भवतीति नैकवचनानुपपत्तिर्द्रव्यपद इतिभावः ॥६६॥ सप्तषष्ठितमश्लोकावतरणिकामाह उक्तमेवार्थमित्यादिना,

यद्वन्महेश्वरपदन्न विभिन्नवाच्यं, सर्वज्ञतादिषडवच्छिदया परेषाम् ॥
द्रव्यध्वनिस्तव तथैव परं पदार्थ-वाक्यार्थभावभजना न परैः प्रदृष्टा ॥ ६७ ॥

यद्वत् यथा, परेषां नैयायिकानां, सर्वज्ञतादिषडवच्छिदया सर्वज्ञतादिभिः षड्भिः प्रवृत्तिनिमित्तैः समुच्चितैर्महेश्वरपदं न विभिन्नवाच्यं न भिन्नार्थं, तदुक्तं स्मृतौ 'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः ॥ अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य १ ॥" सर्वज्ञता सर्वविषयकं ज्ञानं, तृप्तिः स्वनिष्ठसुखकादाचित्कत्वाभावबोधः, अनादिबोधः प्रागभावाप्रतियोगिज्ञानं, स्वतन्त्रता कर्तृता, सा जगदपेक्षयेति जगत्कर्तृत्वं, नित्यमलुप्ता कालनिष्ठाभावाप्रतियोगिनी शक्तिर्गुणः कारणता वा, अनन्तशक्तिरनन्तकुलालत्वाद्यवच्छिन्नकारणता, एतानि षडङ्गानि प्रवृत्तिनिमित्तानि, विधिज्ञा वेदतदर्थविदो, महेश्वरस्य महेश्वरपदस्याहुरिति तदर्थ इति। तव द्रव्यध्वनिस्तथैवोत्पादादिप्रवृत्तिनिमित्तभेदेऽप्येकार्थ एव, परम्, "अनेकमेकात्मकमेव वाच्यं, वृक्षा इति प्रत्ययवत्प्रकृत्या ॥" इत्याद्यनुसारेण केवलं पदमगमकं वाक्यं तु गमकमिति न्यायेन च एकस्य सखण्डाखण्डार्थतया वाक्यस्यापि पदत्वं पदस्यापि वाक्यत्वं चेति भजना तु, परैर्न प्रदृष्टा, स्या-

द्वादविद्यागोचरत्वात् तस्याः । एवं च द्रव्यपदस्यापि मिथःसंसृष्टानेकार्थबोधकतया वाक्यत्वम् अनुगतैकार्थबोधकतया च पदत्वमिति स्याद्वादोऽनुशीलनीयः ॥ ६७ ॥

यद्वदिति मूलम्, यद्वत् परेषां सर्वज्ञतादिषडवच्छिदया महेश्वरपदं विभिन्नवाक्यं न, तथैव तव द्रव्यध्वनिः, परं केवलं, परैः पदार्थवाक्यार्थभावभजना न प्रहृष्टेत्यन्वयः। उक्तस्मृतिं विवृणोति सर्वज्ञता सर्वविषयकं ज्ञानमित्यादिना, अत्र कुसुमाञ्जलौ पञ्चमस्तबके तृप्तिरित्यस्य स्वभोगेच्छाविरह इत्यर्थः अलुप्तशक्तिरित्यस्य नित्यप्रयत्न इत्यर्थः कृतः, अनन्तकुलालत्वाद्यवच्छिन्नकारणतेति सर्गादावीश्वर एक एव कुलालकुविन्दादिरूपं परिगृह्य घटपटादिकं विदधातीति कुलालत्वकुविन्दत्वादिधर्मावच्छिन्नकारणतारूपानन्तशक्तिर्महेश्वरे इत्यर्थः, तथैवेत्यस्य विवरणमाह उत्पादादिप्रवृत्तिनिमित्तभेदेऽप्येकार्थ एवेति, उत्पादव्ययध्रौव्याणां परस्परसंसृष्टानां प्रतिपादकत्वेन द्रव्यपदस्य वाक्यत्वं त्रितयधर्मविशिष्टस्य धर्मिण एकस्य प्रतिपादकत्वेन पदत्वमित्याशयेनाह एवञ्चेति ॥६७॥ अष्टषष्ठितमश्लोकावतरणिकामाह—

एवं च द्रव्यपदस्य विचित्रशक्तिस्वभावत्वात् तज्जन्यबोधोऽपि विचित्र एवेत्यनुशास्ति—

एवं च शक्तितदवच्छिदयोर्भिदातो, द्रव्यध्वनेर्नयभिदैव विचित्रबोधः ॥
काचित् प्रधानगुणभावकथा क्वचित्तु, लोकानुरूपनियतव्यवहारकर्त्री ॥ ६८ ॥

एवं च शक्तेस्तदवच्छेदकस्य च भेदात्, द्रव्यध्वनेर्द्रव्यपदात्, नयभिदैव नयभेदेनैव, विचित्रबोधो भवति, क्वचित्तु काचित् या प्रधानगुणभावकथा सा लोकानुरूपस्य नियतस्यैकनयसम्बन्धिनो व्यवहारस्य कर्त्री, सापि

भगवत्प्रवचन एव सङ्गच्छते, सतामेव हि भेदाभेदनित्यानित्यसामान्यविशेषादीनामनन्तानां सप्रतिपक्षाणामर्थानां शिरःपाणिचरणादीनामिव कस्यचिन्मुख्यत्वस्य कस्यचिद् गौणत्वस्य च विवक्षारूढत्वसम्भवात्, अन्यतरमिथ्यैकान्ते तु तुल्यन्यायेनावशिष्टलोपात् न वाचोऽवकाश इति।

एवं च द्रव्यपदस्येत्यादिना, एवं चेत्यादि मूलं ग्रन्थकारेण सुस्पष्टं विवृतमिति नास्य टीका प्रतन्यते। सुन्दोपसुन्दन्यायेन भेदाभेदयोर्नित्यानित्याद्योः परस्परप्रतिस्पर्द्धिनोरेकतरस्यैकनयाऽपेक्षयैकान्ततो मिथ्यात्वमित्यभ्युपगमे तदपरस्यापि तद्विरोध्यपरनयाऽपेक्षयैकान्ततो मिथ्यात्वमेव स्यादित्येवं भेदाभेदाद्युक्तसर्वधर्माणां लोपात् कस्य प्राधान्यं कस्य वा गौणत्वं विवक्ष्येतेति नैकान्तवादे प्रधानगुणभावकथाप्रसर इत्याशयेनाह—अन्यतरमिथ्यैकान्ते त्विति, परप्रश्नद्वारेण प्रकारविशेष्यभेदेन प्रकारतावच्छेदकविशेष्यतावच्छेदकादिभेदेन च द्रव्यपदाद्विचित्रबोधोपपत्त्यर्थमाह—

**कीदृशो विचित्रबोधो द्रव्यपदादिति चेत्, उत्पादव्ययसापेक्षसत्ताग्राहकेण समुच्चितत्रयाश्रयत्वप्रकारकः, उत्पादव्ययगौणत्वेन सत्तामुख्यत्वग्राहकेण चोत्पत्तिनाशविशिष्टध्रौव्यप्रकारकः, भेदनयेन त्रयाश्रयत्वप्रकारकोऽभेदनयेन तत्तादात्म्यप्रकारकः, उत्पादव्ययोपलक्षणत्वग्राहकनयेन ध्रौव्यमात्रप्रकारकः, विशेषेषु सामान्यग्राहकनयेन द्रव्यत्वप्रकारकः, उत्पादस्थितिभङ्गा सत्तेति वचनात् समुदायग्राहकनयेनोत्पादस्थितिभङ्गमात्रविशेष्यकः,**

कीदृश इति, द्रव्यपदादुत्पादव्ययध्रौव्यैतत्त्रितयनिष्ठनिरूपकतानिरूपिताधिकरणत्वनिष्ठप्रकारताकबोधाभिप्रायेणाह उत्पा-

दव्ययसापेक्षेति, उत्पत्तिनाशयोः प्रकारतावच्छेदकतया भानं प्रकारतया ध्रौव्यस्यैवेत्यभ्युपगन्तृनयाभिप्रायेणाह उत्पादव्ययगौणत्वेनेति, भेदनयेन धर्मधर्मिणोरितिशेषः, तत्तादात्म्येति उत्पादव्ययध्रौव्यतादात्म्येत्यर्थः। उपलक्षणस्य न प्रतीतिकाले सत्त्वमुपयुक्तं, किन्तु यदा कदापि, विशेषणस्य तु प्रतीतिकाले, उपलक्षणस्य न प्रकारतावच्छेदकत्वं, किन्तु विशेष्ये विशेषणं तत्रापि विशेषणान्तरमिति न्यायेन प्रकारतानिरूपितप्रकारत्वम्, विशेषणस्य तु प्रकारतावच्छेदकत्वमित्यनयोर्विशेषः, तथाचोत्पादव्यययोरुपलक्षणत्वग्राहकनयेन तयोः प्रकारतानिरूपितप्रकारत्वमेवेति तन्निष्ठप्रकारतानिरूपितध्रौव्यनिष्ठप्रकारताको द्रव्यपदाद्बोध इत्यभिप्रायेणाह उत्पादव्ययोपलक्षणत्वेति, उत्पादस्थितिभङ्गमात्रविशेष्यक इति, अत्र मात्रपदेन प्रत्येकमुत्पादादीनां तद्विशिष्टस्य च विशेष्यत्वव्यवच्छेदः कृत इति, ननु द्रव्यपदादुत्पादादित्रयाणां मुख्यविशेष्यतयैव बोधाभ्युपगमे द्रव्यमित्यत्रापि बहुवचनापत्तिः, द्रव्यमित्येकवचनोपस्थितस्यैकत्वस्य बहुत्वविशिष्टे बाधादित्यत आह—

एकत्ववति बहुत्वस्येव बहुत्ववत्येकत्वस्याप्यपेक्षाबुद्ध्योत्पत्तेरभिव्यक्तेर्वा स्वीकारेणैकवचनोपपत्तेः, बहुत्वविशेष एवात्रैकवचनार्थ इत्यपि केचित्, एवं चावान्तरसमुदायिविशिष्टसमुदाय्यप्यर्थः, द्रव्यमुत्पादव्ययध्रौव्यवदिति प्रयोगे च कतिपयसमुदायिनामङ्गित्वेन तदितरेषां चाङ्गत्वेन नानुपपत्तिरिति व्यक्तमष्टसहस्रयाम्। नैगमव्यवहाराभ्यामुपचारबहुलाभ्यां नानाधर्मप्रकारकः, सूक्ष्मर्जुसूत्रेणोत्पादव्ययावच्छिन्नविशेष्यताकः अगृहीतभेदप्रतीत्योत्पादविषयताको वा, अभेदग्रहविषयसाकाङ्क्षसन्तान्यभानविषयो वा, शब्दनयेनोत्पादादिशब्दत्रयविषयकः, समभिरूढेन द्रव्यपदमात्रविषयकः, एवंभूतेन व्युत्पत्तिनिमितावच्छिन्नप्रवृत्तिनिमित्तविषयकः,

किं बहुना शुद्धसङ्ग्रहनयेन निर्विकल्पकवृत्त्या सन्मात्रविषयकश्चिन्मात्रविषयको वा, शुद्धपर्यायनयेन चेतरवाधसहकृतेन शून्यविषयक इति। स्याद्वादेन तु समयाबाधेन सर्वत्र सप्तभङ्गप्रकारक इति।

एकत्ववतीति, एको घटो नीलपीतश्वेतत्वैर्बहुरूपः, एकोप्यात्मा नरदेवादिरूपैर्बहुरूप इत्यादावेकत्ववति बहुत्वस्यान्वयो दृश्यः, प्रभाकरमतमनुसृत्याह अभिव्यक्तेर्वेति, उत्पादव्ययविशिष्टं ध्रौव्यं ध्रौव्योत्पादविशिष्टो व्ययः ध्रौव्यव्ययविशिष्ट उत्पाद इत्यादिगौणप्रधानभावेन द्रव्यपदाद्बोध उन्नेय इत्याह एवं चावान्तरेति,एवं चेति एकस्मादपि द्रव्यपदान्नयभेदेन नानाबोधोपपत्तौ चेत्यर्थः। असद्गुरुचरणास्तु अवान्तरेति घटत्वमृत्पिण्डत्वमृत्त्वादिभिर्द्रव्यस्य यदुत्पादादि तत् उत्पादादिसामान्यव्याप्यत्वादवान्तरसमुदायिस्वरूपं तद्विशिष्टसमुदायि उत्पादादिसामान्यं तदपि द्रव्यध्वनेरर्थ इत्यर्थः, तेनोत्पादादिसामान्यस्य विशेष्यत्वमुत्पादादिविशेषस्य प्रकारत्वमाश्रित्यापि द्रव्यध्वनेर्विलक्षणबोधः, विशेष्यस्य च सामान्यस्य विशेषान्तरमादाय तत्त्वमिति बोध्यमित्याहुः, अङ्गित्वेन प्रधानत्वेन विशेष्यत्वेनेति यावत्, अङ्गत्वेन गौणत्वेन प्रकारत्वेनेति यावत्, सामान्यतो विषयभेदनियन्त्रितनयभेदेन द्रव्यपदजन्यं विचित्रबोधमुपपाद्य विशेषतो विवक्षितनैगमादिविशेषभेदात्मकेन नयभेदेन तमुपपादयति नैगमेति, ऋजुसूत्रनयो हि क्षणिकवस्तुग्राहीति तन्मते ध्रौव्याभावादाह उत्पादव्ययावच्छिन्नविशेष्यताक इति, सर्वनयविषयत्वव्यापकविषयतानिरूपकप्रमाणेन द्रव्यपदजन्यपरस्परसाकाङ्क्षविषयताकाखण्डबोधमुपपादयति स्याद्वादेन त्विति, ननु शब्दस्य नियतविषयकबोधजनकत्वेन एकेनैव द्रव्यपदेन नयभेदाश्रयणेनोक्तबोधवैचित्र्यं कथं सङ्गच्छते इत्यत आह—

एतच्च सर्वमुत्पादव्ययध्रौव्यतादात्म्याश्रयेषु खण्डशः शक्त्या लक्षणया वा तत्तन्नयोपनीतबाधमहिम्ना

तत्तदर्थविनिर्मोकोपादानाभ्यामुपपादनीयं स्वसमयपरसमयनिष्णातैरिति दिग् ॥६८॥ यदि द्रव्यत्वमुत्पादव्ययध्रौव्यात्मकत्वम्, उत्पादादिष्वपि चोत्पादाद्यन्तरस्य प्रातीतिकस्य भिन्नाभिन्नस्य स्वीकारान्नाव्याप्तिः, तदा तस्य केवलान्वयित्वात् तन्निरूपितविधिनिषेधकल्पनाऽयोगेन तन्मूलसप्तभङ्गीन्यायाप्रवृत्तिः, तथा चात्मन्यपि तदयोग इत्याशङ्कामुद्दिधीर्षुराह—

एतच्चेति, एवकारस्यान्ययोगे व्यवच्छेदे च पृथगेव शक्तिस्तद्वत् उत्पादे व्यये ध्रौव्ये तादात्म्ये आश्रये च द्रव्यपदस्य पृथगेव शक्तिः, तद्बलात्क्वचित् मुख्यविशेष्यतया मुख्यप्रकारतया वा समुच्चयमापन्नानामुत्पादीनां बोधः, क्वचिद्विशेषणविशेष्यभावमापन्नस्य क्वचिच्च द्वयस्यैकैकस्य वा, विशिष्टशक्तिपक्षे प्रकारान्तरेण बोधो लक्षणयेति भावः । स्याद् द्रव्यं स्यादऽद्रव्यमित्येवं सप्तभङ्गीप्रवृत्तिरत्रापीत्युपपादकमेकोनसप्ततितमं पद्यमवतारयति यदीत्यादिना, ननु यदि घटपटादिकमुत्पादव्ययध्रौव्यशालि न स्यात् तर्हि द्रव्यमेव न स्यात्, तस्य तल्लक्षणत्वादिति यथा तेन तत्त्वं नियम्यते, तथोत्पादादिप्रत्येकधर्मोऽप्युक्तधर्मत्रयवान् यदि न स्यात्तर्हि द्रव्यानात्मक एव स्यात्, तथाच सन्नापि न स्यात् तस्य तदविनाभावित्वात्, तथा चोत्पादादित्रयलक्षणद्रव्यत्वस्य केवलान्वयित्वेन वस्तुत्वसमव्याप्तत्वात् कस्यचिदद्रव्यस्याऽभावेन कुत्रापि तन्निषेधाऽयोगेन विधिनिषेधाभ्यां द्रव्याद्रव्यत्वाभ्यां वस्तूद्दिश्य सामान्यतः सप्तभङ्ग्या अप्रवृत्तावात्मादितत्तद्व्यक्तिमुद्दिश्याऽप्यप्रवृत्तिरेवेत्येवमत्राऽऽशङ्काऽऽशयः । तस्य—उत्पादादित्रयलक्षणद्रव्यत्वस्य, तन्निरूपितेति उत्पादादित्रयात्मकद्रव्यत्वनिरूपितेत्यर्थः ।

द्रव्याश्रया विधिनिषेधकृताश्च भङ्गाः, कृत्स्नैकदेशविधया प्रभवन्ति सप्त ॥

आत्माऽपि सप्तविध इत्यनुमानमुद्रा, त्वच्छासनेऽस्ति विशदव्यवहारहेतोः ॥ ६९ ॥

द्रव्याश्रया इत्यादिश्लोको ग्रन्थकृद्विवृतिसम्वलित एवेति न विवृत्यन्तराऽपेक्षी। घटपटोभयस्मिन् इमौ द्वौ इति प्रतीतिः, न तु घटादावेकैकस्मिन् अयं द्वौ इति प्रतीतिः, किन्तु तत्रायं न द्वौ इत्येवं प्रतीतिर्भवतीत्युभयपर्याप्तद्वित्वावच्छेदेन द्वित्वम् इदन्त्वावच्छेदेन तदभावो वर्त्तत इत्यभ्युपगमादाह—

यथा त्रिषु कात्स्न्र्येन त्रित्वम्, एकद्विव्यक्त्यवच्छेदेन च तदभावः, तथा सर्वत्र वस्तुन्येकग्रहणगृहीते कात्स्न्र्येनानवच्छेदात्मना जात्यन्तरत्वपरिचायकेनोत्पादव्ययध्रौव्यलक्षणद्रव्यत्वम्, एकैकोत्पादाद्यवच्छेदेन तद्द्वयावच्छेदेन च तदभाव इति भवति सर्वत्र द्रव्यत्वतदभावकल्पनया सप्तभङ्गी। यद्वा समुदायप्रवृत्तानां शब्दानामवयवोपचारं कृत्वा ध्रौव्यलक्षणं द्रव्यत्वम् उत्पादव्ययलक्षणं पर्यायत्वं चादाय सप्तभङ्गीप्रवृत्तिर्भावनीया। एवमात्मापि द्रव्याद्रव्यत्वादिना सप्तविधः, कस्मात्, विशदव्यवहारहेतोः, स्याच्छब्दलाञ्छितसप्तप्रकारकव्यवहारान्यथानुपपत्तेः, घटादिवदिति दृष्टान्तोऽभ्यूह्यः, इतीयं त्वच्छासने आगमोपजीव्यनुमानमुद्राऽस्ति,

यथा त्रिषु कात्स्न्र्येन त्रित्वमिति, कात्स्न्र्येन त्रितयपर्याप्तसमुदायत्वावच्छेदेन, तदभावः त्रित्वाभावः, एकग्रहणगृहीते अनुगतप्रतीतिविषये, कात्स्न्र्येनेति उत्पादादित्रयात्मकमेव वस्तु द्रव्यमिति प्रतीतिर्न तूत्पादाद्येकैकस्वरूपं वस्तु द्रव्यमिति प्रतीतिरिति वस्तुनि द्रव्यत्वमुक्तत्रितयपर्याप्तसमुदायत्वावच्छेदेन, सम्पूर्णवस्तुस्वरूपात्मनेति यावत्, अत एवाह अनवच्छेदात्मनेति. अखण्डवस्तुस्वरूपात्मनेत्यर्थः। एतस्य स्वरूपोपरञ्जकं विशेषणमाह जात्यन्तरत्वपरिचायकेनेति, जात्यन्तरत्वस्वरूपं

तु प्रागेवोक्तम्, उत्तरार्द्धं विवृणोति-एवमात्माऽपीति; "एवं सत्तविअप्पो वयणपहो होइ अत्थपज्जाए । वंजणपज्जाए पुण सविअप्पो णिव्वियप्पो य" इति सम्मतिगाथातात्पर्यमाश्रित्याह—

एतच्च प्रकारद्वयमर्थपर्यायमाश्रित्य, व्यञ्जनपर्यायमाश्रित्य पुनः सविकल्पनिर्विकल्पकत्वाभ्यां भेदद्वयमेव, अर्पितत्वं सविकल्पत्वमनर्पितत्वं निर्विकल्पत्वमर्पणाकुक्षौ पर्यायप्रवेशादात्मनो द्रव्यपर्यायोभयात्मकत्वसिद्धिरिति दिग् ॥६९॥ विभ्वविभुत्वे स्याद्वादमुपदिशति—

एतच्चेति, उक्तगाथार्थः सम्मतिटीकातो नयोपदेशटीकातश्चावसेयः विस्तरभयान्नेह प्रतन्यते ॥६९॥ आत्मा विभुः नित्यद्रव्यत्वे सत्यमूर्त्तत्वादित्यनुमानेन न्यायनिष्णातैरात्मन्येकान्ततो विभुत्वं यत्प्रागुक्तं तन्निरसनाय सप्ततितमश्लोकावतरणिकामाह विभ्वविभुत्वे इत्यादिना ।

शक्त्या विभुः स इह लोकमितप्रदेशो, व्यक्त्या तु कर्मकृतसौवशरीरमानः ॥
यत्रैव यो भवति दृष्टगुणः स तत्र, कुम्भादिवद्विशदमित्यनुमानमत्र ॥ ७० ॥

स आत्मा, इह जगति, लोकमितप्रदेशो लोकाकाशप्रदेशसमसङ्ख्यप्रदेश इति कृत्वा शक्त्या विभुः,न हि सकलमूर्त्तद्रव्यसंयोगित्वं विभुत्वं परेषामप्येकदा सम्भवति, अतीतानागतसंयोगानां युगपदभावात्, किन्तु तदवच्छेदकरूपवत्त्वं, तच्च लोकतुल्यप्रदेशत्वमिति शक्त्याऽऽत्मनो विभुत्वाऽविरोधः,व्यक्त्या तु कर्मणा कृतं यत् सौवं स्वकीयं शरीरं तन्मानस्तावन्मात्र इत्यविभुरेव, प्रमाणं चात्र यत्रैव यो दृष्टगुणः स तत्रैव, यथा कुम्भ

इति, विशदं सकलदोषरहितमनुमानमेव, तदाहुः श्रीहेमसूरयः–"यत्रैव यो दृष्टगुणः स तत्र कुम्भादिवन्नि-ष्प्रतिपक्षमेतत्॥ तथापि देहाद् बहिरात्मतत्त्वमतत्त्ववादोपहताः पठन्ति"। अत्र दृष्टत्वं गुणविशेषणं हेतोः प्रामाणिकत्वलाभाय, न तु हेतुप्रविष्टम्, एवकारश्च यत्रेत्यनन्तरमिव तत्रेत्यनन्तरमपि योज्य इति।

शक्त्येति मूलं ग्रन्थकारस्स्वयमेव विवेचयति—

स आत्मेत्यादिना, परेषां नैयायिकानाम्, तदवच्छेदकरूपवत्त्वं सकलमूर्त्तद्रव्यसंयोगितावच्छेदकरूपवत्त्वम्, न तु हेतुप्रविष्टमिति, तथाच व्यर्थविशेषणघटितत्वाभावेन न हेतोर्व्याप्यत्वासिद्धिरिति भावः। तत्रेत्यनन्तरमपि योज्य इतीति तत्रेत्यनन्तरमेवकारस्य योजने सति तद्देशान्यदेशाऽवृत्तित्वे सति तद्देशवृत्तित्वमित्यर्थो लभ्यते, स चात्मनो विभुत्वे न घटते इति न तत्पक्षे सिद्धसाधनमिति भावः।

आत्मा शरीरनियतवृत्तिताकः शरीरनियतवृत्तिताकगुणवत्त्वादिति लब्धम्, तत्र च साध्ये शरीरनियतपदोपादानमनर्थकं,सवृत्तिताकत्वमात्रसिद्धावेवाविभुत्वसिद्धेः, विभोः परैरवृत्तित्वाभ्युपगमात्, हेतुश्च सकलविशेषणविशिष्टोऽप्रयोजकः, यदि च विभोरपि सार्वदिकत्वव्यवहारात् सर्वकालवृत्तित्ववत् सार्वत्रिकत्वव्यवहारात् सर्वदेशवृत्तित्वमपि प्रामाणिकमित्यभ्युपगच्छन्तं परं प्रति प्रयोगः, सर्ववृत्तेश्च शरीरवृत्तित्वमप्यवर्जनीयमिति साध्ये नियतपदं, तथा च हेतावपि शरीराकाशसंयोगमादाय व्यभिचारवारणाय तदित्युच्यते, तथाप्यात्मगुणानां शरीरावृत्तित्वादसिद्धिः।

आत्मा शरीरनियतवृत्तिताक इति, अत्र यो यन्नियतवृत्तिताकगुणवान् स तन्नियतवृत्तिताकः, यथा कपालद्वयनियतवृत्तिताकगुणवान् घटः कपालद्वयंनियतवृत्तिताक इति सामान्यव्याप्तिरवसेया, परश्शङ्कते तत्रेत्यादिना, तथा चेति आत्मनस्सर्वदेशवृत्तित्वाभ्युपगमपक्षेऽपि शरीरवृत्तित्वमक्षतमिति सिद्धसाधनं स्यादिति तद्वारणाय साध्ये नियतपदोपादाने चेत्यर्थः, शरीरनियतवृत्तिताकत्वाभाववत्याकाशे शरीरवृत्तिताकशरीराकाशसंयोगरूपगुणहेतोः सत्त्वेन व्यभिचारस्तन्निवृत्तये हेतावपि नियतपदमुपादेयमित्याह हेतावपीति, तथा च शरीराकाशसंयोगस्याकाशेऽपि वृत्तित्वेन शरीरनियतवृत्तिताकत्वाभावान्न तदादाय व्यभिचार इति भावः, असिद्धिः स्वरूपासिद्धिः, स्वरूपासिद्धिपरिहारमाशङ्कते—

हेतौ परम्परासम्बन्धेन शरीरनियतवृत्तिताकत्वमुपादेयं, साध्ये च साक्षादिति न दोष इति चेत्, न, तथाऽपि सामान्यव्याप्तौ व्यभिचारात्, परम्परासम्बन्धेन स्फटिकनियतवृत्तिताकरूपवति जपाकुसुमे साक्षात् स्फटिकनियतवृत्तिताकत्वाभावात्। न च शरीरावच्छिन्नगुणवत्त्वेन शरीरमानत्वं साध्यमित्यत्र तात्पर्यम्, परमाण्ववच्छिन्नसंयोगवत्त्वेन परमाणुमानत्वस्यापि सिद्ध्यापत्तेः।

हेतावीति, परंपरासम्बन्धेन—स्वाश्रयसंयोगसम्बन्धेन अवच्छेदकतासम्बन्धेन वा, आत्मनो विभुत्वेऽपि स्ववृत्तिविशेषणगुणावच्छेदकत्वलक्षणपरंपरासम्बन्धेन शरीरनियतवृत्तिताकत्वस्य सत्त्वात् सिद्धसाधनं स्यादत आह—साध्ये चेति। परम्परासम्बन्धेन स्वाश्रयसन्निधानप्रयोज्यस्वप्रकारकभ्रमविशेष्यत्वसम्बन्धेन, यदवच्छिन्नगुणवान् यः स तन्मान इति सामान्यव्याप्तौ परमाणुनाऽऽत्मनस्संयोगमादाय परमाण्ववच्छिन्नसंयोगवानात्माऽपि तन्मानस्सिद्ध्येदित्यनिष्टापत्त्या परिहरति परमाण्ववच्छि-

न्नसंयोगवत्त्वेनेति।

एतेन शरीरातिरिक्तदेशानवच्छिन्नगुणवत्त्वेन शरीरातिरिक्तदेशावृत्तित्वं साध्यमित्यप्यपास्तम्। परमाण्वादिमानत्वसम्भवेनोद्देश्यासिद्ध्यापत्तेः, विभोरवृत्तित्वनये सिद्धसाधनाच्च। अपि च स्वशरीरमात्रवृत्तित्वमौदारिकाद्यपेक्षया समुद्घातादिदशायां बाधितम्, अन्तराले तदस्पर्शात्, मुक्तिदशायां च सर्वथा तथा, संसारी स्वशरीरमात्रवृत्तिरिति च संसारी नारकदुःखवानित्यनेन सदृशम्, उक्तदोषादेव कार्मणशरीरवृत्तित्वं चात्मनोऽप्रामाणिकं, तस्यादृष्टानतिरिक्तत्वात्, न चादृष्टे आत्मा वर्त्तते, किन्त्वात्मन्येवादृष्टमिति। न च पौद्गलिकेऽप्यदृष्टे आत्मनः सम्बन्धो वृत्तिनियामको नाम, किन्त्वात्मनि तस्य सम्बन्ध इत्यविगानेन सिद्धं जैने प्रवचने, प्रतिप्रदेशमनन्तानन्तकर्मवर्गणावस्थानस्यात्मनि तत्रोपदेशात्।

एतेनेत्यतिदिष्टं निषेधे हेतुमाह परमाण्वादिमानत्वसम्भवेनेति, आत्मा शरीरमानस्स्यात् तदाऽपि शरीरातिरिक्तदेशाऽवृत्तिस्स्यात् परमाण्वादिमानो निराधारविभुर्वा स्यात् तदापि तथा स्यादित्येवं त्रिधा कल्पनासम्भवेनोद्दिष्टस्य शरीरनियतमानत्वस्यैव सिद्धिर्न स्यात्, निराधारात्मविभुत्ववादिमते सिद्धसाधनं च स्यादित्यर्थः, शरीरातिरिक्तदेशावृत्तित्वसाध्यघटकशरीरपदमौदारिकशरीरपरं चेत्तर्हि मारणान्तिकसमुद्घातादिकाले आऽसङ्ख्येययोजनं लोकाकाशदेशव्यापकश्छद्मस्थात्मा केवलिसमुद्घातकाले च सम्पूर्णलोकव्यापकः केवल्यात्मा भवतीति स्वशरीरातिरिक्तदेशेप्यात्मा विपरिवर्त्तत इति बाध इत्याशयेनाह अपि चेति, ननु सामान्यत एव शरीरत्वावच्छिन्नमेव शरीरपदेन गृह्यते शरीरत्वञ्च कार्मणशरीरेऽपि वर्त्तते इत्यन्तराले तत्सम्बन्धान्नोक्तदोष इत्यत

आह मुक्तिदशायां चेति, मोक्षकाले मुक्तिनिलयमलङ्कुरुते मुक्तात्मा, न च तद्देशे कस्यापि शरीरस्य सम्बन्धः, एतद्देश एवौदारिककार्मणादिशरीरपरिजहनादिति बाधदोषस्तदवस्थ इति भावः। तथा बाधितम्, नन्तु संसारित्वेन रूपेण पक्षः क्रियते, संसारित्वञ्च न मुक्तात्मनीति नोक्तदोष इत्यत आह संसारीति, सिषाधयिषितस्याऽऽत्मत्वावच्छिन्ने शरीरमानत्वस्य सिद्धिरुक्तानुमानेन न स्यादिति भावः। शरीरपदेन कार्मणशरीरग्रहणे दोषमाह कार्मणशरीरवृत्तित्वञ्चेति। नन्वात्मनि कार्मणशरीरावस्थानात्कार्मणशरीरे नात्मनोऽवस्थानं तत्किमौदारिकादिशरीरे आत्मनोऽवस्थानमस्ति न वेत्याशङ्कायामाह—

औदारिकादिवर्गणानिष्पन्नशरीरेषु त्वात्मनो वृत्तित्वं धारणकर्षणहेतुप्रदेशसंयोगान्यथानुपपत्त्या स्वीक्रियत इति। यदि च अण्णुण्णाणुगयाणं इत्यादिसम्मतिग्रन्थपर्यालोचनया क्षेत्रप्रत्यासत्त्या शरीराभेद एवात्मनि स्वीक्रियते, तादृशाभेदेऽप्यन्त्यविशेषभेदेनासाङ्कर्यसम्भवात्, तदा वृत्तित्वगर्भसाध्ये सुतरां बाधः। न च समुद्घाताभावविशिष्टसंसारित्वावच्छेदेन स्वशरीरमात्रवृत्तित्वस्य साध्यत्वेऽपि निस्तारः, सर्वात्मसाधारण्येनोद्देश्यासिद्धेरिति चेत्।

औदारिकादीति, औदारिकादिशरीरस्य तद्देशेऽवस्थितावात्मनस्तद्देशेऽवस्थितिः, अन्यत्र गमनेऽन्यत्र गमनं, तत्र हेतुरौदारिकादिशरीरात्मप्रदेशयोस्संयोगः, स चात्मनः औदारिकादिशरीरवृत्तित्वं विनाऽनुपपन्नः अतस्तेन तत्कल्प्यत इति भावः। सूक्ष्मदृष्ट्या विचारणे त्वौदारिकादिशरीरेऽवस्थानमप्यात्मनो नास्ति, किन्तु दुग्धपानीययोरिव शरीरात्मनोरेकलोलीभूततयैवावस्थानादेकक्षेत्रावगाढत्वलक्षणप्रत्यासत्त्याऽभेदः, न चाऽभेद एव, पौद्गलिकत्वादिना चेतनत्वादिना च भेदस्यापि सम्भवात्, तथा च

साध्यघटकशरीरपदस्यौदारिकादिशरीरपरत्वपक्षेऽपि बाध एवेत्याशयेनाह—यदि चेति, "अण्णुण्णाणुगयाणं" इत्यादीति 'अन्नोन्नाणुगयाणं, इमं व तं वत्ति विभयणमजुत्तं। जह दुद्धपाणियाणं, जावंतविसेसपज्जाया" इति सम्पूर्णगाथा, एतदर्थोऽस्मत्कृतस्याद्वादविन्दुतोऽवसेयः। क्षेत्रप्रत्यासत्त्या एकक्षेत्रावगाढत्वलक्षणप्रत्यासत्त्या, सर्वात्मसाधारण्येनोद्देश्यासिद्धेरिति मुक्तसंसार्यात्मोभयवृत्त्यात्मत्वावच्छेदेनोद्देश्यस्य शरीरमानत्वस्यासिद्ध्यापत्तेरित्यर्थः। साध्यसाधने परिस्कृत्य समाधत्ते अर्हन्मुखाम्भोजविनिर्गतस्याद्वादामृतरसाऽऽस्वादैकनिष्ठः—

अत्र ब्रूमः, आत्मा स्वकर्मकृतशरीरसमानावगाहनाकस्तदवच्छिन्नभोगवत्त्वादित्यत्र तात्पर्यं, स्वकर्मकृतत्वं च स्वकर्मनिरूपितप्रतियोग्यनुयोगिभावसम्बन्धाश्रयकृतत्वं, तेन स्वकर्मक्षयकृतत्रिभागहीनचरमशरीरावगाहनावस्थितक्षीणसकलक्लेशप्रदेशशालिनि सिद्धे नाव्याप्तिः। तत्समानावगाहनाकत्वं च तदवगाहकनभःप्रदेशसङ्ख्यासमव्याप्तसङ्ख्याकनभःप्रदेशावगाहनाकत्वम्, अवगाहनापदग्रहणात् न स्पर्शनान्यूनाधिक्यकृतो दोषः, "जत्तियाए जीवो ओगाढो तत्तिआए चेव फुसमाणो गच्छई" इत्यादौ च स्पर्शनापदस्यावगाहनावच्छिन्नस्पर्शनापरत्वात् नानुपपत्तिरित्यादि समर्थितं महता प्रबन्धेनास्पृशद्गतिवादेऽस्माभिरिति किमतिपल्लवितेन। आत्मा सर्वगतो न भवति सर्वत्र तद्गुणानुपलब्धेः, यो यः सर्वत्रानुपलभ्यमानगुणः स सर्वगतो न भवति, यथा घटः, तथा चायं, तस्मात् तथा, व्यतिरेके व्योमादि, न चायमसिद्धो हेतुः, कायव्यतिरिक्तदेशे तद्गुणानां बुद्ध्यादीनां वादिना प्रतिवादिना वाऽनभ्युपगमात्, तथा च भट्टश्रीधरः—सर्वगतत्वेऽप्यात्मनो देहदेशे

ज्ञातृत्वं नान्यत्र, शरीरस्योपभोगायतनत्वात्, अन्यथा तस्य वैयर्थ्यात्, इत्यादि वदतां प्राचामपि मदुक्त एवार्थे तात्पर्यम्, अन्यथा विवेचनाशक्तेरिति दिग् ॥ ७० ॥

अत्र ब्रूम इति, तदवच्छिन्नेति स्वकर्मकृतशरीरसमानाऽवगाहनानच्छिन्नेत्यर्थः । तेन तत्पदेन शरीरस्योपादाने पक्षैकदेशे सिद्धात्मनि हेतोरभावेऽपि न भागासिद्धिः । भोगश्च ज्ञानाद्यनन्तचतुष्टयात्मा सिद्धे बोध्यः । ननु सिद्धात्मनि कर्मध्वंसजन्यचरमशरीरावगाहनात्रिभागोनावगाहनाकत्वमिति तत्रोक्तसाध्याभावाद्वाधस्स्यादित्याशङ्कापनोदायाह स्वकर्मकृतत्वं चेति, प्रतियोगितदभावयोस्सम्बन्धः प्रतियोग्यनुयोगिभावसम्बन्धः, सम्बन्धश्च द्विष्ठ इति तदाशयः स्वनिरूपितप्रतियोगितासम्बन्धेन प्रतियोगी स्वनिरूपितानुयोगितासम्बन्धेनाऽभावश्च, प्रकृते स्वकर्म तत्क्षयश्चेति स्वकर्मादाय संसार्यात्मनि तत्क्षयमादाय सिद्धात्मनि साध्यस्य सङ्गतिः, नाव्याप्तिः, न बाधः, साध्यस्य पक्षेऽव्याप्तेर्बाध एव पर्यवसानात्, परिस्कृतञ्च स्वकर्मकृतत्वमवगाहनायामन्वेति, न तु शरीरे इति बोध्यम्, सर्वगतत्वेऽप्यात्मनो देहदेशे ज्ञातृत्वं नान्यत्रेति, आत्मनःसर्वमूर्त्तसंयोगित्वेऽपि देहरूपदेशावच्छेदेन समवायेन ज्ञानवत्त्वलक्षणं ज्ञातृत्वं नान्यदेशावच्छेदेनेत्यर्थः, तत्र हेतुमाह शरीरस्योपभोगायतनत्वादिति, शरीरस्यावच्छेदकतासम्बन्धेन सुखदुःखसाक्षात्काराश्रयत्वादित्यर्थः ॥७०॥ एकसप्ततितमश्लोकमवतारयति

अत्र विपक्षबाधकद्वयं निराकरोति—

स्वाशुभुजो ज्वलनमूर्ध्वमपि स्वभावात्, सम्बन्धभेदकलितादथवास्त्वदृष्टात् ॥
दिग्देशवर्त्तिपरमाणुसमागमोऽपि, तच्छक्तितो न खलु बाधकमत्र विघ्नः ॥ ७१ ॥

अत्रेति, स्वाहाभुज इति मूलम्, स्वाहाभुजोऽग्नेरूर्ध्वज्वलनमपि स्वभावादित्येको हेतुः, अथवा सम्बन्धभेदकलितात् सम्बन्धान्तरेण सम्बद्धाददृष्टादस्त्वित्यपरो हेतुः। दिग्देशवर्त्तिपरमाणुसमागमोऽपि नानादिग्देशवर्त्तिनां परमाणूनां समागमोऽपि संयोगोऽपि, तच्छक्तितः अदृष्टशक्तिमहिम्नोपपद्यत इत्यत्र न खलु बाधकं विद्म इत्यन्वयः, आत्मा विभुः नित्यद्रव्यत्वे सत्यमूर्त्तत्वादित्यनुमाने विपक्षबाधकं पूर्वोपन्यस्तं प्रथमं तर्कं निराकरोति—

आत्मनो विभुत्वाभावे नानादिग्वर्त्तिदहनादिषु ज्वलनादिक्रियाणां युगपददृष्टवदात्मसंयोगाभावात् युगपदनुत्पत्तिप्रसङ्गः, आत्मगुणस्य साक्षात् क्रियाद्वारकस्वाश्रयसंयोगेनैव क्रियाजनकत्वस्य प्रयत्नस्थले दृष्टत्वादिति प्राचीननैयायिकैर्यद्बाधकमुक्तं तत्तु शिरोमणिनैव दूषितं—जनयतु प्रयत्नो यथा तथा, अदृष्टं तु यथा कथंचित् परम्परया स्वाश्रयसंयोगादेव जनयति, अतिप्रसङ्गस्तु वैभवेऽपि तुल्य इति ग्रन्थेन। यत्तु लाघवेन स्वाश्रयसंयोगेन तज्जनकताया एव कल्पनात् आत्मविभुत्वसिद्धिरिति तेनोक्तं, तत्तुच्छम्, अतिप्रसङ्गवारणे लाघवसहस्रस्याप्यकिञ्चित्करत्वात्।

आत्मनो विभुत्वाभाव इति, यद्बाधकमुक्तमिति, एकपष्ठितमश्लोकव्याख्यायामिति शेषः, एतत्सर्वं तत्रैव सविस्तरं विवृतमिति नेह विव्रीयते, तेन शिरोमणिना, अतिप्रसङ्गवारण इति अदृष्टं स्वाश्रयसंयोगेन वह्नावितान्यत्रापि सत्तया ततोऽप्यूर्ध्वज्वलनं स्यादेवेत्यतिप्रसङ्गस्याऽवारण इत्यर्थः।

समवायेनोर्ध्वज्वलनत्वावच्छिन्ने तादात्म्येन वह्नित्वेन हेतुत्वं कल्पयित्वाऽतिप्रसङ्गवारणे तु वृथा विशि-

ष्याऽदृष्टहेतुत्वप्रत्याशा, अस्तु वा दहनत्वस्येवोर्ध्वज्वलनस्य स्वभावादेव देशप्रतिनियमः, तदुक्तं मल्लिषेणाचार्येण "अथास्त्येव प्रमाणं वह्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनं चादृष्टकारितमिति चेत्, न, तयोस्तत्स्वभावत्वादेव तत्सिद्धेः, दहनस्य दहनशक्तिवदिति"॥ पूर्वकल्पे स्वभावादित्यस्य स्वो भावः स्वभावस्तस्माद्धेतोरित्यर्थः। द्वितीयकल्पे च स्वस्य भावः सादिपरिणामस्तस्मादित्यर्थः।

वृथा विशिष्याऽदृष्टहेतुत्वप्रत्याशेति, अदृष्टस्य कारणत्वानभ्युपगमेऽपि वह्नेरेवोर्ध्वज्वलनं नान्यस्येति व्यवस्था स्यादेव, समवायेनोर्ध्वज्वलनत्वावच्छिन्नं प्रति तादात्म्येन संसर्गेण कारणीभूतस्य वह्नित्वावच्छिन्नस्याऽन्यत्रासत्त्वादिति भावः। पूर्वकल्पे उक्तकार्यकारणभावादेवोर्ध्वज्वलनस्य देशप्रतिनियम इति कल्पे, स्वभावादिति स्वो भावः स्वभावः,स्वमत्र वह्निः,तदात्मको भावः तस्मात्, तादात्म्येन वह्नेरित्यर्थः, द्वितीयकल्पे स्वभावादेव देशप्रतिनियम इति कल्पे, ननु नोदनाभिघातवेगद्रवत्वगुरुत्वप्रयत्नादृष्टानां नोदनत्वाभिघातत्वादिना प्रत्येकरूपेण क्रियात्वरूपसामान्यधर्मावच्छिन्नं प्रति कारणत्वं न सम्भवति; अनेकेषामेककार्यं प्रति यत्र प्रातिस्विकरूपेण कारणता तत्रैककारणविरहेपि कारणान्तरेण कार्योत्पत्तेर्व्यतिरेकव्यभिचारादिति क्रियायां वैजात्यं कल्पयित्वा तत्तद्विजातीयक्रियात्वावच्छिन्नं प्रति नोदनत्वाभिघातत्वादिना कारणत्वं कल्पनीयं स्यादित्यनेककार्यकारणभावप्रसक्त्या गौरवं स्यात्, तदपेक्षया नोदनादीनां गुणत्वव्याप्यैकजातिरूपेण क्रियात्वावच्छिन्नं प्रति हेतुत्वकल्पनमेव लाघवान्न्याय्यम्, तथा च वह्नेरूर्ध्वज्वलनमपि क्रियात्वरूपकार्यतावच्छेदकाक्रान्तमिति तं प्रति नोदनाद्येकमपि दृष्टं कारणं नानुभूयत इत्यदृष्टमेव गुणत्वव्याप्यजातिरूपेण कारणमङ्गीकार्यं, तस्य च समवायेनोर्ध्वज्वलनकार्याधिकरणे वह्नौ सत्त्वं स्वाश्रयसंयोगसम्बन्धेनैव, स चात्मनो विभुत्वमन्त-

रेण न सम्भवतीति तत्र तदभ्युपगन्तव्यमित्याशङ्क्य प्रतिक्षिपति—

न च नोदनादीनां गुणानां गुणत्वव्याप्यैकजात्या क्रियात्वावच्छिन्ने हेतुत्वादूर्ध्वज्वलनमवश्यं वह्नेरदृष्टकारितम्, अत एव च तस्य गुणत्वसिद्धिरपीति वाच्यम्, गुणसाक्षात्कारजनकतावच्छेदिकया साङ्कर्येण तथाहेतुत्वासिद्धेः। यदि च तत्रादृष्टहेतुत्व एवाग्रहस्तदाऽस्तु कार्यसामान्यजनकतावच्छेदकसम्बन्धेन तत्, नहि सोऽपि स्वाश्रयसंयोग एव, आकाशगतशब्दाव्याप्तेः, अजसंयोगनिषेधेन परैरात्माकाशसंयोगस्यानभ्युपगमात्, कालाकाशदिशामिवादृष्टस्यापि कार्यसामान्यजनकतावच्छेदकसम्बन्धस्यातिरिक्तस्यैव सिद्धेः॥ तदिदमाह—सम्बन्धभेदकलितात्, सम्बन्धान्तरेण सम्बद्धादथवाऽदृष्टादस्तु स्वाहाभुज ऊर्ध्वज्वलनमिति,

न चेति, वाच्यमित्युत्तरेण सम्बन्धः। गुणसाक्षात्कारं प्रति अदृष्टभावनागुरुत्वस्थितिस्थापकसंस्कारात्मकायोग्यगुणभिन्नगुणानां विषयविधया कारणत्वेन तत्राप्युक्तनीत्या रूपत्वादिना प्रत्येकरूपेण कारणत्वे व्यतिरेकव्यभिचाराद् योग्यगुणगतेन गुणत्वव्याप्यैकवैजात्येन कारणत्वं वाच्यम्, तथाच तेन सह साङ्कर्यात् न क्रियाजनकगुणगतैकवैजात्यसिद्धिरित्येवं निषेधे हेतुमाह गुणसाक्षात्कारेति, अत्रेदमपि दृश्यं, यथा वह्नित्वावच्छिन्नं प्रति तृणत्वेनारणित्वादिना च कारणत्वे व्यतिरेकव्यभिचारात्तन्निवृत्तये वह्नौ कार्यतावच्छेदकवैजात्यमभ्युपगतं तथा क्रियायामपि वैजात्यमङ्गीकृत्य विजातीयक्रियां प्रत्यदृष्टत्वेनादृष्टस्य कारणत्वेऽपि न गुणत्वसिद्धिरिति, द्वितीयचरणं व्याख्यातुमाह यदि चेति, आकाशगतशब्दाव्याप्तेरिति, शब्दस्यापि कार्यसामान्यान्तर्गततया समवायेन स गगने वर्त्तते नच तत्रादृष्टं स्वाश्रयसंयोगसम्बन्धेन वर्त्तते विभुद्वयसंयोगानभ्युपगमादित्यदृष्टस्याकाशेऽभावेपि तत्र

शब्दोत्पत्तेर्व्यतिरेकव्यभिचारादित्यर्थः। विभुद्वयसंयोगानभ्युपगमे हेतुमाह अजसंयोगनिषेधेनेति, अजेति नित्येत्यर्थः, कार्यसामान्यजनकतावच्छेदकसम्बन्धस्येति स्वरूपसम्बन्धविशेषस्येत्यर्थः। तथा चात्मनोऽव्यापकत्वेऽपि तेन सम्बन्धविशेषेणादृष्टस्य वह्नौ सत्त्वादूर्ध्वज्वलनं स्यादेवेति भावः।

एतेन 'न ज्वलत्यनलस्तिर्यग् यदूर्ध्वं वाति नानिलः॥ अचिन्त्यमहिमा तत्र धर्म एव निबन्धनम्' इति हेमसूरिवचनं व्याख्यातम्॥ वस्तुतोऽनिलानलयोर्गतित्रसनामकर्मोदयरूपादृष्टविशेषेण साक्षादेव क्रियाजननमिति न काप्यनुपपत्तिः॥ अत एव तयोरनन्यप्रेरितगतिमत्त्वेन सचित्तत्वं गन्धहस्तिभाष्यादौ प्रसिद्धम्, न च जीवविप्रमुक्तयोस्तयोर्व्यभिचारो, यदाकदाचिज्जीववत्त्वस्य साध्यस्य विवक्षितत्वेन तदभावात्, तद्दशायां क्रियावत्त्वं च तयोः पूर्वप्रयोगाहितवेगवशादिति दिग्।

एतेन—अदृष्टस्य सम्बन्धविशेषेण कारणत्वेन, अस्य व्याख्यातमित्यनेन सम्बन्धः, व्याख्यातं निष्टङ्कितप्रामाण्यतयोपवर्णितम्, साक्षादेवेति अत्रैवकारेण स्वाश्रयसंयोगसम्बन्धेन क्रियाजननं निषिद्धमिति भावः। व्यभिचार इति जीवेन स्वशरीरतया ग्रहणकाले सचित्तत्वेपि परित्यागकालेऽनिलानलयोरचित्तत्वात्सचित्तत्वं साध्यं तत्र न विद्यते अनन्यप्रेरितगतिमत्त्वं हेतुश्च विद्यत इति व्यभिचार इत्यर्थः। यदाकदाचिज्जीववत्त्वस्येति प्रतियोगिव्यधिकरणो यो जीवाभावस्तदभाववत्त्वस्येत्यर्थः। तदभावात् व्यभिचाराऽभावात्। ननु यदा निर्जीवो वायुस्तदा तत्राऽदृष्टद्वारा प्रेरकस्यात्मनोऽभावेन तिर्यग्गमनं तस्य कथं स्यात्, कथं च निर्जीवेऽग्नावूर्ध्वगमनं स्यादिति चेत्, अदृष्टजन्यक्रियाजन्यवेगवशादित्येव प्रतीहि इत्याह तद्दशायामिति, विभुत्वानुमाने पराभिप्रेतं

द्वितीयं विपक्षबाधकतर्कमुपन्यस्य निराकरोति—

यदपि बाधकमुक्तं केनचित्, आत्मनो व्यापकत्वाभावे दिग्देशान्तरवर्त्तिपरमाणुभिर्युगपत्संयोगाभावादाद्यकर्माभावस्तदभावादन्त्यसंयोगस्य तन्निमित्तशरीरस्य तेन तत्सम्बन्धस्य चाभावादनुपायसिद्धः सर्वदा सर्वेषां मोक्षः स्यादिति, तदपि न युक्तम्, नहि यद्येन युक्तं तदेव तं प्रत्युपसर्पतीति नियमः सम्भवी, अयस्कान्तं प्रत्ययसस्तेनासंयुक्तस्याप्युपसर्पणोपलब्धेः । अथासंयुक्तस्याकर्षणे तच्छरीरारम्भं प्रत्येकमुखीभूतानां त्रिभुवनोदरविवरवर्त्तिपरमाणूनामुपसर्पणप्रसङ्गात् न जाने तच्छरीरं कियत्प्रमाणं स्यादिति चेत्, संयुक्तस्याप्याकर्षणे कथं स एव दोषो न भवेत्, आत्मनो व्यापकत्वेन सकलपरमाणूनां तेन संयोगात्। अथ तद्भावाविशेषेऽप्यदृष्टवशाद्विवक्षितशरीरोत्पादनानुगुणा नियता एव परमाणव उपसर्पन्ति, तदितरत्रापि तुल्यम्, तदाह–दिग्देशवर्त्तिनामर्थान्नानादिग्देशवर्त्तिनां परमाणूनां समागमोऽपि तच्छक्तितोऽदृष्टशक्तिमहिम्नोपपद्यत इत्यत्र न खलु बाधकं विद्म इति, तावत्परिमाणतच्छरीरव्यक्तौ तथाभव्यत्वस्य दृष्टकारणानां चादृष्टजन्यतावच्छेदकजातिव्याप्यजात्यवच्छिन्न एव हेतुत्वात् नातिप्रसङ्ग इति निष्कर्षः ॥ ७१ ॥ बाधकान्तरन्निराचिकीर्षयाह—

यदपीत्यादिना, उत्तरार्द्धमुक्तार्थपरतया व्याख्यानयति–तदाहेति, तथा भव्यत्वस्येति तथापरिणमनस्वभावत्वेन भवनस्य, तावत्परिमाणत्वेन रूपेण भवनस्य वेत्यर्थः ॥७१॥ द्वासप्ततितमश्लोकमवतारयति बाधकान्तरेत्यादिना,

मूर्त्तत्वसावयवतानिजकार्यभाव–च्छेदप्ररोहपृथगात्मकताप्रसङ्गाः ॥
सर्पा इवातिविकरालदृशोऽपि हि त्व–त्स्याद्वादगारुडसुमन्त्रभृतां न भीत्यै ॥७२॥

मूर्त्तत्वेति मूलश्लोकं स्वयमेव ग्रन्थकारो विवृणोति—

आत्मनोऽव्यापकत्वे मूर्त्तत्वं स्यात्, तथा च सावयवं शरीरं प्रत्यवयवमनुप्रविशन्नात्मा सावयवः स्यात्, एवं च निजकार्यभाव आत्मनः कार्यता स्यात्, पटादिवत्। किञ्चात्मनः कायप्रमाणत्वे तच्छेदात् छेदस्तत्प्ररोहाच्च प्ररोहः स्यात्, तथा खण्डितावयवानुप्रविष्टस्य पृथगात्मकता स्यादित्यादयः प्रसङ्गाः सर्पा इवातिविकरालदृशोऽपि हि तव यः स्याद्वादरूपो गारुडसुमन्त्रस्तं बिभ्रति ये तेषां भीत्यै न भवन्ति। एकान्तवादिनस्तु ततो भीताः पलायन्त एवेति गरीयान् भगवतः प्रवचनमहिमेति भावः। तत्र यत्तावदुक्तं मूर्त्तत्वं स्यादिति, तदिष्यत एव, न चैवं मूर्त्तस्य मूर्त्तशरीरानुप्रवेशविरोधस्ततो निरात्मकमेवाखिलं शरीरं स्यादिति वाच्यम्,

आत्मनोऽव्यापकत्व इति, यद्यात्मा द्रव्यत्वे सत्यव्यापकस्स्यात् मूर्त्तस्स्यात्, यदि मूर्त्तस्स्यात् प्रत्यवयवं शरीरमनुप्रविशन् सावयवस्स्यात्, यदि सावयवस्स्यात् कार्यात्मा स्यात्, पटादिवदित्यात्मनोऽव्यापकत्वे अनिष्टापादनमिति भावः। दूषणान्तरमप्याह किञ्चेति, यद्यात्मा मूर्त्तस्स्याद् मूर्त्तशरीरानुप्रवेशी न स्यादिति बाधकतर्कमाशङ्कते न चैवमिति, तर्के हि व्याप्तिर्मूलं सा चाऽत्र यन्मूर्त्तं तन्न मूर्त्तशरीरानुप्रवेशीत्याकारा मनसि व्यभिचारेण न सम्भवतीत्युक्ततर्कस्य तदाऽऽभासत्वमेवेत्याशयेनाह—

असर्वगतस्यापि मनसः शरीरानुप्रवेशस्य त्वयाभ्युपगमात्, तद्वदेवासर्वगतत्वेनात्मनो रूपादिमत्त्वल-

क्षणस्य मूर्त्तत्वस्य चापादयितुमशक्यत्वात्, तादृशमूर्त्तत्वोपेतस्यापि जलादेर्वालुकादावनुप्रवेशो न निषिध्यते आत्मनस्तु तद्रहितस्यापि शरीरेऽसौ निषिध्यते इति महत्साहसम्। सावयवत्वकार्यत्वे अप्यात्मनः कथंचिदिष्टे एव, असङ्ख्येयप्रदेशात्मकत्वेन सावयवत्वात्, प्रदेशेऽवयवव्यवहारात्, दशाद्यवच्छेदेन पटोत्पत्तिवारणायावच्छेदकतासम्बन्धेन द्रव्यत्वावच्छिन्नं प्रति तादात्म्येन देशत्वेन हेतुतया देशत्वस्य विलक्षणस्य सिद्धेः,

असर्वगतस्यापीति, यद्यात्माऽसर्वगतस्स्यात् तदा रूपादिमत्त्वलक्षणमूर्त्तत्ववान् स्याद् घटवदित्यापादनं त्वयुक्तमेव, मनसोऽणुत्वेन तत्रासर्वगतत्वस्याऽऽपादकस्य सत्त्वेऽप्युक्तमूर्त्तत्वस्यापाद्यस्याभावेन व्यभिचारात्तयोर्व्याप्यभावादित्याह तद्वदेवेति, तद्वत् मनोवत्, तादृशेति रूपादिमत्त्वलक्षणेत्यर्थः। तद्रहितस्यापि तादृशमूर्त्तत्वविकलस्यापि, आत्मनि सावयवत्वस्य कार्यत्वस्य चापादनं यत्पूर्वं कृतं तदिष्टापत्त्या परिहरति सावयवत्वकार्यत्वे इति।

इत एवात्मादीनां देशितया कार्यत्वसिद्धौ तद्व्यावृत्तकार्यत्वस्य देशकार्यतावच्छेदककोटौ प्रवेशोऽप्रामाणिकगौरवापत्तेः, नन्वात्मनः कार्यत्वे घटादिवत् प्राक्प्रसिद्धसमानजातीयावयवारभ्यत्वप्रसक्तिः, अवयवा ह्यवयविनमारभन्ते यथा तन्तवः पटमिति चेत्, न, न खलु घटादावपि कार्ये प्राक्प्रसिद्धसमानजातीयकपालसंयोगारभ्यत्वं दृष्टं, कुम्भकारादिव्यापारान्वितात् मृत्पिण्डात् प्रथममेव तदुत्पत्तिप्रतीतेः, द्रव्यस्य हि पूर्वाकारपरित्यागेनोत्तराकारपरिणामः कार्यत्वं, तच्च बहिरिवान्तरप्यनुभूयत एवेत्यतोऽपि स्यात् कार्य एव, न च पटादौ स्वावयवसंयोगपूर्वककार्यत्वोपलम्भात् सर्वत्र तथाभावो युक्तः, काष्ठे लोहलेख्यत्वोपलम्भाद्वज्रेऽपि तथाभावाऽऽ-

पत्तेः, स्ताद्वा स्वप्रदेशसङ्कोचविकासात्मकसंयोगनिष्ठैव तत्तच्छरीरानुप्रवेशनियामिका तत्तदात्मजनकतावच्छेदिका जातिः, पुद्गलजनकतावच्छेदिका तु द्विगुणस्निग्धरूक्षत्वमियतेति कार्यत्वेऽप्यवान्तरवैजात्यं,न चात्मनः कार्यत्वे प्रतिसन्धानानुपपत्तिः, तत्र नित्यानित्यत्वप्रतिबन्धस्य बहुशो दर्शितत्वात्, एतेनैव बाल्यादिभेदेन शरीरस्येव तत्परिमाणस्यात्मनोऽपि भेदात् शरीरध्वंसे तद्ध्वंसात्परलोकाभाव इत्यप्यपास्तम्,

इत एव, सावयवत्वादेव, तद्व्यावृत्तेति, आत्मादिव्यावृत्तेत्यर्थः। प्रथममेवेति कपालतत्संयोगादिकमन्तरेणैवेति भावः। न चात्मद्रव्यस्यैतद्भवशरीरपर्यायसन्ताननियतःपर्यायसन्तानः,येनैतच्छरीरपर्यायसन्तानविशिष्टात्मपर्यायसन्तानविनाशे आत्मद्रव्यस्यापि विनाशात्परलोकाभावस्स्यात्,किन्तु पूर्वोत्तरभवशरीरपर्यायसन्ताननियतोप्यात्मपर्यायसन्तान इति नोक्तदोष इत्याशयेनाह—

तच्छरीरसन्तानोपहितपर्यायसमनियतत्वाभावात् तदात्मपर्यायमहासन्तानस्य। न च तद्द्रव्यत्वेनानित्यत्वसाधकमपि तस्य किञ्चिदस्ति, छेदप्ररोहावप्यात्मनः कायच्छेदप्ररोहयोः कथञ्चिदिष्टावेव, अन्योन्यानुस्यूतप्रदेशत्वात्,इयांस्तु विशेषश्छिन्नशरीरावयवप्ररोहस्तज्जातीयोत्पत्तिः, आत्मप्रदेशप्ररोहश्च तत्रानुप्रवेशः। एवं छेदोऽपि शरीरस्य छिन्नावयवत्वेनोत्पत्तिः,कथंचिदात्मच्छेदश्च शरीरसम्बद्धात्मप्रदेशानां कतिपयानां छिन्नावयवानुप्रवेश इति। यदि च नैवं स्वीक्रियते तदा शरीरात् पृथग्भूतावयवस्य कम्पोपलब्धिर्न स्यात्, पद्मनालतन्तुवदच्छेदस्यापि स्वीकारादेकान्तेन छेदानभ्युपगमादुभयावयववृत्त्यात्मप्रदेशानां पश्चात् सङ्घटनोपपत्तिः। आकृष्यमाणप्रदेशत्वाचास्य मूर्त्तत्वं स्पष्टमेव,

तच्छरीरसन्तानोपहितेति, तद्द्रव्यत्वेन तदात्मद्रव्यत्वेन, तस्य तदात्मनः। तज्जातीयोत्पत्तिः छिन्नशरीरावयवसजातीयावयवोत्पत्तिः, छिन्नावयवकम्पोपलब्ध्यन्यथानुपपत्त्या कतिपयात्मप्रदेशानां छेदस्य छिन्नात्मप्रदेशानामेकान्तच्छिन्नत्वाभ्युपगमे देहसम्बद्धात्मप्रदेशेष्वनुप्रवेशो न स्यादिति तत्रात्मान्तरत्वप्रसक्तिस्स्यादिति हेतोः पद्मनालतन्तुवत् शरीरसम्बद्धात्मप्रदेशसम्बद्धत्वादच्छेदस्य चाभ्युपगमात्, अदृष्टनिमित्तकं सङ्घट्टनमप्यविरुद्धम्, उत्तरकालं छिन्नावयवकम्पानुपलब्धेः, न च ते तत्रैव नष्टा इति वाच्यम्, नित्यत्वात्तेषाम्, कथञ्चिदनित्यत्वञ्च सङ्कोचविकाशभावमात्रेण तथा तथा परिणमनापेक्षया, न तु न्यूनाधिकभावेनोत्पादविनाशापेक्षया, प्रदेशानां नियतसङ्ख्यत्वात्, न च ते सक्रियत्वेनान्यत्र गता इत्यपि वाच्यम्, अन्येषामपि तैस्सह गमनं स्यात् नित्यमविष्वग्भावेन संयोगाभ्युपगमादित्याशयेनाह पद्मनालतन्तुवदच्छेदस्यापीति। एतत्तत्त्वं सविस्तरमस्मत्कृतस्याद्वादविन्दुतो विशेषार्थिनाऽवसेयम्,

अत एव न छिन्नावयवानामात्मप्रदेशानुप्रवेशेन पृथगात्मकताप्रसङ्गः, प्रविभक्तप्रदेशत्वस्यैव पृथक्त्वलक्षणत्वात्, न चात्रात्मप्रदेशाः प्रविभक्ताः, शृङ्खलावयवन्यायेन परस्पराजहद्वृत्तित्वात्, अवस्थाभेदेनावस्थावच्छेदस्तु नात्यन्तभेदनियतः, उत्फणविफणावस्थसर्पवदिति न किञ्चिदेतत् ॥७२॥ तस्मान्नोक्तदोषोपनिपातोऽव्यापकत्ववादे, प्रत्युत व्यापकत्ववाद एव तद्दुर्वारतेत्यभिप्रायवान् आह—

अत एव पद्मनालतन्तुवदच्छेदस्याभ्युपगमादेव ॥७२॥ त्रिसप्ततितममारभ्य षट्सप्ततितमपर्यन्तं पद्यचतुष्टयं युगपदवतारयति तस्मादित्यादिना,

स्युर्वैभवे जननमृत्युशतानि जन्मन्येकत्र पाटितशतावयवप्रसङ्गात् ॥
चित्तान्तरोपगमतो बहुकार्यहेतु-भावोपलोपजनितं च भयं परेषाम् ॥ ७२ ॥

वैभवे आत्मनो विभुत्वेऽभ्युपगम्यमाने, एकत्र जन्मनि एकजन्ममध्ये, पाटितानां शतधा च्छिन्नानां गृहगोधिकादीनां शतावयवेषु युगपत् कम्पोपलम्भेन तदनुमेयदुःखोपभोगार्थं चित्तान्तरप्रवेशोपगमतो भोगायतनत्वस्य प्रसङ्गात्, भोगायतनशतसम्बन्धात् शतं जन्मानि तावदवच्छिन्नस्मृत्यजनकज्ञानजनकमनःसंयोगविगमात् तावन्ति मरणानि च स्युः, एवं च तद्वदेव क्रमिकनानाजन्ममरणोपभोग्यकर्मणामेकजन्मपरिसमाप्यत्वसम्भावनया वैराग्यव्याघातः, शास्त्रानाश्वासप्रसङ्गश्च। किञ्चैवं बहुकार्यहेतुभावोपलोपजनितमपि भयं परेषामुपतिष्ठत एव, तथाहि—तज्जन्मोपभोग्यतदात्मवृत्तिभोगत्वावच्छिन्ने तच्छरीरत्वेन हेतुताऽपि न व्यवस्थिता, छिन्नावयवानां द्रव्यान्तरत्वात्, एवं तच्छरीरप्राणमनोयोगत्वादिनापि, उक्तस्थले व्यभिचारात्।

वैभवे एकत्र जन्मनि जननमृत्युशतानि स्युः, तत्र हेतुमाह चित्तान्तरोपगमतः पाटितशतावयवप्रसङ्गादिति, दोषान्तरमप्याह परेषां बहुकार्यहेतुभावोपलोपजनितं भयं चेत्यन्वयः। विस्तरार्थं तु ग्रन्थकार एवाह वैभव इत्यादिना। अङ्गुल्यादिच्छेदे कम्पोपलम्भेनायं पुरुषो दुःखीत्यनुमीयते, तद्वत् गृहगोधिकादीनां छिन्नावयवेषु कम्पोपलम्भेन दुःखोपभोगे सिद्धे तत्करणविधया तत्र मनोन्तरप्रवेशोऽपि स्वीकार्यः, अन्यथा करणमन्तरेण कार्यानुत्पत्तिदर्शनाद् दुःखानुत्पत्तिस्स्यात्, प्रविष्टेन च तत्तन्मनोन्तरेण तत्र तत्र शरीरान्तरत्वप्रसङ्गोपि स्यात्, अन्यथाऽवच्छेदकतासम्बन्धेन दुःखोपभोगं प्रति शरीरस्य कारणत्वेन तदन्तरेण स न स्यादित्याशये-

नाह पाटितानां शतधा च्छिन्नानामिति। तावदवच्छिन्नेति भोगायतनशतावच्छिन्नेत्यर्थः। इन्द्रियमनस्संयोगलाभाय विशेषणमाह स्मृत्यजनकेति, शास्त्रेति "अनेकजन्मसंसिद्धस्ततो याति परां गतिम्"इत्यादिशास्त्रेत्यर्थः। द्रव्यान्तरत्वादिति तच्छरीरभिन्नत्वादित्यर्थः, तथाच छिन्नावयवेषु तादात्म्येन तच्छरीररूपकारणाऽभावेऽपि तत्रावच्छेदकतासम्बन्धेन भोगकार्योत्पत्तेर्व्यतिरेकव्यभिचारः। तच्छरीरप्राणमनोयोगत्वादिनाऽपीति अत्र हेतुता न व्यवस्थितेत्यस्यानुकर्षः, उभयत्र हेतुमाह उक्तस्थले व्यभिचारादिति छिन्नावयवस्थले व्यतिरेकव्यभिचारादित्यर्थः। न च कारणतायाः शरीरान्तरेष्वपि सत्त्वेन तत्र च तच्छरीरत्वस्याभावेन तस्य तस्या न्यूनदेशवृत्तित्वेनानवच्छेदकत्वान्मास्तु तद्रूपेण कारणत्वम्, तच्छरीरारम्भकपरमाण्वारब्धत्वादिना तु तत्स्यादेव, शरीरान्तराणामपि तच्छरीरारम्भकपरमाण्वारब्धत्वेन तस्य कारणताया अन्यूनानतिप्रसक्तत्वेनावच्छेदकत्वसंभवादुक्तदोषाऽभावादिति वाच्यम्, उक्तरूपेण कार्यकारणभावसम्भवेऽपि तज्जन्मोपभोग्यतदात्मवृत्तिभोगत्वावच्छिन्नं प्रति मनसो नित्याणुरूपत्वेनाभ्युपगमाद्रूपान्तरेण कारणत्वाभावात्तच्छरीरप्राणमनोयोगत्वेनैव कारणत्वं वाच्यम्, तथाच छिन्नावयवस्थले छिन्नावयवानां तच्छरीरभिन्नत्वात्तत्र तच्छरीरप्राणमनोयोगाऽभावेपि तज्जन्मोपभोग्यतदात्मवृत्तिभोगकार्योत्पत्तेर्व्यतिरेकव्यभिचारानुद्धारादित्याशङ्कोत्तराभ्यामाह—

न च तच्छरीरारम्भकपरमाण्वारब्धत्वादिना हेतुत्वात् न व्यभिचार इति वाच्यम्, मनसि तथा वक्तुमशक्यत्वात्, तस्य परैर्नित्याणुत्वाभ्युपगमात्। न च छिन्नाच्छिन्नावयवानुप्रविष्टेषु मनःस्वेकं वैजात्यमस्ति, छिन्नावयवविनिर्गतनानामनोयोगादच्छिन्नावयवे भूतावेशप्रसङ्गात्। न च भिन्नभिन्नभोगायतनावच्छेदेनैव विजातीयमनसां भोगविशेषहेतुत्वात् नानुपपत्तिरिति वाच्यम्, विशिष्य गुरुतरकार्यकारणभावकल्पनं विना

तथास्वाभाव्यानिर्वाहात्, तत्कल्पने च महागौरवमिति ॥७३॥

न च तच्छरीरारम्भकेति, न च छिन्नाच्छिन्नावयवानुप्रविष्टेषु मनस्स्वेकं वैजात्यमभ्युपगम्य तज्जन्मोपभोग्यतदात्मवृत्तिभोगत्वावच्छिन्नं प्रत्यनुगतवैजात्यावच्छिन्नमनोयोगत्वेनैकमेव कारणत्वमिति नोक्तव्यभिचारः, न चैवं तर्हि चैत्रीयमनोयोगेनापि मैत्रीयभोगस्स्यादिति वाच्यं, चैत्रमनसि मैत्रात्मवृत्तिभोगत्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकवैजात्यानङ्गीकारात्, यावत्सु मनस्सु तज्जन्मोपभोग्यतदात्मवृत्तिभोगत्वावच्छिन्नकार्योत्पादनयोग्यता तावत्स्वेव वैजात्यस्य फलबलेन कल्पनादिति वाच्यम्, आत्मनो व्यापकत्वेन निष्क्रियत्वाद्भूतपिशाचादिशरीरान्निर्गत्य तदात्मनो मनुष्यादिशरीरेषु प्रवेशाऽसंभवेन तदीयमनस एव तत्र प्रवेशे भूतावेशव्यवहारवच्छिन्नावयवविनिर्गतनानामनःप्रवेशनादच्छिन्नावयवशरीरे भूतावेशव्यवहारप्रसङ्गात् । किञ्चाऽच्छिन्नावयवशरीरावच्छेदेन तज्जन्मोपभोग्यतदात्मवृत्तिभोगो यथा तन्मनोयोगेन भवति तथा तत्र प्रविष्टमनोऽन्तरैरपि स्यात्, नचोक्तसामान्यकार्यकारणभावे भवेदुक्तदोषः, न चैवम्, तज्जन्मोपभोग्यतदात्मवृत्तितद्भोगत्वावच्छिन्नं प्रति अवच्छेदकतासंबन्धेन तद्भोगायतनं कारणमिति तद्भोगायतनावच्छेदेन तद्भोगं प्रति तन्मनोयोगस्य कारणत्वम्, अपरभोगायतनावच्छेदेनापरभोगत्वावच्छिन्नं प्रत्यपरमनोयोगस्य कारणत्वमित्येवं प्रतिव्यक्तिविश्रान्तमेव कार्यकारणभावमभ्युपगम्यत इति वाच्यम्, तथाकल्पने गौरवप्रसङ्गादित्याह—न च छिन्नाच्छिन्नावयवानुप्रविष्टेष्वित्यादिना ॥७३॥

प्रत्यंशमेव बहुभोगसमर्थने तु, स्यात्संकरः पृथगदृष्टगवृत्तिलाभे ॥
मानं तु मृग्यमियतैव हतश्च काय—व्यूहोपि योगिषु तवागमिकैः परेषाम् ॥७४॥

प्रत्यंशमेव बहुभोगसमर्थने त्विति पद्यं विवृणोति—

अथ प्रत्यंशं प्रत्यवयवं छिन्नाच्छिन्ननानावयवस्थलेऽवच्छेदकान्तरसंवलितावच्छेदकसमाजमहिम्ना नानारूपवदवयवारब्धेऽवयविनि नानारूपवन्नानाभोगा आत्मनि समर्थ्यन्ते, अवच्छेदकभेदेन विरोधपरिहारादवच्छेदकान्तरसंवलनं च स्वविजातीयत्वे सति सम्बन्धविशेषेण स्वाश्रयाश्रितत्वप्रत्यासत्त्या सामानाधिकरण्यं तेन नैकावच्छेदेन नानाभोगाऽपत्तिरिति चेत्,

अथेत्यादिना, अवच्छेदकान्तरसंवलितावच्छेदकसमाजमहिम्नेति, अवच्छेदकान्तरं छिन्नावयवः, तत्संवलितो योऽवच्छेदकः सोऽच्छिन्नावयवः, एवमवच्छेदकान्तरमच्छिन्नावयवः, तत्संवलितोऽवच्छेदकश्छिन्नावयवः, तत्समाजमहिम्ना तदवच्छेदेनेत्यर्थः, अस्य नानाभोगा आत्मनि समर्थ्यन्ते इत्यनेनान्वयः, तथा च यथैकस्मिन्नवयविनि विजातीयनानारूपवदवयवावच्छेदेन नव्यमते नानारूपाणामुत्पत्तिः, तथैकस्मिन्नप्यात्मनि छिन्नाच्छिन्नावयवावच्छेदेन नानाभोगानां सम्भवः, अवच्छेदकान्तरसंवलितोक्त्या च न मैत्रशरीरावयवावच्छेदेन चैत्रस्योपभोगः, स्वविजातीयत्वे सति स्वसामानाधिकरण्यं हि संवलितत्वम्, तत्र सामानाधिकरण्यघटकं स्वनिष्ठनिरूपकत्वं स्वाधिकरणनिरूपितवृत्तित्वञ्चोभयं स्वाश्रयाश्रितत्वप्रत्यासत्त्या ग्राह्यम्, तत्रापि स्वाश्रयत्वं स्वसमवायित्वलक्षणसम्बन्धविशेषावच्छिन्नं स्वाश्रयाश्रितत्वञ्चावच्छेद्यतात्मकसम्बन्धविशेषाऽवच्छिन्नं ग्राह्यम्, न चैतत् चैत्रशरीरावयवसामानाधिकरण्यं मैत्रशरीरावयवे, चैत्रशरीरावयवस्य स्वाश्रयं चैत्रशरीरं, तदाश्रितत्वं सम्बन्धविशेषेण चैत्रात्मन्येवेति स्वाश्रयाश्रितत्वसम्बन्धेन चैत्रशरीरावयवाधिकरणं चैत्रात्मा तत्र स्वाश्रयाश्रितत्वसम्बन्धेन मैत्रशरीरावयवस्य मैत्रात्मन्येव सत्त्वेनाऽवृत्तित्वात्, स्वाश्रयाश्रित-

त्वघटकाश्रितत्वस्य सम्बन्धविशेषेणेत्युपादानादेव च चैत्रशरीरेण सह मैत्रात्मनस्संयोगेऽपि स्वाश्रयं यच्चैत्रशरीरं तदाश्रितत्वं न मैत्रात्मनः, न वा चैत्रात्मनि सम्बन्धविशेषेण स्वाश्रयाश्रितत्वसम्बन्धेन मैत्रावयवस्य सत्त्वमिति नातिप्रसङ्ग इति भावः। वस्तुतश्शरीरात्मनोस्सम्बन्धो वृत्त्यनियामक इत्यात्मा शरीरानाश्रय एव, अहं शरीरी मयि शरीरमिति प्रतीत्याऽऽत्मनश्शरीराश्रयत्वाभ्युपगमेऽपि नित्यद्रव्येभ्योऽन्यत्राश्रितत्वमिति नियमाङ्गीकाराच्छरीरस्यात्मानाश्रयत्वेन स्वाश्रयाश्रितत्वसम्बन्धेन छिन्नावयवरूपावच्छेदकान्तरस्याच्छिन्नावयवरूपावच्छेदकस्य च तदात्मनि सामाधिकरण्यरूपसंवलितत्वाभावान्न भिन्नावच्छेदेनैकदा नानाभोगास्सम्भवन्तीति समाधत्ते—

न, अहं शरीरी मयि शरीरमिति प्रतीत्यात्मनः शरीराश्रयत्वेऽपि तव मते शरीरस्य तदनाश्रयत्वात्, स्वाश्रयाश्रितत्वस्थाने स्वसम्बद्धसम्बन्धित्वदाने चैकत्र प्रत्यवयवं नानाभोगसङ्करस्य दुर्वारत्वात्, मिथो विजातीयानां करचरणादीनां मिथः संवलितत्वात्, संवलनघटकस्य वैजात्यस्य शरीरतदवयवान्यतरत्वव्याप्यजात्यपेक्षयैव ग्रहणादन्यथाऽसम्भवात्।

न, अहं शरीरीत्यादिना, एकत्र प्रत्यवयवं नानाभोगसङ्करस्येति, एकस्मिन्नपि शरीरे करचरणादितत्तदवयवसंवलितत्वस्यावयवान्तरे सत्त्वेन यावन्तोऽवयवास्तावतां भोगानां प्रसङ्गस्स्यादिति भावः। परस्परावयवानामुक्तसम्बन्धेन परस्परसामानाधिकरण्येऽपि वैजात्यस्याभावात् स्वविजातीयत्वघटितसंवलितत्वं नास्तीति नच वाच्यं, यतस्स्ववैजात्यं स्ववृत्तिशरीरतदवयवान्यतरत्वव्याप्यजातिशून्यत्वम्, तथा च हस्ते शरीरतदवयवान्यतरत्वव्याप्या या जातिस्सा हस्तत्वरूपैव, तस्याश्चरणेऽभावात्, चरणगतजातेश्च हस्तेऽभावाद् भवति विजातीयत्वमिति तद्घटितसंवलितत्वमस्त्येवेत्याह संवलनघटकस्येति। अन्यथाऽसम्भवादिति,

अवयववृत्तिजातिमात्रापेक्षया वैजात्यस्य ग्रहणे छिन्नाच्छिन्ननानाऽवयवस्थलेऽपि छिन्नाच्छिन्नावयवानां वैजात्यं न स्यादिति भावः। यथा समूहालम्बनप्रत्यक्षं प्रति कारणीभूतानां तत्तद्विषयाणां भिन्नत्वेऽपि तत्तद्विषयावच्छेदेन जायमानमेकमेव तत्, तथैकशरीरावयवानां करचरणादीनां मिथो भिन्नत्वेऽपि तत्तदवच्छेदेनोत्पद्यमानो भोग एक एव, तज्जनकस्यादृष्टस्यैकत्वादिति नास्मदादिशरीरे एकदा नानाभोगप्रसङ्गः, तत्त्वज्ञानिनस्तु तत्तच्छरीरसाध्यभोगजनकानामदृष्टानां भिन्नत्वादेककालावच्छेदेनापि भिन्नशरीरावच्छेदेन जायमानभोगानां नानात्वमेव, तेषां सर्वेषामेकात्मनि समावेशस्त्ववच्छेदकतासंबन्धेन यद्यत्स्वाधिकरणं भोगायतनं तत्तदवच्छेदेनेति नैकभोगायतनावच्छेदेन भोगस्यापरभोगायतनावच्छिन्नत्वप्रसङ्गः, यथाऽवयविन्यव्याप्यवृत्तिनानारूपवादिमते नानारूपाणां तत्तदवयवावच्छेदेन समागम इत्याशयेनाऽऽशङ्कते नैयायिकः—

अथ नानाविषयावच्छिन्नसमूहालम्बनज्ञानमिवैकत्र शरीरे नानावयवावच्छेदेनोत्पद्यमानोऽपि भोगोऽविरोधादेक एव, एकादृष्टजन्यत्वात्, पृथग्भोगायतनजन्याः पुनर्नैव भोगाः, एकत्र समावेशस्तेषामवच्छेदभेदाच्चित्रावयविनीव नीलादीनां, न च सव्यापारदानादिसत्त्वेऽपि मनुष्यशरीरसत्त्वे देवशरीरानुत्पादादेकभोगायतनस्य भोगायतनान्तरप्रतिबन्धकत्वात् नैवमिति वाच्यम्, तद्वृत्तिलाभकालापेक्षतददृष्टस्य देवादिशरीरहेतुत्वेनोक्तप्रतिबन्धकत्वकल्पने मानाभावादिति चेत्, न, तथापि विपक्षोदयप्रकृतीनां विरुद्धवृत्तिलाभकालत्वेन युगपन्नानाभोगायतनजन्यभोगासम्भवात्, अन्यथा मनुष्यशरीरसत्त्वे एव कुतो न देवशरीरजनकादृष्टवृत्तिलाभ इत्यस्य प्रष्टव्यत्वापत्तेः,

अथ नानाविषयावच्छिन्नेति, नच तत्त्वज्ञानिनां नैकदा नानाभोगजनकनानाशरीरसम्भवः, अस्मदादीनां देवशरीरजनकादृष्टसत्त्वेऽपि मनुष्यशरीरकाले देवशरीरानुत्पत्त्या तदर्थमेकभोगायतनस्य भोगायतनान्तरं प्रति प्रतिबन्धकत्वस्यावश्यं वाच्यत्वादिति वाच्यम्, अदृष्टवत् कालविशेषस्यापि देवशरीरं प्रति कारणत्वेन तस्य मनुष्यशरीरदशायामभावेन देवशरीरानुत्पत्तिसंभवात् तदर्थमुक्तप्रतिबध्यप्रतिबंधकभावे मानाभावात्, तत्त्वज्ञानिनस्तु फलबलादेकस्यापि कालविशेषस्य युगपद्नानाशरीरजनकत्वं कल्प्यत इत्याह न चेति, वाच्यमित्युत्तरेण योगः। दानादिक्रियया्ऽदृष्टरूपव्यापाराभावे नोत्तरकाले स्वर्गादिफलोत्पत्तिरित्यत उक्तं सव्यापारेति, तद्वृत्तिलाभकालापेक्षतदहृष्टस्येति, अदृष्टविशेषस्य देवशरीरोपभोग्यं यत्सुखविशेषात्मकफलं तदुत्पादकालापेक्षाऽदृष्टविशेषस्येत्यर्थः, अथ नानाविषयेत्यादेरुत्तरमाह, न, तथापीत्यादिना। विपक्षोदयप्रकृतीनामिति देवभवोपभोग्यकर्मप्रकृतितो विपक्षो विरुद्ध उदयो रसानुभवो यासां गतिजात्यादिनिधत्तायुःकर्मप्रकृतीनां ताः विपक्षोदयप्रकृतयः तासामित्यर्थः, अन्यथा विपक्षोदयप्रकृतीनामप्यदृष्टानां समानवृत्तिलाभकालत्वाभ्युपगमे, इष्टेन पूर्तेनेत्यादिवचनाद्देवशरीराऽभावेऽपि तज्जन्यत्वेनाभिमतो भोगो मनुष्यशरीरेणापीष्यत एवेत्याशङ्कते—

मनुष्यस्यापि सत इष्टेन पूर्तेनेत्यादिवचनाद्दिव्योपभोग इष्यत एवेति चेत्, न, तद्वचनस्यौपचारिकत्वात्, नानादानादिक्रियोत्पन्नकलिकापूर्वजनितपरमापूर्वभोगस्य देवशरीरं विनाऽसम्भवात्। अथ भवधारणीयशरीरैक्ये आन्तरालिकभोगायतनभेदेऽपि छिन्नावयवस्थले न भोगभेदानुपपत्तिर्नवा भवभेदापत्तिः, भवतामौदारिकशरीरवतां वैक्रियलब्धिमतां वैक्रियोत्पादकाल इवेति चेत्, न, विरुद्धभोगजनकानां तावददृष्टानां युगपल्ल-

…प्रतीतिकत्व प्रमाणस्य मृग्यत्वात्।

मनुष्यस्यापीति, इष्टेन यागादिना, पूर्त्तेन तडागादिना। नानादानेति अङ्गक्रियातोऽङ्गापूर्वमुत्पद्यते अङ्गक्रियासहकृतया प्रधानक्रियया च प्रधानापूर्वमुत्पद्यते, ताभ्यामपूर्वाभ्यां च दक्षिणादानाद्युत्तरक्रियाजनिताऽपूर्वसहकृताभ्यां फलपर्यन्तस्थायिपरमापूर्वमुत्पद्यते, तेनैव परमापूर्वेण देवशरीरमुत्पाद्य तत्साध्यभोगो जन्यते, अतो न मनुष्यशरीरकाले देवशरीरसाध्यभोगसंभव इत्यर्थः, कलिकापूर्वेति इदं प्रधानापूर्वस्यैव नामान्तरं, नैयायिकश्शङ्कते अथेति, भवधारणीयैक्य इति आभवान्तं मनुष्योऽयं देवोऽयमित्यादिव्यवहारनिबंधनमाऽऽभवान्तसत्ताकं यच्छरीरं तद्भवधारणीयं तस्यैक्य इत्यर्थः। आन्तरालिकशरीरभेदो भवभेदप्रयोजक इति जैनैरपि नाभ्युपगतमित्यावेदयितुं तत्र दृष्टान्तमाह भवतामिति जैनानामित्यर्थः। समाधत्ते, न, विरुद्ध भोगजनकानामिति, भवधारणीयैक्यमपि भवन्मते न सम्भवतीत्याह—

भवधारणीयैक्ये भवैक्यं तदैक्ये च तदैक्यमित्यन्योन्याश्रयाच्च, अस्माकं तु गतिजात्यादिनिधत्तायुःकर्मविपाकोदयजनितमनुष्यादिपर्यायात्मकभवभेदस्य स्वाविष्वग्भूतभोगायतनतया भोगावच्छेदासाङ्कर्यस्य च नानुपपत्तिरात्मनोऽव्यापकत्ववादे, इयतैव तवागमिकैस्त्वत्सिद्धान्तवेदिभिः,परेषां नैयायिकानां, योगिषु कायव्यूहोऽपि कायव्यूहाभ्युपगमोऽपि निरस्तः। न हि परिच्छिन्नस्यात्मनो देहान्तरसञ्चारो जन्मपदार्थः परैरिष्यते किन्त्ववस्थितस्यैव देहान्तरसम्बन्धः, तथा च योगिनामेकदा नानाकर्मफलोपभोगाय तुरङ्गकुरङ्गविहङ्गमतङ्गजशाम्बरशूकरघूककिरातशृगालविडालादिशरीरपरिग्रहाभ्युपगमे एकत्र भवे भवसहस्रसङ्करस्य दुर्वारत्वात्।

किञ्चैवं नरकादिदुःखजनकब्रह्महत्यादिप्रयोजकादृष्टसत्त्वे योगिनां नारकब्रह्मघातकशरीरपरिग्रहोऽपि स्यादिति महद्वैशसम्। तादृशादृष्टविरह एव तत्त्वज्ञानोत्पत्तिरिति चेत्, शूकरादिशरीरोत्पादकादृष्टासत्त्व एव तत्त्वज्ञानोत्पत्तिरित्यपि किमिति न रोचयेः।

भवधारणीयैक्य इति, स्वाविष्वग्भूतभोगायतनतयेति, अन्नोन्नाणुगयाणं इमं च तं चत्ति विभयणमजुत्तमित्यादिवचनाद्देहात्मनोरन्योन्यानुस्यूतत्वेन कथञ्चिदात्माऽभिन्नं यद्भोगायतनं तद्भावस्तत्ता तयेत्यर्थः। एतावता पृथगदृष्टगवृत्तिलाभे मानं तु मृग्यमित्यंशं व्याख्याय इयतैव हतश्च कायव्यूहोऽपि योगिषु तवागमिकैः परैषामित्यंशं व्याख्यातुमाह इयतैव तवागमिकैरिति, एतदेव विवृणोति नहीति, परिच्छिन्नस्य अवच्छिन्नपरिमाणवतः, परैः नैयायिकैः, अवस्थितस्यैव विभुतया सर्वत्र स्थितस्यैव, तथा च–विभुतया जगत्त्रयव्यापकस्थितिकस्यात्मनो देहान्तरसम्बन्धस्य जन्मपदार्थत्वे। अदृष्टजन्यशूकरादेस्तत्त्वज्ञानजन्यशूकरादितो वैलक्षण्यान्न महद्वैशसमित्याशङ्कते नैयायिकः—

तत्त्वज्ञानजन्यशूकरादिवैलक्षण्यात् नायं दोष इति चेत्, तर्हि तत्त्वज्ञानाऽदृष्टजन्यतावच्छेदिकयोः साङ्कर्यम्, कथं च तत्त्वज्ञानेन कायव्यूहजननेऽप्यनन्तकालपरिसमाप्यक्रमिकशूकरादिशरीरोपभोग्यनानाफलजननं, कथं च तद्विना शूकरादिशरीरोपभोग्यचरमफलं विनाऽदृष्टनाशः, कथं च तमन्तरेण मोक्षोत्पत्तिरिति विचारणीयमायुष्मता। शूकरादिशरीरोपभोग्यमप्यदृष्टफलं योगिनां स्वायुर्नियतमेव तत्कल्प्यत इति चेत्, तर्हि लाघवात् तदनुपभोग्यमेव, तच्च भवोपग्राह्यऽदृष्टचतुष्टयाख्यं, तत्राप्यायुषः कर्मत्रयस्याधिकस्थितिकत्वे तत्समीक-

रणार्थं भगवतः केवलिसमुद्घातारम्भः, आयुस्तु कर्मत्रयादधिकस्थितिकं स्वभावादेव न भवति, केवलिसमुद्घात एव च परेषां कायव्यूहभ्रमस्तदालम्बनेनैव चेश्वरस्य सर्वावेशप्रतिपादिका श्रुतिरिति युक्तं पश्यामः ॥७४॥

तत्त्वज्ञानजन्येति, समाधत्ते ग्रन्थकारः तर्हीत्यादिना। नैयायिकः पुनरपि शङ्कते-शूकरादीति, शूकरादिशरीरोपभोग्यत्वेनाभ्युपगतस्याप्यदृष्टफलस्य योगिनां स्वायुर्नियतत्वकल्पनेन शूकरादिशरीरमन्तरेणैव तत्त्वज्ञानेन नाश इत्यभ्युपगम्यत इति चेत्, तर्हि लाघवात् तच्छरीराऽनुपभोग्यमेव तत् स्वीक्रियतामित्याशयेन समाधत्ते तर्हि लाघवादिति। अदृष्टचतुष्टयेति वेदनीयनामगोत्रायुःकर्मचतुष्टयेत्यर्थः। केवलिसमुद्घातारम्भ इति, एतत्तत्त्वं स्याद्वादविन्दौ विस्तरतो न्यायप्रभायां चोक्तं तत एवावसेयम्॥७४॥

नात्मा क्रियामुपगतो यदि काययोगः, प्रागेव को न खलु हेतुरदृष्टमेव ॥
आद्ये क्षणेऽभ्यवहृतिः किल कार्मणेन, मिश्रात् ततोऽनु तनुसर्गमिति त्वमोघम् ॥७५॥

नात्मा क्रियामुपगत इति पञ्चसप्ततितमं पद्यं विवृणोति—

तथात्मा यदि न क्रियामुपगतोऽक्रिय एवेत्यर्थः, तदा, प्रागेव शरीरोत्पत्तेरादावेव, काययोगः कायोत्पत्त्यनुकूलः प्रयत्नः को, न कश्चिदेव, तच्छरीरजन्यस्य तदात्मविशेषगुणस्य तदभावेऽभावात्, तथा चादृष्टाकृष्टानामपि परमाणूनामाहारतया ग्रहणस्य शरीरतया परिणमनस्य चाभावे आदित एव शरीरानुत्पत्तौ संसारोच्छेदः। न च शरीरोत्पत्तावदृष्टमेव हेतुर्न तु यत्न इति वाच्यम्, शरीरोत्पत्त्यनन्तरमप्याहारादिपरिणामस्य श्वासप्रश्वासादिसन्तानस्य च तत एवोत्पत्तौ जीवनयोनियत्नोच्छेदापत्तेः,

तथात्मेति, प्रागेवेत्यस्य विवरणमाह शरीरोत्पत्तेरादावेवेति। शरीरोत्पत्तेः पूर्वं शरीरोत्पत्त्यनुकूलप्रयत्नरूपकाययोगाऽभावे हेतुमाह तच्छरीरजन्यस्येति, तदभावे तच्छरीराभावे, तथाच शरीराभावात्प्रयत्नाभावे च, तत एव अदृष्टादेव, जीवनयोनियत्नाभावे च सुषुप्त्याद्यवस्थायां प्रवृत्तिनिवृत्तिप्रयत्नयोरभावेन तत्कारणकचेष्टाया अप्यभावाच्छरीरस्य निश्चेष्टत्वं स्यात्तत्त्वे चान्त्यावयवित्वे सति चेष्टाश्रयत्वलक्षणं शरीरत्वमपि न स्यादित्याह—

तथा च स्वापादौ शरीरेऽपि प्रयत्नासमवायिकारणकक्रियाभावान्निश्चेष्टत्वं स्यात्, अदृष्टजन्यक्रिया च वह्न्यूर्ध्वज्वलनादिनाऽतिप्रसङ्गिनी, सम्बन्धविशेषस्त्वदृष्टस्य कायेन सहान्योन्यानुगमाख्यः पुद्गलात्मकत्व एव घटते, बन्धननामकर्मप्रयुक्तत्वात्, प्रवृत्तिरूपोऽपि प्रयत्न आत्मप्रदेशपरिस्पन्दान्नातिरिच्यते, सविषयकत्वं च तस्य ज्ञानौपाधिकमन्यथा वेत्यन्यदेतत् ।

तथा च स्वापादाविति, नन्वदृष्टजन्यक्रियैव चेष्टा, तस्याश्च सुषुप्तिकाले भावात् न शरीरस्य निश्चेष्टत्वमिति चेत्, न, एवं सत्य दृष्टजन्यत्वेनोर्ध्वज्वलनक्रियाया अपि चेष्टात्वप्रसक्त्या तदाश्रयत्वेन वह्नेश्शरीरत्वं स्यादित्याह—अदृष्टजन्यक्रिया चेति, ननु सम्बन्धविशेषेणाऽदृष्टजन्या क्रिया चेष्टा, सम्बन्धविशेषश्चाऽदृष्टस्य शरीरेण सहैव, न तु वह्न्यादिनेति नातिप्रसङ्ग इत्यत आह सम्बन्धेति, ननु प्रयत्नस्यात्मप्रदेशपरिस्पन्दात्मकत्वं कथं घटते, प्रयत्नस्य सविषयकत्वात्, परिस्पन्दस्य च निर्विषयत्वादित्यत आह—सविषयकत्वमिति, स्वजनकज्ञानविषयत्वमेव प्रयत्नविषयत्वं घटादौ, प्रयत्ने घटविषयकत्वं च घटविषयकज्ञानजन्यत्वम्, कारणीभूतज्ञानधर्मस्य सविषयकत्वस्य तत्कार्यीभूते प्रयत्ने आरोपेण तत्र तद्व्यवहार इति भावः, अथवाऽनुभवाऽनुरोधात् परिस्पन्द-

स्यापि सविषयकत्वमस्त्विति भावः। नन्वात्मनि परिस्पन्दे किं प्रमाणमित्यत आह—

आकाशादिव्यावृत्तोऽन्योन्यानुप्रवेशरूपः शरीरसंयोग एव चात्मनि क्रियामनुमापयति, तस्योभयकर्मजत्वात्, विशिष्टत्वादेव च तस्यादृष्टाद्यप्रवेशेन क्रियाफलसामानाधिकरण्यनियामकत्वं, तेन तदनुरुद्धबहुतरकार्यकारणभावान्तरकल्पनागौरवं परिहृतं भवति, तस्मादाद्ये क्षणे कार्मणकाययोगाख्येनात्मपरिस्पन्देन, अभ्यवहृतिराहारग्रहणं, तच्छक्तेरेकक्षण एव निष्पन्नत्वेनाह्रियमाणस्याहृतत्वात्, ततोऽनु तनुसर्गं शरीरपर्याप्तिनिष्पत्तिं यावत्, मिश्रादौदारिकमिश्रात् काययोगादभ्यवहृतिः, ततश्च निष्पन्नायां शरीरपर्याप्तौ तेन तमालम्ब्यौदारिककाययोगेन लोमाहारकवलाहारान्यतरग्रहणमिति तु भवतो वचोऽमोघं, शरीरनिष्पत्तेः पूर्वं पश्चादपि चात्मनः सक्रियत्व एवाहारित्वोपपत्तेः, तदनुपपत्तौ च परेषां संसाराभाव इति। तदिदमुक्तं पारमर्षे 'जोएण कम्मएणं, आहारेई अणंतरं जीवो॥ तेण परं मीसेणं, जाव सरीरस्स णिप्फत्तित्ति ॥१॥ निष्पन्ने च शरीरे औदारिकादिकाययोगेनाहारग्रहणं प्रतीतमेव ॥७५॥

आकाशादीति, क्षीरे नीरस्य नीरे च क्षीरस्य प्रतिप्रदेशं सम्मिश्रणेनान्योन्यानुस्यूतसंयोगस्तेन शरीरेण सहात्मनस्तथात्मकसंयोगस्योभयक्रियामन्तरेणानुपपत्तेस्तेन कार्यलिङ्गेन कारणीभूतायास्तस्या अनुमानादात्मनि क्रियावत्त्वं सिद्ध्यति, अनुमानञ्चात्र आत्मा सक्रियः अन्योन्यानुप्रवेशरूपशरीरसंयोगवत्त्वात् यन्नैवं तन्नैवं यथाऽऽकाशादीति पर्यवस्यति, शरीरमात्रे यदि क्रियाबलादेव तथा संयोगस्स्यात्तदाऽऽकाशेनापि सह सक्रियस्य शरीरस्य तथा संयोगस्स्यात् तथा चात्मीयं शरीरमिति वदाकाशीयं शरीरमित्यपि व्यवहार-

स्स्यात्, न चैवमिष्ट इत्यात्मशरीरोभयक्रियाबलादेवोक्तसंयोगोऽभ्युपगन्तव्यः, तत्र शरीरे क्रियाप्रत्यक्षसिद्धैवेति तामुपेक्ष्यात्मनि क्रियाऽनुमानमिति भावः। अन्योन्यानुगमाख्यसंयोगस्य विलक्षणत्वादेव च तस्य नैयायिकाभ्युपगताऽदृष्टाद्यनुसरणमन्तरेणापि आहारादियोग्यपुद्गलोपादानक्रियायाः सप्तधात्वादिरूपेण परिणमनात्मकस्य तत्फलस्य च यत्सामानाधिकरण्यमेकत्र भावस्तन्नियामकत्वमुपपद्यत इत्याह विशिष्टत्वादेव च तस्याहृष्टाद्यऽप्रवेशेनेति, तेन अदृष्टाद्यऽप्रवेशेन, न्यायमतेऽनुपपत्तिमुपदर्श्य स्वमते आहारग्रहणादिकमुपपादयति—तस्मादिति। अयम्भावः, आत्मनः सक्रियत्वादाद्यदेहमुत्सृज्यैकसामयिक्या ऋजुगत्या एकद्व्यादिवक्रया द्वित्र्यादिसामयिक्या विग्रहगत्या वोत्पत्तिस्थाने आगतस्सन् जीवः प्रथमसमय एव सर्वैरपि स्वीयप्रदेशैः तैलभृततप्ततापिकाप्रथमसमयनिक्षिप्तापूपको यथा सर्वात्मना तैलं गृह्णाति न तु त्यज्यति तथा तैजसकार्मणयोगेनाहारपुद्गलान् जघन्यतोऽप्यभव्यानन्तगुणान् सिद्धाऽनन्तभागप्रमितान् औदारिकादिवर्गणासत्कानाऽऽदत्ते एव, तदुक्तं प्रवचनसारोद्धारे "पढमे समये जीवा उप्पन्ना गब्भवासमज्झंमि। ओयं आहारंती सव्वप्पणयाए पूयव्व" ।१। इति, उत्पत्त्यनन्तरसमयेषु आभवान्तं सर्वात्मप्रदेशैराहारयोग्यपुद्गलान् काँश्चिदादत्ते काँश्चिद्विमुञ्चति तप्ततापिकागततैलग्राहकविमोचकापूपवत्, अत एव व्याख्याप्रज्ञप्त्यां प्रथमशतके सप्तमोद्देशके "नेरइएणं भंते नेरइएसु उववज्जमाणे किं देसेणं देसं आहारेइ इत्यादिप्रश्ने प्रथमभंगद्वयं निषिध्य सव्वेण वा देसं आहारेइ सव्वेण वा सव्वं आहारेइ" इत्युत्तरं दत्तं, आहारश्च त्रिविधः ओज आहारो लोमाहारः प्रक्षेपाहारश्च, तत्र शरीरेणैव केवलेन य आहारस्स ओजाहारः, एतदुक्तं भवति यद्यप्यौदारिकवैक्रियाहारकतैजसकार्मणभेदतः शरीरं पञ्चधा तथाऽपीह तैजसेन तत्सहचारिणा कार्मणेन च शरीरेण पूर्वशरीरत्यागे विग्रहेणाविग्रहेण वोत्पत्तिदेशं प्राप्तस्सन् जन्तुर्यत्प्रथममौदारिकादिशरीरयोग्यान् पुद्गलानाहारयति यच्च द्वितीयादिसमयेष्वप्यौदा-

रिकादिमिश्रेणाहारयति यावच्छरीरनिष्पत्तिं एष सर्वोऽप्योज आहारः, ओजसा तैजसशरीरेणाहार ओज आहारः, सकारवर्णलोपादोजाहारो वा, यद्वा ओजः स्वजन्मस्थानोचितः शुक्रानुविद्धशोणितादिपुद्गलसङ्घातः, तस्याहार ओजाहारः, स चाऽपर्याप्तावस्थायामेव, अपर्याप्तत्वं च शरीरपर्याप्तिमपेक्ष्य, नेन्द्रियादिपर्याप्तिमपेक्ष्य, तदपर्याप्तानां लोमाहारकत्वात्, सर्वाभिः स्वयोग्यपर्याप्तिभिरपर्याप्तानामोज आहार इत्यन्ये, तदुक्तं "ओयाहारा जीवा सव्वे अपज्जत्तगा मुणेयव्वा" इति, तथा त्वगिन्द्रियेण यः स्पर्शस्तेन य आहारः शरीरोपष्टम्भकानां शिशिरप्रावृट्कालादिभाविनां शीतजलादिपुद्गलानां ग्रहणं स लोमरन्ध्रैराहारः प्रचुरतरमूत्राद्यभिव्यङ्ग्यो लोमाहारः, स च शरीरपर्याप्त्या पर्याप्तानां मतान्तरेण सर्वाभिः पर्याप्तिभिः पर्याप्तानां सर्वेषां जीवानां पवनादिस्पर्शनात् सदैव नियमतो भवति, अत एव घर्माद्यभितप्ताश्छायया शीतलानिलस्पर्शनेन वा प्रीयन्ते प्राणिनः, यः पुनराहारः कवलैर्निष्पन्नो भवति स प्रक्षेपाहारो ज्ञातव्यः, प्रक्षेपणं मुखे प्रवेशनं प्रक्षेपः, तेनौदनादेराहारः प्रक्षेपाहारः, अथवा प्रक्षिप्यते इति प्रक्षेपः, ओदनकवलादिः, तस्याहारः प्रक्षेपाहारः, "पक्खेवे हुंति भइयव्वेति" वचनात्, स च यदा कवलप्रक्षेपस्तदैव नान्यदेति नियतकालभावी, तदुक्तं प्रवचनसारोद्धारे "सरिरेणोयाहारो–तयाय फासेण रोम आहारो। पक्खेवाहारो पुण–कावलिओ होइ नायव्वो ।१। इति । ओजाहारास्सर्वेऽप्यपर्याप्ता जीवाः, एतत्प्रागुक्तं, शरीरपर्याप्त्या पर्याप्ता मतान्तरेण स्वस्वयोग्यपर्याप्तिपर्याप्ता एकेन्द्रिया नैरयिकाः सुरगणाश्च सर्वे लोमाहारा एव ज्ञातव्याः, न पुनः प्रक्षेपाहाराः, तत्रैकेन्द्रियाणां प्रक्षेपाहाराभावो मुखाभावात्, नैरयिकदेवानां तु वैक्रियशरीरतया तथा स्वभावात्, शेषाणां द्वित्रिचतुरिन्द्रियाणां तिर्यक्पञ्चेन्द्रियाणां मनुष्याणां चाहारो लोमतः प्रक्षेपतश्च भवति, उभयरूपस्याप्याहारस्य तेषां सम्भवात्, तदुक्तं "रोमाहारा एगिंदिया य–नेरइयसुरगणा चेव । सेसाणं आहारो–रोमे पक्खेवओ चेव ॥ १ ॥" इति, निश्चयनयेन

स्वोत्पत्तिक्षण एव कारणेन कार्यभावाच्छरीरोत्पत्तिप्रथमक्षण एवाहारादानपरिणामलक्षणाहारपर्याप्त्युत्पत्तेस्तया तस्मिन्नेव क्षणे आहारग्रहणं, तन्मतेन निष्ठाकालक्रियाकालयोरभेदादाऽऽह्रियमाणोप्याहार आहृत इति गीयते—अत एव "चलमाणे चलिए जाव निज्जरमाणे निज्जिण्णे" इत्यादिभगवद्वचनमपि सङ्गच्छते इत्याशयेनाह तच्छक्तेरेकक्षण एवेति । ननु ययाऽऽत्मशक्त्या कारणभूतया जन्तुर्येष्वाऽऽकाशप्रदेशेष्ववगाढस्तेष्वेवावस्थितान् आहारपुद्गलानादाय तान् खलरसरूपतया परिणमयति सा आहारपर्याप्तिः, सोत्पत्तिप्रथमसमय एव निष्पद्यते इति कथमवसीयते ? उच्यते, इह भगवता आर्यश्यामेन प्रज्ञापनायामाहारपदे द्वितीयोद्देशके सूत्रमिदमपाठि—आहारपज्जत्तीए अपज्जत्तए णं भंते किं आहारए अणाहारए ? गोयमा नो आहारए अणाहारए" इति, तत आहारपर्याप्त्याऽपर्याप्तो विग्रहगतावेवोपपद्यते, नोपपातक्षेत्रसमागतोऽपि, उपपातक्षेत्रसमागतस्य प्रथमसमय एवाहारकत्वात्, तत एकसामयिकी आहारपर्याप्तिनिर्वृत्तिः, यदि पुनरुपपातक्षेत्रमागतोपि आहारपर्याप्त्याऽपर्याप्तस्स्यात्तत एवं व्याकरणसूत्रं पठेत्—"सिय आहारए सिय अणाहारए" इति, ननु भवत्वाद्यक्षणे कार्मणकाययोगेनाहारग्रहणम्, उत्पत्तिद्वितीयतृतीयादिसमयेष्वाशरीरनिष्पत्तिं केन योगेनेत्यत आह ततोऽन्विति, आद्यक्षणानन्तरमित्यर्थः । तनुसर्गपदार्थमाह शरीरपर्याप्तिनिष्पत्तिं यावदिति, यया शक्त्या रसीभूतमाहारं रसासृग्मांसमेदोऽस्थिमज्जाशुक्रलक्षणसप्तधातुरूपतया परिणमयति सा शरीरपर्याप्तिः, तस्या अन्तर्मुहूर्त्तकालभाविनीं निष्पत्तिं यावदित्यर्थः, औदारिकमिश्रात् काययोगादभ्यवहृतिरिति उत्पत्तिद्वितीयसमयमारभ्याऽऽशरीरनिष्पत्तिं कार्मणेन सहौदारिकादिमिश्रकाययोगादाहारग्रहणमित्यर्थः, ननु मिश्रत्वमुभयनिष्ठं तथाहि यथौदारिकं कार्मणेन मिश्रं तथा कार्मणमप्यौदारिकेण मिश्रं, ततः कस्मादौदारिकमिश्रमेव तदुच्यते, न कार्मणमिश्रमिति, उच्यते, उत्पत्तिमाश्रित्यौदारिकस्य प्रधानत्वात्,

कादाचित्कत्वाच्च, निष्प्रतिपक्षविवक्षितार्थप्रतिपत्त्यर्थमौदारिकेण व्यपदिश्यते औदारिकमिश्रमिति, तेन योगेनाहारग्रहणं शरीरपर्याप्त्याऽपर्याप्तानामपर्याप्तानां चौदारिकशरीरिणां मनुष्यतिरश्चामेव, जन्मवैक्रियशरीरिणां तु देवनारकाणामपर्याप्तावस्थायां कार्मणेन सह वैक्रियमिश्रकाययोगात्, कृतोत्तरवैक्रियाणां नरतिरश्चां चौदारिकेण सह वैक्रियमिश्रकाययोगात्तज्ज्ञेयमिति भावः। औदारिकं-काययोगेनेति अनेन योगेन शरीरपर्याप्तिनिष्पत्त्यनन्तरं पक्षान्तरेण स्वयोग्यपर्याप्तिनिष्पत्त्यनन्तरं विवक्षितभवायुश्चरमसमयपर्यन्तमाहारग्रहणमौदारिकशरीरिणामेव, वैक्रियशरीरिणां तु पर्याप्तानां वैक्रियकाययोगेनेति बोध्यम्, लोमाहारेति एतत्स्वरूपं प्रागेवोक्तम्, उक्तार्थे प्राचां संवादमुपदर्शयति तदिदमुक्तमित्यादिना, पारमर्षे इति सूत्रकृताङ्गद्वितीयश्रुतस्कन्धाहारपरिज्ञानामधेयतृतीयाध्ययननिर्युक्तावित्यर्थः। जोएणेति अयं चैतदर्थः—ज्योतिस्तेजः तदेव तत्र वा भवं तैजसं, तेन कार्मणेन चाहारयति, तैजसकार्मणे हि शरीरे आसंसारभाविनी, ताभ्यामेव चोत्पत्तिदेशं गता जीवाः प्रथममाहारं कुर्वन्ति, ततः परमौदारिकमिश्रेण वैक्रियमिश्रेण वा यावच्छरीरं निष्पद्यते तावदाहारयन्ति, शरीरनिष्पत्तौ चौदारिकेण वैक्रियेण वाऽऽहारयन्तीति ॥७५॥ वीर्यान्तरायकर्मक्षयोपशमाद्यायत्तसकरणाऽकरणाभिसन्धिजानभिसन्धिजच्छाद्मस्थिककैवलिकसकषाय्यकषायिसलेश्यालेश्यत्वादिरूपवैलक्षण्यं वीर्यस्याऽजानतः शङ्कामवलम्ब्य षट्सप्ततितमं पद्यमवतारयति—

नन्वेकस्मादेव वीर्यात् कथं ग्रहणादिवैचित्र्यमत आह—

वीर्यं त्वया सकरणं गदितं किलात्म-न्यालम्बनग्रहणसत्परिणामशालि ॥
तेनास्य सक्रियतया निखिलोपपत्ति-स्त्वद्द्वेषिणामवितथौ न तु बन्धमोक्षौ ॥ ७६ ॥

त्वया सकरणं वीर्यमात्मनि आलम्बनं च ग्रहणं च सतः परिणामश्च तैः शालत इत्येवं शीलं गदितम्, तेनैव सक्रियतया निखिलस्य प्रागुक्तस्योपपत्तिः, एकस्यापि वीर्यस्यासङ्ख्येययोगस्पर्द्धकनिष्पन्नस्य पृथगनन्तपर्यायावगुण्ठितस्य ग्रहणादिकार्यभेदेन नामभेदेऽपि तत्त्वतोऽभेदात्, कार्याभ्यासादिवशेन क्वचित् क्वचित्प्रदेशे तीव्रमन्दादिभावस्य चादुष्टत्वादिति भावः। तदुक्तं श्रीशिवशर्मसूरिभिः—"परिणामालम्बणगहण–साहणं तेण लद्धणामतिगं । कज्जब्भासण्णुण्ण–प्पवेसविसमीकयपएसं"ति ॥ त्वद्द्वेषिणां तु नैयायिकानां भगवन् बन्धमोक्षौ नावितथौ, अभिनवकर्मादानरूपस्य बन्धस्य पूर्वदेशविभागपूर्वकोत्तरसिद्धिक्षेत्रप्राप्तिरूपस्य च मोक्षस्य निष्क्रियात्मन्यसम्भवात्, उपचरितौ च बन्धमोक्षौ न पुरुषार्थाविति ।

नन्विति, वीर्यं लब्धिवीर्यकरणवीर्यभेदेन द्विविधं, तत्र वीर्यान्तरायकर्मक्षयक्षयोपशमतो या वीर्यस्य लब्धिः, सैव तद्धेतुत्वाद् वीर्यं लब्धिवीर्यं, लब्धिवीर्यकार्यभूता क्रिया करणं तद्रूपं करणवीर्यम्, तथा च लब्धिवीर्यनिषेधार्थमऽयोगिकेवलिनोऽकरणवीर्यत्वात्तन्निषेधार्थं वा विशेषणमाह सकरणमिति,असतोऽवस्तुत्वात्तत्परिणामस्यैवासम्भव इत्यावेदयितुमाह सत इति, ग्रहणादिकार्यभेदेनेति अत्रादिपदात् परिणामालम्बने ग्राह्ये, नामभेदेऽपीति ग्रहणादिसंज्ञाभेदेन भिन्नसंज्ञात्वेऽपीत्यर्थः, अयम्भावः, वीर्यान्तरायस्य देशक्षयेण छद्मस्थानां सर्वक्षयेण केवलिनां वीर्यलब्धिरुपजायते, तस्याश्च वीर्यलब्धेस्सकाशादुपजायमानं सलेश्यवीर्यं यथासम्भवं सूक्ष्मबादरपरिस्पन्दरूपक्रियासहिततया करणसंज्ञं, एतदेव च योगसंज्ञमपि, योगवीर्यस्थामोत्साहपराक्रमचेष्टादीनामेकार्थत्वात्, आत्मनस्सक्रियतया तेनैव च योगसंज्ञकवीर्यविशेषेण ग्रहणादिवैचित्र्योपपत्तिः, तथाहि, तेन वीर्यविशेषेण योगसंज्ञकेनौ-

दारिकादिशरीरप्रायोग्यान् पुद्गलान् प्रथमतो गृह्णाति, गृहीत्वा चौदारिकादिरूपतया परिणमयति, तथा प्राणापानभाषामनोयोग्यान् पुद्गलान् प्रथमतो गृह्णाति, गृहीत्वा च प्राणापानादिरूपतया परिणमयति, परिणमय्य च तन्निसर्गहेतुसामर्थ्यविशेषसिद्धये तानेव पुद्गलानवलम्बते, यथा मन्दशक्तिः कश्चिन्नगरे परिभ्रमणाय यष्टिमवलम्बते, ततस्तदवलम्बनतो जातसामर्थ्यविशेषस्सन् तान् प्राणापानादिपुद्गलान् विसृजतीति परिणामालम्बनग्रहणसाधनं वीर्यं सिद्धम्, तेन च वीर्येण योगसंज्ञकेन मनोवाक्कायावष्टम्भतो जायमानेन लब्धं नामत्रिकं, तद्यथा मनोयोगो वाग्योगः काययोग इति, तत्र मनसा करणभूतेन योगो मनोयोगः, वाचा योगो वाग्योगः, कायेन योगो काययोग इति। स्यादेतत्, सर्वेषु जीवप्रदेशेषु तुल्यक्षायोपशमिक्यादिलब्धिभावेपि किमिति क्वचित्प्रभूतं क्वचित् स्तोकं क्वचित् स्तोकतरमित्येवं वैषम्येण वीर्यमुपलभ्यते इति चेत्, उच्यते, पद्मनालतन्तुवदात्मप्रदेशानां मिथो विलक्षणसम्बन्धबलादेव यदर्थं चेष्टते तत्कार्यनिकटीभवनेन तत्समीपवर्त्यात्मप्रदेशेषु प्रभूतं वीर्यं दूरदूरतरदूरतमवर्त्यात्मप्रदेशेषु च स्तोकस्तोकतरस्तोकतमवीर्यं भवति, उक्तसम्बन्धानभ्युपगमे तु विवक्षितात्मप्रदेशेष्वेव परिस्पन्दात्मकं वीर्यं स्यात्, न तदन्येषु, तस्मात्कार्यद्रव्याभ्यासवशतो जीवप्रदेशानां परस्परं सम्बन्धविशेषतश्च वीर्यं जीवप्रदेशेषु केषुचित् प्रभूतमन्येषु स्तोकमपरेषु तु स्तोकतरमित्येवं वैषम्येणोपजायमानं न विरुध्यत इत्याशयेनाह कार्याभ्यासादिवशेनेति, उक्तमर्थं प्राचां वचनेन प्रमाणयति तदुक्तमिति कर्मप्रकृताविति शेषः। परिणामालम्बणेत्यादिगाथा उक्तार्था,

एतेनात्मा निष्क्रियो नित्यत्वे सत्यस्मदादिप्रत्यक्षत्वादित्यादिकमपास्तम्, अप्रयोजकत्वात्, अन्यथा ततो शाश्वत्वस्यापि सिद्ध्यापत्तेः, आभोगवीर्यात्मकक्रियावत्त्वस्य प्रत्यक्षसिद्धत्वेन कालात्ययापदिष्टत्वात्, आत्मा

सक्रियः क्रियाजनकसंयोगाजन्यसंयोगाश्रयत्वाच्छरीरवदित्यादिना प्रतिरोधाच्चेति दिग् ॥७६॥

एतेन—निरुपचरितबन्धमोक्षव्यवस्थानुपपत्तिदोषेण, नित्यत्वे सत्यसदादिप्रत्यक्षत्वादिति हेतौ घटादौ व्यभिचारवारणाय सत्यन्तम्, योगिप्रत्यक्षमादाय परमाणौ व्यभिचारवारणाय अस्मदादीति, प्रत्यक्षमपि लौकिकं ग्राह्यं, नातोऽलौकिकप्रत्यक्षमादाय परमाणौ व्यभिचारस्तदवस्थः, व्यभिचारशङ्कानिवर्त्तकतर्काभावेऽपि साध्यसिद्ध्यभ्युपगमे आत्मा बाह्यः नित्यत्वे सत्यसदादिप्रत्यक्षत्वादित्यनेनाऽपि साध्यसिद्धिस्स्यादित्याह अन्यथेति। बाधदोषमुक्त्वा सत्प्रतिपक्षदोषमप्याह आत्मेति, संयोगाऽजन्यसंयोगो घटगतक्रियोत्पन्नघटाकाशसंयोगस्तदाश्रयत्वस्य निष्क्रियाकाशे सत्त्वात् व्यभिचारवारणाय क्रियाजनकसंयोगाजन्यसंयोगाश्रयत्वादिति हेतुघटके संयोगाजन्यसंयोगे क्रियाजनकेति विशेषणम्, घटाऽऽकाशसंयोगस्तु न क्रियाजनक इति तद्व्युदासः, शरीरात्मसंयोगस्तु शरीरक्रियाजनकः, संयोगाऽजन्यश्च, तदाश्रयत्वस्यात्मनि सत्त्वान्न स्वरूपासिद्धिः। संयोगजन्यसंयोगे क्रियाजनकत्वस्याभ्युपगमे तु तादृशसंयोगाश्रये व्यभिचारवारणाय संयोगाजन्येति विशेषणम्, द्रव्यारम्भकत्वस्येव तस्यानभ्युपगमे तु स्वरूपोपरञ्जकमेव तदिति चिन्त्यम् ७६।

सप्तसप्ततितमं श्लोकमवतारयति—

अथ सर्वैकान्तवादिसाधारणदोषप्रदर्शनपूर्वं स्याद्वादशुद्धात्मोपदेशगुणेन भगवन्तमभिष्टौति—

एकान्तनित्यसमये च तथेतरत्र—स्वेच्छावशेन बहवो निपतन्ति दोषाः ॥
तस्माद् यथेश भजनोर्ज्झितचित्पवित्र—मात्मानमात्थ न तथा वितथावकाशः ॥ ७७ ॥

एकान्तनित्यसमयबन्धेन प्रवृत्तायां कथायां, तथेतरत्रैकान्तानित्यसमयबन्धेन प्रवृत्तायां तस्यां, स्वेच्छाव-

शेन बहवो दोषा निपतन्ति, दोषाणामिच्छाऽभावेऽपि लुप्तेवकारस्य गम्यमानत्वात् स्वेच्छावशेनैवेति हेतूत्प्रेक्षेयम्। तथा हि—यद्यात्मा एकान्तनित्यस्तदा तस्य छेदभेदक्लेदाद्यभावाद्धिंसादेरभावस्तदभावाच्चाहिंसादेरपि तदभावात् पुण्यपापयोस्तदभावाद्बन्धमोक्षयोर्लोकद्वयस्यापि चाभाव इति बद्धमूलो नास्तिक्यतरुः स्यात्, न च मनःसंयोगविशेषध्वंसो हिंसा, वायुसंयोगविशेषध्वंसवत्तस्यानुद्देश्यत्वात्,

अयेति, एकान्तनित्येतिमूलस्य एकान्तनित्यसमये तथेतरत्र च स्वेच्छावशेन बहवो दोषा निपतन्ति,तस्माद् हे ईश त्वमितिशेषः, यथा भजनोर्जितचित्पवित्रमात्मानमात्थ तथा न वितथावकाश इत्यन्वयः,हेतूत्प्रेक्षेयमिति अहेतोर्हेतुत्वसम्भावनं हेतूत्प्रेक्षा, इवपदस्याप्युत्प्रेक्षाव्यञ्जकत्वं सहृदयानामभिमतम् ,तदुक्तं"मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः। उत्प्रेक्षा व्यज्यते शब्दैरिव शब्दोऽपि तादृशः" ॥१॥ इति, तस्य मनस्संयोगविशेषध्वंसस्य, अनुद्देश्यत्वात् हिंसकीयेच्छाऽविषयत्वात्, मनस्संयोगविशेषध्वंसस्यैव हिंसात्वाभ्युपगमे कायध्वंसस्य हिंसारूपत्वाऽभावेनैनं पुरुषं मारयामीतीच्छाया अस्य पुरुषस्य कायं व्यापादयामीत्यर्थकत्वेन तदिच्छाजन्यप्रवृत्तिकारिणोऽहिंसकत्वं स्यादित्याह—

कायध्वंसोद्देशेन प्रवृत्तौ हिंसाऽभावप्रसङ्गात्, न च मरणोद्देश्यकमरणानुकूलव्यापारस्य हिंसात्वोक्तावपि निस्तारः, खड्गाऽभिघातादेरुक्तमनःसंयोगध्वंसजनकत्वे मानाभावात्, अन्यादृशस्य चानुकूलत्वस्यातिप्रसञ्जकत्वात्, प्रमादकृतहिंसायामव्याप्तेः, जीवमात्रनिष्ठहिंसादयाव्यवहारस्य तत्पर्यायध्वंसानुकूलप्रतिकूलप्रमादाप्रमादयोगवत्त्वं विना कथमप्युपपादयितुमशक्यत्वाच्च ।

कायध्वंसोद्देशेनेति, कायध्वंसोद्देशेन यत्र प्रवृत्तिस्तत्र मनस्संयोगविशेषध्वंसरूपमरणोद्देश्यकत्वाऽभावेनोक्तलक्षणस्याव्याप्तिरूपदोषसत्त्वेऽपि दोषान्तरमाह—खड्गाभिघातादेरिति, यद्वा कायध्वंसोद्देशेन यत्र प्रवृत्तिस्तत्रापि मरणोद्देश्यकमरणानुकूलव्यापारोऽस्त्येवेति तादृशव्यापारस्य हिंसात्वेनोक्तौ नोक्तदोष इत्याशङ्क्य प्रतिक्षिपति न चेति, प्रतिक्षेपे हेतुमाह खड्गेति, अत्र साक्षान्मरणानुकूलव्यापाराभावादव्याप्तिदोषो बोध्यः। मरणानुकूलत्वस्य साक्षात्परंपरासाधारणस्य विवक्षायामुक्तदोषनिवृत्तावपि मनस्संयोगविशेषध्वंसरूपमरणस्य परंपरयाऽनुकूले हिंसानात्मके खड्गादिकर्तृव्यापारेऽतिव्याप्तिरित्याह अन्यादृशस्येति, अव्याप्तेरिति मरणोद्देश्यकत्वाभावादिति भावः, उद्देश्यतासम्बन्धेन या हिंसा दया च हिंस्यदयनीयजीवनिष्ठा सैव स्वानुकूलव्यापारवत्त्वसम्बन्धेन यथाक्रमं हिंसके सदये च वर्त्तत इति तत्राऽयं हिंसकोऽयं सदय इति व्यवहारः आत्मनो नित्यत्वेन विनाशाऽयोगेऽपि मनुष्यत्वप्राणसंयोगादितत्पर्यायस्याऽनित्यत्वेन तद्ध्वंसाऽनुकूलप्रमादयोगतत्प्रतिकूलाऽप्रमादयोगाभ्यामेवोपपाद्यः, अत एव प्रमादयोगेन प्राणव्यपरोपणं हिंसेत्यपि सङ्गच्छते, तथा च प्रमादयोगाऽप्रमादयोगरूपविरुद्धधर्माध्यासादात्मनोऽनित्यत्वं स्यादित्याह जीवमात्रनिष्ठेति, एकान्तनित्यवाद इवैकान्तानित्यवादेऽपि हिंस्यहिंसकभावादिर्न घटत इत्युपपादनायाह—

एकान्तानित्यवादेऽपि स्वरसत एव सर्वेषां प्रतिक्षणध्वंसशीलत्वे कस्य केन हिंसा। न च विसभागक्षणोत्पत्तिरेव हिंसा, तन्निमित्तत्वस्य प्राक्तनव्याधक्षणस्येव बुद्धक्षणस्याप्यविशेषाद्व्याधवद्बुद्धस्यापि मृगघातकत्वापत्तेः। न च विसभागक्षणजननानुकूलाध्यवसायवत्त्वमेव हिंसा, यो नरो मृत्वा प्रेत्य नर एव भविता तद्धिंसायामव्याप्तेः। न च विसभागक्षणजनक(न)त्वावच्छिन्नविषयताकाध्यवसायवत्त्वं सा, अस्ति च नरो म्रियतामि-

तीच्छायामपि विसभागक्षणोत्पत्तिविषयताशालित्वमेवेति वाच्यम्, रूपपरावर्त्तादिक्रियाध्यवसायेऽतिव्याप्तेः। 

एकान्तानित्यवादेपीति, अविशेषादिति सुगतस्याऽविच्छिन्नाऽक्लिष्टज्ञानसन्तानक्षणरूपत्वेन सन्तन्यमानज्ञानक्षणस्याप्यव्यवहितपूर्ववृत्तित्वेन विसभागक्षणोत्पत्तिनिमित्तत्वस्याऽविशेषादित्यर्थः। बुद्धस्य विसभागक्षणजननानुकूलाऽध्यवसायाऽभावेनातिव्याप्तिर्मा भवतु तथाप्यव्याप्तिरेवेत्याह यो नर इति, पूर्वापरनरभवक्षणस्य नरत्वेन सौसादृश्यादिति भावः। उक्तहिंसालक्षणस्य रूपपरावृत्तिर्भवत्वितीच्छायामतिव्याप्तिरित्याह रूपेति,

न च तत्सन्तानत्वावच्छिन्नप्रतियोगिताकविसभागताशालिसन्तानान्तःपातिक्षणजननत्वावच्छिन्नविषयताशाल्यध्यवसायवत्त्वं सा, इतो नरत्वं विहाय देवो भूयासमित्याद्याकारे दानदयाद्यध्यवसायेऽतिप्रसङ्गात्। न चाध्यवसाये क्लिष्टत्वविशेषणान्नानुपपत्तिरिति वाच्यम्, हिंसाविषयत्वातिरिक्तस्य क्लिष्टत्वस्य दुर्वचत्वेनात्माश्रयात्, सन्तानादेः सांवृतत्वेन पारमार्थिकस्याध्यवसायस्यैव चासिद्धेः, आहार्यस्य च हिंसाहिंसाद्यध्यवसायस्य व्यवहारनिमित्तत्वेन कल्पितस्य सर्वलोकविगर्हितत्वेनोपहासपात्रतायाः पारमर्षे विस्तरेण प्रतिपादितत्वात्, प्रमादकृतहिंसाद्यव्याप्तेश्च न किञ्चिदेतदिति दिग्। एवं व्यापकत्वाव्यापकत्वमूर्त्तत्वामूर्त्तत्वाद्येकान्तवाददोषा अपि दर्शनभेदेन निरूपणीयाः। हे ईश तस्मादेकान्तवादे सर्वतोऽपि दूषणव्याप्तेः भजनया स्याद्वादेनोर्जितं चित्स्वरूपं यस्य एतादृशमात्मानं यथा त्वमात्थ न तथा वितथस्यानृतलेशस्याप्यवकाशः ॥७७॥

न च तत्संतानेति, तथा च रूपपरावृत्तिर्भवत्वितीच्छायां रूपान्तरोत्पत्त्या पूर्वसन्तानव्यक्तेरुत्तरसन्तानव्यक्तेर्भेदेऽपि तदु-

भयव्यक्तौ तत्सन्तानत्वमनुगतमेवेति तत्र न तत्संतानत्वावच्छिन्नप्रतियोगिताकभेदवत्संतानान्तःपातिव्यक्तिरूपत्वमिति विजातीयक्षणोत्पत्तिविषयताकाध्यवसायाऽभावान्नातिव्याप्तिरित्यर्थः। क्लिष्टाध्यवसाय एव क्लिष्टकर्मक्षणहेतुत्वाद्धिंसा अत एव मृगमन्यापादयन्नपि मृगं हन्मीति संक्लेशपरिणतः पापेन बध्यत इत्युक्तलक्षणघटकाध्यवसाये क्लिष्टत्वविशेषणान्नोक्तातिव्याप्तिरित्याशङ्क्य निषेधति न चाध्यवसाय इति, निषेधे हेतुमाह हिंसेति। प्रमादकृतेति, यत्राहं न हन्मीत्यध्यवसायवतः पुरुषस्य विवेकिनोऽनुपयोगवशाद् या हिंसा सञ्जाता तत्र तत्पुरुषस्य क्लिष्टहिंसाद्यध्यवसायो नेति तद्घटितं लक्षणं तत्राव्याप्तेरसम्भवीति भावः। उत्तरार्द्धं विवृणोति हे ईशेति ॥७७॥ अष्टसप्ततितमं श्लोकमवतारयति—

ननु शरीरादिभिन्ननित्यशुद्धनिर्लेपात्मज्ञानमेव मोक्षोपयोगि स्याद्वादविकल्पितत्वं तु तत्र क्वोपयोगीत्याशङ्कायामाह—

नन्विति, तत्र आत्मनि,

> एतादृगात्ममननं विनिहन्ति मिथ्या—ज्ञानं सवासनमतो न तदुत्थबन्धः ॥
> कर्मान्तरक्षयकरं तु परं चरित्रं, निर्बन्धमात्थ जिन साधु निरुद्धयोगम् ॥ ७८ ॥

एतादृशो भजनोर्जितचित्पवित्रस्यात्मनो मननं सवासनं मिथ्याज्ञानं निहन्ति, अतः स्याद्वादविचारजन्यात्मज्ञानाहितवासनया सविपरीतज्ञानवासनामात्रस्योच्छेदात् तदुत्थो बन्धो न भवति, उपलक्षणात् ज्ञानजन्यनिर्जरासन्तानान्तःपाती कश्चित् कर्मक्षयोऽपि भवति, न चैतावतैव मोक्षावाप्तिः किन्तु तदर्थिना चारि-

त्रमपि परिशीलनीयम्, अत एव त्वं कर्मान्तरक्षयकरं मिथ्यादर्शनजनितानां ज्ञानदर्शनानाशितानां कर्मणां क्षयहेतुं, तु परं केवलं चरित्रमात्थ, हे जिन निर्बन्धं तु निरुद्धयोगमात्थ, ततो नाणेण जाणई भावं इत्याद्यागमप्रामाण्यात् ज्ञानदर्शनचरित्रतपांसि सङ्ग्रहतस्तु ज्ञानक्रिये मोक्षमार्गं इति स्थितम् न तु केवलं ज्ञानमेव, अज्ञानदशायामयोधिकलुषकृतकर्मणां ज्ञानोत्पत्तावप्युत्कृष्टसम्वरद्वारनिष्पत्तावेव क्षयस्य सिद्धान्तसिद्धत्वात्।

एतादृगात्ममननमित्यादिश्लोकः, अत्र विनिहन्तीति क्रियापदं, तस्य कर्तृपदसापेक्षत्वात्तदाह एतादृगात्ममननमिति, कर्माकाङ्क्षायामाह सवासनं मिथ्याज्ञानमिति, वासनासहितं मिथ्याज्ञानमित्यर्थः, भ्रान्तज्ञानजन्यवासनामिति भावः, स्याद्वादविचारजन्यात्ममननप्रयोज्यसभ्रान्तज्ञानवासनामात्रोच्छेदरूपक्रियाफलमाह अतो न तदुत्थबन्ध इति, मिथ्याज्ञानजन्यवासनारूपकारणाऽभावे न तज्जन्यकर्मबन्ध इत्यर्थः, न च स्याद्वादभावनासहकृतात्ममननरूपज्ञानमेव मोक्षकारणं, किन्तु चारित्रमपि, अत एव त्वं कर्मान्तरक्षयकरं मिथ्यादर्शनजनितानां ज्ञानदर्शनानाशितानां कर्मणां क्षयहेतुं तु परं केवलं चरित्रमात्थ चारित्रं कथितवान्, चारित्रमपि योगलेश्यासहकृतं सबन्धं तदसहकृतं निर्बन्धमिति द्विविधं, तत्राद्यं नाऽव्यवधानेन मोक्षकारणं किन्तु द्वितीयमेव, अत एवाह हे जिन निर्बन्धं तु निरुद्धयोगमात्थेति, निरुद्धयोगं निरुद्धः प्रतिरुद्धो योगो मनोवचःकाययोगो यस्मिन् तन्निरुद्धयोगम्, अत एव निर्बन्धं, निर्गतो बन्धो यस्मिन् तन्निर्बन्धम्, अवशिष्टयोगरूपकारणोच्छेदे योगजन्यकर्मबन्धस्याप्युच्छेद इति सर्वथा बन्धोच्छेदमत एव सर्वसंवररूपं सर्वोत्कृष्टं चारित्रं साधु सम्यग्रीत्या त्वं कथितवानिति सङ्क्षेपार्थः। एतादृगात्मेति मूलं विवृणोति ग्रन्थकारः—एतादृश इति,सविपरीतज्ञानवासनामात्रस्य,विपरीतज्ञानस्य मिथ्याज्ञानस्य तज्जन्य-

स च वासनामात्रस्याशेषमिथ्यासंस्कारस्येत्यर्थः, तदुत्थः सवासनमिथ्याज्ञानजन्यः, "जावचक्खुपम्हनिवायमपि वेमाया सुहुमा ईरियावहिया किरिया कज्जइ, सा पढमसमयबद्धपुट्ठा बितियसमयवेतिया ततियसमयनिज्जरिया सा बद्धा पुट्ठा उदीरिया वेदिया निज्जिण्णा सेयकाले अकम्मं चा वि भवतीति" वचनात्, उपशान्तमोहक्षीणमोहसयोगिकेवलिलक्षणगुणस्थानकत्रयवर्त्तिनो वीतरागस्यापि हि यावत्कालं चक्षुषो निमेषोन्मेषमात्रक्रियाप्यस्ति तावत्कालमपि केवलयोगप्रत्ययामैर्यापथिकीं क्रियां स करोति, सक्रियत्वात्सावेद्यं कर्म बध्नातीति यावत्, यद्वा बादरयोगत्रयनिरोधेऽपि सूक्ष्मयोगो यावत्कालं वर्त्तते तावत्कालं सातवेद्यं कर्म बध्नाति, तच्च प्रथमसमये बद्धस्पृष्टं, बद्धं कर्मताऽऽपादनात्, स्पृष्टं जीवप्रदेशैस्स्पर्शनात्, द्वितीयसमये वेदितम्, उदयमागतं, तृतीयसमये निर्जीर्णं जीवप्रदेशेभ्यः परिशाटितं, चतुर्थादिसमये त्वऽकर्मरूपं भवति, तदुक्तं भगवतीटीकायाम्, इह च यद्यपि तृतीयेऽपि समये कर्माकर्म भवति तथाऽपि तत्क्षण एवातीतभावकर्मत्वेन द्रव्यकर्मत्वात् तृतीये निर्जीर्णं कर्मेति व्यपदिश्यते, चतुर्थादिसमयेषु त्वकर्मेति, तथा च वीतरागोपि योगसत्त्वे सक्रियत्वात्कर्म बध्नाति, सर्वथा योगाऽभावे त्वऽक्रियत्वान्न कर्म बध्नाति, अन्यथा सिद्धानामपि कर्मबन्धस्स्यादित्येवं योगान्तिमावस्थान्तं योगस्य कर्मबन्धं प्रत्यन्वयव्यतिरेकशालित्वेन कारणत्वात् स्थितिक्षयात्पूर्वकर्मविगमेपि प्रतिसमयं योगनिमित्तककर्मादाने सति कर्मसन्ततेरविच्छेदान्न केषांचिदपि मोक्षस्स्यादिति योगनिमित्तकद्विसमयस्थितिककर्मबन्धव्यवच्छेदशालीनं निश्चयतः सर्वथायोगनिरोधरूपत्वेन सर्वाश्रवत्यागलक्षणसर्वसंवररूपं चारित्रं लेश्यातीतात्यन्तनिष्प्रकम्पपरमशुक्लध्यानरूपम्, अत एवान्तर्मुहूर्त्तकालेन ङञणनमह्रस्वपञ्चाक्षरोच्चारणकालप्रमितेनासङ्ख्येयसमयात्मकेन सर्वनिर्जराकरणेन सर्वकर्मक्षयकरत्वेन मोक्षं प्रत्यव्यवहितकारणं हे भगवन् त्वं कथितवान् इत्याह हे जिन निर्बन्धं तु निरुद्धयोगमात्थेति, नाणेण जाणेइ भावे

इत्याद्यागमप्रामाण्यादिति, अत्रादिपदेन "सम्मत्तेण य सद्दहे। चरित्तेण (निगिण्हाइ) न गिण्हइ, तवेण परिसुज्झइ" इति चरणत्रयं ग्राह्यम्। निगिण्हाइत्ति निराश्रवो भवतीत्यर्थः, न गिण्हइत्ति न गृह्णाति नादत्ते, कर्मेति गम्यते, तवेण परिसुज्झइत्ति तपसा परिशुद्ध्यति, पुरोपचितकर्मक्षपणतः शुद्धो भवतीत्यर्थः। सङ्ग्रहतस्तु ज्ञानक्रिये मोक्षमार्ग इति–मतिज्ञानस्यैव रुचिरूपो योऽपायांशस्तद्रूपत्वेन सम्यग्दर्शनस्य ज्ञानात्मकतया चारित्रतपसोश्च क्रियारूपतया क्रियात्वेन रूपेणैकत्वात् सङ्ग्रहनयेन ज्ञानक्रिये एव मोक्षमार्ग इति भावः ॥७८॥ ननु केवलज्ञानं न साक्षाद्मोक्षाङ्गं, किन्तु भोगद्वारैवेति न्यायमतप्रतिक्षेपकमेकोनाशीतितमं पद्यमवतारयति—

अथ क्षायोपशमिके ज्ञाने यथा तथाऽस्तु,केवलज्ञानं तु फलप्रकारणभोगद्वारैव कर्मक्षयजनकं स्यात्, तत्राह–

ज्ञानं न केवलमशेषमुदीर्य भोगं, कर्मक्षयक्षममबोद्धृदशाप्रसङ्गात् ॥
वैजात्यमेव किल नाशकनाश्यतादौ, तन्त्रं नयान्तरवशादनुपक्षयश्च ॥ ७९ ॥

अथेति, ज्ञानं नेति श्लोकः, अस्य च केवलं ज्ञानम्,अशेषं भोगमुदीर्य अशेषभोगद्वारा, न कर्मक्षयक्षमं न कर्मक्षयाऽसाधारणकारणम्, तत्र हेतुमाह अबोद्धृदशाप्रसङ्गादिति, अदृष्टनाशं प्रति ज्ञानत्वेन क्रियात्वेन वा कारणत्वे वैकल्पिककारणत्वं स्यात्, तथा चैककारणाभावेऽप्यन्यसात्कार्योत्पत्तेर्व्यतिरेकव्यभिचारस्स्यात्, वैजात्यमदृष्टे स्वीकृत्योक्तदोषोद्धारेऽपि ज्ञानत्वरूपकारणतावच्छेदकाक्रान्ताद् ज्ञानान्तरादपि विजातीयादृष्टनाशस्स्यात्, एवं क्रियात्वरूपकारणतावच्छेदकाक्रान्तात् क्रियान्तरादपि विजातीयादृष्टनाशस्स्यादित्युक्तदोषनिवृत्त्यर्थमाह वैजात्यमेव किल नाशकनाश्यतादौ तन्त्रमिति नाशकनाश्यभावादौ

वैजात्यमेव प्रयोजकं, नाशजनके ज्ञाने क्रियायां च नाशकतावच्छेदकं वैजात्यमेव, नाशप्रतियोगिन्यदृष्टेऽपि च नाश्यतावच्छेदकं वैजात्यमेव प्रवेश्यं, नात उक्तदोषः, विजातीयादृष्टनाशं प्रति विजातीयज्ञानत्वेन विजातीयादृष्टनाशं प्रति च विजातीयक्रियात्वेन कारणत्वाभ्युपगमात्, तत्त्वज्ञानव्यापारत्वाच्चारित्रमुपक्षीणमित्याशङ्कोद्धारमाह नयान्तरवशादनुपक्षयश्चेति, व्यापारस्य कारणताग्राहकनयवशात्तत्त्वज्ञानद्वारीभूतस्यापि चारित्रस्य कारणतासद्भावात्तन्नोपक्षीणमिति सङ्क्षेपार्थः। ज्ञानं न केवलमिति मूलश्लोकं विवृणोति ग्रन्थकारः—

केवलज्ञानमशेषं भोगमुदीर्य कायव्यूहमहिम्नोपस्थाप्य कर्मक्षयक्षममिति न वाच्यम्, कस्मात्, अयोद्भूदशाप्रसङ्गात्, अयोद्भूतापत्तेः, एवं हि शूकरादिभोग्यं कर्म क्षपयितुं शूकरादिशरीरमिवैकेन्द्रियादिशरीरभोग्यं ज्ञानावरणं क्षपयितुमेकेन्द्रियादिशरीरमपि परस्य तत्त्वज्ञानी परिगृह्णीयात्, तथा च तद्वदेवायोद्भूत्वप्रसङ्गः। अज्ञानं न भोग्यं सुखदुःखानन्यतरत्वादिति न प्रसङ्ग इति चेत्, न, 'जात्यायुर्भोगास्तद्विपाकः' इति सूत्रयता योगाचार्येण कर्मफलमात्रस्य भोग्यत्वातिदेशात्। तत्त्वज्ञानप्रतिबन्धककर्मनाशादेव कैवल्योत्पत्तेर्नायं प्रसङ्ग इति चेत्, स एव कुतो जातः, विविदिषाशमदमादिसहकृतयत्याश्रमोचिताचारादिति चेत्, यथा पूर्वं शरीरापेक्षभोगं विनैव ततोऽदृष्टविशेषनाशस्तथा तत्त्वज्ञानोत्पत्त्यनन्तरमपि तत एव स किमिति नाद्रियते किं कायव्यूहादिकल्पनाक्लेशेन।

केवलज्ञानमशेषमिति, एकेन्द्रियादिशरीरोपभोग्यकर्मणस्तत्त्वज्ञानप्रतिबन्धकत्वात्तन्नाश एव तदुत्पत्तौ तद्वतः तादृशकर्मा-

भावाभैकेन्द्रियादिशरीरपरिग्रहापत्त्याऽनोद्धृत्वप्रसङ्ग इत्याशङ्कते तत्त्वज्ञानेति, स एव तत्त्वज्ञानप्रतिबन्धककर्मनाश एव। पूर्वं—केवलज्ञानोत्पत्तेः पूर्वं, ततः विविदिषाशमेत्यादिहेतोः, तत एव तत्त्वज्ञानादेव, अत्रैवकारेण तत्त्वज्ञानस्य भोगं द्वारीकृत्य कारणत्वं प्रतिक्षिप्तम्, स अदृष्टविशेषनाशः, नन्वदृष्टनाशत्वावच्छिन्नं प्रति ज्ञानत्वेन यदि कारणत्वं तदा क्रियाजन्येऽदृष्टनाशे व्यतिरेकव्यभिचारः, यदि च क्रियात्वेन, तदा ज्ञानजन्ये तस्मिन् व्यभिचारः, विजातीयादृष्टनाशत्वावच्छिन्नं प्रति ज्ञानत्वावच्छिन्नस्य विजातीयादृष्टनाशत्वावच्छिन्नं प्रति क्रियात्वावच्छिन्नस्य च कारणत्वमित्यभ्युपगमेऽपि यददृष्टनाशकं तत्त्वज्ञानं तस्यैव नाशकं ज्ञानान्तरमपि स्यात्, एवं क्रियान्तरनाश्यस्यादृष्टस्य नाशकं क्रियान्तरं स्यात्, कारणतावच्छेदकस्य ज्ञानत्वस्य ज्ञानान्तरे क्रियान्तरे च क्रियात्वस्य सत्त्वादिति चेत्, न, विजातीयादृष्टनाशत्वावच्छिन्नं प्रति विजातीयज्ञानत्वेन विजातीयक्रियात्वेन च कारणत्वाभ्युपगमेनोक्तदोषाभावादित्याह—

नाश्यनाशकतावच्छेदकवैजात्यकल्पनं त्वदृष्टे ज्ञानक्रियादौ चावश्यकमेवेति न व्यभिचारादिदोषः। यथा च विविदिषादिनाऽदृष्टविशेषक्षयो न भोगद्वारा, तथा तत्त्वज्ञानेनापि। भोगेन त्वितरे क्षपयित्वेति वाक्यशेषे च तृतीया न भोगस्य कारणत्वं व्यवस्थापयति, किन्तु निर्जरानान्तरीयकप्रदेशानुभवस्य नियतपूर्वसत्त्वमात्रमिति स्पष्टीभविष्यत्यनुपदमेव। न च तत्त्वज्ञानादनन्तरमेव भवोपग्राहिकर्मक्षयः, चिरोपदेशश्रुतिविरोधात्, किन्तु समाधिविशेषाख्याच्चारित्रपरिपाकात्, तथापि तत्त्वज्ञानद्वारत्वाच्चारित्रमुपक्षीणमिति चेत्, न, व्यापारताग्राहकनयान्तरवशादेव तस्यानुपक्षयात्, तेण दासेण मे इत्यादिनयात् तदुपक्षयेऽपि न क्षतिः, एवं हि व्यवहितं न कारणमिति शुद्धर्जुसूत्रनये ज्ञानस्यापि चारित्रेणोपक्षयस्य सुवचत्वात्। उभयानुग्रहस्तु नैगमयुक्तिप-

र्यालोचनया तदुपजीविस्याद्वादेन चेत्यादि विवेचितमध्यात्ममतपरीक्षायामस्माभिरिति तत एवावधार्यम् ॥७९॥

नाश्यनाशकेति, भोगेन त्वितरे क्षपयित्वेति वाक्यशेषे चेति तस्य तावदेव चिरं यावन्न विमोक्ष्ये—अथ संपत्स्ये इतिश्रुताविति शेषः, एतदर्थः प्रागेव कृतः, धनेन कुलं विद्यया वास इत्यादाविव भोगेनेत्यत्रापि तृतीयाया हेत्वर्थत्वेन भोगस्य कारणत्वं सिद्धमेवेति तं विना तत्त्वज्ञानिनः कथं कर्मक्षय इत्यत आह तृतीया न भोगस्येति, भोगस्य विपाकानुभवरूपस्य न कारणत्वं साधयति तृतीया, किन्तु प्रदेशानुभवरूपस्यैवेति तस्य यत्र कर्मक्षयस्तत्रावश्यम्भावेन पूर्वं सत्त्वमिति नियम इति भावः, चिरोपदेशश्रुतीति तस्य तावदेवेत्यादिश्रुतीत्यर्थः, व्यापारताग्राहकेति व्यापारस्य तज्जन्यत्वे सति तज्जन्यजनकत्वरूपत्वेन कारणत्वमृते व्यापारत्वस्यैवानिर्वाहादित्यर्थः । योऽयं कार्यकृत्सोऽहमेवेति प्रतीत्या दासस्य कार्यकारित्वेऽपि न तस्य प्राधान्यं, किन्तु तद्द्वारा कारिणश्श्रेष्ठिन एवेतिवत् प्रकृतेऽपि व्यापाररूपस्य चारित्रस्याप्राधान्यं भवतु न च तथापि कापि क्षतिः, तस्य मोक्षाङ्गतयाऽभ्युपगमादेवेत्याह तेण दासेणेति । व्यापारो हि न मुख्यं कारणं किन्तु व्यापार्यैवेति नयाश्रयणे व्यवहितं न कारणमिति नयाश्रयणमपि स्यात्, तथा च सर्वसंवररूपचारित्रेण तत्त्वज्ञानमपि व्यवहितमिति तदपि कारणं न स्यादिति प्रतिबन्द्योत्तरयति एवं हीति, उभयानुग्रहस्तु ज्ञानचारित्रयोरनुग्रहस्तु, ॥७९॥ अशीतितमं श्लोकमवतारयति—

एवं तत्त्वज्ञानक्रिययोस्तुल्यवदुपयोगेऽपि कर्मक्षये भोगानन्तर्यव्यवस्थां यथा सिद्धान्तमुपदर्शयति—

ज्ञानं क्रियेव विरुणद्धि ससंवरांशं, कर्म क्षिणोति च तपोंऽशमनुप्रविश्य ॥
भोगः प्रदेशविषयो नियतो विपाके, भाज्यत्वमित्यनघ ते वचनं प्रमाणम् ॥ ८० ॥

क्रिया विरतिसंवरान्तर्गतत्वेनेव ज्ञानं सम्यक्त्वसंवरान्तर्गतत्वेनागच्छत्कर्म प्रतिरुणद्धि, तपोंशेन च तद्भ-
व सञ्चितं कर्म क्षिणोति, तत उभाभ्यामनागतबन्धाभावात् प्राक्तनस्य च निःशेषस्य परिक्षयाद्भवति योगिनो
ोक्षप्राप्तिः। भोगस्तु प्रदेशविषयो नियतो, विपाके विपाकानुभवे तु, भाज्यत्वं विकल्पः। हे अनघ इत्येत-
व वचनं प्रमाणं युक्तियुक्तत्वात्,

एवमिति, ज्ञानं क्रियेवेत्यादिश्लोकस्तु ग्रन्थकृट्टीकाऽलङ्कृत इति न टीकान्तरसापेक्षी, ग्रन्थकृन्मूलश्लोकं विवृणोति क्रिये-
ादिना, तद्वदेव क्रियावदेव, भोगस्तु प्रदेशविषयो नियत इति, व्याप्यसामग्री व्यापकसामग्रीनियतेति यत्र विपाका-
ुभवसामग्री तत्र प्रदेशानुभवसामग्र्या अवश्यम्भावेन यत्र विपाकानुभवसामग्र्याः कर्मक्षयस्तत्रापि प्रदेशानुभवस्यावश्यम्भाव इति
नियत इत्यर्थः। विपाकानुभवस्तु न नियतः, केवलप्रदेशानुभवस्थले तदभावादिति कदाचिद्भवति कदाचिन्नेत्याह विपाक इति—

तथा च नाभुक्तमित्यादौ भोगपदं प्रदेशानुभवपरं चेत् नियमो युज्यते न विपाकानुभवपरत्व इति द्रष्ट-
व्यम्, तथा च पारमर्षं 'तत्थ णं जं तं पएसकम्मं तं णियमा वेएइ, तत्थ णं जं अणुभागकम्मं तं सिय वेएइ
सिय णो वेएइत्ति' प्रदेशतः पर्यायतश्च सांशपुद्गलविशेषरूपत्व एव चादृष्टस्य सहस्रसमूहालम्बनस्मरणादि-
जनितस्य तस्यांशिककीर्त्तनप्रायश्चित्तादिनांऽशतो नाशो लोके लोकोत्तरे च स्थितिघातरसघाततद्वृद्ध्यादिकमु-
पपद्यते, कर्मक्षयेऽवर्जनीयसन्निधिकत्वाच्च प्रदेशभोगस्य न तदनुद्देश्यकप्रायश्चित्तविध्यादिव्याघातः,

नाभुक्तमित्यादाविति, अत्र "नाऽभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्," इति सम्पूर्णश्लोकः। विपाकानुभवपरत्व इति अत्र विभक्तिविपरिणामेन षष्ठीविभक्त्यन्तस्य भोगपदस्यान्वयः। तत्थ णं जं तं इति एतत्पूर्वं "दुविहे कम्मे पण्णत्ते, तं जहा पएसकम्मे य अणुभागकम्मे य" इति पाठो दृश्यः, 'पएसकम्मेयत्ति' प्रदेशाः कर्मपुद्गला जीवप्रदेशेष्वोतप्रोतास्तद्रूपं कर्म प्रदेशकर्म। अणुभागकम्मेय'त्ति, अणुभागः तेषामेव कर्मप्रदेशानां संवेद्यमानताविषयो रसस्तद्रूपं कर्म अनुभागकर्म, तत्र यत्प्रदेशकर्म तन्नियमाद्वेदयति, विपाकस्याननुभवनेपि कर्मप्रदेशानामवश्यं क्षपणात्, आत्मप्रदेशेभ्यः प्रदेशान्नियमाच्छातयतीत्यर्थः। अनुभागकर्म च तथाभावं वेदयति वा नवा, यथा मिथ्यात्वं तत्क्षयोपशमकालेऽनुभागकर्मतया न वेदयति प्रदेशकर्मतया वेदयत्येवेति, सिय वेएइ सिय णो वेएइत्ति अत्र 'अत्थेगइयं वेएइ अत्थेगइयं नो वेएइ' इत्यपि पाठः। अर्थतस्त्वैक्यमिति, सांशपुद्गलविशेषरूपत्व इति यदि सांशपुद्गलरूपमदृष्टं न स्यात्, तदा तत्तद्देवादिसहस्रसमूहालम्बनस्मरणादिजनितस्य तस्य "धर्मःक्षरति कीर्त्तनादित्युक्तेरेकदेवविषयकस्मरणादिधर्मकीर्त्तनेन निर्मूलं क्षयस्स्यात्, सांशत्वे त्वदृष्टगतं यदंशं यद्विषयकस्मरणादिजनितं तद्विषयककीर्त्तनात्तदंशस्यैव नाशान्नोक्तदोषः, एवं प्रायश्चित्तादिनाप्यदृष्टस्य सांशत्व एव सांशतया नाशो युज्यते, नान्यथेति भावः। प्रदेशभोगं विना न किमपि कर्म क्षीयत इति यस्य कस्यापि कर्मणो क्षये प्रदेशभोगस्यावश्यम्भावेन यत्सत्त्वे यस्यावश्यम्भावो न तदुद्देश्यकप्रवृत्तिरिति सामान्यनियमेन तदुद्देश्यकप्रवृत्त्यभावेऽपि कर्मक्षयमुद्दिश्य प्रायश्चित्तविधेयकप्रवृत्त्युपपत्तिस्स्यादेवेत्याह कर्मक्षय इति,

तथा च ज्ञानात् क्रियातो वा कर्मक्षये तदानन्तर्यमात्रे न किमपि बाधकं, देहान्तरोपनयनं तु तपश्चरणा-

तिशयमात्रप्रभवत्वात् न ज्ञानातिशयव्यापकं, विपरीतज्ञानवासनायास्तु नादृष्टहेतुत्वं, वैपरीत्यस्य तत्तत्पदार्थघटितत्वेन विशिष्यानन्तकार्यकारणभावकल्पने गौरवात्, विनश्यदवस्थतत्सहकृततत्त्वज्ञानजन्यादृष्टस्यानन्तत्वापत्तेश्च, किन्तु वैजात्येन ज्ञानस्य चारित्रस्य वा साम्परायिककर्मबन्धप्रतिबन्धकत्वमित्येव युक्तमित्यादि भावनीयं लोकलोकोत्तरमार्गाविरोधिनीभिर्युक्तिभिरिति किमतिप्रपञ्चेन ॥ ८० ॥

तथा चेति, प्रदेशभोगो हि विपाकभोगव्यापक इति तस्य विपाकभोगस्थलेऽप्यवश्यम्भावित्वे चेत्यर्थः। तदानन्तर्यमात्रे, प्रदेशभोगानन्तर्यमात्रे। शरीरभिन्नात्मसाक्षात्कारविशेषविरहमपेक्ष्य लाघवेन शरीराहंवासनाया विपरीताहंवासनाया एव वा कारणत्वादिति यदुक्तमेकषष्ठितमश्लोकटीकायां तन्निरसनायाह विपरीतज्ञानवासनायास्त्विति,तत्सहकृतेति विपरीतज्ञानवासनासहकृतेत्यर्थः, साम्परायिकेति आदशमगुणस्थानभाविकषायनिमित्तककर्मबन्धप्रतिबन्धकत्वमित्यर्थः,यथाख्यातचारित्रप्राप्त्यनन्तरं साम्परायिककर्मबन्धाऽभावात् ईर्यापथिकनिमित्तककर्मबन्धस्यैव तदा भावादिति भावः॥८०॥ एकाशीतितमादिश्लोकावतरणिकामाह—

अथात्रैव नयवादप्रदर्शनपूर्वं तत्परिशोधनेन तद्दिगुपदर्शकभगवद्वचनगुणस्तवं यावत्परिसमाप्ति मनसि कृत्वाह

अथेति, अत्रैव—ज्ञानक्रिययोः मुक्तिजनकत्व एव, तत्परिशोधनेन नयपरिशोधनेन, तद्दिगुपदर्शकेति नयशुद्धिप्रकारोपदर्शकेत्यर्थः।

ज्ञानं प्रधानमिह न क्रियया फलाप्तिः, शुक्तावुदीक्ष्यत इयं रजतभ्रमाध्यत् ॥
आकर्षणादि कुरुते किल मन्त्रबोधो, क्षीणेव दर्शयति तत्र न च क्रियास्यम् ॥ ८१ ॥

ज्ञानं प्रधानमित्यादिश्लोकः । इह मोक्षजनने, ज्ञानं प्रधानं, कारणमिति शेषः, ननु क्रिया कथं नेत्यत आह न क्रियया फलाप्तिरिति, यदनन्तरमवश्यमेव फलोत्पत्तिस्तदेव प्रधानं कारणं, न च क्रियाऽनन्तरं फलोत्पत्तिः, तदेव द्रढयितुमाह शुक्ताविन्त्यादि, यद् यस्मात्, शुक्तौ रजतभ्रमात् इदन्त्वावच्छिन्नशुक्तिनिष्ठविशेष्यतानिरूपितरजतत्वनिष्ठप्रकारतानिरूपकाऽयथार्थज्ञानात्, उदीक्ष्यत इयं—दृश्यते क्रिया नच तत्र फलावाप्तिः, तथा चान्वयव्यभिचारान्न क्रिया प्रधानं कारणमिति भावः। ननु रजतभ्रमस्थले क्रिया न सम्यक्क्रिया, यथार्थज्ञानविशिष्टैव क्रिया सम्यक्क्रिया, वैशिष्ट्यञ्चैककालावच्छिन्नस्वसामानाधिकरण्यसम्बन्धेन, सैव च प्रधानं कारणमिति नोक्तदोष इत्याशङ्कायां तत्रापि व्यतिरेकव्यभिचारमाह आकर्षणादीति, किल निश्चये ऐतिह्ये वा, मन्त्रबोधः आकर्षणादि स्त्र्यादेरितिशेषः, कुरुते, तत्र आकर्षणादिकार्ये, ह्रीणेव लज्जितेव क्रिया आस्यं मुखं न च दर्शयति, तथा च सम्यक्क्रियाया विरहेपि फलोत्पत्तेर्व्यतिरेकव्यभिचारो दुष्परिहर एवेति भावः । यद्वा इह मोक्षजनने ज्ञानं प्रधानं, कारणमितिशेषः, तत्र हेतुमाह न क्रियया फलाप्तिरिति, अत्र ज्ञानं प्रधानं कारणं क्रियानुत्पाद्यफलोत्पादकत्वादित्यनुमानं पर्यवस्यति, हेतौ क्रियानुत्पाद्यत्वविशेषणासिद्धिनिवृत्त्यर्थमाह शुक्तावित्यादि, यद् यस्माद्, रजतभ्रमादियं क्रिया शुक्तावुदीक्ष्यते दृश्यते, न च तत्र फलाप्तिः, तथाचोक्तविशेषणं हेतौ सिद्धमेवेति भावः । ननु रजतभ्रमस्थले क्रिया न सम्यक्क्रिया यथार्थज्ञानसहकृता या क्रिया सा सम्यक्क्रिया सैव फलोत्पादिकेत्युक्तविशेषणाऽसिद्धिरेवेत्याशङ्कायामाह आकर्षणादीति, तदर्थस्तु पूर्ववत्, तथाच सम्यक्क्रियाया विरहेऽपि फलोत्पत्तेर्नोक्तविशेषणाऽसिद्धिरित्युक्तानुमानाद् ज्ञानं प्रधानं कारणं क्रियाविरहेऽपि फलोत्पादकत्वात् मन्त्रबोधवदित्यनुमानाद्वा ज्ञानं प्रधानं कारणं सिद्धमिति भावः ॥ ८१ ॥

पश्यन्ति किं न कृतिनो भरत प्रसन्न–चन्द्रादिपूभयविधं व्यभिचारदोषम् ॥
द्वारीभवन्त्यपि च सा न कथञ्चिदुच्चै–र्ज्ञानं प्रधानमिति सङ्गरभङ्गहेतुः ॥ ८२ ॥

उभयविधं व्यतिरेकान्वयव्यभिचारभेदभिन्नं, कथञ्चिद्भोगसम्पादककार्यत्वेन, अन्यथा तीर्थकराणामपि केषाञ्चिदल्पक्रियया केषाञ्चिच्च बहुक्रियया मुक्तिप्राप्तिरिति विशेषानुपपत्तेरिति भावः। संगरः प्रतिज्ञा ॥८२॥

पश्यन्तीत्यादिमूलश्लोकः, भरतप्रसन्नचन्द्रादिपूभयविधं व्यभिचारदोषं भरतचक्रवर्तिनि मरुदेवादौ च क्रियाया अभावेऽपि सम्यग्ज्ञानात् मोक्षफलावाप्तिरिति व्यतिरेकव्यभिचारं प्रसन्नचन्द्रादौ पूर्वं क्रियायास्सद्भावेऽपि न मोक्षफलसम्पत्तिरित्यन्वयव्यभिचारम्, कृतिनः प्राज्ञाः, किन्न पश्यन्ति, अपि तु पश्यन्त्येवेत्यर्थः। च पुनः, नन्वेवं तर्हि किं क्रिया नैव कारणमित्यत आह द्वारीभवन्त्यपीत्यादि, सा क्रिया मुख्यकारणतां बिभ्रतो ज्ञानस्य कथञ्चिद् द्वारीभवन्त्यपि, उच्चैर्ज्ञानं प्रधानमिति सङ्गरस्य प्रतिज्ञाया यो भङ्गस्तस्य हेतुर्न, ज्ञानेन मोक्षफलोत्पादने क्रिया द्वारीभवतु नच तत्र काऽपि क्षतिः, क्रिया द्वारीभूतैव मुख्यं तु कारणं ज्ञानमेवेति भावः। टीकायां कथञ्चिदित्यस्य विवरणं भोगसम्पादककार्यत्वेनेति, अन्यथा तद्वैपरीत्येन क्रियाया मुक्तिहेतुत्वे ॥८२॥ न केवलं क्रियातः प्रधानं ज्ञानं दर्शनादपि प्रधानं तदित्याह—

सम्यक्त्वमप्यनवगाढमृते किलैत–दभ्यासतस्तु समयस्य सुधावगाढम् ॥
ज्ञानं हि शोधकममुष्य यथाञ्जनं स्या–दक्ष्णो यथा च पयसः कतकस्य चूर्णम् ॥ ८३ ॥

अवगाढसम्यक्त्वहेतुत्वेन सम्यक्त्वदोषापनोदकत्वेन च सम्यक्त्वादप्यभ्यर्हितं ज्ञानमिति भावः ॥ ८३ ॥

सम्यक्त्वमपीति मूलश्लोकः, किल निश्चये, एतद्दते ज्ञानं विना, अनवगाढमपि अदृढमूलमपि शिथिलबन्धनबद्धमपीति यावत्, सम्यक्त्वं, तु पुनः, समयस्य सिद्धान्तस्य, अभ्यासतः अभ्यासो हि ज्ञानमेवेति ज्ञानतः, सुधावगाढं निरूढसुदृढमूलं निविडबन्धनबद्धं भवतीति यावत्, हि यतः, अमुष्य सम्यक्त्वस्य, शोधकं शुद्धिकारकं दोषानऽपनोद्य निर्दोषतापादकं ज्ञानं स्यात्, तत्र दृष्टान्तद्वयमाह यथाऽक्ष्णः नयनस्य अञ्जनम्, यथा च पयसो जलस्य, कतकस्य चूर्णं शोधकं तद्वदित्यर्थः। उक्तश्लोकभावार्थमाह अवगाढेति ॥ ८३ ॥

आसक्तिमाँश्च चरणे करणेऽपि नित्यं, न स्वान्यशासनविभक्तिविशारदो यः ॥

तत्सारशून्यहृदयः स बुधैरभाणि, ज्ञानं तदेकमभिनन्द्यमतः किमन्यैः ॥ ८४ ॥

आसक्तिमाँश्चेति मूलम्, चरणे "वय ५ समणधम्म १० संजम १७ वेयावच्चं १० च बंभगुत्तीओ ९। नाणाइतियं ३ तव १२ कोहनिग्गहा ४ इइ चरणमेयं" इति पारमर्षोक्तेस्सर्वव्रतिनो नित्यानुष्ठानरूपतया सर्वदा नतु कदाचित् कर्त्तव्यलक्षणायां चरणसप्ततौ, करणे च "पिंडविसोही ४ समिई ५ भावण १२ पडिमा १२ य इंदियनिरोहो ५ पडिलेहण २५ गुत्तीओ ३ अभिग्गहा ४ चेव करणं तु" इतिपारमर्षोक्तेस्सर्वव्रतिनः प्रयोजनप्रयोज्यानुष्ठानरूपतया प्रयोजनकालनियतकालानुष्ठानलक्षणायां करणसप्ततौ च, नित्यमासक्तिमानपि सर्वदोद्यमशीलोऽपि, स्वान्यशासनविभक्तिविशारदः इदं स्वशासनं श्रीवीरभगवदुपदिष्टपरस्परसापेक्षसकलनयविषयस्याद्वादतत्त्वप्रतिपादनात्, इदञ्च परशासनम् अन्योपदिष्टप्रत्येकनयविषयैकान्ततत्त्वप्रतिपादनादित्येवं या विभक्तिः स्वपरशासनतत्त्वयथावद्विभागस्तत्करणे विशारदः तद्विषयकज्ञानवान् यः पुरुष इति शेषः, न भवतीति

क्रियाध्याहारः, स तत्सारशून्यहृदयः तयोश्चरणकरणयोः सारं फलं ज्ञानदर्शनोपयोगात्मकं निष्कलङ्कं तेन शून्यहृदयः तद्रहितान्तःकरणो बुधैरभाणि प्राज्ञैरगादि, तत् तस्माद्धेतोः एकज्ञानमभिवन्द्यं स्तुत्यम्, अतः इतरन्यवच्छेदेन स्याद्वादतत्त्वज्ञानात्,अन्यैः किं, न किमपि प्रयोजनमित्यर्थः। अथवा तयोश्चरणकरणयोस्सारं निश्चयेन शुद्धं सम्यग्दर्शनं तद्व्यतिरेकेण तयोर्मोक्षफलानुत्पादकत्वात् तद्रहितान्तःकरणोऽभाणि, न हि यथावस्थितवस्तुतत्त्वावबोधमन्तरेण तद्रुचिलक्षणसम्यग्दर्शनं, न च स्वसमयपरसमयतात्पर्यार्थाऽनवगमे तदवबोधः बोटिकादेरिव सम्भवी, अथ यथावस्थितजीवादिद्रव्यार्थपर्यायार्थानवबोधेऽपि "मण्णइ तमेव सच्चं निस्संकं जं जिणेहिं पन्नत्तं" इत्याद्यागमप्रामाण्यात् यदर्हद्भिः प्ररूपितं तदेव सत्यं नान्यदित्येवं सामान्यतोऽवबोधबलेन सम्यग्दर्शनसद्भावान्न तत्सारशून्यहृदय इति चेत्, मैवम्, स्वसमयपरसमयपरमार्थानभिज्ञैर्निरावरणज्ञानदर्शनात्मकजिनस्वरूपाज्ञानवद्भिस्तदभिहितभावानां सामान्यरूपतयाप्यन्यव्यवच्छेदेन सत्यस्वरूपतया ज्ञातुमशक्यत्वात्, नन्वेवमागमविरोधः, सामायिकमात्रपदविदो माष-तुषादेर्यथोक्तचारित्रिणस्तत्र मुक्तिप्रतिपादनात्, सकलशास्त्रार्थज्ञताविकलव्रतस्य व्रताद्याचरणैरर्थक्यापत्तिश्च, तत्साध्यफलानवाप्तेरिति चेत्, मैवम्, यथोदितचरणकरणप्ररूपणासेवनद्वारेण सर्वगुणमूलभूतगीतार्थाचार्यनिश्रयाचरणकरणप्रवृत्तेस्तत्सारं लभत एव, तथा च माषतुषादीनां स्वयं विशेषतो ज्ञानविरहेऽपि या केवलज्ञानोत्पत्तिस्ततो मुक्तिश्च शास्त्रे श्रूयते सा गुरुपरतन्त्रत्वादेव, उक्तश्चैकादशे पञ्चाशके "गुरुपारतंतनाणं सद्दहणं एयसङ्गयं चेव। एत्तो उ चरित्तीणं मासतुसादीण मुद्दिठ्ठम्"॥१॥ इति, सकलशास्त्रार्थज्ञताविकलव्रतस्यापि गुर्वाज्ञावशवर्त्तिनो व्रताद्यनुष्ठानस्य न वैफल्यं, तत्साध्यफलावाप्तेः, गुर्वाज्ञया प्रवृत्तेः, चरणगुणस्थितत्वेन तस्य साधोस्सर्वनयविशुद्धतया अभ्युपगमात्, "तं सव्वनयविसुद्धं जं चरणगुणट्ठिओ साहू" इत्याद्या-

गमप्रामाण्यात्, अगीतार्थस्य तु स्वतन्त्रचरणकरणप्रवृत्तेर्व्रताद्यनुष्ठानस्य वैफल्यमभ्युपगम्यत एव, "गीयत्थो य विहारो बीओ गीयत्थमीसओ भणिओ। एत्तो तइयविहारो णाणुन्नाओ जिणवरेहिं" इत्यागमप्रामाण्यात्, एतदर्थसंवादिकेयं सम्मतिगाथा "चरणकरणप्पहाणा, ससमयपरसमयमुक्कवावारा। चरणकरणस्स सारं, निच्छयसुद्धं ण याणंति" इति, ज्ञानप्राधान्यं शास्त्रेप्युक्तं, जं अन्नाणी कम्मं खवेइ बहुआहिं वासकोडीहिं, तं नाणी तिहिं गुत्तो खवेइ उसासमित्तेण ॥१॥ इति ॥८४॥ ज्ञानचारित्रापेक्षयाऽपि सम्यक्त्वमेव प्रधानमिति सदृष्टान्तमाह—

न श्रेणिकः किल बभूव बहुश्रुतर्द्धिः, प्रज्ञप्तिभाग् न न च वाचकनामधेयः ॥
सम्यक्त्वतः स तु भविष्यति तीर्थनाथः, सम्यक्त्वमेव तदिहावगमात् प्रधानम् ॥ ८५ ॥

न श्रेणिक इति भ्रष्टेनेति च श्लोकाभ्यां, किल निश्चये, श्रेणिकः मगधाधिपतिः, बहुश्रुतर्द्धिः महाकल्पादिश्रुतधरो न बभूव, प्रज्ञप्तिभाग् न व्याख्याप्रज्ञप्तिवेत्ता न, आवृत्त्या बभूवेत्यस्यात्रान्वयः, न च वाचकनामधेयः—वाचक इति पूर्वधरस्यैव संज्ञेति न च पूर्वधरो बभूव, तु तथापि, सम्यक्त्वतः स श्रेणिकनरपतिः तीर्थनाथः तीर्यते संसारार्णवं येन तत्तीर्थं प्रथमगणधरः चतुर्विधसङ्घः प्रवचनं वा तस्य नाथः प्रणेतृत्वेन नायकः अनागतोत्सर्पिण्यां पद्मनाभनामा प्रथमतीर्थङ्करो भविष्यति, तत् तस्मात्, इह मोक्षमार्गे, अवगमाज्ज्ञानात्, सम्यक्त्वमेव प्रधानमित्यर्थः, उक्तश्चैतदर्थसंवादतयाऽऽवश्यनिर्युक्तौ "न सेणिओ आसि तया बहुस्सुओ, नयावि पन्नत्तिधरो न वायगो। सो आगमिस्साइ जिणो भविस्सइ, समिक्ख पन्नाइ वरं खु दंसणं" इति, अन्यत्राप्युक्तं "ज्ञानचारित्रहीनोऽपि श्रूयते श्रेणिकः किल। सम्यग्दर्शनमाहात्म्यात्तीर्थकृत्त्वं प्रपत्स्यते" इति ॥८५॥

भ्रष्टेन संयमपदादवलम्बनीयं, सम्यक्त्वमेव दृढमत्र कृतप्रसङ्गाः ॥
चारित्रलिङ्गवियुजोऽपि शिवं व्रजन्ति, तद्वर्जितास्तु न कदाचिदिति प्रसिद्धिः ॥ ८६ ॥

भ्रष्टेनेति मूलम्, तस्य चायमर्थं संयमपदात् अतिदुष्करत्वेन शेषनागरत्नग्रहणकल्पाच्चारित्रमार्गाद्, भ्रष्टेन नरेण, सम्यक्त्वमेव दृढमवलम्बनीयम्, अत्र हेतुः चारित्रलिङ्गवियुजोऽपि चारित्रलिङ्गरहिता अपि, अत्र सम्यक्त्वे, कृतप्रसङ्गाः कृतः प्रकर्षेण सङ्गः परिचयः अभ्यास इति यावत् यैस्ते तथा, शिवं मोक्षं व्रजन्ति गच्छन्ति, तद्वर्जिताः सम्यक्त्वरहिताः, तु पुनः, न कदाचित् न कस्मिंश्चिदपि काले, अत्रावृत्त्या शिवं व्रजन्तीत्यस्यान्वयः, इति एवं प्रकारेण प्रसिद्धिः ख्यातिः, सिद्धान्ते इति शेषः, तदुक्तं "भट्ठेण चरित्ताओ, सुठ्ठुयरं दंसणं गहियव्वं। सिज्झन्ति चरणरहिया, दंसणरहिया न सिज्झंति" इति, अन्यत्रापि प्रतिपादिताः सम्यक्त्वाभ्यर्हितत्वार्थवादाः "सर्वे भावाः सर्वजीवैः प्राप्तपूर्वा अनेकशः, बोधिर्न जातुचित्प्राप्तो भवभ्रमणदर्शनात् ॥१॥ अन्तर्मुहूर्त्तमपि यः समुपास्य जीवः सम्यक्त्वरत्नममलं विजहाति सद्यः। बंभ्रम्यते भवपथे सुचिरं न सोऽपि तद्बिभ्रतश्चिरतरं किमुदीरयामः ॥२॥ तिर्यग्नरकयोर्द्वारे ह्येतत् सम्यक्त्वमर्गला, देवमानवनिर्वाणसुखाप्तौ प्रतिभूः पुनः ॥३॥ मूलं बोधिद्रुमस्यैतत् द्वारं पुण्यपुरस्य च। पीठं निर्वाणहर्म्यस्य, निधानं सर्वसंपदाम् ॥४॥ गुणानामेक आधारो रत्नानामिव सागरः ॥ पात्रं चारित्रवित्तस्य सम्यक्त्वं श्लाघ्यते न कैः ॥५॥ श्लाघ्यं हि ज्ञानचरण–वियुक्तमपि दर्शनम्। न पुनर्ज्ञानचारित्रे मिथ्यात्वविषदूषिते ॥६॥ सम्प्राप्तबोधयो जीवा न रज्यन्ते भवे क्वचित्। निर्ममत्वाद् भजन्त्येक–मुक्तिमार्गमनर्गलाः ॥७॥ तेन ज्ञानचारित्राभ्यां, सम्यग्दर्शनमद्भुतम्। येनार्हतामपि भवाः, मम्नायन्तेऽस्य लाभतः ॥८॥ असंप्राप्ते बोधिरत्ने चक्रवर्त्यपि रङ्कवत्। संप्राप्तबोधिरत्नस्तु रङ्कोऽपि स्यात्ततोऽधिकः ॥९॥ इत्यादि

॥८६॥ तपसश्चारित्राङ्गत्वात्प्राधान्यवर्णनेन तत्प्राधान्यमावेदयितुमाह—

ज्ञानी सुदृष्टिरपि कोऽपि तपो व्यपोह्य, दुष्कर्ममर्मदलने न कदापि शक्तः ॥
एतन्निकाचितमपि प्रणिहन्ति कर्म-त्यभ्यर्हितं भवति निर्वृतिसाधनेषु ॥ ८७ ॥

ज्ञानीति श्लोकं, तस्य चाऽयमर्थः, ज्ञानी ज्ञानवान्, सुदृष्टिरपि सम्यग्दर्शनवानपि, कोपि पुरुषः, तपो व्यपोह्य तपः परित्यज्य, दुष्कर्ममर्मदलने अतितीव्रतमदुष्टाध्यवसायकृतमत एवातिनिविडतमबन्धनबद्धं पापप्रकृतिरूपं यत्कर्म तस्याऽतिकर्कशघनरसग्रन्थिच्छेदने, कदापि कस्मिँश्चिदपि काले, न शक्तः, किन्तु तपोऽङ्गीकृत्यैव दुष्कर्ममर्मविनाशने शक्तः, प्रतिदिनसप्तजनहन्तृअर्जुनवत्, अत एव तद्भवमोक्षगामिभिश्श्रीतीर्थङ्करैरपि अतिदुस्सहं तपः कृतं, तदुक्तं, चक्रे तीर्थकरैस्स्वयं निजगदे तैरेव तीर्थेश्वरैः, श्रीहेतुर्भवहारि दारितरुजं सन्निर्जराकारकम्। सद्यो विघ्नहरं हृषीकदमनं माङ्गल्यमिष्टार्थकृद्, देवाकर्षणमारदर्पदलनं तस्माद्विधेयं तपः ॥१॥ इति। अन्यैरपि सनत्कुमारचक्रवर्त्यादिभिस्तत्तप आचरितम् तदुक्तं, सणंकुमारो मणुस्सिंदो, चक्कवट्टी महड्ढिए। पुत्तं रज्जे ठविऊणं, सोवि राया तवं चरे ॥१॥" इति, एतत् तपः, निकाचितमपि सर्वकरणाऽयोग्यमपि, कर्म प्रणिहन्ति विनाशयति, यत उक्तं महाभाष्ये "सव्वपगइणमेवं, परिणामवसादुवक्कमो होज्जा। पायमनिकाइयाणं तवसा उ निकाइयाणंपि" इति, तपसो मोक्षपर्यवसानफलमागमेप्युक्तं, तवेणं भंते किं फले? तवे वोदानफले, वोदाणे अकिरियाफले, अकिरिया सिद्धिगइगमणफला" इति, व्यवदानं कर्मनिर्जरणम्, अतो निर्वृतिसाधनेषु मोक्षकारणेषु मध्ये तपोऽभ्यर्हितं प्रधानतयाऽभीष्टतरं भवतीति ॥८७॥

सम्यक्क्रियेति पद्यं स्वयमेव विवृणोति ग्रन्थकारः—

सम्यक्क्रिया व्यभिचरेन्न फलं विशेषो, हेत्वागतो न परतोऽविनिगम्यभावात् ॥
न द्रव्यभावविषया बहिरन्तरङ्ग–भावाच्च कोऽपि भजनामनुपोह्य भेदः ॥ ८८ ॥

सम्यक्क्रिया फलं न व्यभिचरेत्, तेन शुक्तौ रजतार्थिचेष्टाया निष्फलत्वदर्शनात् सर्वत्र तदनाश्वास इति यद् ज्ञानवादिनोक्तं तन्निरस्तम्। एवं हि तत्र मिथ्याज्ञानेऽपि नैष्फल्यदर्शनात् सम्यग्ज्ञानेऽप्यनाश्वासप्रसङ्गात्, विशेषग्रहस्तूभयोरपि तुल्यः। क्रियायां सम्यक्त्वाख्यो विशेष एव कुत आगत इति चेत्, हेत्वागतः स्वहेतुसामर्थ्यागात इति प्रतीहि। यत एव हेत्वागतो विशेषोऽत एव परतः, परं चात्र ज्ञानमेव, तथा च क्रियागतफलौपयिकसम्यक्त्वाधायकत्वेन ज्ञानं विशिष्यत इति चेत्, न, अविनिगम्यभावात् विशेषनिर्द्धारकप्रमाणाविषयत्वात्। न हि ज्ञानमात्रस्य क्रियागतसम्यक्त्वाधायकत्वं, शुक्तिरजतधीस्थल एव व्यभिचारात्, किन्तु सम्यग्ज्ञानस्य तत्त्वं वाच्यम्, तच्च सम्यगवलोकनादिक्रियापेक्षमेवेति, आगमजं ज्ञानं क्रियानपेक्षमेव सम्यक्त्वं बिभर्तीति चेत्, अनाभोगतोऽपि सदन्धन्यायेन मार्गानुसारिणी क्रिया ज्ञानाऽनपेक्षं सम्यक्त्वं किन्न बिभर्ति, क्रियाऽनभ्यासकाख्यस्याव्यक्तसमाधेरेष महिमा।

सम्यक्क्रिया फलं न व्यभिचरेदिति, फलोपधानरूपकारणत्वं सम्यक्क्रियायामेव नतु क्रियामात्रे, तथा च सम्यक्क्रिया नियमेन फलोत्पादिकेति सा फलाव्यभिचारिणीत्यभ्युपगमादेकाशीतिश्लोकोक्तः शुक्तावुदीक्ष्यते इयं रजतभ्रमाद्यदिति दोषो न,

तदेवाह तेनेति, तत्र शुक्तौ, मिथ्याज्ञानेऽपि रजतत्वभ्रमज्ञानेऽपि शुक्तिविशेष्यकरजतत्वप्रकारकाऽयथार्थज्ञानेऽपीति यावत्। विशेषग्रहः, फलाऽविसंवादिप्रवृत्तिजनकत्वलक्षणविशेषग्रहः, उभयोरपि सम्यग्ज्ञानसम्यक्क्रिययोरपि, तथाचोक्तलक्षणविशेषग्रहबलात् सम्यग्ज्ञानवत् सम्यक्क्रियायामपि मोक्षाङ्गतयाऽऽश्वासः कर्त्तव्य एवेति भावः, ज्ञानवादिप्रश्नमुखेन विशेषो हेत्वागत इत्यस्य विवरणमाह क्रियायामित्यादिना, मूलश्लोकगतस्य परत इत्यस्य ज्ञानवादिप्रश्नरूपत्वात्तत्प्रश्नद्वारा तद्विवरणमाह यत एवेत्यादिना, तथा च क्रियागतसम्यक्त्वाख्यविशेषस्य ज्ञानात्मकपराधीनत्वे च, विशिष्यत इति क्रियात इति दृश्यम्, क्रियावादी मूलोक्तमुत्तरमाह, न, अविनिगम्यभावादिति, तदेव विवृणोति विशेषनिर्द्धारकेति, तच्च सम्यग्ज्ञानञ्च, तथाच इदं सम्यग्ज्ञानमेवेति निश्चयः फलाऽविसंवादिक्रियादर्शनादेवेति ज्ञानगतसम्यक्त्वाधायकत्वलक्षणो विशेषः क्रियायामपि क्रियागतसम्यक्त्वाधायकत्वलक्षणो विशेषः ज्ञान इवाविशिष्ट इति ज्ञानं न क्रियापेक्षया प्रधानमिति भावः। मार्गानुसारिक्रिया ज्ञानानपेक्षं सम्यक्त्वं कस्य महिम्ना बिभर्त्तीत्याशङ्कायामाह क्रियाऽवञ्चकाख्यस्येति, अस्य स्वरूपं "तेषामेव प्रणामादिक्रियानियम इत्यलम्। क्रियाऽवञ्चकयोगः स्यान्महापापक्षयोदयः ॥१॥" इत्यनेन योगदृष्टिसमुच्चयगतश्लोकेनावसेयम्। ज्ञानवादी शङ्कते—

तत्रापि सदोघसंज्ञानुगतं ज्ञानमस्त्येवेति चेत्, आगमजज्ञानेप्यन्ततो मनोयोगादिरूपक्रियानुगमः किं नेक्ष्यते, अस्ति च तत्र वैनयिकत्वं जातिविशेषः, स च विनयरूपसम्यक्क्रियाऽऽधीन एवेति। अथ प्रणिधानप्रवृत्तिविघ्नजयसिद्धिविनियोगरूपो भावो ज्ञानमेव तं विना च चारित्रचेष्टाया द्रव्यक्रियात्वमुक्तमित्येवं क्रियातो ज्ञानस्य प्राधान्यमिति चेत्,

तत्रापीति, अनाभोगतो मार्गानुसारिक्रियास्थलेऽपीत्यर्थः। क्रियावादी समाधत्ते आगमजेति। तत्र आगमजज्ञाने, न द्रव्यभावविषया कोऽपि भजनामनुपेत्य भेद इत्युत्तरार्द्धं प्रश्नमुखेन विवृणोति अथेत्यादिना, प्रणिधानादयः पुण्योपचयलक्षणपुष्टिपापक्षयजन्यनिर्मलतालक्षणशुद्ध्यनुबन्धकारिणः पञ्चाध्यवसायस्थानविशेषाः, "प्रणिधानं तत्समये, स्थितिमत्तदधः कृपाऽनुगं चैव। निरवद्यवस्तुविषयं, परार्थनिष्पत्तिसारं च ॥१॥ तत्रैव तु प्रवृत्तिः, शुभसारोपायसङ्गतात्यन्तम्। अधिकृतयत्नातिशयादौत्सुक्यविवर्जिता चैव ॥२॥ विघ्नजयस्त्रिविधः खलु, विज्ञेयो हीनमध्यमोत्कृष्टः। मार्गे इह कण्टकज्वरमोहजयसमः प्रवृत्तिफलः ॥३॥ सिद्धिस्तत्तद्धर्मस्थानावाप्तिरिह तात्त्विकी ज्ञेया। अधिके विनयादियुता, हीने च दयादिगुणसारा ॥४॥ सिद्धेश्चोत्तरकार्यं, विनियोगोऽवन्ध्यमेतदेतस्मिन्। सत्यन्वयसंपत्त्या, सुन्दरमिति तत्परं यावत् ॥५॥ इति षोडशप्रकरणगतगाथोक्तलक्षणानुसारेण यद्यपि ते सर्वेऽपि कथञ्चित् क्रियारूपास्तथापि परमार्थतः तदुपलक्ष्या आशयभेदरूपा अवगन्तव्याः, अयञ्च पञ्चप्रकारोप्याशयो भाव उच्यते, आशयस्योपयोगरूपतया तस्य च भावलक्षणत्वात्, अनेन ज्ञानरूपभावेन विना कायवाङ्मनोव्यापाररूपा चेष्टा द्रव्यक्रियेति फलाऽजननी, तदुक्तम्, आशयभेदा एते, सर्वेऽपि हि तत्त्वतोऽवगन्तव्याः। भावोऽयमनेन विना, चेष्टा द्रव्यक्रिया तुच्छा ॥१॥ इतीत्येवं क्रियातो ज्ञानस्य प्राधान्यमिति शङ्काऽऽशयः। ज्ञानविनिर्मुक्ता क्रिया द्रव्यक्रियैवेति क्रियाया अप्राधान्यं, तद्गतभावत्वोपनायकतया ज्ञानस्य च प्राधान्यमित्येकान्तो न कान्तः, स्याद्वादो हि तदतत्स्वरूपत्वात्तदुभयस्वरूप इति ज्ञानक्रिययोर्द्वयोरपि स्याद्वादतो द्रव्यभावोभयरूपत्वव्यवस्थितेरिति समाधत्ते—

अत्रमपि भजनां स्याद्वादमनुपेत्यापरिगृह्य भेद एकान्तपक्षो न युक्तः, स्वस्थानसन्निकर्षेणोत्कर्षापकर्षरूप-

द्रव्यभावरूपत्वस्योभयत्राविशेषात्, विशिष्योपादानोपादेयभावस्यापि तेनैवाविशेषेणाक्षेपात्, परस्थानसन्निकर्षेण चोत्कर्षापकर्षाभ्यां निमित्तनैमित्तिकभावस्यैव व्यवस्थितेः, तेन द्रव्यभावरूपत्वाघटनात्, एकतरविनिर्मोकेणाप्राधान्यरूपद्रव्यत्वस्याप्युभयत्र सम्भवात्। न हि प्रणिधानादिविरहिता क्रियेव क्रियाविरहितं रूयादिविषयं प्रणिधानाद्यपि प्रधानभावतामश्नुत इति। न च क्रियाविध्यवच्छेदकतया ज्ञानस्य प्राधान्यं, पृथग्विधानसामर्थ्येन संयोगस्यार्थसिद्धत्वात्, किं च तत्त्वज्ञानमप्यभ्यस्तं विधेयम्, अभ्यासश्च क्रियेति क्रियाप्राधान्याज्ज्ञानप्राधान्यभङ्गापत्तेः। अथ यद्व्यतिरेकप्रयुक्तो यस्य विहितस्य प्रधानफलसम्बन्धव्यतिरेकस्तदपेक्षया गौणं द्रव्यं चेति चेत्, न, एवं सति प्रधानफलजनकतानवच्छेदकेनैव रूपेण द्रव्यत्वव्यवस्थितेः, तस्याश्चोभयत्राविशेषात्, न हि यतिलिङ्गमिथ्यादृशां क्रियेव ज्ञानमपि द्रव्यतां न बिभर्त्तीति। एतेन प्रतिपदानुक्तफलजनकतावच्छेदकरूपवत्त्वं द्रव्यत्वमित्यपास्तम्।

अयमपीति, ज्ञानस्य भावत्वमेव क्रियाया द्रव्यत्वमेवेत्येकान्तपक्षो न युक्त इत्यत्र हेतुमाह स्वस्थानेति, ज्ञाने क्रियायां च स्याद्वादापेक्षया द्रव्यभावोभयरूपत्वस्यैव साम्राज्यादिति भावः। तेनैव स्वस्थानसन्निकर्षेणैव, तेन परस्थानसन्निकर्षेण, एकतरविनिर्मोकेणेत्यादि, ज्ञानक्रिययोर्मध्यादेकतरं यज्ज्ञानं तद्व्यतिरेकेण क्रियायामप्राधान्यरूपद्रव्यत्वमिवैकतरा या क्रिया तद्व्यतिरेकेण ज्ञानेऽपि तदविशिष्टमेवेत्यर्थः, एतदेव भावयति नहीति, पृथग्विधानसामर्थ्येनेति ज्ञानक्रियाभ्यां मोक्ष इत्यत्र द्विवचनान्तपृथनिर्देशमहिम्ना मोक्षं प्रति ज्ञानक्रिययोः कारणभावो विज्ञायत इति ज्ञानक्रिययोर्मिथस्सहकारिभावोऽर्थसिद्धो भवतु, न च तथापि

मोक्षमुद्दिश्य ज्ञानविशिष्टा क्रिया विधेयतया प्राप्ता, येन तदवच्छेदकत्वाज्ज्ञानस्य प्राधान्यं स्यादिति भावः। अभ्यस्तं विधेयमिति अभ्यस्तम् अभ्यासविशिष्टम्, अभ्यासश्च क्रिया, तथा चाभ्यासस्य क्रियात्मकस्य ज्ञानविधौ विशेषणत्वेनावच्छेदकत्वात् क्रियाया अपि क्रियाविध्यवच्छेदकत्वाद् ज्ञानस्येव प्राधान्यं स्यादित्यर्थः। ज्ञानवादी शङ्कते अथेति, यद्व्यतिरेकप्रयुक्त इति यदपरकारण-विरहप्रयुक्तो यस्य कारणस्य शास्त्रोक्तसाव्यवहितपूर्ववर्त्तित्वलक्षणजनकतासम्बन्धेन मुख्यकार्याभावः मुख्यकार्योत्पादकत्वाभाव इति यावत्, प्रकृते यद्व्यतिरेक इत्यत्र यत्पदेन ज्ञानं ग्राह्यम्, यस्येत्यत्र यत्पदेन च चारित्रम्, प्रधानफलं चात्र मोक्षः, तद-पेक्षया ज्ञानापेक्षया, यत्तदोर्नित्यसम्बन्धाद् यस्येत्युक्तिबलेन तदित्यध्याहार्यं, तत् चरणम्। एवं सति प्रधानफलसम्बन्धाभावप्र-योजकाभावप्रतियोग्यपेक्षया गौणत्वे द्रव्यत्वे च सति, सम्यक्क्रियात्वं कारणताऽन्यूनानतिप्रसक्तमिति तद्रूपेण कारणतया सम्य-क्क्रियातो मोक्षफलमुत्पद्यत एवेति तत्र प्रधानफलसम्बन्ध एव वर्त्तते, न तदभावः, येन तस्य ज्ञानविरहप्रयुक्तत्वं स्यादिति न सम्यक्क्रियात्वेन रूपेण गौणत्वं द्रव्यत्वं वा, किन्तु क्रियात्वं मिथ्याक्रियायामपि वर्त्तते न च तत्र मोक्षकारणत्वमित्यतिप्रसक्ततया कारणतानवच्छेदकेन क्रियात्वरूपेणैव, तथा सति ज्ञानत्वस्यापि मिथ्याज्ञाने वृत्तेरतिप्रसक्ततया कारणतानवच्छेदकत्वात्तद्रूपेण ज्ञानस्यापि तथात्वं स्यादित्याशयेनाह तस्याश्चोभयत्राऽविशेषादिति, एतदेव भावयति नहीति, एतेन ज्ञानक्रिययोर्द्रव्यत्वप्रसङ्गसाम्येन। प्रतिपदेत्यादि, स्वपदानभिहितं यत्फलजनकतावच्छेदकरूपं तद्वत्त्वमित्यर्थः, पुनः क्रियापेक्षया ज्ञानस्य प्राधान्यं ज्ञानवादी शङ्कते—

अथ प्रणिधानादिविरहे विधिवैकल्येन लौकिकत्वमेव द्रव्यत्वं क्रियायाः, तद्भावे च लोकोत्तरत्वं भावत्व-मित्ययमस्ति क्रियागतो विशेषः, तदुक्तम्—एवंविधेनेत्यादि, ज्ञानं तु स्वत एव भावः, तदुक्तं—तात्त्विकः पक्ष-

पातश्चेत्यादीति चेत्, न, ज्ञानेऽपि ध्यानदोषवर्जनावर्जनाभ्यामुभयरूपत्वंव्यवस्थितेः, अपरिणामावहस्येवातिपरिणामावहस्यापि पक्षपातस्याप्रयोजकत्वात्, लोकोत्तरस्य कर्मण आरब्धस्य विधिखण्डनेन लौकिकत्वपर्यवसाने ततः प्रत्यपा(वा)याप्रसक्तेश्च, नहि लौकिकं विराद्धमपि महानर्थाय, लौकिकमिति तु लौकिकसममित्यभिप्रायकम्। विधिभक्त्युभयाङ्गतया विहितं भक्तिमात्रपर्यवसितं लौकिकमिति चेत्, न, भक्तिमात्रपर्यवसितस्यापि परम्परया मोक्षफलत्वेनालौकिकत्वात्।

अथेति, तद्भावे चेति प्रणिधानादिसद्भावे चेत्यर्थः। षोडशकग्रन्थस्य संवादमाह तदुक्तमिति, एवं विधेनेत्यादि, "एवं विधेन यद्बिम्बकारणं तद्वदन्ति समयविदः। लोकोत्तरमन्यदतो लौकिकमभ्युदयसारं च" इति सम्पूर्णगाथा सप्तमप्रकरणगता ज्ञेया, योगदृष्टिसमुच्चयस्य संवादमाह तदुक्तमिति, तात्त्विकः पक्षपातश्चेत्यादीति, "तात्त्विकः पक्षपातश्च भावशून्या च या क्रिया। अनयोरन्तरं ज्ञेयं भानुखद्योतयोरिव" इति संपूर्णगाथा। समाधत्ते—न ज्ञानेऽपीति, उभयरूपत्वेति लौकिकलोकोत्तरोभयरूपत्वेत्यर्थः, लौकिकत्वपर्यवसाने इति प्रणिधानादिविरहे विधिवैकल्येन लौकिकत्वमित्यस्य त्वयोपगतत्वादिति भावः। लोकोत्तरकर्मणो यथावदननुष्ठानेन भवदपेक्षया लौकिकत्वेऽपि वस्तुतस्तन्न लौकिकमित्यत आह लौकिकमिति त्विति। ज्ञानवादी शङ्कते विधीति, विधिभक्त्युभयाङ्गतया विहिता सती क्रिया भक्तिमात्रे पर्यवसन्ना लौकिकत्वं बिभर्तीत्याशयः, साक्षात्परम्परया वा यन्मोक्षफलकं तदलौकिकमुच्यते भक्तिमात्रपर्यवसानाया अपि क्रियाया एवंरूपत्वेनालौकिकत्वमेवेति समाधत्ते—न, भक्तिमात्रपर्यवसितस्यापीति, ज्ञानवादी शङ्कते—

अथ यज्जातीयापेक्षया यज्जातीयस्य फलं प्रति दूरव्यवधानं तज्जातीयापेक्षया तज्जातीयं द्रव्यमिति ज्ञानापेक्षया क्रियाया द्रव्यत्वमिति चेत्, न, ज्ञानत्वावच्छिन्नापेक्षया चारित्रत्वावच्छिन्नस्य मोक्षं प्रत्यल्पव्यवधानात्, क्रियात्वावच्छिन्नस्याप्यपुनर्बन्धकादिभावानुप्रवेशेन तौल्यात्। एतेन यद्भावापेक्षया यद्भावस्येत्याद्यपि व्याख्यातम्, अवधेरुत्कृष्टत्वेनावधिमतः सामान्यतो ग्रहस्त्वकिञ्चित्करः, विपर्ययस्यापि सुवचत्वात्।

अथेति, यज्जातीयापेक्षया यज्जातीयस्येति, शङ्कापक्षे ज्ञानजातीयापेक्षया चारित्रजातीयस्येत्यर्थः, फलं प्रति मोक्षाख्यफलं प्रति, अल्पव्यवधानादिति, ज्ञानजातीयं केवलज्ञानं न साक्षान्मोक्षाङ्गम्, किन्तु चारित्रजातीयसर्वसंवररूपसर्वोत्कृष्टचारित्रद्वारैव, उक्तचारित्रप्राप्तिमन्तरेण कस्यापि केवलज्ञानिनोऽपि मोक्षाप्राप्तेः, तत्प्राप्तौ चान्तर्मुहूर्त्तमात्रेण तत्प्राप्तेः, व्यापारेण व्यापारिणो व्यवधाने च सति चारित्रजातीयाऽपेक्षया ज्ञानजातीयस्य मोक्षफलं प्रति दूरव्यवधानमिति क्रियाऽपेक्षया ज्ञानस्यापि द्रव्यत्वं स्यादिति भावः। एतेन पूर्वोक्तहेतुना, यद्भावापेक्षया यद्भावस्येत्याद्यपीति यद्भावापेक्षया यद्भावस्य फलं प्रति दूरव्यवधानं तद्भावापेक्षया तद्भावो द्रव्यमित्यपीत्यर्थः। दशवैकालिकसूत्रे ज्ञानस्य क्रियाऽपेक्षया प्रथमोपन्यस्तत्वात्प्राधान्यमित्याशङ्कते—

पढमं णाणं तओ दया इत्यत्र प्रथमोपन्यस्तत्वात् ज्ञानस्य प्राधान्यमिति चेत्, न, सुअं मे आउसं तेणं इत्याद्याचारसूत्रे गुरुकुलवासरूपायाः क्रियाया अप्यादावुपन्यस्तत्वात्। यथा हि ज्ञानेन दयां भावयेत् इति नियमविधिः, तथा गुरुकुलवासक्रियया ज्ञानं भावयेदिति नियमविधिरपि तुल्य एव। अत एव गुरुपर्युपासनायाः श्रवणज्ञानादीनां द्वारत्वमुक्तं प्रज्ञप्तौ। एतेन बहिरन्तरङ्गभावेन विशेषोऽपि निरस्तः। योगरूपेण बाह्यत्वस्यो-

पयोगरूपेण चान्तरङ्गत्वस्योभयत्राविशेषात्। यदात्मनो मुक्तावप्यनुवृत्तिस्तदन्तरङ्गमन्यद् बाह्यमिति चेत्, न, ज्ञानात्मन इव चारित्रात्मनोऽपि संज्ञानयोगरूपस्य वेदान्तिनयेन मुक्तावनुवृत्तेरुपगमादिति दिग् ॥ ८८ ॥

पढमं नाणमिति, प्रज्ञप्ताविति व्याख्याप्रज्ञप्तौ द्वितीयशतके पञ्चमोद्देशके तहारूवं भंते समणं वा माहणं वा पज्जुवासमाणस्स किं फला पज्जुवासणा ? गोयमा सवणफलेत्यादिसूत्रे इत्यर्थः। बहिरन्तरङ्गभावाच्चेति। मूलोक्तविवरणायोपक्रमते एतेनेति, क्रियाया बाह्यत्वेनाऽप्राधान्यं ज्ञानस्यात्मवर्तितयाऽन्तरङ्गत्वेन प्राधान्यमित्यपि पराकृतं न समीचीनमित्यर्थः। तत्र हेतुमाह योगरूपेणेति। संज्ञानयोगरूपस्येति संज्ञानं समीचीनमर्हत्प्रवचनानुसारिज्ञानं, गुरुपारतन्त्र्यनिमित्तं संवेदनं, तेन सहितो योगः शुभवीर्योल्लासः तद्रूपस्येत्यर्थः, संज्ञानयोगधर्मस्य स्वरूपं फलञ्च शास्त्रवार्तासमुच्चये एवमुक्तं "ज्ञानयोगस्तपः शुद्ध-माशंसादोषवर्जितम्। अभ्यासातिशयादुक्तं, तद्धि मुक्तेः प्रसाधकम् ॥ १ ॥ ज्ञानयोगस्तपः शुद्ध-मित्यादि यदुदीरितम्। ऐदम्पर्येण भावार्थ-स्तस्यायमभिधीयते ॥२॥ तथाहि, ज्ञानयोगस्य योगीन्द्रैः, परा काष्ठा प्रकीर्तिता। शैलेशीसंज्ञितं स्थैर्यं, ततो मुक्तिरसंशयम् ॥३॥ धर्मस्तत्त्वात्मधर्मत्वान्मुक्तिदः शुद्धिसाधनात्। अक्षयोऽप्रतिपातित्वात्, सदा मुक्तौ तथा स्थितेः ॥४॥"इत्यादि ॥८८॥ एकोननवतितमं श्लोकमवतारयति दूषणान्तरमुद्भरति—

आकर्षणादिनियताऽस्ति जपक्रियैव, पत्युः प्रदर्शयति सा न मुखं परस्य ॥<br>
वैकल्पिकी भवतु कारणता च याधे, द्वारित्यमप्युभयतो मुखमेव विश्वः ॥८९॥

यदुक्तं मन्त्रादौ क्रियारहितज्ञानमेव साधनमस्तीति, तदसत्, यत आकर्षणादिमन्त्रबोधनियता जपक्रि-

यैवास्ति, एवकारः प्रसिद्ध्यर्थः, तेन मन्त्रसन्तुष्टाकर्षकसुरक्रियाऽपि तत्रास्तीत्यभिव्यज्यते, सा च क्रिया पत्युः स्याद्वादिनो मुखं प्रदर्शयति, न तु परस्य ज्ञानैकान्तवादिनो जारस्य, यच्चोक्तं भरतप्रसन्नचन्द्रादौ क्रियाया इष्टफलं प्रति व्यभिचार इति, तत्रोच्यते–बाधे व्यभिचारे सति वैकल्पिकी विकल्पसिद्धा कारणताऽस्तु, तथा च तत्तत्क्रियायास्तत्तन्निर्जराद्वारा तत्तत्पुरुषीयमुख्यफलहेतुत्वात् न दोष इत्युक्तं भवति। उक्तं च–'संवरनिर्जररूपो बहुप्रकारस्तपोविधिः शास्त्रे ॥ रोगचिकित्साविधिरिव कस्यापि कथंचिदुपकारी'इति। द्वारित्वमप्युभयतो मुखमेव ज्ञानक्रिययोर्द्वयोस्तुल्यमेव विद्मः। यथा ज्ञाने प्रधाने क्रिया द्वारं तथा क्रियायां प्रधानायां ज्ञानस्यापि द्वारतायाः क्षायोपशमिकक्षायिकस्थलयोर्दृष्टत्वात्, क्षायोपशमिकज्ञाने सत्यपि यथाख्यातचारित्रं विना केवलज्ञानस्य क्षायिके केवलज्ञाने च सत्यपि शैलेशीकरणक्रियां विना मोक्षस्यानवाप्तेरिति दिग् ॥८९॥

कृपणेति, आकर्षणादीत्यादि श्लोकस्य–आकर्षणादिनियता जपक्रियैवास्ति, सा पत्युः मुखं प्रदर्शयति न परस्य, बाधे न वैकल्पिकी कारणता भवतु. द्वारित्वमप्युभयतो मुखमेव विद्मः इत्यन्वयः, उक्तश्लोकं विवृणोति यदुक्तमिति। "आकर्षणादि कृते किल मन्त्रबोधो, हीणेव दर्शयति तत्र न च क्रियास्यम् ॥८१॥" इत्यनेनोक्तमित्यर्थः। यत आकर्षणादिमन्त्रबोधेत्यादि, यतस्त्र्याद्याकर्षणे मन्त्रोपयोगवत् परिजपनादिक्रियाया अपि हेतुत्वमस्त्येवेत्यर्थः, तदुक्तं "परिजवणाई किरिया मंतेसु वि साहणं न तम्मत्तं। तन्नाणओ अ न फलं तन्नाणं जेणमकिरियं ॥१॥"इति। अथ परिजपनमपि धारावाहिकं मन्त्रज्ञानमेव, न तु वाग्व्यापाररूपा क्रियाऽपि, तूष्णींभावेन मन्त्रं जपतामपि फलसिद्धेरिति चेत्, न, पुरुषार्थे वनिताद्याकर्षणे परिजपनरूपमानसव्यापाराख्याया

अप्यन्तःक्रियाया हेतुत्वात् तदाह "तो तं कत्तो, भन्नइ तं समयनिबद्धदेवओवहियं। किरियाफलं चिय जओ न नाणमित्तोवओगस्स ॥१॥" इति। तेन प्रसिद्ध्यर्थकैवकारस्योपादानेन, मन्त्रसन्तुष्टाकर्षकसुरक्रियाऽपि तत्रास्तीति तत्तन्मत्रसङ्केतोपनिबद्धदेवताप्रेरणक्रियाऽपि मन्त्रादावस्त्येवेत्यर्थः। व्यभिचार इति "पश्यन्ति किन्न कृतिनो भरतप्रसन्न—चन्द्रादिपूभयविधं व्यभिचारदोषम्" ॥८२॥ इत्यादिश्लोकोक्तव्यतिरेकान्वयव्यभिचार इत्यर्थः। "द्वारीभवन्त्यपि च सा० ॥८२॥" इत्यनेन क्रियाया द्वारत्वमाश्रित्याप्राधान्यं ज्ञानस्य च प्राधान्यमिति यज्ज्ञानवादिनोऽभिमतं तत्प्रतिक्षेप्तुमाह द्वारित्वमप्युभयतो मुख्यमेवेति, एतदेव प्रपञ्चयति यथेति ॥८९॥ "ज्ञानं हि शोधकममुष्य० ॥८३॥" इत्यनेन यथावस्थिततत्त्वावबोधमन्तरेण न हि सम्यक्त्वशुद्धिरतस्तत्कारकतया ज्ञानं सम्यक्त्वादपि प्रधानमिति यदुक्तं तत्राह—

सम्यक्त्वशोधकतयाऽधिकतामुपैतु, ज्ञानं ततो न चरणं तु विना फलाय॥
ज्ञानार्थवादसदृशाश्चरणार्थवादाः, श्रूयन्त एव बहुधा समये ततः किम् ॥९०॥

सम्यक्त्वशोधकतयेति मूलश्लोकम्, अस्य चायमर्थः, ततः सम्यक्त्वात् ज्ञानमधिकतामुपैतु, तत्र हेतुमाह सम्यक्त्वशोधकतयेति, न तु न पुनः, चरणं विना चारित्रमन्तरेण, ज्ञानं ज्ञानमात्रं, फलाय मोक्षफलाय, भवतीति क्रियाऽध्याहारः, इति पूर्वार्द्धान्वयः, अयम्भावः श्रुतज्ञानादिसहचरितं यत्क्षायोपशमिकं चारित्रमुत्कृष्टतरं क्षायोपशमिकादिभावं परित्यज्य क्षायिकभावेन परिणमितं शैलेश्यवस्थायां परमनिवृत्तिलक्षणपरमस्थैर्यरूपं सञ्जातं तद्वारैव क्षायोपशमिकं ज्ञानमप्युत्कृष्टतरं क्षायिकभावमापन्नं मोक्षं प्रत्यव्यवहितकारणम्, न केवलं ज्ञानं न वा केवलं चारित्रमिति तदुक्तं "हयं नाणं कियाहीणं, हया अन्नाणओ किया।

पासंतो पंगुलो दड्ढो, धावमाणो अ अंधओ ॥१॥" इति, प्रयोगश्चात्र, न चरणहीनं ज्ञानम् ईप्सितार्थप्रापकं सत्क्रियाऽसहकृतज्ञान-त्वात्, दृष्टप्रदीपनकपलायनमार्गस्वदेशप्राप्त्यभिलाषिगमनक्रियाशून्यपङ्गुज्ञानवत्, सौत्रो वा दृष्टान्तः मार्गज्ञनिर्यामकाधिष्ठितेप्सित-दिक्सम्प्रापकपवनक्रियाशून्यपोतवत्, तथा चाह "जह छेयलद्धनिज्जामओवि, वाणियग इच्छियं भूमिं। वाएण विणा पोओ न एइ महण्णवं तरिउं ॥१॥ तह नाणलद्धनिज्जामओवि सिद्धिं वसहिं न पाउणइ। निउणोवि जीवपोओ, तवसंजममारुअविहूणो।२।" इति, क्रियाऽपि केवला नेप्सितार्थसाधिका सज्ज्ञानाऽसहकृतक्रियात्वात्, प्रदीपनकभयप्रपलायमानाऽन्धपुरुषक्रियावत् इति, नन्वेवं तर्हि किमीप्सितार्थसाधकमिति चेत्, ज्ञानक्रियोभयसद्भाव एव, तथाहि सम्यग्ज्ञानक्रियावान् भयेभ्यो मुच्यते उभयसंयोगवत्त्वात् प्रदीपनकभीतान्धस्कन्धारूढपङ्गुवत्, तदुक्तं "संयोगसिद्धीए फलं वयंति, न हु एगचक्केण रहो पयाइ। अंधो अ पङ्गू अ वणे समिच्चा ते संपउत्ता नगरं पविठ्ठा" इति, यश्च ज्ञाने अर्थवादः "आसक्तिमांश्च चरणे करणेऽपि नित्यम्" ॥८४॥ इत्यादिना प्रागुपदर्शितः तन्निरसनायोत्तरार्द्धमाह ज्ञानार्थवादसदृशाश्चरणार्थवादाः, श्रूयन्त एव बहुधा समये ततः किमिति, समये सिद्धान्ते, तथाहि सामाइयमाइयं सुयनाणं जाव बिन्दुसाराओ। तस्सवि सारो चरणं सारो चरणस्स निव्वाणं॥१॥ सुयनाणंमिवि जीवो वट्टंतो सो न पाउणइ मोक्खं। जो तवसंजममइए जोए न चएइ वोढुं जे ॥२॥ जह खरो चंदणभारवाही भारस्स भागी न हु चंदणस्स। एवं खु नाणी चरणेण हीणो नाणस्स भागी न हु सोग्गइए ॥ ३ ॥ सुबहुंपि सुअमहीअं किं काही चरणविप्पहीणस्स। अन्धस्स जह पलित्ता दीवसयसहस्सकोडीवि ॥४॥ इत्यादि—

अर्थवादाः स्तुतिवाक्यानि ॥९०॥ चरणार्थवादानेव दर्शयति—

शास्त्राण्यधीत्य बहवोऽत्र भवन्ति मूर्खा, यस्तु क्रियैकनिरतः पुरुषः स विद्वान् ॥
सञ्चिन्त्यतां निभृतमौषधमातुरं किं, विज्ञातमेव वितनोत्यपरोगजालम् ॥ ९१ ॥

शास्त्राण्यधीत्य बहव इति, अत्र इह लोके, शास्त्राण्यधीत्य बहवो, जना इति शेषः, मूर्खाः सारासारविवेकरहिताः भवन्ति, यस्तु यः पुनः पुरुषः, क्रियैकनिरतः शास्त्रविहितक्रियैकनिष्ठः, स पुरुषः विद्वान् तत्त्वातत्त्वविवेकवान्, न केवलं ज्ञानं स्वकार्यसाधकं किन्तु क्रियासनाथ मित्यर्थं द्रढीकर्तुं दृष्टान्तमाह सञ्चिन्त्यतामिति, आतुरं रोगनिवृत्त्यभिलाषिणं पुरुषम्, औषधं विज्ञातमेव औषधसेवनपथ्यादिक्रियां विनैव रोगिणा ज्ञातमात्रं सत्, अपरोगजालं अपगतरोगसमूहं, किं वितनोति, काकुपाठात् अपि तु न वितनोति, इत्येवं निभृतं नेत्रे निमील्य सञ्चिन्त्यतामिति सङ्क्षेपार्थः ॥ ९१ ॥

ज्ञानं स्वगोचरनिबद्धमतः फलाप्ति–र्नैकान्तिकी चरणसंवलितात् तथा सा ॥
ज्ञातानि चात्र तरणोत्कनदीपथज्ञा–श्चेष्टान्वितास्तदितरे च निदर्शितानि ॥ ९२ ॥

ज्ञातानि चात्रेत्यादि–यथा तरणोत्कनदीपथज्ञास्तरणनृत्यमार्गगमनोपायं जानन्तोऽपि तरणाद्यनुकूलकाययोगक्रियां विना नाभिमतफलभाजस्तथा सम्यग् मोक्षमार्गोपायज्ञोऽपि क्रियाविकल इति भावः। प्रसिद्धं चैतत्, 'जाणंतो वि य तरिउं' इत्याद्यावश्यकग्रन्थे ॥ ९२ ॥

ज्ञानमित्यादिश्लोकस्याऽयमर्थः, ज्ञानं स्वगोचरनिबद्धं स्वविषयविषयकं, जातमित्यध्याहार्यम्, अतः अस्मात्कारणात्, विषयसङ्घटितमूर्तिकाच्चरणनिरपेक्षाद् ज्ञानात्, एकान्तिकी अवश्यम्भाविनी, फलाप्तिर्न फलप्राप्तिर्न, भवतीतिशेषः, चरणसंव-

सम्यक्त्वार्थं कल्पलतिकोपेतम् । ॥५२१॥

यात्रादोषदर्शनम् ।

लितात् चरणसहकृतात्, विभक्तिव्यत्ययेन ज्ञानादित्यनेनास्यान्वयः, तथा एकान्तिकी, सा फलाप्तिः, उक्तार्थदार्ढ्यार्थं निदर्शनान्याह ज्ञातानीति, तदितरे चेष्टाविकलाः त्रयोऽपि, तितीर्पुर्नर्त्तकी मार्गज्ञश्च, उत्तरार्द्धस्य भावार्थमाविष्करोति ज्ञातानि चात्रेत्यादिना, संवदन्ति चात्रावश्यकनिर्युक्तिगाथाः, ताश्चेमे "नाणं सविसयनिययं, न नाणमित्तेण कज्जनिप्फत्ती। मग्गण्णू दिट्ठंतो, सचेट्ठो अचेट्ठोय ॥१॥ आउज्जनट्टकुसला, वि नट्टिया तं जणं न तोसेइ। जोगं अज्जुंजमाणी, निंदं खिंसं च सा लहइ ॥२॥ इय लिङ्ग नाणसहिओ, काइयजोगं न जुंजई जो उ। न लहइ स मुक्खसुखं, लहइ य निंदं सपक्खाओ ॥ ३ ॥ जाणंतोऽवि य तरिउं काइयजोगं ण जुंजइ जो उ नईए। सो वुड्डइ (वुज्झइ) सोएणं, एवं नाणी चरणहीणो ॥४॥ इति ॥९२॥

मुक्त्वा नृपो रजतकाञ्चनरत्नखानी–र्लोहाकरं प्रियसुताय यथा ददाति ॥
तद्वद्गुरुः सुमुनये चरणानुयोगं, शेषत्रयं गुणतयेत्यधिका क्रियैव ॥ ९३ ॥

मुक्त्वेतिमूलश्लोकस्य यथा नृपः प्रियसुताय रजतकाञ्चनरत्नखानीर्मुक्त्वा लोहाकरं ददाति, तद्वद् गुरुः सुमुनये चरणानुयोगं ददातीत्यस्यानुकर्पः, नन्वेवं तर्हि किं द्रव्यगणितधर्मकथानुयोगान् नैव ददातीत्यत आह शेषत्रयं गुणतयेति, ददातीत्यप्यत्र योज्यम्, ततः क्रियायाः प्राधान्यमाविष्करोति, तदेवाह इत्यधिका क्रियैवेति सङ्क्षेपार्थः। चत्तारि उ अणुओगा, चरणे धम्मगणियाणुओगेय। दवियणुजोगे य तहा, अहक्कमं ते महिड्ढीया ॥१॥ सविसयबलवत्तं पुण, जुज्जइ तहवि अ महिड्ढिअं चरणं। चारित्तरक्खणट्ठा, जेणिअरे तिन्नि अणुओगा ॥ २ ॥ चरणपडिवत्तिहेउं, धम्मकहा कालदिक्खमाईया। दविए दंसणसुद्धी, दंसणसुद्धस्स चरणं तु ॥३॥ जह रण्णो विसएसुं, वयरे कणगे अ रययलोहे अ। चत्तारि आगरा खलु, चउण्ह पुत्ताण ते दिन्ना ॥४॥ चिंता

लोहागरिए, पडिसेहं सोउ कुणइ लोहस्स । नयराईहिं अं गहणं, करिंति लोहस्स तिमियरे ॥५॥ एवं चरणम्मि ठिओ, करेइ गहणं विहीइ इयरेसिं । एएणं कारणेणं, हवइ उ चरणं महड्ढीअं ॥६॥ इति पारमर्षोक्तिमनुसरन्नुक्तश्लोकभावार्थं ग्रन्थकार एवाह—

यथा राज्ञा प्रियसुताय दत्तो लोहाकरः प्रदत्तरजताद्याकराणां त्रयाणां सुतानां परमक्षत्रदेवतायुधादिसम्पादनाय स्वस्वाकरभागविनियोगद्वारोपजीव्यस्तथा सुचारित्रिणे गुरुणा दत्तश्चरणानुयोगो गणितधर्मकथाद्रव्यानुयोगैर्दीक्षाकालपरिज्ञानवैराग्योत्पादनसम्यक्त्वशोधनरूपस्वसारविनियोजनद्वारोपजीव्य इत्येवमभ्यर्हिता क्रियैवेति भावः ॥ ९३ ॥

यथा राज्ञेत्यादि, यथा राज्ञा प्रियसुताय दत्तो लोहाकर इति, अस्य उपजीव्य इत्यनेनान्वयः, उपजीव्यः आश्रयितव्यः, अवलम्बनीय इति यावत्, केषामित्यपेक्षायामाह प्रदत्तरजताद्याकराणां त्रयाणां सुतानामिति, तेषां किमर्थमुपजीव्य इत्यपेक्षायामाह परमक्षत्रदेवतायुधादिसम्पादनायेति, किं द्वारोपजीव्य इत्यत आह स्वस्वाकरभागविनियोगद्वारेति। दृष्टान्तमुपदर्श्य दार्ष्टान्तिकमुपदर्शयति तथा सुचारित्रिणे गुरुणा दत्तश्चरणानुयोग इति, गणितधर्मकथाद्रव्यानुयोगैरिति, अत्र द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमपि सम्बध्यत इति परिभाषयाऽनुयोगपदस्य गणितपदधर्मकथापदद्रव्यपदत्रयेण सहान्वयः, एवमग्रेऽपि यथाक्रममन्वयः कर्त्तव्यः, गणितानुयोगेन दीक्षाकालपरिज्ञानरूपस्वसारविनियोजनद्वारा धर्मकथानुयोगेन वैराग्योत्पादनरूपस्वसारविनियोजनद्वारा द्रव्यानुयोगेन च सम्यक्त्वशोधनरूपस्वसारविनियोजनद्वारा चरणानुयोग उपजीव्य इति चरणस्याभ्यर्हितत्वमित्यर्थः । प्रदत्तरजताद्याकराणां त्रयाणां पुत्राणां राज्ञा प्रियपुत्राय यः प्रदत्तो लोहाकरस्त-

दनपेक्षायां सत्यां ततस्तेन प्रियपुत्रेण लोहक्रयनिषेधे कृते अपूर्वोत्पादनिरोधे च कृते रजताद्याकरत्रयप्रवृत्तिर्न भवति, रजतादिनिष्काशकलोहोपकरणाभावात्, यानि च राज्ञा प्राक्प्रदत्तानि लोहोपकरणानि तेषु क्षयं प्रतिपन्नेषु सत्सु नव्यरजतादिनिष्काशनं न भवतीति लोहोपकरणनिष्पादनाय एवं प्राक् प्रदत्तखड्गादिशस्त्रक्षये सति तदऽतिरिक्तशस्त्राभावे राज्यसंरक्षणमपि न भवतीति तत्संपादनाय च रजतकाञ्चनवज्राकरिकाः पुत्राः स्वस्वाकरोत्खातरजतादिभिः हस्त्यादिभिश्च लोहाकरोत्खातलोहग्रहणं कुर्वन्तीति लोहाकर उपजीव्यः, तत्र यथाऽसौ लोहाकर उपजीव्यत्वेन रजतकाञ्चनवज्राकराणामाधारभूतः, तत्प्रवृत्तौ सत्यामेव तेषामपि प्रवृत्तेः, एवमत्रापि चरणानुयोगः गणितधर्मकथाद्रव्यानुयोगानामाधारभूतः, तत्प्रवृत्तौ तेषामपि प्रवृत्तेः,तथाहि चरणे व्यवस्थितो यस्साधुस्स एव शास्त्रोक्तविधिना शेषानुयोगग्रहणसमर्थो भवति नान्य इति चरणं महार्द्धिकमित्यभिप्रायः ॥९३॥

प्रज्ञापनीयशमिनो गुरुकुलवास एव श्रेयान्,तत एव ज्ञानाद्युपपत्तेः,तत एव च ज्ञाने दर्शने चारित्रे च स्थैर्योपपत्तेरित्युपदर्शयितुमाह—

प्रज्ञापनीयशमिनो गुरुपारतन्त्र्यं, ज्ञानस्वभावकलनस्य तथोपपत्तेः ॥
ध्यान्ध्यं परं चरणचारिमशालिनो हि, शुद्धिः समग्रनयसङ्कलनावदाता ॥ ९४ ॥

प्रज्ञापनीयेत्यादि, प्रज्ञापनीयशमिन इति, गीतार्थेनाऽनन्यगुणाऽऽवासकेन श्रीगुरुणाऽनुग्रहबुद्ध्या प्रज्ञापयितुं संबोधयितुं योग्यस्य शमदमादिगुणशालिनस्साधोरित्यर्थः। ननु किं स्वरूपश्शिष्यः प्रज्ञापनीय इति चेत्,उच्यते,उद्धृतोऽहमनेनाकारणवत्सलेनातिघोरसंसारकूपकुहरे निपतन्निति हेतोर्ममायं परमोपकारी धर्माचार्यो भगवान्,यदाज्ञाराधनप्रभावान्मादृशजना अप्यनभिज्ञाः कुशलानुष्ठानकृतयो भवतारकगुर्वमृतदृष्टिकाङ्क्षिणो भद्रपरिणामिनश्चारित्रभारोद्वहनसमर्था भवन्ति,तदुक्तम्,"गुरुपयसेवानिरओ,गुरुआणारा-

हणंमि तल्लिच्छो। चरणभरधरणसत्तो, होइ जई नन्नहा नियमा" इति, अस्य च धर्मगुरोर्बहुमानात् सगौरवदर्शनात् अलज्जापुरस्सरं सेवकभावेन तदाज्ञावर्त्तनाद् गुणप्रतिपत्तियोग्यताप्राप्त्या गुणावासस्तेन च कृतज्ञः कृतार्थश्च भविष्यामि, अस्य च भगवतो यावज्जीवं शिष्यभावेन गुरुकुलवासो न मोक्तव्यः, तस्य महाफलत्वात्, पठ्यते च "नाणस्स होइ भागी, थिरयरओ दंसणे चरित्ते य। धण्णा आवकहाए, गुरुकुलवासं न मुञ्चन्ति" इति, इत्येवं धर्माचार्यबहुमानी,पुनः "कइआ आमरणंतं, धन्नमुणिनिसेवियं च सेविस्सं। नीसेसदोसनासं, गुरुकुलवासं गुणावासं ॥१॥ कइआ सारणवारण, चोयणपडिचोअणाइ सम्ममहं। कम्मि वि पमायखलिए, साहूहिं कयं सहिस्सामि" ॥२॥ इति भावनाभावितान्तःकरणः "गिर्भिर्गुरूणां परुषाऽक्षराभिस्तिरस्कृता यान्ति नरा महत्त्वम्। अलब्धशाणोत्कषणा नृपाणां न जातु मौलौ मणयो विशन्ति ॥१॥ धन्यंस्योपरि निपतत्यहितसमाचरणधर्मनिर्वापी। गुरुवदनमलयनिसृतो वचनरसश्चंदनःस्पर्शः" ॥२॥ इति कृतिवचनामृताऽऽसिक्तगात्रः,अत एव निष्ठुरमपि शिक्षितोऽकलुषितचित्तवृत्तिः कृतज्ञतां मनसि भावयन् ज्ञानादिगुणगणनिदानभूतां गुर्वाज्ञां धन्यंतम एवं सुप्रसन्नमनाः प्राणान्तेऽपि न मुञ्चतीति सैव छत्रवच्छिरसि धार्या, इत्येवमभिप्रायशालिनो न शठभावः, नवाऽसद्ग्रहवासनावासितभाव इति स एव शिष्योऽनुग्रहबुद्ध्या गुरुणा प्रज्ञापनीयः,"जे मे गुरूसययं अणुसासयंति तेहं गुरू सययं पूजयामीति भावनाभावितात्मा कदाचिदनाभोगेन प्रमादभावे प्रवृत्तोऽपि स एव प्रज्ञापनीयः, आज्ञारुचित्वात् तस्य, उक्तञ्च एकादशे पञ्चाशके "आणारुइणो चरणं, आणाए च्चिय इमंति वयणाओ। एत्तोऽणाभोगम्मि वि, पन्नवणिज्जो इमो होइ" ॥१॥ इति, नेतरः, तस्य स्वाग्रहग्रहग्रहिलस्याकृत्यविषयादनिवर्त्तनीयस्य तु सर्वज्ञेनापि प्रज्ञापयितुमशक्यत्वादिति बाढमप्रज्ञापनीयस्य तस्य मूढस्य गुरुकुलवासोऽपि निष्फलः, तदुक्तं "जस्स गुरुम्मि न भत्ती,नय बहुमाणो न गउरवं न भयं नवि लज्जा, न वि नेहो गुरुकुलवासेण

किं गस्स ॥१॥" इति। गुरुपारतन्त्र्यं गुर्वाज्ञावशवर्त्तित्वं गुरुकुलवास इतियावत्, तदेव सर्वगुणमूलभूतम्, तत्सत्त्व एव तत्सत्त्वात्। उक्तञ्च "सव्वगुणमूलभूओ, भणिओ आयारपढमसुत्ते जं। गुरुकुलवासो वस्सं, वसेज्ज तो तथ्थ चरणत्थी" ॥१॥ इति, स एव सुखावासः गुणस्थानत्वात्, यतः कोऽपि मुनिः कर्मोदयेन कदाचिच्चारित्रमार्गान्निर्गतभावो भवेत्तदापि गच्छस्थाः करुणारसन्यासस्वान्तमहामुनयो रक्षन्ति तं मुनिम्, तदुक्तं "जइवि य निग्गयभावो तहा वि रक्खिज्जइ स अन्नेहिं। वंसकडिल्ले छिन्नो वि वेणुओ पावए न महिं ॥१॥" एतस्मिन् परित्यक्ते भगवदाज्ञैव परित्यक्तेत्युभयलोकपरित्यागः कृतस्तेन, तदुक्तं "एसा य परा आणा, पयडा जं गुरुकुलं न मोत्तव्वं। आयारपढमसुत्ते एत्तोच्चिय दंसियं एयं ॥१॥ एयम्मि परिच्चत्ते आणा खलु भगवतो परिच्चत्ता। तीए य परिच्चागे दोण्हवि लोगाण चाउत्ति" ॥२॥ इति। ज्ञानस्वभावकलनस्य तथोपपत्तेरिति, ज्ञानस्वभावकलनस्य ज्ञानस्वभाववृद्धेर्गुरुपारतन्त्र्यादेवोपपत्तेरित्यर्थः, माषतुषादीनामिव स्वयं विशेषतो ज्ञानविरहेऽपि गुरुपरतन्त्राणामपूर्वज्ञानोत्पत्तिश्शास्त्रेऽपि श्रूयते, तदुक्तं एकादशे पञ्चाशके "गुरुपारतंतनाणं, सद्दहणं एयसंगयं चेव। एत्तो उ चरित्तीणं, मासतुसादीणमुद्दिट्ठम्" इति, गुरुपारतन्त्र्यरहितस्योत्कृष्टचारित्रक्रियावतोपि ध्यान्ध्यमेव, तत्फलाभावादित्याह ध्यान्ध्यमित्यादि, अन्धस्यापि या सन्मार्गे प्रवृत्तिस्सा सञ्जाक्षसहायनरवचनानुवर्त्तकत्वादेव, तद्वदगीतार्थस्यापि या मोक्षसन्मार्गे प्रवृत्तिस्सा गीतार्थवचनानुसरणादेव, तद्विपरीतभावे तु उत्कृष्टक्रियाकारिणोऽपि घोरसंसारकान्तार एव पातः, तदुक्तं "छट्ठअट्ठमदसमदुवालसेहिं, मासद्धमासखवणेहिं। अकरिंतो गुरुवयणं अणंतसंसारिओ भणिओ" ॥१॥ इति। शुद्धिः समग्रनयसङ्कलनावदातेति शुद्धिरात्मनः कर्मराहित्यावस्था न केवलं क्रियानयाधीना, नवा केवलं ज्ञाननयाधीना, किन्तु परस्परसापेक्षतदुभयनयाधीनैवेति भावः ॥ ९४ ॥

न श्रेणिकस्य न च सत्यकिनो न विष्णोः, सम्यक्त्वमेकममलं शरणं बभूव ॥
चारित्रवर्जिततया कलुषाविलास्ते, प्राप्ता गतिं घनतमैर्निचितां तमोभिः ॥९५॥

न श्रेणिकस्येतिश्लोको निगदार्थः । नवरं सम्यक्त्वमेकममलमिति, यदनुत्तरसम्यग्दर्शनप्रभावादेवानागतोत्सर्पिण्यां जगत्रयसाम्राज्यरूपतीर्थंकरपदवीमवाप्स्यति, श्रेणिकमुद्दिश्योक्तञ्च "ज्ञानचारित्रहीनोऽपि, श्रूयते श्रेणिकः किल । सम्यग्दर्शनमाहात्म्यात्, तीर्थकृत्त्वं प्रपत्स्यते" ॥१॥ इति, तत्संवादिका चेयं गाथाऽऽवश्यकनिर्युक्तौ "दसारसीहस्स य सेणियस्स, पेढालपुत्तस्स य सच्चइस्स । अणुत्तरा दंसणसंपया तया, विणा चरित्तेणऽहरं गइं गया ॥१॥" सत्यकिज्ञाते उपदेशमालाकारा अप्याहुः । सम्मदिट्ठी वि कयागमोवि, अइविसयरागसुहवसओ । भवसंकडम्मि पविस्सइ, इत्थं तुह सच्चई नायं ॥१॥" इति, अहरं गइं इति, नरकगतिमित्यर्थः । यस्मात् श्रेणिकादीनां ज्ञानचरणरहितेन दर्शनमात्रेण न मोक्षस्सञ्जातः, किन्तु ते सम्यग्दृष्टयोऽपि बहुश्रुतचरणरहितत्वान्नरकं गताः, यदा कदापि मोक्षं गमिष्यन्ति तदापि ज्ञानचरणबलादेवेति न केवलं दर्शनपक्ष एवावलम्बनीय इति भावः ॥९५॥

न ज्ञानदर्शनधरैर्गतयो हि सर्वाः, शून्या भवन्ति नृगतौ तु चारित्रमेकम् ॥
न ज्ञानदर्शनगुणाढ्यतया प्रमादः, कार्यस्तदाऽऽर्यमतिभिश्चरणे कदापि ॥ ९६ ॥

न ज्ञानेत्यादिश्लोको निगदार्थः, न ज्ञानदर्शनधरैर्गतयो हि सर्वाः शून्या भवन्तीति, उक्तञ्च आवश्यकनिर्युक्तौ "सव्वाओ वि गईओ, अविरहिया नाणदंसणधरेहिं । तं मा कासि पमायं, नाणेण चरित्तरहिएणं ॥१॥" इति, उक्तञ्च प्रवचनसारोद्धारेऽप्येकोनपञ्चाशदधिकशततमद्वारे "आईपुढवीसु तिसु, खय १ उवसम २ वेयगं ३ च समत्तं । वेमाणियदेवाणं, पणिं-

दितिरियाण एमेव ॥१॥ सेसाण नारयाणं, तिरियत्थीणं च तिविहदेवाणं । नत्थि हु खइयं सम्मं, अन्नेसिं चेव जीवाणं ॥२॥" इति, आईपुढवीसुत्ति आद्यासु तिसृषु पृथिवीसु रत्नप्रभाशर्कराप्रभावालुकाप्रभानरकत्रयवर्त्तिनारकाणामित्यर्थः, खय १ उपशम २ वेयगं ३ इति क्षायिकमौपशमिकं क्षायोपशमिकं चेति त्रीण्यपि सम्यक्त्वानि सम्भवन्तीत्यर्थः। वेमाणियदेवाणं वैमानिकदेवानां, पणिंदितिरियाण पञ्चेन्द्रियाणां मनुष्याणां तिरश्चां वा, एवमेव पूर्वोक्तानि त्रीण्यपि सम्यक्त्वानि सम्भवन्तीत्यर्थः ॥१॥ सेसाण नारयाणंत्ति पङ्कप्रभाद्यधस्तनपृथिवीचतुष्टयनारकाणामित्यर्थः। तिरियत्थीणं चत्ति असङ्ख्येयवर्षायुष्कसंज्ञिपञ्चेन्द्रियतिरश्चां तत्स्त्रीणां चेत्यर्थः। तिविहेति भवनपतिव्यन्तरज्योतिष्केत्यर्थः, नत्थि हु खइयंत्ति क्षायिकसम्यक्त्वं नास्ति, औपशमिकक्षायोपशमिके तु भवत इत्यर्थः। सम्मं अन्नेसिं चेव जीवाणंत्ति, नत्थि इत्यस्यान्वयात् अन्येषामेकद्वित्रिचतुरिन्द्रियाऽसंज्ञिपञ्चेन्द्रियाणां पुनः सम्यक्त्वमेव नास्तीत्यर्थः, दंसणे नियमा नाणंत्ति वचनात् सम्यक्त्वनियतमेव ज्ञानमिति हेतोरत्र तत्सहचरितं क्षायोपमिकज्ञानमपि तदनुसारि विशुद्धं ज्ञेयमिति सङ्क्षेपार्थः, विस्तरार्थस्तु तट्टीकातोऽवसेयः। सम्यग्दर्शनज्ञानयोश्चतुर्गतिकजीवस्वामिकत्वादेवैहभविकत्वं पारभविकत्वं तदुभयभविकत्वञ्च भगवत्यामुक्तं सङ्गच्छते, तत्पाठश्चैवं, "इहभविए भंते नाणे परभविए नाणे तदुभयभविए नाणे ? गोयमा इहभविए वि नाणे परभविए वि नाणे तदुभयभविए वि नाणे। दंसणंपि एवमेवत्ति," चारित्रं तु सम्यग्दर्शनज्ञानवन्न चानुगतिकं, किन्तु मनुष्यगतिकमेव, अतएवैहभविकम्, तत् क्रियानुष्ठानरूपमिति तत्परिणामस्य यावज्जीवावधिकत्वात्, न हि चारित्रवानिह भूत्वा तेनैव चारित्रेण कश्चित्पुनश्चारित्री भवति, उक्तञ्च "इहभविए भंते चरित्ते परभविए चरित्ते तदुभयभविए चरित्ते ? गोयमा इहभविए चरित्ते नो परभविए चरित्ते नो तदुभयभविए चरित्ते" इति, एतेनैवाभिप्रायेण ग्रन्थकारोप्याह

नृगतौ तु चरित्रमेकमिति, ननु देवादीनां सामायिकचारित्रविषयिणीच्छैव न भवतीति न तत्प्राप्तिरिति वाच्यं, सम्यग्दृष्टीनां तेषां तत्सद्भावस्याऽगमेप्युक्तत्वात्, पठ्यते च "सामायिकसामग्गीं, देवावि चिंतंति हिययमज्झंमि। जइ हुज्ज मुहूत्तमेगं, ता अह्मं देवत्तणं सहलं ॥१॥" इति, देवांगनादिरागतोप्यधिकतरचारित्ररागसद्भावेपि यत्तदग्रहणं तच्चारित्रमोहनीयकर्मणो बलवत्तरत्वात्, तथाच सिद्धं चारित्रं मनुष्यगतावेवेति, तत्रापि न सर्वेषां तत्संप्राप्तिः, केषांचित् प्रबलमिथ्यादृष्टीनां कुशलानुष्ठानरूपचारित्ररागस्यैवाभावात्, येषां सम्यग्दृष्टीनां कान्तारातीतदरिद्रब्राह्मणघृतपूर्णभोजनाभिलाषाधिकचेतसोऽनुबन्धसद्भावस्तेषामपि सामग्रीवैकल्यात्तदप्राप्तिः, प्रबलतरकर्मोदयेन कथञ्चिदन्यथा प्रवृत्त्या चारित्राऽप्राप्तावपि तेषां चारित्रेच्छाप्राबल्यं न च दुर्वचम्, उक्तश्च "धर्मरागोऽधिको भावाद्भोगिनस्त्र्यादिरागतः। प्रवृत्तिस्त्वन्यथाऽपि स्यात् कर्मणो बलवत्तया ॥१॥ तदलाभेपि तद्रागबलवत्त्वं न दुर्वचम्। पूथिकाद्यपि यद्भुङ्क्ते घृतपूर्णप्रियो द्विजः" ॥२॥ इति, तथाच मनुष्यगतावपि सुदुर्लभतरं चारित्रमिति मत्वा ज्ञानदर्शनगुणाढ्यतया धर्मार्थिभिः चारित्रे न कदापि प्रमादो विधेय इत्याशयेनोत्तरार्द्धमाह न ज्ञानदर्शनेति, एतेन "थोवं वि अणुट्ठाणं आणपहाणं हणेइ पावभरं। लहुओ रविकरपसरो दहदिसि तिमिरं पणासेई" इति पारमर्षोक्तेस्सम्यक्त्वपुरस्सरमेव कृतं धर्मानुष्ठानं पापभरोच्छेदकम्, तद्व्यतिरेकेण कृतं सर्वं तामलितापसदुष्करतरतपोऽनुष्ठानवत् न तथाविधफलोत्पादकमित्यतो जैनप्रवचनमूलभूतसम्यग्दर्शनं दृढतरमवलम्बनीयम्, आत्मप्रकाशकत्वाज्ज्ञानमप्यवलम्बनीयम्, चारित्रं तु नावलम्बनीयम्, यतो भरतस्याभरणादिविभूषितस्य राज्यविभूतिमनुभवतो बाह्यकरणभूतरजोहरणाद्यभावेप्यात्मविशुद्ध्या केवलज्ञानमुत्पन्नमिति तस्य बाह्यकरणं तदानीं नासीदिति तन्न दोषोत्पादकं सञ्जातं, प्रसन्नचन्द्रस्य बाह्यरजोहरणमुखानन्तकादिसद्भावेऽपि आत्मविशुद्ध्यभावेन सप्तमनरकप्रायोग्यकर्मबन्धोऽभूत् पश्चा-

दान्मविशुद्ध्या मोक्षो जात इति तस्यापि बाह्यकरणं गुणकरं न जातं, किन्त्वात्मविशुद्धिः, अतो रजोहरणादिकं बाह्यकरणमनैकान्तिकमिति किमनेनेत्यपि निरस्तम्, भरतस्य यद्यपि पूर्वकालावच्छेदेन बाह्यचारित्रं नास्ति तथाप्यभ्यन्तरचारित्रं तु तस्यापि सञ्जातमेव, यतस्तदभावे तथाविधात्मविशुद्धिरेव न स्यात्, तद्रूपत्वात्तस्य, द्रव्यलिङ्गमपि पश्चाद् देवार्पितं सञ्जातमेव, तदभावे प्रणामानर्हत्वेन प्रणाममेवोचितविधिज्ञः सुरेन्द्रोऽपि न कुर्यात्, उक्तञ्च श्रीजम्बूद्वीपप्रज्ञप्तौ "तएणं से भरहे केवली सयमेवाभरणालंकारं ओमुअइ" इति वृत्तटीकायां केवलज्ञानानन्तरं स भरतः आसनप्रकम्पावधिना शक्रेण केवलिन्! द्रव्यलिङ्गं प्रपद्यस्व यथाऽहं वन्दे विदधे च निष्क्रमणोत्सवमित्युक्तस्सन् स्वयमेवाऽऽभरणभूतमलङ्कारं वस्त्रमाल्यरूपमवमुञ्चतीत्यादि। आवश्यकवंदनकाध्ययनचूर्णावप्युक्तं "जदा वा दव्वलिंगं नत्थित्ति न कोइ तेण पणमति, भणितं च–किह लिंगं न पमाणं उप्पण्णे केवलंमि जं नाणे। न नमंति जिणं देवा सुविहितणेवत्थपरिहीणं, जदा दव्वलिङ्गं गहितं ताहे नमिज्जति" इति, प्रसन्नचन्द्रस्यापि यत्पश्चादात्मविशुद्धिस्सञ्जाता सापि रजोहरणादिबाह्यलिङ्गदर्शनबलादेवेति द्रव्यलिङ्गमप्यात्मविशुद्धिकारणत्वादवलम्बनीयमेव। ननु मरुदेवामाता देवार्पितवेषरूपद्रव्यचारित्रमन्तरेणैवान्तकृत्केवली भूत्वा मोक्षं गतेति तत्र व्यभिचारान्न चारित्रं कारणमिति चेत्, न, यत आहत्य भावमात्रेण न कारणभावो विघटते, तथाहि भरतादीनां केवलज्ञानानन्तरमन्यत्रध्यानेन न मुक्तिरिति स्वायुर्दीर्घकालसद्भावेन द्रव्यचारित्रमपि तैर्गृहीतम्, मरुदेव्यादीनां तु द्रव्यचारित्रग्रहणेच्छामन्तरेण भावचारित्रमपि न स्यादिति द्रव्यचारित्रग्रहणेच्छाप्राबल्येऽपि केवलज्ञानानन्तरमन्तर्मुहूर्त्तकालमात्रेण मुक्तिसौधाऽऽरोहणाद् दीर्घकालस्य कारणीभूतस्याभावादेव द्रव्यचारित्रग्रहणाऽभावः, न तु द्रव्यचारित्रस्य कारणत्वाऽभावात्, तथा सति स्वायुषो दीर्घकालं पश्यन्तोऽपि केवलिनो न तं गृह्णीयुः, न चैवम्, अत एव यथाऽन्यलिङ्गिनामपि भावतः

सम्यक्त्वादिप्रतिपन्नानां केवलज्ञानमुत्पद्यते तत्समयं कालं कुर्वन्ति तदाऽन्यलिङ्गसिद्धाः ज्ञातव्याः, अन्यथा यदि दीर्घमायुष्कमात्मनः पश्यन्ति ततः साधुलिङ्गमेव प्रतिपद्यन्त इति प्रवचनसारोद्धारटीकाकारवचनमपि सङ्गच्छते, यद्वा सर्वसंवररूपभावचारित्रं तु तत्राप्यस्त्येवेति चारित्रत्वेन कारणभावाऽभ्युपगमे न कोऽपि दोषः। किञ्च दर्शनज्ञानाभ्यामेव चरणरहिता यदि सिद्ध्यन्ति तदा तव बुद्ध्या नैरयिका तिर्यञ्चो देवा अकर्मभूमिमनुष्या अपि सिद्ध्येयुः, यतस्तेषामपि ज्ञानदर्शने स्तः, नच सिद्ध्यन्ति चरणविरहात्, तस्माचरणमप्यवलम्बनीयमेव, तदपलापे मिथ्याभावप्रसङ्गात्, तथा च सिद्धमिदं सम्यग्दर्शनज्ञानवच्चारित्रमपि मोक्षसाधकम्, त्रयाणां समायोग एव मोक्षप्राप्तेः, उक्तञ्च "तिण्हं समायोगेण नेव्वाणं लब्भतित्ति", भाग्योदयवशाच्चारित्रावाप्तौ सत्यां न तत्र प्रमादो विधेयः, तस्यानिष्टानुबन्धित्वात्, उक्तञ्च "जइ चउदस पुव्वधरो, वसइ निगोएसु अणंतयं कालं। निद्दापमायवसओ, ता होहिसि कहं तुमं जीव ॥१॥ जं अज्जियं चरित्तं, देसूणाए वि पुव्वकोडिए। तंपि कसाईअमत्तो, हारेइ नरो मुहुत्तेणं" ॥ २ ॥ इति। प्रवचनसारोद्धारे चतुर्दशोत्तरशततमद्वारेऽप्युक्तं "चउदसपुव्वी आहारगावि मणनाणि वीयरागा वि। हुंति पमायपरवसा तयणंतरमेव चउगइया" ॥ १ ॥ इति। तर्हि किं कर्तव्यमिति चेत्, मुनिभावे स्थित्वा ज्ञानविषये नवनवसंवेगश्रद्धया प्रह्लादपूर्वकं नवनवश्रुतसम्पदुपार्जनम्, तदेव महाफलकं, यदुक्तम्, "जह जह सुयमवगाहइ, अइसयरसपसरसंजुयमउव्वं। तह तह पल्हाइ मुणी, नवनवसंवेगसद्धाए ॥१॥ अपुव्वनाणगहणा निच्चब्भासेण केवलुप्पत्ती। भणिया सुयंमि तम्हा एयंमि महायरो जुत्तो ॥२॥ तथा "अत्थो जस्स जिणुत्तमेहिं, भणिओ जायंमि मोहक्खए। बद्धं गोयममाइएहिं, सुमहाबुद्धीहिं जं सुत्तओ ॥१॥ संवेगाइगुणाण वुड्ढिजणणं, तित्थेसनामावहं कायव्वं। विहिणा सया नवनवं, नाणस्स तस्सज्जणं" ॥२॥ इति, तथा चारित्रविषये विशुद्धविशुद्धतरसंयमस्थानाऽवाप्तये सद्भाव-

नागारं सर्वमनुष्ठानमुपयोगपुरस्सरमेव कर्त्तव्यं, यस्मादप्रमादकृताः सर्वेऽपि साधुव्यापारा उत्तरोत्तरसंयमकण्डकारोहणेन केवलज्ञानलाभाय भवन्ति, तथा चागमः "जोगे जोगे जिणसासणम्मि दुक्खक्खया पउज्जंते। एक्केक्कंमि अणंता, वट्टंता केवली जाया ॥१॥ तथा कम्ममसंखिज्जभवं, खवइ अणुसमयमेव उवउत्तो। अन्नयरंमि वि जोए, सज्झायंमि य विसेसेण" ॥२॥ इति, इत्यलं पल्लवितेन।

आद्यश्चरित्रपतितोऽपि च मन्दधर्मा, पक्षं त्रयोऽपि कलयन्त्विह दर्शनस्य ॥
चारित्रदर्शनगुणद्वयतुल्यपक्षा, दक्षा भवन्ति सुचरित्रपवित्रचित्ताः ॥९७॥

आद्यश्चरित्रपतितोऽपीत्यादिश्लोकः, आद्यः अर्हत्तत्त्वविषयकमतिज्ञानापायांशरूपसम्यग्दर्शनवान् चारित्रमोहनीयकर्मोदयवत्त्वेन भोगप्रवृत्तिश्श्रावकः, चरित्रपतितोऽपि शैलेशगिरिभारवद् अल्पसत्त्वैर्दुर्वाह्यं चारित्रभारमल्पवीर्यत्वेन वोढुमशक्तत्वाच्चारित्रभ्रष्टोऽपि, मन्दधर्माः प्रमादग्रस्तत्वेन शिथिलाचाराः पार्श्वस्थादयः इत्येते त्रयोऽपि दर्शनस्य पक्षं कलयन्तु, निर्मलतरचारित्रभारवहनेऽशक्तत्वेन दर्शनं मे निश्चलतरं भवत्वित्येवं दर्शनमात्रेण सन्तोषवन्तो मुख्यवृत्त्या दर्शनपक्षमेव मन्यन्ते, गौणवृत्त्या तु चारित्रपक्षमिति, ननु के दर्शनपक्षं चारित्रपक्षञ्च समवृत्त्या मन्यन्त इत्यत आह चारित्रदर्शनगुणेति, चारित्रदर्शनगुणद्वये तुल्यः पक्षो येषां ते तथा, अत्र दर्शने सति नियमाज्ज्ञानमिति दर्शनपदेन तत्सहचरितं ज्ञानमपि ग्राह्यम्, तथाच दर्शनपक्षस्य उपलक्षणतया ज्ञानपक्षस्य चारित्रपक्षस्य च समवृत्तितयाऽभ्युपगन्तारः, दक्षाः सम्यक्क्रियासु निपुणाः, सुचरित्रपवित्रचित्ताः सुष्ठु भगवता यथा भाषितं तथा चरित्रं सुचरित्रं, तेन पवित्रं चित्तं येषां ते तथा, भवन्ति सुसंयमिनो भवन्तीत्यर्थः। एतत्संवादिनी चेयमावश्यकगाथा "दंसणपक्खो सावय, चरित्तभट्ठे य मंदधम्मेय। दंसणचरित्तपक्खो, समणे परलोग कंखिम्मि" ॥१॥ आवश्यकव-

न्दनकाध्ययनचूर्णिव्याख्या "सावओ न सक्केति विसयगिद्धो पव्वइतुं, सो भणति दंसणंपि ता मे होतुत्ति तस्स स पक्खो, चरित्तभट्ठे वा एवं चेव, मंदधम्मे वा जो गहितं भंजति, जो पुण चरित्तं कातुं सत्तो नेव्वाणकंखी समणो तेण दंसणपक्खो चरित्तपक्खो य लएतव्वो, दंसणे नियमा नाणंति तिण्हं समायोगेण नेव्वाणं लब्भतित्ति" इति सङ्क्षेपार्थः ॥ ९७ ॥

संज्ञानयोगघटितं शमिनां तपोऽपि, श्रेण्याश्रयादिह निकाचितकर्महन्तृ ॥
बाह्यं तपः परमदुश्चरमाचरध्व–माध्यात्मिकस्य तपसः परिबृंहणार्थम् ॥ ९८ ॥

संज्ञानयोगघटितमिति, सं समीचीनमर्हत्प्रवचनानुसारिज्ञानं, गुरुपारतन्त्र्यनिमित्तं संवेदनं, तेन सहितो योगः शुभवीर्योल्लासः, अयमेव पातञ्जलयोगशास्त्रे संप्रज्ञातसमाधिसंज्ञयाऽभिधीयते, तेन घटितमित्यर्थः। शमिनामिति शमः क्रोधाद्यभावो येषामस्ति ते शमिनः, अत्रातिशायने मत्वर्थीयः, तथा चातिशयितशमयुक्ता इत्यर्थः, अतिशयश्चात्र क्रोधादिसामग्रीसद्भावेऽपि क्रोधाद्यनुदयः, उदितक्रोधादिनैष्फल्यापादनं वा, तेषां संयमिनामित्यर्थः, एतेनातिशयितशमस्य संयमलिङ्गत्वं व्यञ्जितम्, तथा चायं संयमी अतिशयितशमान्यथानुपपत्तेरित्यनुमानमत्र पर्यवस्यति, तपोपि "नो इह लोगट्ठाए तवमहिट्ठिज्जा नो परलोगट्ठाए तवमहिट्ठिज्जा" इति वचनाद् दुष्टाशंसापूर्वकतपसो निषिद्धत्वाच्चक्रवर्त्यादिसमृद्धिमान् भूयांसमितीच्छाऽविषयीभूतं तपोऽपि, तदपि जिनवरोपदिष्टमेव ग्राह्यम्, तस्यैवैकान्तेन क्लिष्टकर्मसञ्चयनाशकत्वात्, उक्तञ्च–"नयति जलधेस्तीरं नो वा नवाऽपि हि नौः श्रिता शमयति न वा भोगो रोगं प्रसिद्धमहौषधिः। जनयति सुखं नो वा लक्ष्मीर्नरस्य गृहागता जिनवरतपस्त्वेकान्तेन क्षिणोत्यशुभोच्चयम्" इति। अस्यैव फलद्वारोपवर्णनमाह श्रेण्याश्रयादिह निकाचितकर्महन्तृ इति, संज्ञानयोगसंवलितं हि तपः क्षपणाद्यर्हाध्य-

नत्रापमकत्रीत्वस्थारूपाऽपूर्वकरणादिश्रेण्यवलम्बनेन निकाचितमपि कर्म प्रणिहन्ति, यत उक्तं महाभाष्ये "सव्वपगइणमेवं परिणामवसा-दुवक्कमो होजा। पायमनिकाइयाणं तवसा उ निकाइयाणंपि" ॥१॥ इति, अध्यात्मसारेप्युक्तम् "ज्ञानयोगस्तपः शुद्धमित्याहुर्मुनिपुङ्गवाः। तस्मान्निकाचितस्यापि, कर्मणो युज्यते क्षयः" ॥१॥ इति, तपश्च बाह्याभ्यन्तरभेदेन द्विविधं, बाह्यत्वं चास्य बाह्यद्रव्यापेक्षत्वात्, प्रायो बहिःशरीरतापकत्वात्, लौकिकैरपि तपस्तया ज्ञायमानत्वात्, कुतीर्थिकैरपि स्वामिप्रायेणासेव्यमानत्वाच्च, अभ्यन्तरत्वं च लौकि-कैरनभिलक्ष्यत्वात्, तत्रान्तरीयैश्च भावतोऽनासेव्यमानत्वात्, मोक्षाप्रत्यासन्नान्तरङ्गत्वात्, अभ्यन्तरशरीरस्य कार्मणलक्षणस्य तापकत्वा-चेति। तत्र बाह्यं षड्विधं तपोऽभ्यन्तरषड्विधतपस उपबृंहकमिति तदुपबृंहणफलकतत्कर्त्तव्यताप्रदर्शनार्थमुत्तरार्द्धमाह बाह्यं तप इत्यादि। बाह्यं तप आचरणीयम् अभ्यन्तरतपोवृद्धिहेतुत्वात्, यदभ्यन्तरतपोवृद्धिजनकं तदाचरणीयमेव, प्रतिलेखनादिक्रियावत्, न च हेतोरसिद्धिः, आगमप्रमाणसिद्धत्वात्, यत उक्तमध्यात्मसारे प्रकृतग्रन्थकृता "ज्ञानमेव तपः प्राहुः, कर्मणां तपनात्तपः। तदाऽभ्यन्तरमेवेष्टं, बाह्यं तदुपबृंहकम्" ॥१॥ इति। एतेनाभ्यन्तरमेव तपः कर्त्तव्यं न बाह्यं तप इत्यारेकाऽपि निरस्ता। न च जिनै-रनाचरितत्वात्तपोऽनाचरणीयं, यज्जिनैरनाचरितं तदन्यैरप्यनाचरणीयं, यथा मलीमसवृत्तिरिति प्रत्यनुमानेन सत्प्रतिपक्षो हेतुरिति वाच्यम्, यतः तीर्थंकरैस्स्वयं निजगदे तैरेव तीर्थेश्वरैः, श्रीहेतुर्भवहारि दारितरुजं सन्निर्जराकारकं। सद्यो विघ्नहरं हृषीकदमनं माङ्गल्यमिष्टार्थकृद्, देवाकर्षणमारदर्पदलनं तस्माद्विधेयं तपः ॥१॥ इत्यादिश्लोकेन "जो अ तवो अणुचिन्नो वीरवरेणं महाणुभावेणं छउमत्थकालियाए अहक्कमं कित्तइस्सामि" ॥१॥" इति "निव्वाणं संपत्तो चउदसभत्तेण पढमजिणचन्दो। सेसा उ मासएणं वीर-जिणिन्दो य छट्ठेणं" ॥ २ ॥ इति चागमनिस्यन्दरूपेण तपसो जिनाचरितत्वप्रतिपादनात् प्रत्यनुमानहेतोरसिद्धत्वात्, न च तपः

अनाचरणीयं निष्फलत्वात् काकदन्तपरीक्षावदित्यनुमानेनापि सत्प्रतिपक्षो हेतुरिति वाच्यम्, तवो वोदाणफले, वोदाणे कम्मप-ज्जवसाणफले इत्यागमेन सफलत्वोक्तेर्हेतोरसिद्धत्वेन समबलत्वाभावात्; एतेन केवलस्य तपसो विशिष्टकर्मनिर्जरां प्रत्यजनकत्वात् ज्ञानयोगसंयमोपबृंहिततपसश्च जनकत्वात्ततो मुक्तिरित्युपपादितम्, समुदितानामेव त्रयाणां प्रकाशनाश्रवव्यवदानरूपव्यापारै-र्निश्शेषकर्माभावोपपत्तेरिति सङ्क्षेपार्थः ॥९८॥ चरणार्थवादमुपसंहरन् ज्ञानदर्शनचारित्राणां गौणप्रधानभावेन तैस्तैर्नयैर्हेतुत्वं यदुक्तं तन्न युक्तं, निश्चयनयतः त्रयाणामपि प्राधान्येनैव मुक्तिं प्रति हेतुत्वात्, तत्सत्त्व एव तत्सत्त्वात्, तदभावे तदभावात्, त्रयाणामन्व-यव्यतिरेकानुविधानेऽपि कस्याप्येकस्य प्राधान्ये तदितरयोर्गौणत्वे चाविनिगमादिति निश्चयनयेन तत्स्वरूपमुपदर्शयितुमाह—

इत्थं विशिष्यत इदं चरणं तवोक्तौ, तैस्तैर्नयैः शिवपथे स्फुटभेदवादे ॥

चिच्चारुतां परमभावनयस्त्वभिन्न-रत्नत्रयीं गलितबाह्यकथां विधत्ते ॥ ९९ ॥

इत्थमित्यादि, इत्थम् अनन्तरनिदर्शितयुक्तिनिकुरम्बेण, तैस्तैर्नयैः व्यवहारप्रधानैर्नैगमादिनयैः, स्फुटभेदवादे ज्ञानं गौणं कारणं चारित्रं मुख्यकारणमित्येवं स्पष्टतरभेदवादे, शिवपथे मोक्षमार्गे, हे भगवन् तवोक्तौ तव सिद्धान्ते, इदं चरणं चारित्रं विशिष्यते, चारित्रद्वारैव ज्ञानदर्शने मोक्षफलोत्पादके नान्यथेति ज्ञानदर्शनापेक्षया प्रधानतया व्यवस्थाप्यते, तु पुनः, परमभावनयः शुद्धनिश्चयनयः गलितबाह्यकथां निरस्तगुणभावकथां अभिन्नरत्नत्रयीं चिच्चारुतां विधत्ते, सम्यग्दर्शना-दित्रयाणां मोक्षानुकूलैकशक्तिमत्त्वेन कारणत्वम्, शक्तेरभिव्यञ्जकविधयैव दर्शनत्वस्य ज्ञानत्वस्य चारित्रत्वस्य चावच्छेदकत्वमिति न कारणतावच्छेदकभेदेन तत्तद्धर्मावच्छिन्ना कारणता भिन्ना, किन्त्वेकशक्तिमत्त्वावच्छिन्नैकैवेति मोक्षानुकूलैकशक्तिमत्त्वेनानुगतधर्मे-

गाऽभिन्नां ज्ञानदर्शनचारित्रत्रयीं प्रमाणसिद्धां विधेयतया कथयति, स्यादेतत् केवलज्ञानानन्तरमेव न मुक्तिः, किन्तु सर्वसंवररूप-क्रियाऽनन्तरमेवेति ज्ञानस्य परंपरया हेतुत्वात् गौणं हेतुत्वं, क्रियायास्त्वनन्तरत्वाद् मुख्यं हेतुत्वमिति क्रियानयो विशिष्यते, ज्ञाननयस्तु हीयते, तदिदमुक्तं भाष्यकृतापि "नाणं परंपरमणंतरा उ किरिया तयं पहाणयरं, जुत्तं कारणम्" इति,तथा च कथं ना-पसिद्धान्तप्रसङ्ग इति चेत्, मैवम्, प्रवृत्तिकाले तज्जनकज्ञानस्यापि सत्त्वेनानन्तरत्वाऽविरोधात्, न ह्युत्तरविशेषगुणेन पूर्वविशेषगुण-नाश इत्यभ्युपगमो नः। न चैवं क्रियाया द्वारत्वविरोधः, द्वारिणोऽनाशेऽपि स्वफलयोर्नियतमध्यभावेन तदविरोधात्, द्वारत्वे द्वारि-नाशविशिष्टत्वाऽप्रवेशात्, तदिदमुक्तं भाष्यकृतैव "अहवा समयं तो दोन्नि जुत्ताइं" इति, एतेन "जम्हा दंसणनाणा संपुन्नफलं ण दिंति पत्तेयं। चारित्तजुआ दिंति हु विसिस्सए तेण चारित्तं ॥१॥" इतीयमागमोक्तिर्व्याख्याता, घनतराऽज्ञानाऽन्धकारविनि-वृत्तिसञ्चितकर्मकचवरदूरीकरणाऽभिनवकर्मकचवरागमनप्रतिरोधैरात्मगृहशुद्धये प्रदीपदीपन-संमार्जनीमार्जन-वातायनजालकपिधान-स्थानीयज्ञान-तपः-संयमानामेकदैव व्यापारात्,फलोपयोगितया ज्ञानक्रिययोर्द्वयोरपि मुख्यत्वाविशेषात्,यदागमः,"नाणं पयासयं सोहओ तवो संजमो अ गुत्तिकरो। तिह्णंपि समाओगे मुक्खो जिणसासणे भणिओ" ॥१॥ इति सङ्क्षेपार्थः ॥९९॥ सकलशास्त्रा-र्थोपनिषद्भूतं निश्चयनयत आत्मस्वरूपं विभणिषुराह—

अशुद्धिः शुद्धिं न स्पृशति वियतीवात्मनि कदा–व्यथारोपात्कोपाकृणिमकणिका कातरदृशाम् ॥
स्फुटाः पर्यायाः घनतरतरङ्गा इव जवा–द्विवर्त्तव्यावृत्तिव्यतिकरभृतश्चिज्जलनिधौ ॥ १०० ॥

अशुद्धिरित्यादि, वियति आकाश इव, आत्मनि निश्चयनयेन स्वतश्शुद्धे जीवे, शुद्धिम् अनाद्यनन्तविशदज्ञानादिज्यो-

तिर्मयलक्षणांऽसाधारणस्वरूपात्मिकां निर्मलताम्, अशुद्धिः कर्ममललेपः, कदापि न स्पृशति कालत्रयेऽपि न लगति, निश्चयनयतोऽनादिशुद्ध आत्मा अशुद्धो न भवति, अन्यथा सिद्धानामपि तथात्वं स्यात्, पुद्गलसम्बन्धो हि पुद्गल एव भवति नान्यत्र, अन्यथाऽऽकाशेऽपि भित्ताविव चित्रसम्बन्धस्स्यादिति पुद्गलात्मकस्य कर्मणस्सम्बन्धो नात्मनेति तत्र कर्ममललेपो न भवति, अयं भावः, निश्चयनयेन हि ज्ञानवान् आत्मा संसारे निवसन्नपि भेदभावनाव्याप्तस्वान्ततया नान्तरात्मना कस्मिँश्चिदपि निमज्जतीति न कर्ममललेपः, तदुक्तं "संसारे निवसन् स्वार्थ—सज्जः कज्जलवेश्मनि। लिप्यते निखिलो लोको, ज्ञानसिद्धो न लिप्यते ॥१॥ नाहं पुद्गलभावानां, कर्त्ता कारयिता च न। नानुमन्ताऽपि चेत्यात्म—ज्ञानवान् लिप्यते कथम् ॥२॥ लिप्यते पुद्गलस्कन्धो, न लिप्ये पुद्गलैरहम्। चित्रव्योमाऽञ्जनेनेव, ध्यायन्निति न लिप्यते" ॥३॥ इति। नन्वेवं तर्हि विविधा रागादिक्लेशवासनाऽपि विविधकर्मपरिणतिजन्याऽनुभूयमानाऽपह्नुता स्यादित्याशङ्कायामाह अथारोपात्कोपारुणिमकणिका कातरदृशामिति, कातरदृशां द्वेपादिविपमपरिणतिविह्वलनेत्राणां कोपारुणिमकणिका क्रोधरक्तिमालेशः, आरोपात् व्यवहारनयाश्रयणेन कर्मोपाधिवशात्, भवतीति क्रियाध्याहारः। यद्यपि निश्चयनयेनात्मनश्शुद्धत्वात्कर्ममलसम्बन्धो नाभ्युपगतस्तथापि व्यवहारनयेनाशुद्धत्वात्सोऽभ्युपगत इति तेन तत्र विविधपरिणाम इतिभावः। चिज्जलनिधौ निश्चयनयतस्सकलवस्तुस्तोमप्रकाशैकस्वभावकेवलज्ञानरूपत्वादात्मनि ज्ञानसमुद्रे, पर्यायाः—मतिज्ञानावरणादिक्षयोपशमरूपोपाधिजन्यत्वेन विभावजा मत्यादिपर्यायाः, विवर्त्तव्यावृत्तिव्यतिकरभृतः—विवर्त्तः विवर्त्तनं विवर्त्तः परिणामः, व्यावृत्तिः व्यावर्त्त्यते इतरतो भिन्नतया ज्ञायते अनया सा व्यावृत्तिर्विशेषः, तयोर्यो व्यतिकरस्सम्बन्धस्तद्भृतस्तद्वन्तः, अनुगतव्यावृत्तधर्मवन्त इत्यर्थः, तत्र दृष्टान्तमाह घनतरतरङ्गा इवेति यथा समुद्रस्य पूर्वपूर्वकल्लोलविशेषरूपपूर्वपूर्वपर्याया उत्तरोत्तरकल्लोलविशेषरू-

त्तरोत्तरपर्यायरूपेण परिणममानास्समुद्ररूपतामेव यान्ति एवमेव पूर्वपूर्वमत्यादिज्ञानपर्याया उत्तरोत्तरज्ञानपर्यायरूपेण परिणममाना अन्ततः क्षायोपशमिकभावं परित्यज्य क्षायिकभावमापन्नाः केवलज्ञानात्मकात्मसमुद्ररूपतामेव यान्ति। ननु यदि सकलवस्तुस्तोमप्रकाशकस्वभावो जीवः, तस्य तथाभूतस्वभावः केवलज्ञानमिति व्यपदिश्यते, तर्हि स स्वभावः पूर्वं केनावृत इति चेत्, सर्वघातिना केवलज्ञानावरणेनेति जानीहि, अथैवं सति केवलज्ञानावरणस्य सर्वघातित्वात् कार्त्स्न्येनैव ज्ञानाच्छादने व्याप्रियमाणत्वान्मन्दोऽपि प्रकाशो नैव स्यादिति चेत्, नैवम्, यतो घनतराभ्रसमूहावृतस्यापि दिनकरस्य दिनरजनीविभागजनकमन्दप्रकाश इव तथाविधावरणस्वभावादेवाक्षरानन्ततमो भागोऽव्यक्तज्ञानलक्षणोऽनावृत एव सदाऽवतिष्ठते, अन्यथा जीवाजीवविभागाभावप्रसङ्गः, तदुक्तम् "सव्वजीवाणं पि य णं अक्खरस्स अणंतमो भागो निच्चुग्घाडिओ चिट्ठइ, सोवि अ जइ आवरिज्जा तेणं जीवो अजीवत्तणं पाविज्जा" इति। ननु प्रतियोगिन्यधिकरणो य उपयोगाभावस्तदभाववत्त्वमेवोपयोगलक्षणो जीव इत्यत्रोपयोगपदार्थतया विवक्षितं, तच्च यदा कदाचिदुपयोगमादाय निगोदजीवेऽव्यक्तज्ञानाऽभावेऽपि गच्छतिमक्षतीति तत्र निर्जीवत्वप्रसङ्गो नेति चेत्, स्यादेतत्, यदि देवदत्तस्य दण्डित्वलक्षणवत् तटस्थलक्षणं स्यात्, नत्वेवम्, उक्तलक्षणस्य स्वरूपलक्षणत्वात् आशुशुक्षणेरौष्ण्यलक्षणवत्, न ह्यौष्ण्यं स्वस्वरूपं परित्यज्य कदाप्यग्निरनुष्णतां याति, तथा सति स्वसंज्ञामेव परिजह्यात्, एवमेवात्रापि। अथास्तु "सुट्ठुवि मेघसमुदए होंति पभा चंदसूराणं" इति वचनप्रामाण्यात् घनतरमेघाच्छन्नस्य निशाकरस्येवात्मनस्तथास्वाभाव्याज्जीवाजीवविभाजको मन्दप्रकाशः, तथापि तत्र को हेतुरिति चेत्, केवलज्ञानावरणमेव, केवलज्ञानावृत्तिज्ञानत्वव्याप्यजातिविशेषावच्छिन्ने तद्धेतुत्वस्य शास्त्रार्थत्वात्, अत एव केवलिनो न मतिज्ञानाद्युत्पादनप्रसङ्गः, मतिज्ञानादिकार्यस्य केवलज्ञानावरणात्मककारणाऽऽयत्तत्वेन तदभावे तदभावात्, अत एव चास्य विभागगुणत्वमिति

सन्निधेः । ननु सकलकालमतिबन्धकं यदुक्तं केवलज्ञानावरणं तदेव मन्दप्रकाशजनकं इष्टं, यथा चक्षुरावरणं नक्तान्धके न तुल्यं, यथा कुड्यादिकमिति चेत्, नैवम्, उक्तकेवलज्ञानावरणं सकलकालमतिबन्धकं मन्दप्रकाशजनकस्वभावमपरस्य तत्र दर्शनात्, अपरञ्च मन्द-प्रकाशोऽप्यन्तरालवर्तिमतिज्ञानाद्यावरणक्षयोपशमभेदसंपादितं नानात्वं भजते, यथा घनपटलावृतस्यैव मन्दप्रकाशोऽप्यन्तरा-लवर्तिकटकुड्याद्यावरणविवरभेदतो भेदवान्, स च नानात्वं तत्क्षयोपशमानुरूपं तथा मतिज्ञानं तत्क्षयोपशमानुसारेणाभिधानभे-दमश्नुते यथा मतिज्ञानावरणक्षयोपशमजनितः स मन्दप्रकाशो मतिज्ञानं, श्रुतज्ञानावरणक्षयोपशमजनितः श्रुतज्ञानमित्यादि, ततः आत्मस्वभावभूतज्ञानस्याभिनिबोधिकादयो भेदाः, ते च प्रवचनोपदर्शितपरिस्थूरनिमित्तभेदतः पञ्चसङ्ख्याः, तथाहि मतिश्रुतज्ञान-योर्लिङ्ग-शब्द-कार्यकारणभावादिभेदो निमित्तम्, अवधिज्ञानस्य पुनस्तथाविधा(नि)तीन्द्रियरूपिद्रव्यसाक्षात्करणनिबन्धनं क्षयोपशम-विशेषः, मनःपर्यायज्ञानस्य त्वामर्षौषध्यादिलब्ध्युपेतस्य प्रमादलेशेनाप्यकलङ्कितस्य साधोर्विशिष्टो विशिष्टाध्यवसायानुगतोऽप्रमादः, "तं संजयस्स सव्वप्पमायरहियस्स विविहरिद्धिमतो" इति वचनप्रामाण्यात्, केवलज्ञानस्य सकलघातिकर्मक्षयो निमित्तम् । न चैवं मतिज्ञानादीनामात्मस्वभावभूतत्वे क्षीणावरणस्यापि तद्भावप्रसङ्ग इति वाच्यं, यत एते मतिज्ञानावरणादिक्षयोपशमरूपोपाधि-संपादितसत्ताकाः, यथा सूर्यस्य घनपटलाऽऽवृतस्य मन्दः प्रकाशभेदः कटकुड्यावरणविवरभेदोपाधिसंपादितः, ततः कथं ते तथा-रूपक्षयोपशमाऽभावे भवितुमर्हन्ति, न खलु सकलघनपटलकटकुड्याद्यावरणापगमे सूर्यस्य ते तथारूपा मन्दप्रकाशभेदा भवन्ति, उक्तञ्च "कडविवरागयकिरणा, गेहंतरियस्स जह दिणेसस्स, ते कडमेहावगमे न होंति जह तह इमाइंपि" ॥ १ ॥ इति, ततो यथा संसार्यात्मनो जन्मपर्याया कर्मोपाधिका इति कर्मोपाध्यभावे सिद्धस्य न भवन्ति, तद्वत् ज्ञानस्य मत्यादिपर्याया अपि कर्मोपाधि-

संसारित्वसाधकत्वात् तदभावे केवलिनो न भवन्ति, उक्तञ्च "जमिह छउमथ्थधम्मा, जम्माईया न होन्ति सिद्धाणं। इय केवलीण-माणिणि, बोहियमावम्मि को दोसो" ॥१॥ इति। आत्मनि ज्ञानांशमादाय मत्यादिपर्यायवद् द्रव्यांशमादाय जन्ममरणनरनैरयिकादयो बालयौवनादयश्च पर्याया व्यवहारनयापेक्षया ज्ञातव्याः, अतति सातत्येन गच्छति ताँस्तान् पर्यायानित्यात्मेति व्युत्पत्तेर्मत्यादिपर्यायवद् मनुष्यादिपर्यायान् अनुभवत्येवात्मा, कथमन्यथैक एवात्मा देवो मनुष्यो नारकस्तिर्यङ् च कथ्यते इति सङ्क्षेपार्थः॥१००॥

जैनमार्गो हि निश्चयव्यवहारोभयनयात्मकः, तत्र निश्चयनयस्तत्त्वभूतं युक्तिसिद्धमर्थं कथयति, व्यवहारनयश्च लोकाभिमतग्राहीति लोकव्यवहारमिदं वक्ति, तत्र यदैकनयस्य प्राधान्यं तदा तदितरनयस्य गौणत्वमिति निश्चयनयस्य प्राधान्ये तन्नयेनात्मस्वरूपं विभणिषुराह—

न बद्धो नो मुक्तो न भवति मुमुक्षुर्न विरतो, न सिद्धः साध्यो वा व्युपरतविवर्तव्यतिकरः॥
असावात्मा नित्यः परिणमदनन्ताविरतचि—चमत्कारस्फारः स्फुरति भवतो निश्चयनये॥१०१॥

न बद्ध इत्यादि, व्यवहारनयतः कर्मपाशैर्बद्धोऽप्यात्मा निश्चयनयेनासङ्ख्यातप्रदेशो निरञ्जनोऽनन्तज्ञानादिगुणो कर्मदोषैरगम्य इति तेनैव बद्ध इत्याह न बद्ध इति, कर्मपाशैर्बन्धनान्न मुक्तः, य एव प्राक् बद्धस्स एव पश्चान्मुच्यते, बन्धमोक्षयोस्सामानाधिकरण्यात्, बन्धाभावे मुक्त्यभाव इत्याह नो मुक्त इति, विषयतासम्बन्धेनेच्छादिकं प्रति तादात्म्यसम्बन्धेन विषयस्यापि कारणत्वेन मुक्तिरूपविषयाऽभावे न तद्विषयकेच्छाऽपीति न मुमुक्षुरित्याह न भवति मुमुक्षुरिति, आकाशवदनन्तोऽहं, घटवत्प्राकृतं जगत्। इति ज्ञानं तथैतस्य, न त्यागो न ग्रहो लयः॥१॥ महोदधिरिवाऽहं सः, प्रपञ्चो वीचिसन्निभः। इति ज्ञानं तथैतस्य, न त्यागो न ग्रहो लयः॥२॥ अहं स शुक्तिसंकाशो, रूप्यवद्विश्वकल्पना। इति ज्ञानं तथैतस्य, न त्यागो न ग्रहो लयः॥३॥ इत्यादि-

भावनाभावितान्तःकरणो ज्ञानी संसारे इन्द्रजालकल्पे न काप्यासजतीति न तद्विरतिरित्याह न विरत इति, निश्चयनयमते आत्मा सर्वदैव निष्कर्मेति प्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्यसम्बन्धेन कारणीभूतस्य प्रतियोगिनः कर्मणोऽभावेन तत्क्षयाभावान्नाशेषकर्मक्षयलक्षणसिद्धिरपीत्यात्मा न सिद्ध इत्याह न सिद्ध इति, ज्ञानादिस्वस्वरूपावस्थानात्सर्वदैव सिद्धस्वरूप इति न साध्यस्वरूप इत्याह साध्यो वेति, नेत्यस्यावृत्त्याऽनुकर्षः, अत एवाह व्युपरतविवर्त्तव्यतिकर इति, व्युपरतः विशेषेणोपरतो निवृत्तो विवर्त्तानां विभावपर्यायाणां तिर्यङ्नरकमनुष्यदेवादिजन्मबालयुवाजरामरणादिभावानामिति यावत्, व्यतिकरः सम्बन्धो यस्मात् स तथा, बद्धादिव्यावर्त्त्यस्वरूपमुक्त्वा यत्स्वरूपोऽयमात्मा तदाह असावात्मा नित्य इति, न्यायमत इव त्रिकालापरिणामिस्वरूपत्वान्न नित्यः, किन्तु स्वभावपरिणाम्यनुगताविच्छिन्नचिदानन्दस्वरूपतयैवेत्याह परिणमदनन्ताविरतचिच्चमत्कारस्फार इति, परिणमत् परिणाममुपगच्छदनन्तोऽविनाशी अविरतो नैरन्तर्येणानुस्यूतः न तु मध्ये विरामवान् एवम्भूतो यश्चिच्चमत्कारश्चिदानन्दस्तस्य स्फारो विस्तारो यस्मिन् स तथा, भगवन्तं संबोध्याह भवत इति सङ्क्षेपार्थः ॥ १०१ ॥ निश्चयनयेनोपदर्शितस्वरूपोऽप्यात्मा प्रमाणाऽवष्टम्भेन परिहृतविरोधाऽनन्तधर्मात्मेत्युपदर्शयितुमाह—

दृशां चित्रद्वैतं प्रशमवपुषामद्वयनिधिः, प्रसूतिः पुण्यानां गलितपृथुपुण्येतरकथः ॥
फलं नो हेतुर्नो तदुभयमथासावनुभय–स्वभावस्त्वज्ज्ञाने जयति जगदादर्शचरितः ॥ १०२ ॥

दृशामिति, दृष्टिरत्र नयरूपा, तेन दृशां सङ्ग्रहादिनयानां, मते इतिशेषः, चित्रद्वैतम्, चित्रपटनिर्मितदेवासुरनरपत्याऽऽकारादिकं वस्तुगत्याऽऽधारभूतपटमात्रमपि भिन्नतया प्रतिभातम्भवति, एवमेव सामान्यविशेषाद्यनेकधर्मात्मकैकरूपोऽप्यात्मा सामा-

न्यरूपो विशेषरूप इत्येवं परस्परविलक्षणस्वरूपः एकनयविषयीकृतात्स्वरूपादन्यनयविषयीकृतो भिन्न एव, असावात्मा प्रशमव-
पुषां प्रशम एव वपुः तदेकतानतयाऽभेदमापन्नत्वाच्छरीरं येषां तेषां प्रशमवपुषां योगिनां ध्याने परिस्फुटतयाऽवभासमानोऽद्वय-
निधिः अद्वैतस्वरूपः, एवं सति भिन्नोऽप्यभिन्न इति दर्शितम्, पुण्यानां मोक्षरूपपरमपुरुषार्थसाधनत्वेन पुण्यानां सम्यग्दर्शनज्ञा-
नचारित्राणां,प्रसूतिः कारणम् आत्मन एव तत्तद्रूपेण परिणमनात्,अत एव च गलितपृथुपुण्येतरकथः, गलिता विनष्टा, पृथ्वी
अनादिकालीनतया महती,पुण्येतरस्य संसारात्मकबन्धकारणत्वेन पापस्याष्टविधकर्मणः,कथा उत्तरोत्तरकर्मबन्धनस्वभावतयाऽवस्थि-
तिर्यस्मात्स तथा, स्वस्वरूपावाप्तिरूपस्य मोक्षस्य स्वस्वरूपत्वादेव सदातनत्वेनावाप्तस्यैवाङ्गुलीयकस्यानावाप्तत्वभ्रान्त्यवगमेऽवाप्तिरिति
कृत्वा मोक्षस्वरूपोऽप्यात्मा फलं नो, न कस्यचित्कार्यं, परिणामस्य स्वाभाविकस्य स्वस्मादभिन्नत्वादेव न कार्यत्वम्, औपाधिकस्य
तूपाधिकार्यत्वम्, न तु निरुपाधिस्वरूपकार्यत्वमिति कृत्वा न कस्यचिच्छुद्धात्मस्वरूपकार्यत्वमतोऽसौ हेतुर्नो,कस्यचित्कार्यस्य कारण-
मपि न भवति, विशिष्टस्वरूपतया तु विशेषणस्य कार्यत्वात्कारणत्वाच्च विशिष्टमपि तथेति तदुभयम्,अपेक्षाभेदेन फलमपि हेतुरपि,
एवम् सविकल्परूपतायाम्, आत्मनो निर्विकल्परूपत्वे त्वनुभयरूपतैवेत्यावेदयितुमुक्तमनुभयस्वभाव इति,एवम्भूतानल्पधर्मात्मा
त्वज्ज्ञाने केवले जयति सर्वोत्कृष्टतया वर्त्तते, अनेन दृष्टान्तेन सर्वेऽपि भावास्तथा प्रतिपत्तव्या इत्यावेदयितुमुक्तं जगदादर्शाच-
रित इति, जगता अनुकरणीयस्वस्वरूपाविष्करणरूपाचार इत्यर्थः ॥ १०२ ॥

गुणैः पर्यायैर्वा तव जिन समापत्तिघटना-दसौ त्वद्रूपः स्यादिति विशदसिद्धान्तसरणिः ॥
अतस्त्वद्ध्यानाय प्रगुणविधिनाम्नायमनिशं, समाराध्य श्रद्धां प्रगुणयति बद्धाञ्जलिरयम् ॥ १०३ ॥

गुणैरिति, हे जिन गुणैस्सहभाविलक्षणैरनन्तैस्स्वार्थपरार्थसम्पत्तिरूपैः, वा अथवा, पर्यायैः क्रमभाविलक्षणैः पूर्वोत्तरपरिणामरूपैरनन्तैः, तव परमात्मनः समापत्तिघटनात् समापत्तिसम्बन्धात्, तत्र समापत्तिरात्मनः परमात्मन्यऽभेदोपासना, उक्तञ्चाध्यात्मसारे "समापत्तिरिह व्यक्तमात्मनः परमात्मनि। अभेदोपासनारूपस्ततः श्रेष्ठतरो ह्ययम्" ॥१॥ अन्यत्राप्युक्तम् "ध्याता ध्येयं तथा ध्यानं-त्रयं यस्यैकतां गतम्। मुनेरनन्यचित्तस्य-तस्य दुखं न विद्यते ॥१॥ ध्याताऽन्तरात्मा ध्येयस्तु, परमात्मा प्रकीर्त्तितः। ध्यानं चैकाग्र्यसंवित्तिः, समापत्तिस्तदेकता ॥२॥ मणौ बिम्बप्रतिच्छाया-समापत्तिः पराऽऽत्मनः। क्षीणवृत्तौ भवेत् ध्याना-दन्तरात्मनि निर्मले" ॥३॥ इत्यादि, तत्र तदेकतेति अन्तरात्मा ध्याता परमात्मा ध्येयः एकाग्र्यसंवित्तिर्ध्यानमित्येतत्त्रयाणामऽभेदरूपतेत्यर्थः। असौ असदाद्यात्मा, त्वद्रूपस्स्यात् स्वीयात्मत्वेन त्वत्तो भिन्नोऽपि समसङ्ख्यकानन्तगुणमयत्वरूपोभयवर्त्तिसाधारणधर्मेण भवदभिन्नस्स्यात्, तदुक्तं "सति सक्तो नरो याति, सद्भावं ह्येकनिष्ठया। कीटको भ्रमरीं ध्यायन्, भ्रमरत्वाय कल्पते" ॥१॥ इति, इति-उक्तस्वरूपः, विशदसिद्धान्तसरणिः निष्कलङ्कार्हत्सिद्धान्तमार्गः, यदाहुः "जं झाया झायंतो-अरिहंतं रूवसुपयपिण्डत्थं। अरिहंतपयमयं चिय-अप्पं पिक्खेइ पचक्खं" ॥१॥ इति, अन्यत्राप्युक्तं "जो जाणइ अरिहंते-दव्वत्तगुणपज्जयत्तेहिं। सो जाणइ अप्पाणं-मोहो खलु जाइ तस्स लयं" ॥१॥ इति, अतः परमात्मविषयकाऽभेदोपासनालक्षणसमापत्तिप्रयोज्यपरमात्मैकरूपता भवतीति हेतोः, त्वद्धानायेत्यादेर्बद्धाञ्जलिस्सन् ध्याननिमित्तकाऽध्ययनविधिकरणकगुरूपदिष्टमार्गकर्मकसर्वकालीनसमाराधनोत्तरकालीनश्रद्धाप्रगुणताऽनुकूलकृतिमान् ग्रन्थकर्त्तृत्वेन सन्निकृष्टः पूज्यपादोपाध्यायश्रीयशोविजय इति सङ्क्षेपार्थः ॥१०३॥

अथ ग्रन्थकारप्रशस्तिः।

विवेकस्तत्त्वस्याप्ययमनघ सेवा तव भव-स्फुरत्तृष्णावल्लीगहनदहनोद्दाममहिमा ॥
हिमानीसम्पातः कुमतनलिने सज्जनदृशां, सुधापूरः क्रूरग्रहदृगपराधव्यसनिषु ॥ १०४ ॥

विवेकस्तत्त्वस्येति, हे अनघ अपापमूर्त्ते, अयं तत्त्वस्य विवेकोऽपि—अत्रापिरेवार्थे, प्रत्येकतत्तन्नयविषयो न तत्त्वं किन्तु समग्रनयविषय एव, समग्रनयविषयताव्यापकविषयताकप्रमाणविषयस्यैव तत्त्वरूपत्वादित्येवमेतच्छास्त्रप्रदर्शितोऽयं स्याद्वादतत्त्वनिश्चयोऽपि, तव सेवा भक्तिः, स्वपरगतमहामोहनिद्रां विनाश्य सद्भावजनकत्वात्, स विवेकः किंस्वरूप इत्याकाङ्क्षायामाह भवेति, भवे संसारे स्फुरन्त्यो यास्तृष्णावल्ल्यः भोगतृष्णालतास्तासां यद्गहनं वनं तस्य दहनोद्दाममहिमा दहने उद्दामः प्रकृष्टः महिमा पराक्रमो यस्य स तथा, भोगतृष्णोच्छेदे च द्रव्यधनरहितानामपीन्द्रनायकत्वमेव स्यात्, उक्तञ्च "येषां पुनरियं देहाश्रिगंता सुमहात्मनाम्। निर्धना अपि ते धीराः, शक्रादेरपि नायकाः" ॥१॥ इति, तत्र इयंपदेन भोगतृष्णा ग्राह्या, कुमतनलिने एकान्तनयमतप्रवाहितमिथ्यामतरूपकमले, हिमानीसम्पातः महद्धिमसम्पातः, सज्जनदृशां कल्याणमित्रनेत्राणां, सुधापूरः अमृतलहरी, अपराधव्यसनिषु जिनाज्ञाविराधनशीलेषु जिनाऽऽज्ञाबाह्यवर्त्तिष्विति यावत्, क्रूरग्रहदृग् राह्वादिक्रूरग्रहाणामिवाशुभफलदायकत्वगाम्भीर्यतया दृग्दृष्टिर्यस्य स तथा ॥१०४॥ भगवन्मुखाम्भोजविनिर्गतस्याद्वादरूपमहौषधसेवनमहिमावर्णनमाह—

कुतर्कैर्ध्वस्तानामतिविषमनैरात्म्यविषगै—स्तवैव स्याद्वादस्त्रिजगदगदङ्कारकरुणा ॥
इतो ये नैरुज्यं सपदि न गताः कर्कशरुज—स्तदुद्धारं कर्त्तुं प्रभवति न धन्वन्तरिरपि ॥ १०५ ॥

कुतर्कैरित्यादिना कुतर्कैः स्वतन्त्रर्जुसूत्रादितत्तन्नयविनिर्गतसौत्रान्तिकादितत्तन्मतावलम्बिकुतर्कैः, अतिविषमनैरात्म्यविषगैः

अतिगहनक्षणिकादिविषयकैः अल्पबुद्ध्यऽनिराकार्यैः, ध्वस्तानां नष्टसम्यक्तत्त्वानां प्रथममेव पूर्वकालं वा कुवासनावासितानां भव्यजन्तुव्रातानां, तेषामपि वाम्यानां न त्ववाम्यानां, तवैव स्याद्वादः तव स्याद्वाद एव, त्रिजगदगदङ्कारकरुणा त्रयाणां जगतां समाहारस्त्रिजगत् तस्मिन् त्रिजगति अगदङ्कारः अगदमौषधं करोति यस्स तथा, वैद्य इति यावत्, तस्य करुणा नैरुज्येऽतुलकरुणा, अयम्भावः, द्रव्यचिकित्सकस्यौषधं द्रव्यरोगार्त्तानां रोगविमुक्तये समर्थं यथा तथा भावचिकित्सकस्य भगवतस्स्याद्वादौषधमेव भवरोगप्रपीडितानां परमात्माऽवलोकनानुगृहीतानां जन्तूनां कर्मरोगविमुक्तये समर्थं नान्यदिति, इतः तव स्याद्वादात्, ये कर्कशरुजः येऽतिनिविडतरमिथ्यात्वरोगग्रस्ताः कुप्रावचनिकैर्वासिता अप्यवाम्याः, सपदि नैरुज्यं मिथ्यात्वरोगाऽभावं, न गताः न प्राप्ताः, तदुद्धारं तेषां भवकूपादुद्धारं, कर्त्तुं धन्वन्तरिरपि न प्रभवतीति न समर्थो भवतीत्यर्थः ॥१०५॥ ऋजुसूत्रादिनयपरिशोधकमहातर्कमयभगवद्वाग्गुणस्तुतिरूपस्य स्वीयैतद्ग्रन्थस्याध्येतॄणां स्वनामगर्भयशोविजयश्रीफलमुपदर्शयन् स्वशिष्यपरंपरागतैतद्ग्रन्थाध्ययनाविच्छित्तिफलकान्तिममङ्गलाचरणरूपां भगवत्स्तुतिं करोति—

इदमनवमं स्तोत्रं चक्रे महाबल यन्मया, तव नवनवैस्तर्कोद्ग्राहैर्भृशं कृतविस्मयम् ॥
तत इह बृहत्तर्कग्रन्थश्रमैरपि दुर्लभां, कलयतु कृती धन्यंमन्यो यशोविजयश्रियम् ॥ १०६ ॥

इदमनवममिति, हे महाबल, मया महोपाध्यायश्रीयशोविजयेन, यत् यस्मात्, तव अत्यासन्नतयाऽस्मदत्यन्तोपकारिवर्त्तमानतीर्थाधिपतेश्श्रीमहावीरस्य, इदं न्यायखण्डखाद्यापरनामकं श्रोतृश्रवणगोचरत्वेन सन्निकृष्टम्, अनवमम् अनवद्यं, नवनवैः अपूर्वापूर्वयुक्तिपुरस्सरैः तर्कोद्ग्राहैस्तर्कोपदर्शनैः, भृशमत्यर्थं, कृतविस्मयं कृताश्चर्यं, स्तोत्रं स्तवं, चक्रे विदधे, ततः तस्मात्, इह

लोऽत्र, कृती कृतयत्नः पण्डितः, धन्यंमन्यः आत्मानं धन्यं मन्यते इति धन्यंमन्यः, यशोविजयश्रियं यशसा विजयो यशोविजयः,तस्य श्रीः यशोविजयश्रीः तां यशोविजयश्रियम्,अयम्भावः सर्वदेशगामुकं यश इति वचनात् सर्वदेशगामुकतया सर्वदिग्व्यापेन यशसा लोके विशिष्टो जयो विजयः, सर्वोत्कृष्टतया वर्त्तनम्, सर्वापेक्षयोत्कृष्टत्वप्रकारकज्ञानविषयत्वमिति यावत्, तस्य यशोविजयस्य, सम्बन्धार्थे षष्ठी सम्बन्धश्चात्र ज्ञाप्यज्ञापकभावः, तथा च तत्संसूचिकां श्रियमनन्तज्ञानाद्यात्मकलक्ष्मीं, यद्वा यशोविजयश्रियं यशश्च विजयश्च यशोविजयौ तावेव श्रीर्यशोविजयश्रीः, तां यशोविजयश्रियम्, यशश्श्रियं विजयश्रियं, यद्वा यशश्च विनयश्च यशोविजयौ तयोश्श्रीः तदुभयसंसूचिका श्रीः तां यशोविजयश्रियम्, कलयतु प्राप्नोतु, किं विशिष्टामित्याकाङ्क्षायामाह बृहत्तर्कग्रन्थश्रमैरपि दुर्लभामिति बृहन् महान् तर्कग्रन्थो न्यायग्रन्थः तद्विषयकाध्ययनपरिश्रमैरपि दुर्लभां दुःखेन लब्धुं योग्यां दुष्प्रापामिति यावदित्यर्थः ॥१०६॥ प्रौढाखर्वगर्ववादिवृन्दाऽप्रधृष्ययुक्तिनिवहमयेप्यस्मिन् ग्रन्थे युक्तिराहित्यप्रदर्शनेन निरभिमानतां सूचयन् स्वग्रन्थशुद्ध्यर्थं स्वज्ञानाधिकयथार्थज्ञानशालिनो निर्मत्सरिणः कृतिशिरोमणीन् विज्ञपयति—

स्थाने जाने नात्र युक्तिं ब्रुवेऽहं, वाणी पाणी योजयन्ती यदाह ॥

धृत्वा बोधं निर्विरोधं बुधेन्द्रा-स्त्यक्त्वा क्रोधं ग्रन्थशोधं कुरुध्वम् ॥ १०७ ॥

स्थाने इति, जाने अवगच्छाम्यहं, किं जाने इत्यत आह यदत्र स्थाने युक्तिं न ब्रुवेऽहमिति, यत् यस्मात्कारणात्, अत्र यस्मिन् ग्रन्थे, स्थाने यस्मिन् स्थाने प्रदर्शनीया युक्तिस्तत्र,युक्तिं न ब्रुवे न्यायतर्कालीं न कथयामि,यत्तदोर्नित्यसम्बन्धात्तदिति निर्देशः,तस्मात् कारणात्,पाणी हस्तौ योजयन्ती अञ्जलिं बद्ध्वेत्यर्थः,वाणी मद्वाणी मत्सरस्वती,आह ब्रवीति,आहेति सकर्मकं

क्रियापदमिति कर्माकाङ्क्षायामुत्तरार्द्धमाह धृत्वेत्यादि, ग्रन्थशुद्धिं स्वबोधाऽपेक्षयाऽल्पतरबोधशालिनः पण्डिता न कर्त्तुं शक्ताः, किन्त्वधिकतरबोधालङ्कृता एवेति तान् बुधेन्द्रान् आमन्त्रयति बुधेन्द्रा इति, धृत्वेति अत्र ल्यप्प्रत्ययप्रकृत्यर्थधारणक्रियाकर्माकाङ्क्षायामाह बोधमिति, बोधोऽपि परस्परविरोधदोषाऽनाविल एव ग्रन्थशुद्धिकारक इत्यतो बोधं विशिनष्टि निर्विरोधमिति, बुधेन्द्रा अपि न मत्सरिणो ग्रन्थशुद्धिं कर्त्तुं शक्ता इत्यत आह त्यक्त्वा क्रोधमिति, ग्रन्थशोधं शब्दार्थाभ्यां निर्दोषत्वम् कुरुध्वं ग्रन्थशोधनकर्मककरणक्रियाऽनुकूलप्रयत्नवन्तो भवतेति सङ्क्षेपार्थः ॥१०७॥ संवादितप्राचीनानेकग्रन्थानल्पतर्कनद्धैतद्ग्रन्थनिर्माणप्रयोजकीभूतमभ्यसितप्राचीनानेकग्रन्थविषयकसुदृढतरसंस्कारं नवीनतर्कालीविषयकज्ञानं च विशारदत्वाद्युपपदप्राप्तिस्थानञ्चोपदर्शयन्नाह—

प्रबन्धाः प्राचीनाः परिचयमिताः खेलतितरां, नवीना तर्काली हृदि विदितमेतत् कविकुले ॥
असौ जैनः काशीविबुधविजयप्राप्तविरुदो, मुदो यच्छत्यच्छः समयनयमीमांसितजुषाम् ॥१०८॥

प्रबन्धाः प्राचीना इति, प्राचीनाः पूर्वाचार्यनिर्मिताः, प्रबन्धाः ग्रन्थाः, परिचयमिताः स्वात्मन्योतप्रोतभावं प्राप्ताः, ममेति दृश्यम्, हृदि हृदये, नवीना तर्काली न्याययुक्तिपङ्क्तिः, खेलतितराम् क्रीडतितराम्, तत्र किं प्रमाणमित्याशङ्कायामाह विदितमेतत् कविकुले इति पण्डितपर्षदि स्वबुद्धिवैभवप्रदर्शिततर्कनिवहेन प्रखरानेकवादिविजयकरणादितिशेषः । यद्वा कविकुले कविसमुदाये एतद् विदितं प्रसिद्धम्, एतदिति किमित्यपेक्षायामुत्तरार्द्धमाह असावित्यादि, असौ एतद्ग्रन्थकर्त्ता, श्रीयशोविजयनामा जैनो जिनो देवता अस्येति जैनः, मुनिरितिशेषः, काशीविबुधविजयप्राप्तविरुदः—काश्याम् अनेकविद्याकेन्द्रस्थानभूतायां वाराणस्यामनल्पविद्यापात्रपण्डितपर्षदि विबुधानाम् अनेकप्राज्ञानां वज्रवदभेद्ययुक्तिनिकरकरणकतदुक्तपक्षदूषणगणप्रदर्शन-

पूर्वोक्तप्रामाण्यज्ञापनोत्तरकालीनस्वमतप्रामाण्यव्यवस्थापनपुरस्सरं विजयेन प्राप्तं विरुदं न्यायविशारदत्वोपपदं येन स तथा, नन्वेतं नहि न्यायाचार्यविरुदं बुधैः कदा दत्तमिति चेद्, शतग्रन्थकरणानन्तरमिति जानीहि, तदुक्तम् "पूर्वं न्यायविशारदत्वबिरुदं, काश्यां प्रदत्तं बुधैः । न्यायाचार्यपदं ततः कृतशत-ग्रन्थस्य यस्यार्पितम्" ॥१॥ इति । अच्छः ज्ञातस्वपरसमयतत्त्वतया स्वाचारव्यवस्थया न निर्मलः, समयनयमीमांसिनजुषां सकलनयसमूहमयजैनसिद्धान्ते प्रत्येकतत्तन्नये च उपलक्षणतया तत्प्रसूतपरदर्शने च विचारभाजां, मुद आनन्दान् यच्छति ददातीत्यर्थः ॥ १०८ ॥ यदाज्ञावशवर्त्ती तन्नामोत्कीर्त्तनपुरस्सरं तद्गच्छगतस्वगुरुपरंपरावर्णनेन स्वाख्यानमाह—

गच्छे श्रीविजयादिदेवसुगुरोः स्वच्छे गुणानां गुणैः, प्रौढिं प्रौढिमधाम्नि जीतविजयप्राज्ञाः परामैयरुः ॥
तत्सातीर्थ्यभृतां नयादिविजयप्राज्ञोत्तमानां शिशु-स्तत्त्वं किञ्चिदिदं यशोविजय इत्याख्याभृदाख्यातवान्१०९

गच्छेत्यादि, यः श्रीमद्गुरुभिरित्यादिश्लोकाभ्याम्, श्रीविजयादिदेवसुगुरोः मध्यमपदलोपिसमासात् श्रिया ज्ञानादिलक्ष्म्या युक्तः विजय आदिर्यस्मिन् स विजयादिः, विजयादिश्चासौ देवश्च विजयादिदेवः, गिरत्यज्ञानं गृणाति वोपदेशमिति गुरुः, सुष्ठु गुरुरिति सुगुरुः, विजयादिदेवश्चासौ सुगुरुश्च विजयादिदेवसुगुरुः, तस्य, श्रीविजयदेवसूरिसुगुरोरिति यावत्, गुणानां प्रौढिमधाम्नि प्रौढत्वास्पदे, स्वच्छे सारणावारणाचोदनाप्रतिचोदनाद्यनुपमगुणैर्निर्मले, गच्छे जीतविजयप्राज्ञाः जीतविजयाख्याः सर्वत्र आगमनात् तत्त्वातत्त्वं जानन्तीति प्राज्ञाः पण्डिताः, गुणैः परामुत्कृष्टां प्रौढिं प्रौढतां महत्ताम्, ऐयरुः प्रापुः, तत्सातीर्थ्यभृतां जीतविजयसातीर्थ्यमेकगुरुत्वं बिभ्रति ये तेषां नयादिविजयप्राज्ञोत्तमानां नयविजयाख्यपण्डितवराणां, शिशुः "शिष्यं

पुत्रवदाचरेत्" इति वचनाच्छिष्योऽपि पुत्र इव व्यवह्रियते इति हेतोश्शिष्यः, यशोविजय इत्याख्याभूत् यशोन्यास्या लोकेऽनुपमो विजयोऽभूदिति यशोविजय इत्येवमन्वर्थां संज्ञां बिभ्रत्, किञ्चित् अत्यल्पं, शब्दत इतिशेषः, नत्वर्थतः, तद्बाहुल्यात्, इदं श्रोतृकर्णगोचरीकृतत्वेन तत्प्रत्यक्षविषयीभूतम्, तत्त्वं न्यायखण्डखाद्यापरनाममहावीरस्तवप्रकरणाभिधेयम्, आख्यातवान् कथितवानित्यर्थः ॥१०९॥ यैः परमगुणनिधानश्रीगुरुवर्यैस्सकलशास्त्रार्थबीजभूतन्यायशास्त्रं पाठितः यश्च सोदरस्स्नेहपात्रं स्वदीक्षाकाले धर्मप्रेरितो दीक्षां गृहीतवान् यन्नगर्यां न्यायविशारदत्वादिबिरुदं प्राप्तः तन्नामनिर्देशपूर्वकस्वग्रन्थाध्येतॄणामाशिर्वादमाह—

यः श्रीमद्गुरुभिर्नयादिविजयैरान्वीक्षिकीं ग्राहितः, प्रेम्णां यस्य च सद्म पद्मविजयो जातः सुधीः सोदरः ॥
यस्य न्यायविशारदत्वबिरुदं काश्यां प्रदत्तं बुधै-स्तस्यैषा कृतिरातनोतु कृतिनामानन्दमग्नं मनः ॥११०॥

यः इत्यादिना, यः यशोविजयः, आन्वीक्षिकीं न्यायविद्यां, ग्राहितः पाठितः, काशीं गत्वा पण्डितसकाशमिति शेषः। कैरित्याकाङ्क्षायामाह श्रीमद्गुरुभिर्नयादिविजयैरिति, अत एव "विप्रानात्मवशांश्चिरं परिचितां काशीं च बालानिव, क्ष्मापालानपि विद्विषो गतनयान् मित्राणि चाजीगणत्॥ मन्न्यायाध्ययनार्थमात्रफलकं वात्सल्यमुल्लास्य ये, सेव्यन्ते हि मया नयादिविजयप्राज्ञाः प्रमोदेन ते" ॥१॥ इति समाचारिप्रकरणोक्तं, तथा "मामध्यापयितुं सदाऽऽसनसमभ्यासीनकाशीमहा-सन्नाशीरितयोगदुर्जयपरत्रासी यदीयः श्रमः। आसीच्चित्रकृदिन्दुशुभ्रयशसो दासीकृतक्ष्माभुजो, नोल्लासी भुवि तान् नयादिविजयप्राज्ञानुपासीन्न कः ॥१॥" इत्यैन्द्रस्तुतिचतुर्विंशतिकाविवरणोक्तं सङ्गच्छते, च पुनः, यस्य यशोविजयस्य प्रेम्णां स्नेहानां सद्म पात्रं जातः, एवम्भूतः क इत्याकाङ्क्षायां तन्नामग्राहमाह पद्मविजय इति, स किंविशिष्ट इति चेत्, सुधीः सोदर इति, यद्वा यस्य प्रेम्णां स्नेहानां सद्म गृहं सुधीः पण्डितः

पद्मविजयस्सोदरो जातः यद्दीक्षाकाले प्रेरितस्सन् दीक्षितो जातः,सोदरोत्त्यैकमातृगर्भोत्पन्नत्वेन संसारपक्षे तस्य सभ्रातृत्वं सूचितम्, अत एव "पद्मसिंह बीजो नलीजी तस बांधव गुणवन्त, तेह प्रसङ्गे प्रेरियोजी, ते पणि थयो व्रतवन्त ॥१॥ विजयदेवगुरु हाथनीजी वडदीक्षा हुइ खास, बिहुने सोल अठ्यासीयेजी करता योग अभ्यास" ॥२॥ इति सुजसवेलीभासवचनमपि सङ्गच्छते, विशेषार्थिना सुजसवेली विलोक्या। यस्य न्यायविशारदत्वबिरुदं काश्यां प्रदत्तं बुधैः, एतच्च प्रागेव विवृतं, तस्य यशोविजयस्य एषा कृतिः न्यायखण्डखाद्यरचना कृतिनां न्यायतत्त्वप्रज्ञानाद्यानन्दमग्नं मनश्चित्तमातनोतु विदधातु ॥११०॥ एकान्तनयशमितमहदुन्मार्गगामिभव्यजन्तुव्रातानां नयसमूहमयार्हत्सिद्धान्तभावमपूर्वं प्रदर्श्य सन्मार्गप्रदर्शकसहृदयहृदयचमत्कृतिकृत् ग्रथितगद्यपद्यात्मकानेकशतग्रन्थजगद्व्याप्तयशा काशीस्थबुधवरावासकवित्वचित्तन्यायविशारदन्यायाचार्यत्वोपपदः प्रस्तुतप्रकरणकारो भगवान्श्रीयशोविजयो यदानायशावयंवदलसम्यन्विर्णां स्वगुरुपरम्परामुपदर्शयितुमाह इति श्रीत्यादि ॥

इति श्रीजगद्गुरुविरुदधारिभट्टारकश्रीहीरविजयसूरीश्वरशिष्यमुख्यपन्दितर्कीविद्याविशारदमहोपाध्यायश्रीकल्याणविजयगणिशिष्यावतंसकलशब्दानुशासननिष्णातपण्डितश्रीलाभविजयगणिशिष्यशिरःकोटीरपण्डितश्रीजीतविजयगणिसतीर्थ्यालङ्कारपण्डितश्रीनयविजयगणिचरणसेवकपण्डितश्रीपद्मविजयगणिसहोदरमहोपाध्यायश्रीयशोविजयगणिभिः

कृतमिदं न्यायखण्डखाद्यापरनामकं महावीरस्तवनप्रकरणं सम्पूर्णम् ॥श्रीः॥

॥ इति श्रीविश्वातुलप्रभावप्रभावितवीतरागप्रभुशासनाखिलभूमण्डलसमानानुपमविकाशनविलयिता-
नल्पप्राणिमहामोहशैलूषनर्त्तनप्रकारप्रसूतशशभृद्धवलकीर्त्तिभरधवलितभूवलयावाप्ताखण्डविजय-
तीर्थोद्धारैकधुरीण—श्रीतपोगच्छनभोनभोमणिभट्टारकाचार्यश्रीविजयनेमिसूरीश्वरपट्टा-
लङ्काराप्तन्यायवाचस्पतिसिद्धान्तविशारदोपनाम—श्रीतपोगच्छभट्टारकाचार्य-
विजयदर्शनसूरिविरचितायां सर्वतन्त्रस्वतन्त्र—न्यायविशारद-
न्यायाचार्यमहोपाध्यायश्रीयशोविजयगणिसन्दब्धस्य
न्यायखण्डखाद्यापरनामकस्य महावीरस्तवनप्रकरणस्य
श्रीमहावीरस्तवकल्पलतिकाख्यविवृतौ
स्याद्वादोपदेशदर्शनात्मकश्चतुर्थो विभागः ॥

॥ तत्समाप्तौ च समाप्तोऽयं ग्रन्थः ॥

## ॥ अथ टीकाकारप्रशस्तिः ॥

श्रीवीरोक्तिगुणस्तवैकविषया शास्त्रोहमानाशया, शिष्टोक्तिप्रकरानुगत्यनुगता नाम्नाऽथ कल्पान्तगा ॥
श्रीसूरीश्वरनेमिसूरिसुगुरोः पादाब्जयुग्मेऽर्पिता, भूयाद्दर्शनजाऽत्र कल्पलतिका विद्वन्मनोरञ्जनी ॥१॥
यस्यार्थप्रतिपत्तिभेदसुभगा वाणी नवीनोक्तिगा, प्राचीनोक्तिसमन्वयैकहृदया सन्नीतिमानोन्नता ॥
श्रीमन्तं तं शशिशुभ्रकीर्त्तिनिलयं नाथं बुधानां गुरुम्, सूरिं नेमिमुपासतां कृतिरियं,नित्यं विनेयार्पिता ॥२॥
यस्याख्याप्युदिता निसर्गमधुरा मोदप्रदा धीमताम्, सिद्धान्तार्थविवेचनं यदुदितं वादे यशश्रीकरम् ॥
तस्य श्रीलयशोभिनस्य कृतिनां धुर्यस्य टीकामिषा-द्वाणीं वाचकपुङ्गवस्य भजतादाकल्पमेषा कृतिः ॥३॥
यैर्निर्मितास्सुविषमा नयभङ्गमानैः, ग्रन्थास्तुतत्त्वमनिसम्मतितर्कमुख्याः ॥
स्याद्वादतत्त्वविषये दृढमूलनिष्ठां, कुर्वन्ति मोक्षफलिकां नरि मादृशेऽपि ॥ ४ ॥
स्याद्वाददर्शनप्रभावकपङ्क्तिमुख्याः, क्रोधात्समूलगतकोपदवाः प्रतापाः ॥
ते ज्ञानवारिधिदिवाकरसिद्धसेनाऽऽ-चार्यसूरिनायकवराः शमदा भवन्तु ॥ ५ ॥
गच्छे यत्र मुनिप्रकाण्डमहिते श्रीवीरनाथान्वये, निर्ग्रन्थाभिधता सुधर्मपदवीं प्राप्ता सुधर्माश्रयात् ॥
तस्मात् कोटिकनामतु सुस्थितगुणग्रामप्रभाभासुरा, चन्द्राख्याप्यनु चंद्रसूरिसुकृतादन्वर्थतालक्षिणी ॥६॥
धर्मेन्तं वनवासिनाऽप्यनुगता सामन्तभद्रोद्धृता, अन्वर्था वटगच्छनाऽप्यनु तता सर्वादिदेवप्रभोः ॥

सूरेरच्छतपःप्रभावनिलयाच्छ्रीमज्जगच्चन्द्रतो, निर्ग्रन्थान्वयिनी ततोऽनु वितता जाता तपोगच्छता ॥७॥
पट्टे तत्र गुणकधाम्नि विमले देवेन्द्रहीरोज्ज्वले, श्रीसेनाभिधदेवसिंह–विबुधग्रामक्रमोल्लासिते ॥
भव्योद्धारकृतादरस्य सुगुरोश्श्रीवृद्धिचन्द्राभिधा–ख्यातस्यामलकीर्त्तिवृद्धिविजयप्रौढप्रतापोदधेः ॥८॥
भक्तस्यामलसाङ्गयोगनिकरप्रोत्कृष्टसंपादनावाप्ताचार्यपदस्य तीर्थविभवोल्लासिप्रभावोदधेः ॥
सिद्धान्ताम्बरभास्करस्य सुनयव्याख्यानयुक्तिव्रज–स्वायत्तीकृतभूपचक्रमुकुटाकीर्णक्रमाम्भोजनेः ॥९॥
ज्ञाताऽशेषनयाशयस्य रचिताऽनेकान्तवादावले–र्न्यायव्याकरणादिग्रन्थरचनानैपुण्यमाबिभ्रतः ॥
कल्याणाम्बुधिनेमिसूरिसुगुरोर्भक्त्यैकतानात्मनः, शिष्यस्यागमनीतिभावमननानन्दैकलुब्धात्मनः ॥१०॥
नव्यन्यायविवेचनापरिचितस्वान्तस्य साभ्यासतो, योगस्योद्वहनेन सूरिपदवीं प्राप्तस्य गुर्वाऽऽप्ततः ॥
प्राप्याराध्य च सूरिमन्त्रमनिशं श्रीदर्शनाख्यस्य मे, श्रीवीरस्तुतिमूलगा कृतिरियं कल्पान्तमेतु स्थितिम् ॥११॥
मार्गे सूक्ष्मसुसूत्रमात्रघटिते मानोन्नते धीधनाः, प्रायस्संस्खलनां प्रमादकलिता यान्ति व्रजन्तो जनाः ॥
नो स्यां हास्यपदं सुनीतिगतितो गच्छन् स्खलन् दुर्गमे,प्राज्ञान् वोऽन्वहमर्थयेऽत्र भवतामीक्षाऽस्तु दोषापहा१२
येषां स्वपक्षपरपक्षकदाग्रहाक्ता, वादप्रथा भवति नोऽमितधीसखानाम् ॥
ते शुद्धिमत्र कृतिगौरवमाश्रयन्तः, कुर्वन्तु दोषपरिमार्जनबद्धकक्षाः ॥ १३ ॥

नेत्राङ्काङ्कविधौ शनावसितके मार्गस्य विश्वे तिथौ, ख्यात्यां दर्शनसूरितत्त्वमनना ऽऽसंसूत्रिता गुर्जरे ॥
जैनप्राज्यमहिम्नि राजनगरे वीरोक्तिवृत्तिप्रभा-ऽभीष्टार्थास्तु मुदेऽत्र कल्पलतिका पूर्णा बुधैर्वीक्षिता ॥१४॥
श्रीवीरदेवगुरुपुण्यसमग्रभावात्, श्रीसार्वतत्त्वरसिकेन मयाऽधियाऽपि ॥
यत्पुण्यमर्जितमनेन सुनिर्मितेन, ग्रन्थेन तेन भविकास्सुखिनो भवन्तु ॥१५॥

सर्वतन्त्र-स्वतन्त्र-न्यायविशारद-न्यायाचार्यमहोपाध्याय-श्रीयशोविजयगणिप्रणीतं स्याद्वादतत्त्वगर्भ-
नव्ययुक्तिप्रकरानेकग्रन्थप्रन्थनाहृतानल्पजन्तुहृदयान्तर्वर्तिघनाज्ञानमोहप्रसर-तीर्थकराज्ञाबाह्याऽसन्मार्गप्ररूपणैक-
प्रनिःशमलुम्पाकदुरन्तभवभ्रमणैकहेतुनिजोपदेशविप्रलब्धकतिपयजनार्चाऽऽसिक्तकृत्यजनसंसर्गकलङ्को-
न्मारणानन्दिताईदाज्ञानिरतचतुर्विधसङ्घ-सूरिसार्वभौमशासनसम्राट्-श्रीतपोगच्छभट्टार-
काचार्यश्रीविजयनेमिसूरीश्वरपट्टालङ्कारासन्न्यायवाचस्पतिशास्त्रविशा-
रदोपनाम-श्रीतपोगच्छभट्टारकाचार्यविजयदर्शनसूरि-
सन्दृब्धमहावीरस्तवकल्पलतिका-
संज्ञकविवृतिसध्रीचीनं ॥

॥ न्यायखण्डखाद्यापरनामकं महावीरस्तवनप्रकरणं समाप्तम् ॥

श्रीसार्वतत्त्वरस-
भावं गते स्वगुरु-
क्षेत्रे सुबीजमिव
यत्नोऽत्र मे सफलतां

सञ्जातितस्सुवर्ण-
हस्तकजाऽर्पितेऽस्मिन् ॥
वप्तृगुरोः प्रसादात्,
कलयत्वजस्रम् ॥१॥

॥५४६॥

महामहोपाध्यायन्यायविशारदन्यायाचार्यपदभगवच्छ्रीयशोविजयगणिविरचितस्य महावीरस्तवकल्पलतिकाख्य-
वृत्तिनर्वाचीनस्य न्यायखण्डखाद्यापरसंज्ञकमहावीरस्तवनप्रकरणस्य

# विषयसूचीपत्रम् ।

णवर्त्तिनोः कार्यकारणभावस्तयोर्नैकदेशवृत्तित्वम्, आधारस्य तव मते क्षणिकत्वेन क्षणद्वयावस्थायित्वाभावात्, न द्वितीयः, यतो ययोरेकक्षणवर्त्तिनोरेकाधारत्वं न तयोः कार्यकारणभावः, पूर्वापरक्षणवर्त्तिनोरेव तत्त्वादित्यसम्भवदोषग्रस्तमेव लक्षणं स्यादिति समाधत्ते-न, आधारस्यापीति, ननु यद्यप्याधारस्य क्षणिकत्वेनैकाधारत्वं पूर्वापरक्षणवर्त्तिनोर्न वास्तवं तथापि काल्पनिकं तु स्यादेवेति चेत्, तर्हि शरीरबुद्ध्याद्योरप्येकदेशताभिमानात्कार्यकारणभावाभिमानाच्चोपादानोपादेयभावस्स्यादित्याह काल्पनिकस्येति, एतेनेत्यादिकं विवृणोति एतेनेत्यादिना, एतेनेत्यस्यैकोऽर्थः घटकपालाद्यव्यापकत्वेनेति, घटकपालयोरभ्रान्तसमतैकावसायो नास्ति, विजातीयत्वात्, प्रकृतिविकारभावोऽपि नास्ति, अत्यन्तविसदृशसन्तान एव तदुपगमात्, तथा च लक्षणद्वयस्यापि तत्राव्याप्त्येत्यर्थः। द्वितीयोऽर्थः लक्षणयोः परस्पराक्रान्ताव्यापकत्वेन वेति, एकलक्षणविशिष्टेऽपरलक्षणाभावेनाव्याप्त्येत्यर्थः, लक्षणस्येतरभेदानुमापकतया लक्ष्यस्य पक्षरूपतया तदेकदेशे अभ्रान्तसमतैकावसायरूपैकलक्षणविशिष्टे सभागसन्ताने प्रकृतिविकारभावरूपापरलक्षणाऽभावात्, एवं प्रकृतिविकारभावरूपैकलक्षणविशिष्टे विसभागसन्ताने अभ्रान्तसमतैकावसायरूपापरलक्षणाभावादनुमाने भागासिद्धिदोष इति भावः। अभ्रान्तसमतैकावसाय इति विवृणोति—अभ्रान्ततयेत्यादि। पर्यवसितलक्षणमाह कार्यकारणभावे सतीत्यादिना। पर्यवसितोक्तलक्षणे निमित्तपर्यन्तानुधावनफलमाह—

अवसायस्य लक्षणघटकत्वे तदभावदशायामव्याप्तिरित्ययं पन्थाः। स्वरूपयोग्यताया निवेशाच्च न फलानुपधानदशायामव्याप्तिरिति गुणानन्दः। प्रकृतिविक्रिये प्रकृतिविकारभावः, इदं च विसभागे सन्ताने, सभागे चाद्यं लक्षणं, तत्र च पुञ्जात् पुञ्जोत्पत्तेरुपगमान्निरन्तरोत्पन्नयोर्नीलसन्तानयोः परस्परोपादानोपादेय-

प्रतिसन्धाननियामक उपादानोपादेयभावः, प्रतिसन्धानं च स इत्यात्माश्रयात्, तद्योग्यतेति चेत्, सैव केति चिन्त्यं, शक्तिविशेष एव सा, यद्यपि प्रतिसन्धानानुकूला शक्तिः प्रतिसन्धातर्येव, न प्रतिसन्धेये, तस्य चिरातीतत्वेनाप्रयोजकत्वात्, तथापि तस्यापि शक्तिविषयत्वमित्यनुसन्धेयानुसन्धातृभाव एवोपादानोपादेयभाव इति चेत्, स तावन्न प्रतिक्षणनियतः,

एकसन्तानत्वमिति, तथाभावप्रसङ्गः एकसन्तानत्वप्रसङ्गः, तथा च शिष्याचार्यबुद्ध्योरप्युपादानोपादेयभावप्रसङ्गेन प्रतिसन्धानप्रसङ्ग इतिभावः। स्वलक्षणे स्वस्य प्रवेशने स्वेनैव स्वस्य व्यवस्थापनं स्यात्, तथाचात्माश्रयस्स्यादित्याह कथं तेनैवेति, तद्योग्यतेति प्रतिसन्धानयोग्यतेत्यर्थः। उपादानोपादेयभावलक्षणमिति प्रकृतम्, प्रतिसन्धातरि स्मरणलक्षणोत्तरज्ञाने। तस्येति प्रतिसन्धेयस्य पूर्वज्ञानस्येत्यर्थः, अनुभवविषयकप्रतिसन्धानानुकूलशक्तिस्स्मरण इत्यनुभवस्य स्वकार्यविषयत्वाच्छक्तिविषयत्वमित्याह तस्यापि शक्तिविषयत्वमिति। यथा घटानुकूला शक्तिः कपालमात्रे, नतु तत्तत्कपालनियता, तथा प्रतिसन्धानानुकूला शक्तिरपि ज्ञानमात्रे, नतु तत्तज्ज्ञानव्यक्तिनियता, तथाच ज्ञानत्वेन सजातीययोश्शिष्याचार्यधियोरप्युपादानोपादेयभाव उक्तशक्तिमत्त्वात् स्यादित्युत्तरयति स तावन्नेति, स शक्तिविशेषः, न प्रतिक्षणनियतः न प्रतिव्यक्तिमात्रवृत्तिः, निषेधे हेतुमाह—

यथा हि तेन तत्कर्त्तव्यं तथा तादृशेन तत्कर्त्तव्यमित्यपि नियम एव, तज्जन्यजातीयकार्यमवश्यं तत्सजातीयकारणजन्यमित्यस्य सर्वसिद्धत्वात्, अन्यथा तेन तत्कर्त्तव्यमित्यपि न निश्चीयेत, क्षणस्य दुरुन्नेयत्वात्, तथा च निरीहं जगज्जायेत, प्रतिव्यक्तिकार्यकारणभावस्यानागतकार्यव्यक्तेरनुपस्थित्या ग्रहीतुमशक्यत्वात्,

ऽपि नोपलभ्येत, प्रतिसन्धाने शक्तेः प्रतिव्यक्तिविश्रान्तत्वेऽप्रतिसन्धेयाऽप्रतिसन्धातृव्यक्त्योरुपादानोपादेयभावो न स्यात्, तत्र तादृशशक्तौ मानाभावादित्यपि द्रष्टव्यम्। नापि प्रतिसन्ताननियतो, नियतव्यक्तिवृत्तित्वावच्छेदकविशेषाभावात्, नहि शिष्याचार्यनीलधियोर्मात्रयापि जातिकृतं विशेषमुपलभामहे, अदृश्यत्वादयमदोष इति चेत्, न, दृश्यसमवायिन्या जातेरदृश्यत्वानुपपत्तेः, योग्यव्यक्तिवृत्तित्वेनैव जातेर्योग्यत्वात्, उपपत्तौ वा धूमादावप्यवकाशप्रसङ्गात्, एवं यथा कारणेषु दृश्येषु ज्ञानविशेषेषु प्रतिसन्धानजनकतावच्छेदिका जातिरदृश्या, एवं कार्येष्वपि दृश्येषु धूमविशेषेषु वह्निजन्यतावच्छेदिका जातिरदृश्या स्यादिति शङ्कया धूमसामान्ये वह्निजन्यत्वाग्रहात् न तेन कार्येण कारणस्य वह्नेरनुमानं स्यात्, एवमेतदाद्यस्यैव तथा भावादिति चेत्, न, आद्योऽपि धूमो न तत्त्वेन वह्निजन्योऽपि तु तदवान्तरजात्येति शङ्काया दुर्वारत्वात्, तस्मात् कारणस्य वैजात्ये प्रमाणसिद्धे कार्यस्य सौसादृश्येऽप्यवान्तरजातिभेदः कल्प्यते, हेतुवैजात्यस्य फलवैजात्यं प्रति प्रयोजकत्वात्, अप्रयोजकत्वे तस्याकस्मिकत्वप्रसङ्गात्, कारणसाजात्येऽपि तु कार्यवैजात्यं सहकारिवैजात्ये पर्यवस्यतीति युक्तमुत्पश्यामः।

आकस्मिकमिति, कार्यनियतजातीयत्वस्यानुगतजातिरूपेण कारणत्वनियम्यत्वात् तस्य चात्रानभ्युपगमादितिभावः। नोपलभ्येतेति तथाच कार्यसामान्येन कारणसामान्यानुमानमपि न स्यादिति धूमत्वाद्यवच्छिन्नेन वह्नित्वाद्यवच्छिन्नानुमानाभावात्तदर्थिनस्तत्र प्रवृत्तिर्न स्यादिति भावः। प्रतिसन्धानानुकूलायाश्शक्तेर्ययोरनुभवस्मरणव्यक्त्योः प्रतिसन्धानं तत्तद्व्यक्तिविश्रान्तत्वे अप्रति-

तदनपेक्षायामप्रामाण्यमित्युभयरूपताप्रतिपादनार्थं पञ्चविंशतितमश्श्लोकः। २५८-प्र.-७

२०२–२६ तत्ता पर्याप्तिसम्बन्धेन स्वद्रव्यपर्यायगुणसमुदितत्रितयवर्त्तिनी, तद्व्यक्त्यभेदोऽपि सर्वप्रकाराऽभेदसिद्ध्यर्थं तद्व्यक्तियावद्भेदान्यतमत्वावच्छिन्नप्रतियोगिताकाभावरूप एव प्रत्यभिज्ञानविषयः, सोऽपि न तादृशाभावत्वेन, किन्तु तद्व्यक्तित्वेन, संसर्गतया प्रकारतया वा भासत इत्युपदर्शनपरष्षड्विंशतितमश्श्लोकः। २५९-प्र.-१४

२०३–२७ यद्वस्तु एकसमयावच्छेदेनोत्पद्यमानसहभाविनानापर्यायसम्बन्धात्तद्वन्नानात्वं भजते तद् विभिन्नसमयावच्छेदेनोत्पद्यमानक्रमिकनानापर्यायापेक्षयाऽपि नानात्वं भजत एवेति विचारशाली भवतो युक्तिसिद्धं स्याद्वादमेवाश्रयत इत्युपदर्शनपरस्सप्तविंशतितमश्श्लोकः। २६०-प्र.-९

२०४–२७ स्यादभिन्नः स्याद्भिन्न इत्यादिसप्तधर्मावगाहिन्येव प्रत्यभिज्ञा, अभेदैकविषया प्रत्यभिज्ञेति प्राचीनप्रवादस्तु स्याद्वादव्युत्पन्नपुरुषापेक्षया द्रव्यनयेनाभेदस्य प्राधान्यविवक्षयोपपाद्य इत्यस्योपपादनम्। २६०-द्वि.-१४

२०५–२८ स्याद्वादतत्त्वानभिज्ञा अपि हेम पूर्वकालीनकुण्डलपर्यायेण विनष्टम्, उत्तरकालीनाङ्गदपर्यायेणोत्पन्नं स्वस्वरूपेणाविचलितमिति पूर्वोत्तरपर्यायस्वस्वरूपापेक्षया तत्रोत्पादादित्रयमनुभवन्तोऽपि यदि त्वां न श्रयन्ति तदा तेषामभाग्यमुग्रमित्युपदर्शनपरोऽष्टाविंशतितमश्श्लोकः। २६२-प्र.-१०

२०६–२९ तदेवेदमिति प्रत्यभिज्ञायां तिर्यक्सामान्याख्यजात्या तज्जातीयाभेदस्य भानं न, किन्तु पूर्वोत्तरसभागपर्यायानुगाम्यूर्ध्वतासामान्याख्यस्वद्रव्यत्वा-

पेक्षया व्यक्त्यऽभेदस्यैव, द्रव्यं रूपवदित्यत्रापि सामानाधिकरण्येनावच्छेदकावच्छेदेन च बोधतात्पर्यभेदकल्पना स्याद्वादमुद्रां नातिशेरत इत्युपदर्शनार्थमेकोनत्रिंशत्तमश्श्लोकः। २६३-प्र.-१०

२०७–३० पूर्वोत्तरपर्यायानुगामित्वेन कालानुगतमूर्ध्वतासामान्यम्, तत्र च कालानुगतबुद्धिरेव प्रमाणम्, तत्तत्पिण्डव्यक्त्यनुगामितया देशानुगतत्वेन तिर्यक्सामान्यम्, तदतत्कालीनतत्तद्व्यक्तावनुगतबुद्धिरेव च तत्र प्रमाणम्, तच्चोभयं धर्मधर्मिभावान्यथानुपपत्त्या स्वाश्रयान्नात्यन्तमिन्नमित्युपदर्शनार्थं त्रिंशत्तमश्लोकः। २६५-प्र.-९

२०८–३० घटादावापेक्षिकं द्रव्यत्वं पर्यायत्वञ्च, परमाणौ द्रव्यत्वमेव न पर्यायत्वमित्युपदर्शनम् २६५-द्वि.-८

२०९–३१ जातिव्यक्त्योरभेदानभ्युपगमे समवायनिरासेन सम्बन्धाभावः अतिरिक्तजात्यभ्युपगमे गौरवमन्योन्याश्रयदोषश्चेत्युपदर्शनपर एकत्रिंशत्तमश्लोकः। २६६-द्वि.-१०

२१०–३२ गोत्वं प्रतिनियतशाश्नादिमद्व्यक्तिष्वेव वृत्तं नान्यत्रेत्यत्र स्वभावविशेषः कारणम्, न च स्वभावमात्रादेव जातिं विनाऽनुगतव्यवहार इति यदुत्प्रेक्षितं शिरोमणिना तद् भगवदुक्तस्याद्वादवाक्यजन्यनिराकाङ्क्षानेकान्तबोधमन्तरेण न साफल्यायेत्युपदर्शनपरो द्वात्रिंशत्तमश्श्लोकः।

२११–३३ परोक्तभेदग्रहप्रतिबन्धकस्य जातिव्यक्त्योरनन्यदेशत्वस्याभेदरूपत्वेन जातौ व्यक्तेरन्यत्वरूपो भेदोऽनन्यदेशत्वरूपोऽभेदश्चेत्यस्य तत्र परोक्तदूषणानां जात्यन्तरपक्षेऽनवतार एवेत्यस्य च प्रदर्शनपरस्त्रयस्त्रिंशत्तमश्लोकः। २६७-प्र.-१

२१२–३३ धर्मीत्यादिन्यायाद् गवादिष्वेव सामान्यत्वं प्रकल्प्य

फलमिति प्रश्नस्योत्तरम् । २०९-प्र.-७

२४०–३६ न्यायवेदान्तनयान्यतरस्यैव युक्तत्वं न तु बौद्धनयस्येत्यर्थप्रतिपादिकाया उदयनाचार्योक्ताया न ग्राह्यभेदमवधूयेत्यादिकारिकायाः प्रदर्शनं तद्व्याख्यानञ्च । ३११-द्वि.१

२४१–३७ विज्ञानवादिमते ग्राह्यग्राहकयोरभेदे साध्ये व्यभिचारबाधौ, अभिन्नजातीयत्वे साध्ये हेतोरप्रयोजकत्वम्, ग्राह्यांशस्यालीकत्वे साध्ये शून्यत्वापत्तिः, यदि स्याद्वादाश्रयिता स्याद्विज्ञानवादी तदा नैयायिकं विजयेतेत्युपदर्शनपरस्सप्तत्रिंशत्तमश्श्लोकः। ३११-द्वि.-१३

२४२–३८ धीग्राह्ययोस्सहोपलम्भादभेदः स्वस्वगतासाधारणधर्मेण च भेदः, तथाच स्यादभेदः, स्याद्भेद इति मूलभङ्गद्वयस्य सिद्धौ तन्मूलकतदुत्तरभङ्गसिद्धिरिति बौद्धमतस्यापि सर्वदर्शनसमूहात्मकभगवद्दर्शनैकदेशरूपत्वात्तत्रापि सप्तभङ्गीप्रदर्शनं न दोषावहमित्युपदर्शनपरोऽष्टत्रिंशत्तमश्श्लोकः । ३१२-द्वि.-१२

२४३–३८ ननु बौद्धमते पूर्वोक्तनीत्या ग्राह्यग्राहकयोरभेद एव, न भेद इति तयोरापेक्षिकभावाभावादपेक्षोत्थापिताकाङ्क्षान्तराभावादाद्यभङ्गस्य शेषभङ्गैस्सहाङ्गाङ्गिभावाभावात्सप्तभङ्ग्या अप्यसम्भवः,"धर्मे धर्मेऽन्य एवार्थ" इत्यादिनाऽऽर्हतमत एव तत्प्रसिद्धेरित्याशङ्क्य यत्र मूलभङ्गार्थो यन्नयविचाराधीनसिद्धिकस्तत्सप्तभङ्ग्यां तदीयत्वव्यवहार इति स्यादभेद एवेत्याद्यभङ्गस्याभेदरूपोऽर्थो बौद्धदृष्ट्या सिद्ध इति तत्प्राधान्याधीनसप्तभङ्ग्यां तदीयत्वव्यवहार इति तदसम्भवोऽपि नेति समाहितम् । ३१४-प्र.-१

२४४–३८ सौत्रान्तिकवैभाषिकादिचतुर्विधबौद्धमतस्यर्जुसूत्रादिनयचतुष्टयप्रकृतिकत्वप्रतिपादनम्, तत्र सम्मत्यादिग्रन्थसंवादप्रदर्शनञ्च । ३१४-प्र.-५

२४५—३९ येन केनापि नयेन स्वविषयताव्यापकविषयताक-
स्याद्वादमवलम्ब्य स्वेतराभिनिविष्टनयखण्डनं शास्त्रा-
र्थरूपमिति बौद्धेन यत्स्याद्वादाश्रयणेन नैयायिक-
मतखण्डनं कृतं तद् युक्तमेव, न तु नैयायिकेन
स्वमतविषयताविरुद्धविषयताकवेदान्तिनयाश्रयणेन
बौद्धमतखण्डनं कृतं तद्युक्तमित्युपदर्शनपर एकोन-
चत्वारिंशत्तमश्श्लोकः। ३१५-प्र.-८

२४६—४० अन्यनयतर्कप्रयोज्यप्रामाण्यसंशयदशामनुभवतः कस्यापि
नयस्य नयान्तरविचारप्रयोज्यप्रामाण्यसंशयक-
नयान्तरसमाश्रयणेनाभिनिविष्टनयान्तरखण्डने
सामर्थ्यं नेत्यस्य नयस्यौदासीन्यमेव निजं स्वरूपम्,
इतरनयविषयगताऽसत्त्वविषयकप्रतिपत्त्यऽजनकत्वे
सति स्वविषयो नासन्निति प्रतिपत्तिजनकत्वादित्यस्य
च प्रतिपादनार्थं चत्वारिंशत्तमश्श्लोकः। ३१५-द्वि.-१५

२४७—४० नयस्येतरनयविषयाऽप्रतिक्षेपित्वमेव स्वरूपलक्षणम्,
तत्र संवादकतया णिययवयणिज्जेत्यादिसम्मतिगाथा
सव्याख्यानोक्ता। ३१७-प्र.-६

२४८—४१ येन वैतण्डिकवेदान्तनयेन स्वनयविषयस्य दूषित-
त्वेन स्वपक्षत्यागे नैयायिकस्यापि वैतण्डिकत्वं
स्यादिति तस्य माध्यमिकजयार्थं तदाश्रयणमुप-
हासकरमेवेत्युपदर्शनार्थमेकचत्वारिंशत्तमश्श्लोकः॥ ३१७द्वि.-६

२४९—४२ ननु नया इतरनयविषयखण्डनेऽसमर्थाश्चेत्तर्हि
कथं भवतैवात्र न्यायनयेन बौद्धनयखण्डनं कृत-
मित्याशङ्क्य स्यात्पदगर्भन्यायनयेन बौद्धनयगतै-
कान्तत्वखण्डनं स्याद्वादमार्गे निजकरेण मलोपनो-
दकल्पम्, ननु न्यायमतं तत्त्वतो मिथ्यामतमिति
तदाश्रयणं स्याद्वादिनां न युक्तमिति चेत्सत्यं,
तथापि असत्ये वर्त्मनीत्यादिन्यायेन शिष्यमति-

अथ चतुर्थो विभागः ।

३२४—५९ तद्देशत्वातद्देशत्वाभ्यामवयविनः चित्रत्वाचित्रत्वाभ्यामवयविनस्तद्रूपस्य च कथञ्चिद्भेदविशिष्टाभेदस्य प्रतिपादनपर एकोनषष्ठितमश्श्लोकः । ४२८-द्वि.-९

३२५—६० विज्ञानवाद्यभिहिततत्तत्तर्कापाद्यस्थूलाणुत्वादिनिषेधा अपि कथञ्चिदिष्टापत्तिपराहतास्स्याद्वादशासनबाधनक्षमा नेत्यस्योपपादनपरः षष्ठितमश्श्लोकः। ४३२-प्र.-१

३२६—६१ गुणगुणिनोरभेदान्नैरात्म्यम्, अनुपलब्धेश्च नैरात्म्यमिति बौद्धोक्तपक्षद्वयं प्रदर्श्य तन्निरसनपर एकषष्ठितमश्श्लोकः । ४३३-प्र.-१

३२७—६१ गुणातिरिक्तगुणिनोरभावाद्विज्ञानात्मक एवात्मेति विज्ञानवादिमतखण्डनम् । ४३३-द्वि.-२

३२८—६१ यमहमद्राक्षं तमहं स्पृशामीत्यनुसन्धानं किमेकैकविषयं स्यात् समुदायविषयं वेत्यादि पञ्चधा विकल्प्य तत्खण्डनं कृत्वा तेनातिरिक्तात्मद्रव्यव्यवस्थापनम्।४३३-द्वि.-१०

३२९—६१ गुणगुणिनौ अभिन्नौ सहोपलम्भनियमादित्यनुमानमेव गुणगुणिनोर्भेदबाधनमित्याशङ्क्योक्तहेतुस्समासमभेदेन द्विविध इति तत्खण्डनेन तत्खण्डनम्। ४३७-द्वि.-१

३३०—६१ देशाऽविच्छेदस्य गुणगुणिनोरभेदसाधकत्वमित्याशङ्क्य तत्खण्डनम्। ४३९-द्वि.-६

३३१—६१ गुणगुणिनोरभेदान्नैरात्म्यमित्याद्यपक्षखण्डनसमाप्तावनुपलब्धितो नैरात्म्यमिति द्वितीयपक्षखण्डनोपक्रमः । ४४३-प्र.-११

३३२—६१ अनुपलब्धिपदवाच्यादृश्यत्वं हेतुं विकल्प्य खण्डयित्वाऽसत्त्वस्य साध्यस्य सप्तविकल्पैःखण्डनारम्भः।४४४-प्र.-१४

३३३—६१ आत्मसद्भावे किं प्रमाणम्, अहमितिप्रत्यक्षम्, तत्रावस्तुकत्वसंदिग्धवस्तुकत्वलैङ्गिकत्वादेर्निराकरणं सवस्तुकत्वोपपादनञ्च, तत्रापि शरीरादिविषयकत्वस्य खण्डनम्। ४४६-प्र.-२ ॥९६३॥

३७३—७५ अत्रवार्थे "पढमे समये जीवा उप्पन्ना" इत्यादिप्रवचनसारोद्धारवचनम् व्याख्याप्रज्ञप्तिप्रथमशतकसप्तमोद्देशकस्थ "नेरइएणं भंते" इत्यादिवचनञ्च प्रदर्शितम् त्रिविधाहारप्ररूपणञ्च । ५१०-द्वि.-८

३७४—७६ स्वमते सकरणवीर्यवतस्सक्रियस्यात्मनः पूर्वोक्तं निखिलमुपपद्यते, परमते तु बन्धमोक्षावपि न घटेते इत्येतद्व्यापकः षट्सप्ततितमश्श्लोकः कर्मप्रकृतिगता परिणामालम्बणगहणेत्यादिगाथा शिवशर्मसूरेः संवादकतयोपदर्शिता। ५१२-प्र.-१३

३७५—७६ आत्मनो निष्क्रियत्वसाधकमनुमानं नैयायिकस्य खण्डितम् । ५१३-प्र.-१३

३७६—७७ सर्वैकान्तवादिसाधारणदोषप्रदर्शनपूर्वकं स्याद्वादशुद्धात्मोपदेशगुणेन भगवत्स्तुतिपरस्सप्तसप्ततितमश्श्लोकः । ५१३-द्वि.-११

३७७—७७ एकान्तनित्यात्मवादे छेदभेदक्लेदाद्यभावाद्धिंसाऽहिंसाद्यभावप्रसङ्गदोषः समुपदर्शितः । ५१४-प्र.-२

३७८—७७ एकान्ताऽनित्यवादेऽपि हिंसाद्यभावप्रसङ्गोपदर्शनम् तत्र बौद्धोक्तहिंसोपपादनप्रकारआशङ्क्य प्रतिक्षिप्तः। ५१४-द्वि.११

३७९—७८ स्याद्वादविकल्पितात्ममननस्य सवासनमिथ्याज्ञानोन्मूलनद्वारा बन्धानुत्पादप्रयोजकत्वस्य चारित्रस्य कर्मान्तरक्षयप्रयोजकत्वस्योपदर्शकोऽष्टसप्ततितमश्श्लोकः । ५१५-द्वि.-१०

३८०—७८ ज्ञानदर्शनचरित्रतपसां मोक्षमार्गत्वे नाणेण जाणईभावं इत्याद्यागमः प्रमाणम्, सङ्गहतः ज्ञानक्रिये मोक्षमार्ग इति चोपदर्शितम्। ५१६-प्र.-२

३८१—७८ सयोगस्य कर्मबन्धः निरुद्धयोगस्य तु न, इत्येतदागमप्रमाणावष्टम्भेनोपपादितम्। ५१६-द्वि.-१

३८२—७९ केवलज्ञानं भोगद्वारैव मोक्षाङ्गम तु साक्षादिति

४१२–९६ द्रव्यलिङ्गमप्यवलम्बनीयमेव, तद्भावे प्रणामानर्हत्वादित्यस्य "तए णं से भरहे" इत्यादि जम्बूद्वीपप्रज्ञप्तिपाठेन "यदा वा दव्वलिंगं गहितं ताहे नमिज्जति" इत्याद्यावश्यकवन्दनकाध्ययनचूर्णिपाठेन च निष्टङ्कनम्। ५३४-प्र.-३

४१३–९६ मरुदेवामाता द्रव्यलिङ्गाभावेऽपि मोक्षं गतेति व्यभिचारान्न द्रव्यलिङ्गं कारणमित्याशङ्क्य तन्निराकरणम्। ५३४-प्र.-९

४१४–९७ श्रावकश्चारित्रभ्रष्टो मन्दधर्माश्च त्रयोऽपि मुख्यवृत्त्या दर्शनपक्षस्याभ्युपगन्तारः, दर्शनादिपक्षत्रयस्य समवृत्तितयाऽभ्युपगन्तारस्सुसंयमिन इत्युपदर्शनपरस्सप्तनवतितमश्श्लोकः। ५३५-प्र.-४

४१५–९८ शमिनां ज्ञानयोगसंयमोपबृंहिततपसो निकाचितस्यापि कर्मणो हन्तृत्वस्य बाह्यतपस आध्यात्मिकतपोवृद्धिफलकतत्कर्त्तव्यतायाश्च प्रदर्शनपरोऽष्टनवतितमश्श्लोकः ५३५-द्वि.-४

४१६–९९ व्यवहारप्रधानतत्तन्नयैस्सम्यग्दर्शनादिषु त्रिषु तत्तद्धर्मावच्छिन्नविभिन्नकारणताशालिषु सम्यग्दर्शनं ज्ञानं च गौणतया चारित्रं च प्रधानतया व्यवस्थाप्यते, तद्द्वारैव तयोःमोक्षफलोत्पादकत्वात्, शुद्धनिश्चयनयस्तु मोक्षानुकूलैकशक्तिमत्त्वावच्छिन्नमेकमेव कारणत्वं त्रिष्वभ्युपगच्छतीत्युक्तानुगतधर्मेणाभिन्नां निरस्तगुणभावकथां रत्नत्रयीं विधेयतया कथयतीत्युपदर्शनपरो नवनवतितमश्श्लोकः। ५३६-द्वि.-७

४१७–१०० निश्चयनयेन स्वतश्शुद्धे आत्मन्यनाद्यनन्तविशदज्ञानादिस्वरूपां शुद्धिं कर्ममललेपलक्षणाऽशुद्धिर्न स्पृशति, आत्मनि रागादिनानाविधक्लेशपरिणतिस्तु व्यवहारतः, कल्लोलपर्याया अन्ततस्समुद्ररूप-

